# सूर्योदयः ।

दशमे वर्षे } आषाढ़स्य पूर्णिमा सं० १६६१, { प्रथम-संख्या

## आशीः प्रशस्तिः ।

( परित्यक्तमहामहोपाध्यायपदवीकानां पण्डितसम्राजां महामहाध्यापकानां
श्री पं० पञ्चाननतर्करत्नमहोदयानाम् । )



लीलानीलघनाम्बरान्तपिहित-श्रीपूर्णचन्द्रानना,
नानारूप-विवृत्तिविश्रुतमहाकालाङ्कबालाकृतिः ।
मन्वाद्या भजमान-मान-जननी दत्तावलम्बा शुचौ ।
गौरी वा गुरुपूर्णिमा वितरतु श्रेयःसृतौ वो मतिम् ॥

गौरी दुर्गा लीलानीलघना नीलेन वर्णेन घना निविडा, लीलया भवति । अम्बरम् वस्त्रम् अन्तवत् नाशवत् विगलितमिति यावत् करोति । अम्बरस्य अन्तो नाशो यत्रेति वा । पिहितश्रीः स्थगितश्रीः पूर्णचन्द्रो येन तत् आननं यस्याः । विशेषण समासः । पुंवद्भावश्च । महाकालः शिवः, सचाष्टमूर्त्तिः तस्याङ्के बालाकृतिः युवतिरूपा । मन्वाद्या मनूनां मन्त्राणाम् आद्या प्रथमभूता प्रणवरूपा । अर्थान्तरमप्यस्ति । भजमानानां भक्तानां मानं सम्मानं जनयति । शुचौ पवित्रे जने । गुरुपूर्णिमा, गुरोः पूर्णिं पूर्णतां सैव मिमीते मिनोति वा । सा श्रेयःसृतौ वो मतिं वितरतु । गौरी ज्योत्स्ना धवला गुरुपूर्णिमा वा तत्र मतिं वितरतु । सा च नीलघने नीलमेघयुक्ते अम्बरान्ते गगनतले लीलया स्वीयाननतुल्यं पूर्णचन्द्रं पिदधाति, तेन वा पिदधाति । कल्पमन्वन्तरयुगायनादिविविधरूपेण विवर्त्तमानस्य महाकालस्याङ्कभूतक्षुद्रांशरूपा । मन्वाद्या कस्यचिन्मनोरधिकारप्रथमदिनभूता अत एव मन्वन्तरेत्युच्यते । गुरुपूजनेन भजमानानां मानं बोधं सा जनयति । शुचौ आषाढ़े । इति विषमपदविवरणम् ।

# सम्पादकीया अभिप्रायाः ।

## साधुवादा दीयन्ते ।

स्वनामधन्या भारतवर्षीयप्रख्यातविद्वत्सु अन्यतमाः काशिकराजकीय-संस्कृतपाठशालायाः प्रधानाध्यक्षाः श्रीमन्तः श्रीगोपीनाथकविराज एम्० ए० महोदया अस्मिन् हायने महामहोपाध्यायपदालङ्कारेण भारतसम्राड्प्रतिनिधिभिर्विभूषिता इति समाचारपत्रपाठकानां विदितमेव । बहवो हि विद्वांसः प्रतिवर्षं पदेनानेनालङ्क्रियन्ते । परन्तु श्रीमतां पाण्डित्यप्रकर्षभाजां श्रीकविराजमहोदयानान्तु अनेन पदेन को हि अलङ्कारः ? तैस्तु महामहोपाध्याय-पदमेव विभूषितं जातमित्यस्माकं दृढो विश्वासः । वस्तुतो हि सम्प्रति काश्यामेव नहि, किन्तु सर्वत्रैव भारते, विदेशे वा श्रीकविराजमहोदयसदृशा धर्म-रहस्यज्ञातारो ग्रन्थग्रन्थिपरिष्कर्तारः चतुरस्रपाण्डित्यपूर्णा अभिमानशून्या विरला एव विद्वांसः सन्ति । बहवो विद्वांसस्तु कविराजमहोदयानां पार्श्वं समेत्य शास्त्रसन्देहं धर्मसन्देहञ्च सर्वथा दूरीकुर्वन्ति, इति तत्पार्श्वे समुपवेशिनां सर्वेषामेव विदुषां विदितमस्ति बौद्धदर्शनानां जैनदर्शनानामगाधज्ञानेन सहैवा-गमग्रन्थानां वेदस्मृति-पुराणदर्शनकाव्यकोशेतिहासादीनां सम्प्रदायग्रन्थानाञ्च तथान्येषामपि विषयाणां श्रीगोपीनाथकविराजमहोदया अगाधरत्नाकरतामेवाव-गाहन्ते, अस्तु,—अस्मिन् शुभावसरे **महापण्डितेभ्यः म.म. श्रीगोपीनाथ कवि-राज एम. ए. महोदयेभ्यः** शतशो साधुवादा दीयन्ते । ×

## नव-वर्षारम्भः ।

अयि संस्कृतप्रणयिनः सूर्योदयपाठकाः ! विदितमस्तु तत्र भवतां भवतां यदिह सुरभारतीसाम्राज्ये तां सेवितुं बहूनि संस्कृत-पत्राणि समुत्पन्नानि । परन्तु कान्यपि चिरजीवीनि न जातानि । वर्षद्वयं वर्षचतुष्टयमेव कथंकथमपि स्वप्रभां दर्शयित्वा अर्थाभावात् कालगर्ते विलीनानि । तैनैव सह ग्राहकानुग्राहकाणां मनोरथोऽपि विलीन एव । सत्यप्येवं संस्कृतपत्राणां दशाव्यतिकरे भगवतः काशीपतेः श्रीविश्वनाथस्य परमानुग्रहेण 'सूर्योदय' एवायमीदृग् विद्यते, यो हि लेखकानां लेखार्पणानुग्रहात्संरक्षकाणां ग्राहकानुग्राहकाणाञ्च साहाय्येन नवमं वर्षमतीत्य तेभ्यः शतशो हार्दिकान् धन्यवादान् ददद् दशमे वर्षे पादार्पणं करोति । एतस्य इयदवधि स्थायित्वे ग्राहकानुग्राहकाणां कृपा हेतुस्तु विद्यत

एव। किन्तु श्रीभारतधर्ममहामण्डल-सञ्चालकानामनुग्रह एव प्रधानं कारणम्। यैश्च सर्वथा अर्थसाहाय्येन सूर्योदयं सम्पोष्यास्माकमुत्साहो वर्द्धितः। ते तु स्वौदार्य्येण नव वर्षाणि यावदर्थसाहाय्यं कृतवन्तः। पुनरग्रेऽपि तेषामेवोपरि अर्थभारदानं नास्मभ्यं रोचते। नापि सूर्य्योदयपाठकानां महाभागानामिदं भूषणम्।

अतः संक्षेपेणैव सर्वानेव संस्कृत-पाठशालाध्यापकान् विदुषो विद्यार्थिनश्च वयं तेषामेव हितबुद्धया पृच्छामो यत् कियदवधि एवं परावलम्बनं श्रीमन्तः समाश्रयिष्यन्ति? श्रीमतां साहाय्येन एकमपि संस्कृत-पत्रं न प्रचलेच्चेदितोऽप्यस्ति किञ्चिल्लज्जास्पदम्। केवलं भवतामुत्साहपूर्वकं मनोयोगदानस्यैव प्रयोजनं विद्यते। यदि भवन्तो मनसि सोद्योगं संस्कृत-पत्रसञ्चालनाय स्थिरीकुर्य्युश्चेदेवम्भूतानि पञ्चषाणि संस्कृतपत्राणि सर्वदा प्रचलेयुः। भवन्तः पश्यन्ति नहि, यद् इह हिन्दीभाषाया इंग्लिशभाषायाश्च कियन्ति पत्राणि निःसरन्ति तानि सर्वाण्यपि ग्राहकानुग्राहकाणामेव साहाय्येन प्रचलन्ति। न तत्रार्थसाहाय्यकष्टं कदाप्यायाति। परन्तु संस्कृतपत्राणामेव इयं दशा विद्यते, यत् तानि स्वयं स्वव्ययव्यवस्थाविधानं कर्तुं न पारयन्ति। अयं कलङ्कः सम्प्रति नवीन-संस्कृताध्यायिवर्गेणैव मार्जनीयः।

अतश्च सर्वेऽपि भवन्तो बद्धपरिकरा भूत्वा सूर्य्योदयस्यैकमेकं ग्राहकं सम्वर्द्धितुं कृतप्रतिज्ञा भवन्तु। यथा स्यात्तथा अस्मिन् वर्षे ग्राहकाणां वृद्धिं भवन्तः कुर्वन्तु। वयञ्च सर्वथा भवद्भिर्दत्तहस्तावलम्बा वर्द्धितोत्साहाः सन्तः सूर्य्योदयं चित्रादिना मसृण-कर्गजेन आकारप्रकार वर्द्धनेन सम्यक् सम्भूष्य सुरगव्याः सेवां कर्तुं समर्था भवेम। अधुनाऽपि भवन्तःपूर्ववदेव स्वीयं साहजिकमौदासिन्यं दर्शयिष्यन्ति चेत्कथं स्यात् सुरभारत्या अभ्युदयः यदभ्युदयेनैव सर्वेषां संस्कृतज्ञानां हितं शाश्वतिकं श्रेयश्च सम्पद्यते।

अतश्च भूयोभूयो विज्ञापयामः प्रार्थयामश्च यद् उत्तिष्ठत जागृत स्वस्यैवाभ्युदयकरेऽस्मिन् कर्मणि व्यापृता भवत। सूर्य्योदयेनास्माकं नास्ति कोऽपि लाभः। भवतामेव स्वनामप्रकाशेन विविधविषयकलेखादिपाठेन समाचारादिप्रकाशनेन बहुलाभो भवति। एवं सर्वजनीनकृत्येऽप्यस्मिन् यदि भवन्तो न उत्तिष्ठन्ति चेत्तर्हि हन्त! सफलितमेवास्माकं 'संस्कृतज्ञानां विरोधिभूतस्य संस्कृतद्वेषिवर्गस्य मनोरथं जानन्तु। ते सर्वथैवोपहसन्ति यत् संस्कृतज्ञाः केवलं भोजनभट्टाः पात्रेसमिता एव भवन्ति, न किञ्चित् विश्वजनीनं कृत्यं कुर्वन्तीति। अतश्च सङ्घीभूय सम्मार्जयन्तु कलङ्कमिममवश्यमस्मिन्-

वर्गे । सर्वेऽपि भवन्तो दृढीभूय सम्प्रति सूर्योदयग्राहकमेकैकमपि वर्द्धयन्तु येन वयमार्थिकचिन्तया विमुक्ताः सूर्योदयस्य सर्वथा सज्जीकरणे एव व्यापृता भवामः । किञ्चित्परिवर्तनन्तु सम्प्रत्यपि कृतं विद्यते, यच्च श्रीमद्भिर्दृष्टमेव स्यादिति । ये हि महात्मानो ग्राहक वर्द्धनं करिष्यन्ति तेषां सधन्यवादं नाम-प्रकाशनं करिष्यामः । × × × ×

## शोकप्रकाशः ।

—:o:—

वङ्गदेशस्य परमप्रसिद्धवैद्याः कविराजशिरोमणयः ख्यातनामानः श्रीश्यामादास वाचस्पतिमहोदया जुलाईमासस्य द्वितीयस्यां तिथौ इमं लोकं विहाय परलोकधामसमुपगता इति विषीदति चेतोऽस्माकम् ! एते श्रीमहामण्डलस्य प्रतिनिधयः प्रान्तीयमण्डलकार्येषु च परमसहायका आसन् । वैद्यराजमहोदयानां चिकित्सापद्धतिः भारतवर्षे प्रसिद्धा आसीत् । एतेषां समीपे चिकित्सां कारयितुं देशदेशान्तरतो रोगिणो गच्छन्ति स्म । विरल एव कश्चित् स्याद्य एतेषां चिकित्सापात्रीभूता विगतरोगो न स्यात् । पाश्चात्यचिकित्साप्रणाल्यास्तु ते प्रत्यक्ष-विरोधिन आसन् । सर्वेऽपि पाश्चात्यचिकित्साभिज्ञा यं रोगिणमचिकित्स्यं कथयन्ति स्म तमेव रोगिणं कविराजमहोदयाः स्वल्पेन कालेन स्वल्पेन व्ययेनापि मुक्तरोगं कृत्वा दर्शयन्ति स्म । किं बहुना विद्यावाचस्पति-कविराज-श्यामादास-महोदयानां निधनेन आयुर्वेदविभागस्य महती क्षतिः सञ्जाता । यस्याः पूर्तिः-सम्प्रति दुष्पूरैव दृश्यते । तेषां स्वभावः सरलोऽतिमृदुः भारतीयसभ्यताप्रियश्चासीत् तद्वियोगदुःखिता वयं तेषां कुटुम्बेभ्यः समवेदनां प्रकटयन्तः तच्चिरशान्त्यर्थं परमेश्वरं प्रार्थयामहे । × × ×

## काश्याः परमप्रसिद्धस्य विदुषो देहावसानम् ।

—:o:—

आषाढामायां १९९१ वैक्रमे एकादशवादने गङ्गायाः पश्चिमतटे निजालये सं० साहित्यसमाज-कोशाध्यक्षाणां काशीपण्डितसभाया भूतपूर्व-सभापतीनां सदाचारमूर्तीनां रणवीर-पाठशालाध्यक्षाणां व्याकरणकेशरिणाम्-अनन्तराम-शास्त्रिमहोदयानां देहावसानं चतुरशीतितमे वयसि जातम् । तेषां हि पुण्यात्मनां देहत्यागे न किमपि कष्टमभूदिति पुण्यशालिनां सदाचारिणां पुराणादिषु लौकिकेषु च वर्ण्यमानमनायासनिधनं प्रत्यक्षमेवाभूत् । सर्वैः काशीस्थैर्विद्वद्भिः परिवेष्टिताः गीता-विष्णुसहस्रनामादि-पवित्रपुस्तकपाठध्वनिमध्यगताः

श्रीकाशीविश्वेश्वरं ध्यायन्तो निजनश्वरमिदं कलेवरं विहाय कैलाशवासमाविविशुस्ते इति तत्पार्श्वोपविष्टानां प्रत्यक्षमिवाभवत्।

अस्तु, ते तु यशसा सदाचारेण नियमपालनैकान्ततया (रणवीर-पाठशालायां द्वात्रिंशद्वर्षं यावदध्यापयन्त एकदिनमपि विलम्बेन गमनं न कृतवन्तः। रात्रेर्वादिनत्रये समुत्थाय गङ्गास्नानं विधाय शिवपूजनं कृत्वा दुर्गासप्तशतीस्तोत्रपाठं कुर्वन्तः सर्वेभ्यः पूर्वमेव पाठशालायां समुपतिष्ठन्ते स्म) वैदुष्येण च इमं लोकं पुण्येन ज्ञानेन च परलोकं विजित्य चिरजस्कीभूय मोदमानास्तिष्ठन्ति। परन्तु अभाग्यमस्माकं काशीस्थानां विदुषां तच्छिष्याणां तत्परिवाराणां च यत् ईदृशो ज्ञानराशिः सदाचारमूर्तिः स्नेहमहोदधिरुपरत इति। तेषामुपरामेण वाराणस्या या हानिः समजनि तां श्रीकाशीविश्वनाथ एव पूरयिष्यति, तन्मित्र-शिष्य-परिवाराणाञ्च तद्वियोग-सहनक्षमं धैर्यं च वितरिष्यतीति कति-पय वाक्यतिलाञ्जलिं ददतः शोकाकुला वयमपि स्वल्पेनैव विरमामः।

## कार्तान्तिकमहोदयानां धर्मपत्नी-वियोगः।

श्रीभारतधर्ममहामण्डलस्य बम्बई प्रान्तीय-शाखाया उपप्रधानपदमलङ्कृतवतां विद्याभास्कराणां श्रीमतां कृष्णमोहनजी कार्तान्तिकमहोदयानां धर्मपत्न्याः परलोकवासं श्रुत्वा वयं सर्वेऽपि श्रीभारतधर्ममहामण्डलीयाः काशीस्थाश्च दुःखिताः। कार्तान्तिकमहोदयैः सह समवेदनां प्रकटयन्तः परलोकगतात्मन श्चिरशान्तिं श्रीकाशीविश्वनाथतः प्रार्थयामहे। धर्मपत्नीवियोगस्य वार्द्धक्येऽतिदुःखाकरत्वेऽपि कार्तान्तिकमहोदयाः स्वज्ञान-बलेनावश्यं तद्वियोगार्णवं सन्तरिष्यन्तीत्याशास्महे चेति।

## 'सद्म सद्यो विवेश।'

ले०—श्रीमान् गो० व्रजनाथ जी. महाराजः।

रहसि नव-किशोरी एकदा कान्तशून्या,
धवल शशिमयूखं व्योम्नि दृष्ट्वा रुरोद।
पथि निज-हृदयेशं तत् क्षणं सन्निरीक्ष्य,
चकित नतनताङ्गी सद्म सद्यो विवेश॥ १॥
भवति जलधराणां गर्जनं मञ्जु मन्दं,
वहति सुभगवायुः मन्थरो गन्ध-युक्तः।
नभसि झटिति दृष्ट्वा चञ्चलां कापि बाला,
चकितनतनताङ्गी सद्म सद्यो विवेश॥ २॥

# धर्म्मस्वरूपविचारः।

ले०–पं० गोपालदत्तत्रिपाठी, 'काव्यतीर्थः'।

असिस्टेण्ट लायब्रेरियन्, श्रीविश्वनाथ लायब्रेरी, काशी।

—————:❀:—————

अयि श्रीमन्माननीय-संस्कृतसाहित्य-पीयूषपानरसिकाः! स्वाधिष्ठानेन भारतवर्षमिदमलङ्कुर्वाणाः प्राचीनार्वाचीनशास्त्रविशारदा धर्मधुरन्धराः प्रियपाठकाः सूर्योदयस्यास्य!! श्रीमन्तो जानन्त्येव चैतद् यत्, इह किल जगति विश्वोऽपि जनिमान् निसर्गत एव स्वसमुन्नतिं सर्वात्मनाऽभिलषतीति निर्विवादमेव। समुन्नतिश्च कारणरहितायाः कार्योत्पत्तेरसम्भवात्, किमपि कारणमपेक्षत एव। तच्च कारणं किम्, कीदृशञ्च " इत्याकाङ्क्षायां समुपस्थितायाम् तत्र श्रुतिस्मृतिपुराणेतिहास-सदाचार प्रतिपादितो धर्म्म एव, नान्यः कश्चनेति सर्वं धर्मतत्त्वज्ञै दार्शनिकैश्चान्यैः संस्कृतसाहित्यरसिकैः प्रतिपाद्यत एव। "तानि धर्माणि प्रथमान्यासन्" "धर्मे सर्वं प्रतिष्ठितम्" इति श्रुतिस्मृती अपि स्पष्टं ब्रुवत्यौ सकललोकसमवस्थिति–साधकत्वेन धर्ममेवाऽवगमयत इति न च तिरोहितं विदुषाम्। एतस्मादृशस्य निखिलजनसमाजसर्वाङ्गीणसमुन्नतिसाधकस्य धर्मस्य वास्तविकं स्वरूपं कीदृशमस्तीति समुपस्थिते प्रश्ने धर्मशब्दस्य व्युत्पत्तिनिमित्तोऽर्थः स्तावन्निर्दिश्यते—

'धरतीति धर्मः' अथवा 'येनैतद् [जगद्] धार्यते स धर्मः, यो धारणं [जगतः] करोति अथवा यद्द्वारा सर्वं जगदिदं धृतं स्यात् स एव धर्मशब्देन व्यपदिश्यते। उपनिषत्सु चापि एतदर्थप्रतिपादकाः कियन्तो मन्त्रा दृश्यन्त एव। यथा—

"धर्मो विश्वस्य जगतः प्रतिष्ठा लोके धर्मिष्ठं प्रजा उपसर्पन्ति धर्मेण पापमपनुदति धर्मे सर्वं प्रतिष्ठितं तस्माद्धर्मं परमं वदन्ति॥"

[नारायणोपनिषत्]

धर्म एव सकलस्यास्य संसारस्य स्थितेः मूलम्। संसारेऽस्मिन् प्रजाः धर्मात्मानमनुसरन्ति। धर्मेणैव पापं दूरं गच्छति। धर्मे एव सर्वं जगत् स्थितं वरीवर्त्ति। अतो वै धर्ममेव परमं पदार्थं मुनयो वदन्ति।

"धारणाद्धर्ममित्याहु धर्मो धारयते प्रजाः ।
यत् स्याद्धारणसंयुक्तं स धर्म इति निश्चयः ॥" इति व्यासदेवः ।

यया कयाचिदेकया शक्त्या सकला सृष्टिक्रिया रक्षिता भवति, तस्या एव नाम धर्म इति । यया ईश्वरीय-शक्त्या समस्त-पदार्थजातस्य धारणं सैव एका शक्ति र्नाम धर्म इति ।

"योग्यतावच्छिन्ना धर्मिणः शक्तिरेव धर्मः ।" इति योगभाष्यम् ।

धर्मिणो योग्यतायुक्ता शक्तिरेव धर्मः, अर्थात् जड़चेतनयोर्मध्ये कस्मिन्नपि पदार्थे यच्छक्तिं विना पदार्थसत्तैव नास्ति तस्या एव नाम धर्म इति । यथा—अग्नेरुष्णत्वम्, जले द्रवत्वम्', इत्यादि । पाश्चात्यविज्ञाने ईदृशी शक्तिस्तु property ( प्रॉपर्टी ) इत्युच्यते । इदमेव विज्ञानं चेतनपदार्थेऽपि भवितुमर्हति । तद्यथा—मनुष्ये मनुष्यत्वम्, अर्थात् यस्याः शक्तेः स्थितत्वेन मनुष्यो मनुष्यपदभाग् भवति, सैव शक्ति र्नाम तस्य धर्म इति प्रतिपाद्यते । एवम्—पशौ पशुत्वम्, ब्राह्मणे ब्राह्मणत्वम्, क्षत्रिये, क्षत्रियत्वम्, वैश्ये वैश्यत्वम्, शूद्रे च शूद्रत्वमित्यादि । अतो वै विज्ञानेनानेनेदमेव निश्चीयते यत् धर्मस्य अलौकिक-शक्तिद्वारा एव समस्तमिदं विश्वं सुरक्षितं भाति । महर्षि कणादोऽपि—

"यतोऽभ्युदय निःश्रेयससिद्धिः स धर्मः" इत्याह ।

यद् द्वारा ऐहलौकिकोन्नतिः, तथा पारलौकिकोन्नतिः, अन्ते च मोक्षप्राप्तिः स्यात्; स एव धर्म इत्युपदिश्यते ।

यानि च साम्प्रतम्—वैदिकधर्मः, हिन्दूधर्मः, आर्यधर्मः, सनातनधर्म इत्याद्यनेकानि नामधेयानि प्रचलितानि सन्ति धर्मस्य, तानि तु सर्वाणि कल्पितानि अस्वाभाविकानि एव । अस्मच्छास्त्रे तु केवलं 'धर्म' शब्द एव दृश्यते । यद्यपि धर्मस्य लक्षणं शास्त्रेषु बहुविधं कृतमेव लोक्यते पूर्वोक्तरूपं यथा, तथापि धर्मस्य वास्तविकं मूर्त्तं स्वरूपं किमपि कथमपि कैश्चिदपि नाभ्युपेयते । अतो वै "अमूर्त्तो धर्मः" इति सर्वसम्मतमेवास्ति । अतश्च धर्मो न बाह्यप्रत्यक्षगोचरः, सुख-दुःखादिवदान्तरप्रत्यक्षोऽपि न स भवितुमर्हति, अयोग्यत्वाद्; इत्यत्रापि नास्ति विवादः केषाञ्चिदपि पण्डितप्रकाण्डानाम् । एवञ्च, अलौकिकस्वरूपस्यास्य धर्मस्य विज्ञानाय न प्रत्यक्षं प्रमाणं भवितुमर्हति । किन्तु, अनुमानादिकमेव स्यात् । अत एव "अदृष्टो धर्मः"—इति प्रतिपादनं साधु सङ्गतं भवति । स च धर्मः, स्थूलदृष्ट्या द्विविधः-सामान्यधर्मः, विशेषधर्मश्चेति । सामान्यस्तु पूर्वोक्तलक्षण एव स्यात् । विशेषस्तु पृथक् पृथगेव निर्दिष्टोऽस्ति । यथा—स्त्रीणां कृते यो हि धर्मो व्युपदिष्टः स च न पुरुषाणां कृते,

यथा पशुधर्मः स च नास्ति मनुष्यधर्मः। एवमेव यथा—गृहस्थजनस्य तथा न सन्यस्तस्य। यथा च आर्यधर्मः, तथा न अनार्यधर्मः। किं वदामि! अन्येऽपि सन्ति बहवोऽस्य भेदाः। यथा—देश-धर्मः, कालधर्मः, जातिधर्मः, वर्णधर्मः, इत्यादि इत्यादि। एवञ्च, भेदोपभेदोपबृंहितस्यास्य धर्मस्य वास्तविकं स्वरूपं निश्चेतुमतीव जटिलम्। अत एव त्वेतस्मिन् विषये कैश्चित् सत्यमेव प्रतिपादितम्—

वेदा विभिन्नाः स्मृतयो विभिन्ना नाऽसौ मुनिर्यस्य मतं न भिन्नम्।
धर्मस्य तत्त्वं निहितं गुहायां महाजनो येन गतः स पन्थाः॥

---

# मकरन्द-षट्पदी।

—:o:—

( ले०-बालकविः अमीरचन्द्रवर्मा )
साहित्यशास्त्री ऋषिकुल ब्रह्मचारी,

विषपिबमम्बुशयानं कमलासन-राजमान-संहननम्।
हर-हरि-हिरण्यगर्भोपममयि! मकरन्दमानमत॥ १॥
कमलाकान्तो दम्भोलिलसन्विलसद्वनावनीवासः।
हरिरिव हरिरिव हरिरिव मकरन्दो वन्द्यतां बन्धो॥ २॥
मारुतसखः सुखावहसंस्पर्शः सहज-शीतलो लोके।
अनलानिल-जल-तुलितो मकरन्दो विजयते नित्यम्॥ ३॥
कुमुद कदम्बक मोदं, मदनसहायं च सुरभि विख्यातम्।
विधुमिव मधुमिव मधुरं मकरन्दं वन्द्यतां वन्द्यम्॥ ४॥
निमलमपि कमलस्थं मधुकरपीतं सुमादपीतं च।
रविकर विपुलितमेनं विन्दत मकरन्दमत्र सानन्दम्॥ ५॥
मधुभव! मधु-सख-संगिन्! रङ्गीकृतपद्म! हे मधो! मित्र।
इति षट्पदी त्वदीया रमतामिह मानसेऽविरामं मे॥ ६॥

# कालिदासभवभूती ।

( लेखकः—नेमिचन्द्रो जैनः )

सुललितपदनिबन्धनरसास्वादमुग्धमतिः सर्वोऽपि रसिकजनः प्रत्यहं कविकुलचूडामणिभूतयोः कालिदासभवभूत्योः काव्यसुधारसमास्वादयति । न पुनः कोऽपि तत्र महाकविद्वयस्य तुलनाविधाने विहितमतिर्दरीदृश्यते । तथापि गजेन्द्रैर्विस्तारिते पथि मृग इव मया प्राचीन लेखाननुसृत्य तयोः कवित्व-तुलनाविषये कोऽपि यत्नः क्रियते । प्राचीनैरेव विबुधशिरोमणिभिः—

"पुरा कवीनां गणनाप्रसंगे कनिष्ठिकाऽधिष्ठितकालिदासा ।
अद्यापि तत्तुल्य-कवेरभावादनामिका सार्थवती बभूव ॥
सुकविद्वितयं मन्ये निखिलेऽपि महीतले ।
भवभूतिः शुकश्चायं वाल्मीकिस्तु तृतीयकः ॥"

इति श्लोकद्वयेन तयोर्महाकवित्वं स्थापितमिति । विशिष्टया रचनया च भवभूति-रेवाद्वितीयः कालिदासस्य तुलनां कर्तुं समर्थः ।

कालिदासस्य रचनायाः लक्ष्य-व्यङ्ग्यार्थपरकत्वं भवभूतेश्च वाच्यार्थपरकत्वम्।

कालिदासस्य सर्वमपि वाक्यं प्रायः लक्ष्यव्यङ्ग्यार्थयो र्बोधकं वर्तते । यथा शकुन्तलामवलोक्य दुष्यन्तः "अये लब्धं नेत्रनिर्वाणम्" ॥ अत्र नेत्रनिर्वाणजन्यरसास्वादो वाच-कसामाजिकानुभवगम्यः । भवभूतेस्तु पद्येऽनुभवोऽपि वाच्यत्वेन स्पष्टतया सहृदयानां तादृग् हृदयङ्गमः । यथा मालतीविषये माधवः—

'अविरलमिव दाम्ना पौण्डरीकेण नद्धः
स्नपित इव च दुग्धस्रोतसा निर्भरेण ।
कवलित इव कृत्स्न श्चक्षुषा स्फारितेन
प्रसभममृतमेघेनेव सान्द्रेण सिक्तः ॥'

अत्र चक्षुर्दर्शनजन्यानुभवस्य कविनैव स्पष्टशब्दै र्वर्णनाद्वाच्यतया तादृक् सामाजिकानुभवगम्यत्वम् ।

कालिदासस्योपमागाः वैशिष्ट्यं, नायिकाना-मङ्गवर्णनबाहुल्यम् भवभूतेश्च तासां गुण-वर्णन-बाहुल्यम् । — उपमाविषये 'उपमा कालिदासस्ये'ति विदुषां सदुक्तिः सुसंगतैव । यथा हि "इदमुपहितसूक्ष्मग्रन्थिना स्कन्ध-देशे स्तनयुगपरिणाहाच्छादिना वल्कलेन । वपुरभि-नवमस्याः पुष्यति स्वां न शोभां कुसुममिव पिनद्ध पाण्डुपत्रोदरेण ॥"

अत्र शकुन्तला-वर्णने उपमानोपमेययोरनुरूपं साम्यं स्वाभाविकत्वञ्च प्रतीयते । कालिदासस्तदितरेऽपि कवयो नायिकावर्णनप्रस्तावे तासां वक्षोजप्रभृतीन्य-ङ्गानि वर्णयन्ति । कालिदासो यथा शकुन्तलाविषये—'तुङ्गस्तनी, 'श्रोणीभारा-दलसगमना,' 'बिम्बाधरा' । परन्तु भवभूतिस्तु तासां गुणवर्णन एव विहित-मतिः स्वात्मानं सिद्धमनोरथं मन्यते । यथा सीता-विषये 'इयं गेहे लक्ष्मीरिय-ममृतवर्तिर्नयनयोः,' एतानि तानि वचनानि सरोरुहाक्ष्याः कर्णामृतानि मनसश्च रसायनानि,' 'सञ्जीवनौषधिरसो नु हृदि प्रसिक्तः,' 'विनिश्चेतुं शक्यो न सुख-मिति वा दुःखमिति वा' । अत्र हि विचार्यमाणे निजोपमाया अनुपमतया नारीरूपवर्णने कविकुलशिरोमणिः कालिदासः सफलो बभूव । तथापि भव-भूतिरत्र पृष्ठगो न वक्तुं शक्यते । तस्य तु असाधारणं रचनायां कौशलम् । नायिकायाः पादप्रभृतीनामङ्गानां वर्णनं परित्यज्यादर्शभूतान् गुणानेवासौ स्वव-र्णनीय-विषयञ्चकार । एतद्वर्णनविषये भवभूतिः श्रेष्ठतरः । उभयोरपि स्वस्व-पूर्वोक्त-विषये सहृदयहृदयङ्गमं वर्णन-कौशलम् ।

नरसौन्दर्य-वर्णने भवभूतेः प्राधान्यं, कालि-दासस्य च न्यूनत्वम् — परञ्च पुरुषरूपवर्णने भवभूतेः प्राधान्यं दृश्यते । यथा, सीता चित्रे राममवलोक्य "अहो दल-न्नवनीलोत्पलश्यामल–स्निग्धमसृण–शोभमान-मांसलेन देहेन सौभाग्य-विस्मयस्तिमित-तातदृश्यमानसौम्य-सुन्दर-श्रीरनादर-खण्डित-शङ्करशरासनः शिखण्डमुग्धमुखमण्डल आर्यपुत्र आलिखितः" । कालि-दासो यथा, दुष्यन्तस्य शरीरं वर्णयति—

'अनवरतधनुर्ज्यास्फालनक्रूरवर्ष्मा,
रविकिरण-सहिष्णुः स्वेदलेशैरभिन्नः ।
अपचितमपि गात्रं व्यायतत्वादलक्ष्यं,
गिरिचर इव नागः प्राणसारं बिभर्ति ॥'

अत्रोभयत्रापि पुरुषसौन्दर्यवर्णने पूर्वत्र यथा सामाजिकानां रामविषयक-

शिशु-वर्णनेऽपि कालिदासापेक्षया भवभूतेर्वैशिष्ट्यम्

शिशु-वर्णनेऽपि भवभूतिर्विशिष्ट एव। यथा, कुशमवलोक्य रामः—

"अथ कोऽयमिन्द्रमणि-मेचकच्छवि-
र्ध्वनिनैव दत्तपुलकं करोति माम्।
नवनीलनीरधरधोरगर्जित-
क्षणबद्ध कुड्मलकदम्बडम्बरम् ॥

कालिदासो यथा, दुष्यन्तो निजतनयं विलोक्य—

"आलक्ष्य दन्तमुकुलाननिमित्तहासै,
रव्यक्त-वर्णरमणीय-वचःप्रवृत्तीन्।
अङ्काश्रयप्रणयिनस्तनयान्वहन्तो,
धन्यास्तदङ्गरजसा मलिनी भवन्ति ॥"

अत्रोभयत्रापि पुत्रयोरपरिचये समानेऽपि "ध्वनिनैव दत्तपुलकं" इति वर्णनेन पूर्वत्र वात्सल्य-रसानुभवः प्रतीयते। अपरत्र "धन्याः" इति पदेन दुष्यन्तस्यौदासीन्य-प्रतीत्या न वात्सल्य-रसानुभवः। नाटकदृष्ट्या तु दुष्यन्तदशानुसारि रम्यं वर्णन-कौशलमुत्तरत्र पद्ये।

मृगाश्वादीनां वर्णने कालिदासस्य श्रेष्ठत्वं भवभूतेश्च न्यूनत्वम्

मृगादीनां स्वभावोक्त्या वर्णने कविकुलावतंसः कालिदासः सिद्धहस्त इति विदितचरम्। यथा—

"ग्रीवाभङ्गाभिरामं मुहुरनुपतति स्यन्दने दत्तदृष्टिः।
पश्चार्द्धेन प्रविष्टः शरपतनभयाद् भूयसा पूर्व-कायं।
दर्भरर्धावलीढैः श्रमविवृतमुखभ्रंशिभिः कीर्णवर्त्मा,
पश्योदग्रप्लुतत्वाद्वियति बहुतरं स्तोकमुर्व्यां प्रयाति

अश्ववर्णनं यथा—

"मुक्तेषु रश्मिषु निरायतपूर्वकाया
निष्कम्पचामरशिखा निभृतोर्ध्वकर्णाः।
आत्मोद्धतैरपि रजोभिरलंघनीया
धावन्त्यमी मृगजवाक्षमयेव रथ्याः।

निजरचना-निराकृत-कविलोको भवभूतिस्त्वत्र वर्णने निरुद्धमार्ग इव प्रतीयते। यथा—

'पश्चात्पुच्छं वहति विपुलं तच्च धूनोत्यजस्रं,
दीर्घग्रीवः स भवति खुरास्तस्य चत्वार एव।

शष्पाण्यत्ति प्रकिरति शकृत्पिण्डकानाम्रमात्रान्,
किं वा ख्यातैं र्व्रजति स पुनर्दूरमेह्यहि यामः॥'

तथाप्यस्य पद्यस्य कविनिबद्धबालकप्रौढोक्तिसिद्धस्य नाटकदृष्ट्या तु नास्त्यशोभनत्वम्।

| | |
|---|---|
| तत्तद्वस्तुवर्णन उभयो रप्यनुकूलपदन्यासेन वैशिष्ट्यम् | कालिदासस्य शकुन्तला-कोमलाङ्गवर्णने कोमलपदानामेव न्यासः। अत्र हि भाषा-सौन्दर्यं भावमनुसरति। यथा— |

'अधरः किसलयरागः कोमलविटपानुकारिणौ बाहू,
कुसुममिव लोभनीयं यौवनमङ्गेषु सन्नद्धम्।'

भवभूतेः रचनायां नदीवर्णने प्रवाहानुकूल-पदन्यासतया श्लोकपाठकस्य मुखेनैव प्रवाहो निःसरतीव यथा—

'एते ते कुहरेषु गद्गदनदद्गोदावरीवारयः'

| | |
|---|---|
| कविद्वयस्यानुरूपा उक्तयः | अन्याश्चात्र कविद्वयस्य मिथोऽनुरूपा उक्तयो लिख्यन्ते— |

| कालिदासस्य | भवभूतेः |
|---|---|
| १—स्वजनस्य हि दुःखमग्रतो विवृतद्वारमिवोपजायते | १—संतानवाहीन्यपि मानुषाणां, दुःखानि सद्बन्धु-वियोगजानि। दृष्टे जने प्रेयसि दुःसहानि, स्रोतः सहस्रैरिव संप्लवन्ते॥ |
| २—शमप्रधानेषु तपोधनेषु गूढं हि दाहात्मकमस्ति तेजः। स्पर्शानुकूला अपि सूर्यकान्ता-स्तदन्य-तेजोऽभिभवाज्ज्वलन्ति॥ | २—न तेजस्तेजस्वी प्रसृतमपरेषां प्रसहते स तस्य स्वो भावः प्रकृतिनियतत्वादकृतकः। मयूखैरश्रान्तं तपति यदि देवो दिनकरः किमाग्नेयो ग्रावा निकृत इव तेजांसि वमति॥ |
| ३—वसने परिधूसरे वसाना नियमक्षाममुखी धृतैकवेणिः। अतिनिष्करुणस्य शुद्धशीला मम दीर्घं विरहव्रतं बिभर्ति॥ | ३—परिपाण्डु दुर्बलकपोलसुन्दरं दधती विलोलकबरीकमाननम्। करुणस्य मूर्तिरथवा शरीरिणी विरहव्यथेव वनमेति जानकी॥ |

कालिदासो हि अल्पेषु शब्देषु यं विशिष्टं भावं व्यनक्ति, तमेव भवभूति-र्विस्तार्य बहुषु वर्णेषु प्रतिपादयतीत्येतदपि पूर्वोक्ताभिरुक्तिभिर्व्यक्तमेव।

भिन्न भिन्नरसेऽन्यतरस्य वैशिष्ट्यम् } एवं साधारणतयापि उभयोरपि कव्योः रचनाऽध्ययने कालिदासस्य रचनायां हास्यरसाविर्भावोऽपि श्रेष्ठतरः । स चाभिज्ञानशाकुन्तले शकुन्तलासखीषु मध्ये माधव्ये च साक्षादनुभूयते । उत्तरे रामचरिते तु सीतामुखेनोर्मिलामुद्दिश्य चित्रदर्शनसमय एकदैव वर्णितो हासः । परन्तु गम्भीरतया विशिष्ट-कोटिगत इव लक्ष्यते । यादृशी वीररसस्य प्रसूतिर्भवभूतेः रचनायां तादृशी कालिदासस्य कृतौ न वर्तते । यादृशी च शृङ्गाररसे सिद्धहस्तताऽभिज्ञानशाकुन्तल-प्रणेतुस्तादृश्येवास्त्युत्तररामचरितस्य रचयितुः परं वर्णनीयार्थस्यातिस्पष्टतया प्रतिपादनाद् व्यङ्ग्यार्थानां वाच्यायमानत्वम् ।

'भवभूतेस्तु सम्बन्धाद्भूधरभूरेव भारती भाति ।
एतत्कृत-कारुण्ये किमन्यथा रोदिति ग्रावा ॥'

इत्येषोक्तिर्भवभूतिविषये प्रसिद्धा, तथापि तद्रचिते उत्तररामचरिते विलापमात्रस्यैव प्राधान्येन करुणरसस्य न तादृक् चमत्कारजनकत्वं, यतो विलापमात्रेण कारुण्यस्य साधारणेरपि कर्तुं शक्यत्वात्, स एव करुणो रसः सहृदयानां प्रीतिमावहति यत्र कर्त्तव्यस्नेहयोः, शोकधैर्ययोः, आनन्दवेदनयोरन्योन्यमिश्रणेनात्मन्यानन्दातिशय उत्पद्यते । कालिदासस्य शृङ्गारकाव्यरचनाप्राधान्यसत्त्वेऽपि करुणेऽपि न किञ्चिन्न्यूनत्वम् । यतः

यास्यत्यद्य शकुन्तलेति हृदयं संस्पृष्टमुत्कण्ठया,
अन्तर्बाष्पभरोपरोधि गदितं चिन्ताजडं दर्शनम् ।
वैक्लव्यं मम तावदीदृशमहो स्नेहादरण्यौकसः,
पीडयन्ते गृहिणः कथं न तनया-विश्लेषदुःखैर्नवैः ॥

इत्यादि-श्लोके करुणरसोऽनुभूयते । अयं श्लोकः प्रसिद्धेषु चतुर्षु मध्येऽन्यतम इति । तैरेव श्लोकैः कालिदासस्य विशिष्टं प्राधान्यं समजनि । उभयोरपि कव्योर्विषये प्राचीनानामेवं सम्मती यथा—

काव्येषु नाटकं रम्यं तत्रापि च शकुन्तला,
तत्रापि च चतुर्थोऽङ्कस्तत्र श्लोकचतुष्टयम् ।

तथापि,

नाटकेषु वयं श्रेष्ठा वयं वा वयमेव वा
उत्तरे रामचरिते भवभूतिर्विशिष्यते ।

---

स्मर्तव्यम्—अस्मिन्निबन्धे श्रीमतां गुरुवर्याणां माननीय-मुकुन्दशास्त्रि-खिस्ते-महोदयानां विशिष्टं साहाय्यमिति समुल्लेखार्हमिदम्

## व्याख्यानम्।

[ वाराणसीस्थ संस्कृतमहाकलाशालायां पाक्षिकविद्वत्परिषदि धर्ममधिकृत्य कृतस्योपन्यासस्य सङ्ग्रहः ।]

(उपन्यासकः श्री-शङ्करशास्त्री, संस्कृतकलाशालाध्यक्षः कल्लिडाईकुरुच्चि मद्रास)

"सदा शारदाः षण्मृगाङ्का यदि स्युस्समुद्यन्त एव स्थिताश्चेत् समन्तात्।
सदा पूर्णबिम्बाः कलङ्कैश्च हीनास्तदा त्वन्मुखानां ब्रुवे स्कन्द ! साम्यम्-"

धर्मपदेन सामान्यतः पुण्यकर्म व्यवह्रियते। तत्प्रतिद्वन्द्विभावेनाभ्युपगन्तव्यस्य पापकर्मणः अधर्मपदेन व्यवहारः क्रियते। इत्थं धर्माधर्मपदव्यपदेश्ययोस्तयोः कर्मणोः पृथक् पृथक् फलेनावश्यं भवितव्यम्—यद्येतन्नाङ्गीक्रियेत, तदा फलविशेषकामनया क्वचित् प्रवृत्तिः क्वचिन्निवृत्तिरिति नैव शक्यते वक्तुम्। अतः फलमप्यभ्युपगन्तव्यम्—

लोके हि, सुखं पुण्यकर्मणः फलम्, दुःखं पापकर्मणः फलमिति व्यवह्रियते। तथा च धर्मस्सुखजनकः अधर्मो दुःखजनक इत्यायाति। अयं धर्मः अयमधर्म इतिविशिष्य ज्ञानञ्चावश्यं सम्पादनीयम् तच्च नान्तरेण प्रमाणविशेषं शक्यते।

लोके कश्चित् पुरुषः किञ्चित् कर्म सुखसाधनं मन्यते-तदेवान्यो दुःखसाधनम्—यथाऽऽतुरस्य शीतोदकस्नानं आलस्यादि-निर्हरण-पूर्वकं-प्रोत्साहजनकत्वेन सुखसाधनत्वाद्धर्म-पदवाच्यं सदपि, ज्वरितस्य जाड्यातिशयापादकत्वेन दुःखापादकत्वात् अधर्मपदेनापि व्यवहार्यतामापद्येतेति कस्यापि-कर्मणः एकान्ततो धर्मपदेनाधर्मपदेन वा व्यपदेश्यता न स्यादिति अव्यवस्थैवापतेत्—किञ्च, एकस्यैव पुरुषस्य यत् कर्म कदाचित् सुख-साधनं भवति तदेव कालान्तरे दुःखसाधकं भवति यथा तदेव स्नानं ग्रीष्मे सुखजनकमपि हेमन्ते दुःखजनकं भवति—एवं रीत्या कस्यापि कर्मणः सदा सर्वेषां सुखाधायकतया वा दुःखाधायकतया वा नियमशक्यत्वेन धर्मत्वमधर्मत्वं वा न निर्णेतुं शक्यते।

अतः धर्माधर्म-व्यपदेश-व्यवस्थापनाय प्रमाणमेकमवश्यमन्विष्येत। तत्र, आप्तोक्तं प्रमाणत्वेन नाङ्गीकर्तुं शक्यते। कः आप्तः कः अनाप्तः इत्यपि न निर्णयपदवीमधिरोढुमर्हति। कश्चित् कस्यचिदाप्तो भवति कस्यचिदनाप्तो भवति, एक एव कदाचिदाप्तः कदाचिदनाप्तश्च भवतीति अव्यवस्थितमेव—मनुष्येषु रीतिरित्थं वर्तते। अनन्तरं पश्वादिष्वपि विचारयामः किञ्चित्—

गवादयो हि धनिनां सदनेषु रक्ष्यमाणा धान्यपलालादीनि यथेच्छं भक्षयन्तो दृश्यन्ते पुष्टाङ्गाः। अन्यत्र चान्ये घासलेशमप्यलभमानास्त्वगस्थिशेषा दृश्यन्ते। इत्थं पतत्रिष्वपि, एवं स्थावरेष्वपि, केचित्तरवः फलैरवनम्रा आश्रिताम

छायाप्रदानादिना बहूपकुर्वन्ति केचिन्न तथेति सर्वेषामनुभवः । अतश्चेतनाचेतनसाधारण्येन सुखदुःख-साधनधर्माधर्मोपदेष्टा सर्वेषां सर्वदाप्यासतमः कश्चनाङ्गीकर्तव्यः स एवात्र ईश्वर इत्युच्यते, तदुपदिष्टं धर्माधर्मबोधकं शासनमेव वेदशब्देन व्यवहरामः ।

तच्च वेदरूपं शासनं कदा प्रावर्ततेति विचारस्तु महान् चराचरात्मके जगति सृष्टि-वैचित्र्यस्य सुखदुःख-वैचित्र्यस्य च दर्शनेन तत्कारणयो र्धर्माधर्मयो रभ्युपगतत्वेन तद्बोधकमैश्वरं वेदरूपं शासनमपि सृष्टेः प्रागेवावर्ततेति निश्चयेन तस्यानादित्वं सिद्धम् । अनादिना सर्वज्ञेनेश्वरेणोपदिष्टे वेदात्मके शासने प्रकाशमानानेव धर्मान् सनातनधर्म इति व्यवहरामः । तस्य कर्मात्मकत्वं वा अदृष्टात्मकत्वं वा, उतान्यरूपत्वम् इति विचारश्शास्त्रैकसमधिगम्यः । इदानीं बहुकालापेक्ष्यः ।

किञ्च स धर्मः नित्यः नैमित्तिकः काम्यः, इति त्रिधा विभज्य पृथक् लक्षणं फलञ्च विशदयन्ति विचक्षणास्तन्त्रज्ञाः । अन्यथा च विभजन्ति, सामान्यधर्मः, विशेषधर्म इति, प्रवृत्तिधर्मः, निवृत्तिधर्म इति। तेनापि वर्णाश्रमविभागेन वर्णधर्मः आश्रमधर्मः वर्णाश्रमधर्म इति च बहुधा। वेदार्थप्रतिपादकत्वात् स्मृतेः प्रामाण्यम्–

"श्रुतिं पश्यन्ति मुनयः स्मरन्ति च तथा स्मृतिम्"
"स्मृतिः प्रत्यक्षमैतिह्यं अनुमानश्चतुष्टयम्"

स्मृतेः प्रमाणतायामिदं प्रमाणद्वयम् इतः परश्शतानि प्रमाणान्युपलभ्यन्ते। इतिहासपुराणानामपि प्रामाण्यम्, वेदार्थोपबृंहकत्वादेव—"इतिहासपुराणाभ्यां वेदं समुपबृंहयेत्" इति वचनमत्र प्रमाणम्–विशिष्य संग्रहेणेदं प्रतिपाद्यते—

प्रौढाविवाहः विधवाविवाह इत्यादयोऽधर्माः । प्रौढाशब्देन सरजस्का स्त्री प्रतिपाद्यते विवाहशब्देन पाणिग्रहणं—तच्च—

"पितुर्गृहे तु या कन्या रजः पश्यत्यसंस्कृता-
सा कन्या वृषली प्रोक्ता तत्पति र्वृषलीपतिः" ।

"यावन्नर्तुमती भवेत्" इत्यादिवचनजातेन निषिद्धम् । किञ्च यूपरशनादृष्टान्तेन वेद एव विधवाविवाहो निन्द्यते । सकृत्कन्या प्रदीयते । इतिवचनानुरोधेन कन्यादानं सकृदेव। अपिच उपनयनस्थानीयेन विवाहाख्येन वैदिकेन कर्मणा प्रतिग्रहीत्रधीना कन्या तद्गोत्रीया तद्वंश्या च भवतीति सुविदितमेतद्विदुषाम्। यदा हि प्रतिग्रहीतुःस्वं भवतिकन्या, तदा तस्याःनिवर्तते पितुस्स्वत्वम् । तथा च प्रतिग्रहीतुः मरणे कोऽन्यस्तां दातुमीष्टे । यद्यपि प्रतिग्रहीतुर्धनमन्यादृशं मरणानन्तरं पुत्राभावे पत्नी एव लभते—"अर्धो वा एष आत्मनो यत् पत्नी" इति श्रुतेरिति यथा, तथा पत्नीनिष्ठपतिनिरूपितं स्वत्वं पतिवियोगादनन्तरं स्वमेव लभते इति युक्ति र्वक्तुं शक्यते । तथापि स्वस्य स्वेनैवान्यस्मै दानं कथं वा घटताम् ?

किञ्च तयैव श्रुत्या अर्धांशेन भर्तरि जीवति कथं स्वयमेव स्वस्य दानमर्हति पत्नी ?इत्यलमविचारितरमणीयेऽस्मिन् विषये वृथा वाग्विजृम्भणेन । एवं सर्वोऽपि

विचारो राजकीय-न्याय-समय-व्यवस्थापक-महासभायां भारतमण्डलीयायां स्थानं परमभिलषद्भिः दूरीकृतप्राचीनसंप्रदायैः ऊरीकृतनवनयाचारैः स्वानुष्ठितान् दुराचारान् अन्यैरपि सनिर्बन्धं अङ्गीकारयितुकामैः कैश्चनाधुनातनैरधार्मिक-शिरोमणिभिः क्रियते इति महत् दौर्भाग्यं भारतमण्डलस्य।

इदमपरं विपरीतमद्यापतितम्—यत्-गान्धिमहोदयेन कालेय-पापपुञ्ज-परिवर्तन, भारतवर्षेऽस्मिन् सर्वस्मिन् "देवालये चण्डालादयः प्रवेशनीयाः। अत एव स्वाराज्यं सिद्धयति, नोचे दन्यथाऽन्यभावथेच्छकर्तुं पारयामिः" इति कतिचनापशदान् पण्डितम्मन्यान् ब्राह्मणब्रुवान् स्वायत्तीकृत्य जोघुष्यते—

सर्वथा वयं सनातनधर्मावलम्बिनो वैदिकाः सर्वसाक्षिणं धर्मव्यवस्थापकमीश्वरमेव शरणं भजामः—

गीताचार्यो भगवान वासुदेवो हि—

"यदा-यदा-हि-धर्मस्य-ग्लानि-र्भवति-भारत।
अभ्युत्थानमधर्मस्य तदात्मानं सृजाम्यहम्॥"

इति प्रति जानाति—

यदि सा प्रतिज्ञा दैवी वाक्, यदि च वयं सुकृतिनः तदा क्षोभमिमं प्रशमय्य सौख्यं दद्यात् विश्वनाथो भारतीयेभ्यो धार्मिकेभ्य इत्यभ्यर्थये।

नैतावताऽस्माभिस्तूष्णीमास्थातव्यम्। यथाकथंचिन्नित्यं कर्मानुष्ठातव्यम् न तत्रालस्यादिकं कर्तव्यम्—अन्ततो गत्वा "अहरहः सन्ध्यामुपासीत" इत्यादि शास्त्रपर्यालोचनया सन्ध्या-कर्म वानुष्ठातव्यम्—यद्यपि सन्ध्याख्ये नित्ये कर्मणि अनुष्ठीयमाने "धर्मेण पापमपनुदति" इत्यादिश्रुत्या पापक्षयः फलं भवति तथापि दृष्टादृष्टात्मकं भावरूपं फलमपि भवति—

तथाहि-सन्ध्याख्याया गायत्र्या देव्या ब्रह्म-स्वरूपिण्या गायत्र्याख्येन मन्त्रराजेनोपासनानन्तरं स्वस्थानप्रस्थापनसमये मन्त्रोऽयं पठ्यते श्रुतौ-यथा "स्तुतो मया वरदा वेदमाता प्रचोदयन्ती पवने द्विजाता—आयुःपृथिं, द्रविणं ब्रह्मवर्चसं मह्यं दत्वा प्रयातु ब्रह्म लोकम्" इति—अनेन वचनेन गायत्र्युपासकानां चिरजीवित्वम् तत्रापि न दारिद्र्येणावस्थानम्—अपितु धन-लाभः, अन्ते ब्रह्मवर्चसम्, इति सर्वार्थ लाभोऽस्तीत्यवगम्यते।

एवमेवास्मत्कुलकूटस्थाः गोत्रप्रवर्तकाः पुण्यपुरुषाः विश्वामित्र-वसिष्ठ प्रभृतयो मानवा अपि महर्षयः ब्रह्मर्षयः तृणीकृतजगत्त्रयाः पुरुहूतमपि-तृणाय मन्यमानाश्चलमदृश्यन्त—नहीदानीं तादृशं साधनं नास्त्यस्माकम्—इत्थं करतलगते नवनीते किमर्थं घृताय पण्यवीथिकां व्रजामः।

सर्वे वयं स्तुमोगायत्र्यात्मानं परमात्मानं विश्वेश्वरनामानमिति, किमन्यद्वक्तव्यमवशिष्यते—सर्वथापि कुशलं नो भूयादिति प्रार्थयामहे—

# मधुप-प्रमादः ।

—:*:—

[ प्रणेता महावीरप्रसादजोशी काव्यतीर्थः डुण्डलोद ]

मधुप ! किमु मधौ मुदं न दधासि ॥
सुमनः सुमनो-मोहक-सुमनसि किमु न मधुरतां लासि ॥
कान्ति-कला-कलिते सुकोमले,
विभा-विभासित-विभवे विमले ;
सरले सरल-श्यामल-कमले,
कमलं*कथं न यासि ॥ मधुप ! किमु मधौ मुदं न दधासि ।
विकल-बकुल-विपिनेऽपि न विहरन्,
रसालरसमपि न क्षणं स्मरन् ;
नीरस-किंशुक-विभां तु विभरन् ।
मत्तमतिः प्रतिभासि मधुप ! किमु मधौ मुदं न दधासि ।
मन्ये मधुर-मालती स्निग्धः,
प्रणय प्रणाली परम-विदग्धः;
मत्वाऽनलं पलाशं मुग्धः,
जीवनमपि विजहासि मधुप ! किमु मधौ मुदं न दधासि ।

## धर्मप्राण-लक्ष्मणशास्त्रिद्राविड़महोदयस्य पुण्यतिथिः ।

मुम्बईनगरीयमाधोबागनाम्नि प्रसिद्धस्थाने सनातनधर्मकेशरिणो भृगु-ब्रह्मचर्य्याश्रमस्य मुख्याधिष्ठातुः श्रीभारतधर्ममहामण्डलस्य सम्मानितप्रतिनिधेः श्रीयमुनादासहरखजीसंबत्रीमहोदयस्य सभापतित्वे श्रीलक्ष्मणशास्त्रि-द्राविडमहोदयानां सनातनधर्मप्राणस्वरूपाणां पुण्यस्मृतौ महती सभा समजनि । यत्र बम्बई प्रान्ते सनातनधर्मप्रचारार्थं समागतानां श्रीमतां दर्शनकेशरिणां श्रीपण्डितगोपालशास्त्रिणामर्धहोरां यावद् व्याख्यान प्रभूत् । यत्र च शास्त्रिवर्य्यैः स्वर्गस्थानां द्राविडमहोदयानां श्रीभारतधर्ममहामण्डलसाहाय्येन सनातनधर्मप्रचारादि कृत्यं वर्णयित्वा स्पृश्यास्पृश्यादिनिषेधात्मकस्य नियमस्य निर्माणार्थं व्यवस्थापिकायां सभायां प्रस्तावितस्य प्रस्तावस्य खण्डनेन सह स्वर्गीय द्राविडमहा-

*कथं अलं = परिपूर्णं, कम् = सुखं न यासि ।

शयानां तैलचित्रसंस्थापनार्थं सर्वेऽपि वर्णाश्रम-संघ कार्य्यकर्तारोऽनुरुद्धाः । अवसाने च बम्बई नगरस्थः सनातनधर्मस्याद्वितीयो व्याख्याता महोपदेशकः श्रीमदनमोहनमालवीयमहाशयश्च प्रस्तावस्य समर्थनं कुर्वन् साधु व्याख्यानं कृतवान् । अन्ते च सभापतिमहोदयस्य भाषणेन सह सधन्यवादं सभा विसर्जिताऽभूत् ।

निवेदयिता—श्रीलक्ष्मीनारायणशर्म्मा, मेदपाटीयः
संस्कृतपाठशाला, बड़ामन्दिर भूलेश्वर बम्बई ।

## मुम्बापुर्यां परीक्षाकेन्द्रम् ।

श्रीभारतधर्ममहामण्डलीयाखिलभारतवर्षीय-संस्कृतविश्वविद्यालय-( परीक्षायूनिवर्सिटी ) स्य परीक्षाकेन्द्रं मुम्बईनगरे गुलालवाडीस्थ श्रीस्वामिराघवानन्दमन्दिरे प्रतिष्ठितं विद्यते । यस्य केन्द्रव्यवस्थापकाः श्रीमन्तः परमहंसपरिव्राजकाचार्य्याः श्रीस्वामि ज्योतिर्मयानन्दस्वामिनो मठाधीश्वरा विद्यन्ते । कार्य्यसम्पादकः श्रीमान् लक्ष्मीनारायणशर्मा विद्यते । तद्द्वारा सर्वे मुम्बापुरीयाः संस्कृतच्छात्राः परीक्षाप्रवेशपत्रं संभरन्तु इत्यस्माकं निवेदनम् । तस्मादपि कार्यालयात् परीक्षाप्रवेशपत्राणि मिलन्ति । सर्वप्रकारेण पत्रव्यवहारार्थं संकेतस्थानं-श्रीरेवाशंकरशास्त्री मेघजी डी० एल० संस्कृतपाठशाला, गुलालवाड़ी, बम्बई । इति ।

रजिष्ट्रार, परीक्षायूनिवर्सिटी ।
श्रीभारतधर्ममहामण्डल जगत्गंज, काशी ।

# अस्माकं भ्रमणवृत्तान्तः ।

## गुर्जरप्रान्ते सनातनधर्मप्रचारकेन्द्राणि तत्रत्या महात्मानश्च ।

सम्प्रति सनातनधर्मप्रचारनिमित्तमादाय समागतेन मया इह बम्बईप्रान्ते गुर्जरप्रान्ते च यानि सनातनधर्मप्रचाराय सततं चेष्टमानानि धर्मस्थानानि दृष्टानि, तत्रत्याः स्वनामधन्या महात्मानश्च धर्मप्रचारका दृष्टा एतेषां संक्षिप्तं वर्णनं सूर्य्योदय-पाठकानां कृते उपकारकमिति संक्षेपतो लिख्यते ।

### श्रीराघवानन्दमन्दिरम् ।

अत्र प्रान्ते सन्यासिनः प्रायो धर्मप्रचारका एवोपलभ्यन्ते । इहत्याः संन्यासिनो महात्मानः सनातनधर्मरक्षायै स्व-स्व मन्दिरेषु प्रायो गीतापाठशाला-पुराण-

प्रवचन-पाठशाला-रामनामप्रचारपाठशाला-प्रभृति-नाम्ना कामपि संस्थां संस्थाप्य तत एव गृहस्थेषु सनातनधर्मप्रचारं कुर्वन्ति । एवम्भूतानि मुम्बा-पुर्य्यां बहूनि मन्दिराणि सन्ति । तेषु गुलालबाड़ीस्थं श्रीराघवानन्दमन्दिरं प्रथमं धार्मिकं स्थानं विद्यते । उत्तरभारतीयाः सर्वेऽपि विद्वांसो मुम्बापुरीं गत्वा अत्रैव स्थाने निवासं कुर्वन्ति । तेभ्यः सर्वेभ्य एव तस्मादेव मन्दिराद् भोजनादीनां व्यवस्था भवति । ततो गमनवेलायां विदुषां योग्यतानुसारेण द्रव्यवस्त्रादि प्रदानेन प्राचीन-रीत्यनुरूपं सत्कारोऽपि भवति । तत्रत्यः साम्प्रतिको मन्दिराधिष्ठाता मोहान्तो ( महन्थ ) महात्मा परमहंसपरिव्राजकाचार्य्यः स्वामी ज्योतिर्मयानन्दजी महाराजो विद्यते । यस्तत्र प्रातः सायञ्च गीताप्रवचनं करोति । येन साधु गृहस्थेषु धर्मभावनायाः समृद्धिर्दिनन्दिनं प्रवर्द्धते । तन्मन्दिरकार्य्यप्रबन्धको महात्मा माधवानन्दः स्वामी विद्यते । यो हि स्वभावेन सरलः सर्वानेव तत्र समागतानतिथीन् स्वप्रेमवशात् आतिथ्येन च तथा सन्तर्पयति यथा विदेशस्थितिरपि विस्मृतप्राया जायते । स्वगृहनिवा-ससुखमेवातिथिभिरनुभूयते ।

## श्रीतापीब्रह्मचर्य्याश्रमः ।

एकश्च महात्मा सुरतनगरे श्रीमद्-आत्मानन्दसरस्वती महोदयोऽस्ति । यो हि सदाचारस्य त्यागस्य, कर्मानुष्ठानस्य च साक्षान्मूर्तिरेवास्ति । येन महा-त्मना सुरतनगरे 'श्रीतापीब्रह्मचर्य्याश्रम' नाम्ना एकम् महत् धार्मिकं संस्थानं प्रतिष्ठापितं विद्यते । यत्र ब्रह्मचर्य्यपूर्वकं विद्याध्ययनं निःशुल्कं कार्य्यते । शत-संख्याकाश्छात्रा स्तत्र सदाचारपूर्वकमग्निहोत्रमनुतिष्ठन्तो वेदाध्ययनपुरःसरं विद्यामधीयते । जनानां कृते चिकित्सालयोऽपि प्रचलति । यतो ग्रामीणानां तत्रत्यानां कृषकाणां महान् लाभः । गोशालाऽतिथिशालाप्रभृतयो धार्मिक-निवासाः सन्ति । किं बहुना आश्रमोऽयं गुर्जरप्रान्ते सदाचारस्य विद्याप्रचारस्य च सम्यक् जनतासु प्रश्रयं ददातीति ।

## श्रीगीतामन्दिरम् ।

गुर्जरप्रान्तस्य प्रसिद्ध नगर्य्यां वड़ोदानगरे खण्डेरावनाम्नि स्थाने-गुर्जरप्रान्ते भक्तिरसप्रवाहको सुप्रसिद्धो महात्मा श्रीविद्यानन्दजीमहा-राजो विद्यते । यो हि सर्वप्रथमं गुर्जरप्रान्ते गीताप्रचारं कुर्वन् वड़ोदा अहमदा-बाद, नडियाद, आनन्द, चाणोद, कर्नाली, भाद्रण-पेटलाद प्रभृतिषु प्रसिद्ध-नगरेषु भक्तिरसमयं गीताप्रवचनं विदधत सर्वत्रैव सनातनधर्मस्य शाश्वतिकं प्रचारं विदधाति । तेन कर्नालीनगरे नर्मदातटे अतिरमणीयं गीतामन्दिरं

प्रतिष्ठापितं विद्यते। यत्र सर्वेऽपि धार्मिका जना विद्वांसश्च समये समये समेत्य धार्मिकचर्चया समयं यापयन्ति। अस्यापि महात्मनो गीताभाष्यादिप्रणयन-कृत्यं विस्तरशः कदाचित् सति समये प्रकाशयिष्ये।

## श्रीसन्तराममन्दिरं नडियाद् नगरे।

श्रीसन्तराममन्दिर नामकमेकं महाप्रसिद्धं धार्मिकस्थानं विद्यते। यतश्च सर्वदा धार्मिककृत्यानुष्ठानादिना सनातनधर्मस्य शाश्वतिकः प्रचारो भवति। तत्रत्यो महात्मा सम्प्रति सप्तमश्रेणिस्थः श्रीमान् श्रीजानकीदासजी महोदयो विद्यते। यश्च स्वतपोबलेन तत्रत्यजनतायां साधु सनातनधर्मस्य स्थिरां भित्तिं प्रतिष्ठापयति। तेन महात्मना सम्प्रति श्रुति-स्मृति-पुराण-दर्शनषडङ्गादीनां प्रवचनात्मकं महासत्रं समारब्धं विद्यते। यस्य प्रख्यातिः सर्वत्रैव गुर्जरप्रान्ते विद्यते। देशदेशान्तरस्था विद्वांसो धार्मिका जनाश्चागत्य तत्र प्रवचनं कुर्वन्ति शृण्वन्ति च। सायं प्रातश्च महान् धार्मिकसंमर्दो भवति। यथा खलु बृहदारण्यकोपनिषदि विदेहस्य राज्ञो यज्ञकथा श्रूयते तथैवेदं महा-सत्रमिह कलियुगेऽपि प्रत्यक्षमेवास्माभिर्दृष्टम्। यथा तत्र देशाद्देशान्तरतः समु-पस्थिता विद्वांसो यज्ञकृत्यं सम्पादयन्ति स्म तथैव तत्रापि महान्तो विद्वांसः समवेताः प्रवचनं विदधति। काशीस्थो महात्मा श्रीरामेश्वरब्रह्मचारी दर्शन-प्रवचनं करोति। खम्भातनिवासी श्रीस्वामी मुकुन्दाश्रमो महाराजः पुराण-महाभारत व्याख्यानं करोति। आगामिनि माघमासे तस्य महासत्रस्य पूर्णाहुति-र्भविंत्री यत्र काशीस्था अपि बहवो विद्वांसः संमिलिता भविष्यन्तीति तत्रैव श्रुतं मया। तदानीं महता समारम्भेण तदीया समाप्ति र्भविष्यति। इत्थेवं गुर्जरदेशे धर्म प्रसारं कुर्वन्तो बहवो महात्मानः सन्ति। येषामिह सूर्योदये क्रमशो वर्णनं करिष्यामः। इत्थं गुर्जरप्रान्ते धार्मिकप्रचारं कुर्वतामेषां महात्मनामनुकृत्या साम्प्रतिकाः साधवः सन्यासिनश्चानुरोध्यन्ते यत्ते सर्वथा सनातनधर्मप्रचाराय सन्नद्धा भवन्तु। तेषां सनातनधर्मप्रचारसौलभ्यार्थं श्रीभारतधर्ममहामण्डलेन सनातनधर्मोपदेशपुस्तकानि निर्माय बहु सामग्रीजातं सम्पादितं विद्यते। उपदेशक मालास्थग्रन्थानामध्ययनेनानायासमेव व्याख्याने प्रवचने च शक्ति नैपुण्यमायातीति पुस्तकपाठेनैव ज्ञातं भविष्यति।

## कथा-प्रवचनम्।

अहमदाबादनगरे श्रीमन्तो ज्योतिर्विदः श्रीगिरिजाशंकरहरिशङ्कर-शास्त्रिणः स्वालये प्रतिदिनं कथा प्रवचनं चालयन्ति। यत्र च ते यथा समयं स्वयं तथा तदनुजया श्रीमन्त ईश्वरलाल कवरेश्वरशास्त्रिणश्च नियमेन प्रात-

रष्टवाद्नतः पुराणप्रवचनं कुर्वन्ति । यत्र शतशःस्त्रियः पुरुषाश्च श्रद्धया श्रवण-लालसया नियमेनैवोपतिष्ठन्ते । येषां धार्मिकश्रद्धामीश्वरभक्तिविषयकं गानं श्रुत्वा केषां मनो न प्रसीदत्स्वर्गसुखं विन्दते । ज्योतिर्विदां ख्यातिरिह नगरे प्रथमां कोटिमवगाहते । केऽपि बहिस्था धार्मिका अतिथय आयान्ति चेत्तेषां सर्वेषां यथाशक्ति स्वागतातिथ्यसत्कारादिकं तैरेव प्रथमं क्रियतेऽन्यैश्च यथोचितं कार्य्यते । इत्थमिह नगरे परमधार्मिकाणां ज्योतिर्विदामुद्योगेन सनातन-धर्मस्य सुदृढः प्रचारो नरेषु नारीषु च निरवच्छिन्नं प्रचलति । येन इह नगरे सनातनधर्मस्य सदाचारप्रचाराय समागतानामन्येषामपि अवसरो मिलति । तेषामेव ज्योतिर्विद्महोदयानां सधर्माणः सनातनधर्मप्रचाराय बद्धपरिकराः श्रीपण्डित बालाशंकरमगनलालशुक्लमहोदया विद्यन्ते । श्रीपं० अनुपराम सदाशिव शास्त्रिणश्चेह प्रसिद्धा विद्वांसः सन्ति । ये हि सनातनधर्मसेवायां सर्वदा निरता मानापमानमपि न गणयन्ति । इत्येवं सर्वत्रैव गुर्जरप्रान्ते धर्मप्र-चाराय बद्धपरिकरा महात्मानो विद्यन्ते ।

### आदर्श वैदुष्यम् ।

बम्बई नगरे देवीदास लल्लूभाई संस्कृतपाठशालाया अध्यापकाः धर्म-शास्त्राचार्याः श्रीमन्तः श्रीरेवाशङ्करमेघजी शास्त्रिणः सन्ति । ये हि सर्वदा सर्वथा भारतीय-संस्कृतिरक्षायै सनातनधर्मप्रचाराय च यतमाना अवलोक्यन्ते तेषामेव महात्मनामुद्योगेन विद्वत्प्रवराणां विद्याभास्कराणां श्रीमतां श्रीकृष्ण-मोहनजीकार्तान्तिकमहोदयानामुपाश्रये बम्बईप्रान्तीय श्रीभारतधर्ममहामण्डलं पुनः प्रतिष्ठितं समजनि । यस्य प्रथमाधिवेशन विवरणं सपदाधिकारि निद-र्शन-पुरःसरमन्यत्रोट्टङ्कितं भविष्यति ।

भवतां चिरपरिचितः सनातनधर्मसेवकः ।

श्री गोपाल शास्त्री त्रिपाठी ( नैमधरिः )

---

## पण्डितपरिषद् ।

——:*:——

१९३४ अप्रेल्मासि प्रथमदिने, अस्मिन् कालीडाइकुरुचिनगरे प्रचलितायां पण्डित परिषदि,ब्रह्मश्रीमतां, एन्० एस्० विश्वनाथशास्त्रि महाशयानां, आध्यक्ष्ये निर्णीता विषयाः ।

( १ ) प्रतिमण्डलं प्रतिग्रामं च वसन्तो विद्वांसः प्रतिदिनं प्रतिसप्तकं वा

मन्वादिमूल स्मृतिग्रन्थान् पराशर-माधवादिनिबन्धन ग्रन्थान् वा जनसमुदायं बोधयेयुः। येन सर्वेषामपि जनानां शौचाचारादि स्वरूप-ज्ञानं सुलभं स्यात्।

( २ ) तत्र तत्र प्रसक्ते उपनयनादि कर्मणि तदुपपादकश्रुतिस्मृतिगृह्यसूत्रादि प्रमाणनिरूपण पुरस्सरं प्रयोगक्रमं फलविशेषमावश्यकतामकरणे वैकल्यञ्च सम्यगुपन्यासमुखेन पण्डिता स्सम्यगधिगमयेयुः—

( ३ ) तत्तद्याजकाश्च स्वैरनुष्ठापनीयानि कर्माणि प्रयोगक्रमांश्च तत्तद्गृह्यसूत्रादि ग्रन्थावलोकनपूर्वकं सम्यगवधाय तत्तन्मन्त्रार्थांश्चानुसन्धाय स्वेषां याज्यानाञ्च यथा दोषो न भवेत् तथा अनुष्ठापयेयुः।

( ४ ) याजकाश्च साधु शब्दज्ञानं संपादितवन्तोऽपि स्वधर्ममविजिहासवः स्वसन्ततिमपि परम्पराप्राप्तं धर्ममधिगमयन्तः कुलधर्मं परिपालयेयुः।

( ५ ) शिवविष्ण्वाद्यालयेषु, ये द्विजाः पूजाकैङ्कर्यादिकमनुतिष्ठन्ति, तेऽपि संस्कृत भाषा ज्ञानं संपाद्य, तत्तदागमग्रन्थाभिज्ञतासंपन्नाः यथावत् कैङ्कर्यमाचरेयुः येनान्येषामवज्ञा न भवेयुः—

( ६ ) प्रतिग्रामं बालिकानां बालकानां यूनां वयोवृद्धानाञ्च, यथा संस्कृतभाषाज्ञानं सुलभं स्यात्-येन च, अनुष्ठानसमये, अन्यस्मिन् वा समये, संस्कृत शब्दानां सौष्ठवेनोच्चारणं स्यात् तथा प्रयतितव्यं पण्डितैः। उपकरणीयञ्च यथा शक्ति, धनिकै रास्तिकैः।

( ७ ) सनातनधर्मज्ञानज्ञापनाभ्यां तद्रक्षणाय तत्र तत्र सनातनधर्मसभा अवश्यं प्रतिष्ठाप्येत, येन सदाचारसंप्रदायानुवर्तनेन सर्वेश्वरस्य प्रसादपूर्णपात्रं सर्वे जना भवेयुः।

— अ० शङ्कर शास्त्री अध्यक्षः संस्कृतकलाशाला।

---

## सूचना

पुरीराजकीयसंस्कृतमहाविद्यालये वैष्णवदर्शनमीमांसयोरध्यापनार्थं निष्णातः संपादिताध्यापनोऽनुभवी च विद्वानपेक्ष्यते। तस्य प्रथमं मासिकं वेतनं चत्वारिंशद्राजतमुद्रात्मकं निर्दिश्यते। प्रतिवर्षद्वयानन्तरं च तिस्रो मुद्रा एक षष्टिं यावत् संवर्धेरन्।

अध्यापन योग्यतानुभवादि प्रमाणपत्रसहितं वयःसूचकं चावेदनपत्रं जुलाई मासस्य त्रिंशद्दिवसात् प्रागेवास्मन् कार्यालयं प्रति प्रेषणीयम् ।

ईश्वरीदत्त दौर्गादत्ति शास्त्रिणः सुपरिण्टेण्डेट संस्कृत स्टडीज

विहार एण्ड उड़ीसा पटना ।

---

## संगृहीता विविधसमाचाराः ।

संयुक्तप्रदेशामेरिकाया वाशिङ्गटन पुस्तकालयस्य पुस्तकाध्यक्षः स्वकीये वक्तव्ये प्रोक्तवान् यदयं पुस्तकालयो भूमण्डलेऽस्मिन् सर्वतो महानस्ति। पुस्तकालयेऽस्मिन् ४४७७४३७ संख्यकानि पुस्तकानि तथान्यानि बहुविधानि चित्राणि हस्तलिखित-पुस्तकानि च सन्ति ।

× × × × × ×

कुमारि सैकविल ' काचन अमेरिकोद्भवा बाला विद्यते । इयमधुना उनविंशतिवर्षीयास्ति । अस्यामवस्थायां अनया दशसहस्रकविता विरचिताः। सप्तति संख्यकानि पुस्तकानि च प्रकाशितानि । इयं सप्ततिविधां भाषां जानाति ।

× × × × × ×

साम्प्रतं राष्ट्रिय महासभाया ( कांग्रेस ) कार्यकारिण्यां समितौ सत्याग्रह निरोधार्थं सर्वसमत्या प्रस्तावः स्वीकृतोऽभूत् । अतश्चाधुना कोऽपि राष्ट्रियसभासदस्यः सत्याग्रहं न विधास्यतीति । केवलं सति प्रयोजने श्रीमान् गान्धी महोदयः एव स्वेच्छानुसारं सत्याग्रहं करिष्यति नान्यो जनः।

× × × × × ×

भारतवर्षस्य सर्वप्रान्तेषु राष्ट्रिय-सभायाः तत् सम्बन्धयुक्तायाः सभायाश्च सर्वमपि कार्यं नवीन भारतरक्षाविधानानुसारं (आर्डिनेन्स) शासकानामाधीनमासीत् । परन्त्वधुना सत्याग्रहपरित्यागप्रस्तावं दृष्ट्वा सर्वमपि नियन्त्रणं सर्वप्रान्तीयशासकैः परित्यक्तम् ।

जूनमासस्य २५ दिवसे पुण्यपत्तने श्रीमतो गान्धिमहोदयस्यागमनावसरे कश्चन विस्फोटपदार्थस्य गोळकं निर्माय कस्यचिन्मृत्तरोपरि पातितवान् ।

अनेन निन्दनीय प्रयत्नेन कस्यापि प्राणहानिः न समजनि । अद्यपर्यन्तं एतादृशस्य कुकृत्यस्य कर्तु र्नामापि ज्ञानं नाऽभवत् ।

× × × × × ×

काशीस्थ राजकीय-संस्कृत कालेज परीक्षायां १६३४ ईस्वीये निम्नलिखित-संख्यका विद्यार्थिनः म्मिलिता आसन् । प्रथमायाम्–४५१०, मध्यमायाम्-५१०६, शास्त्रिपरीक्षायां-१६५०, आचार्यपरीक्षायां ४५०, संकलनया सर्वेषां ११, ७१०, संख्या भवति ।

सुप्रसिद्धस्य तारकेश्वरमन्दिरस्य अधिकार-निर्णयसम्बन्धे मोहान्तोपरि बङ्गीयब्राह्मण सभया प्रचालितस्याभियोगस्य निर्णयः कलिकातास्थ प्रधानन्यायालये (हाईकोर्ट) संजातः । विचारपते र्निर्णयानुसारेण उपर्युक्त मन्दिरोपरि मोहान्त-महाराजस्य न कोऽपि अधिकारो विद्यते । निर्णयस्तु पञ्चशतपृष्ठात्मकोऽस्ति ।

× × × ×

भारतीय-व्यवस्थापकसभायां प्रस्तावितस्य देवमन्दिरप्रवेश-प्रस्तावस्य कृते उभयमतावलम्बिनां मतसंग्रहे मन्दिरप्रवेश विरोधे एव मताधिक्यम् विद्यते ।

काश्याः सुप्रसिद्धो विद्वान् रणवीरसंस्कृतपाठशालायाः प्रधानाध्यक्ष पण्डित अनन्तरामशास्त्रिमहोदयः आषाढ़मासे नश्वरं शरीरं परित्यज्य परलोकं प्रस्थितवान् । एतादृशस्य विदुषो निधनेन संस्कृतपण्डितानां महती हानिर्जाता ।

# धर्मार्थ-पुस्तकवितरणम् ।

——:o:——

प्रिय संस्कृताध्येतॄणां कृते परमप्रमोदमयोऽयं समाचारः यत् किल मुन्शीलाल-आनन्दविद्यालय प्रधानाध्यापकैः पं० कन्हैयालालशास्त्रिभिः, श्रेष्ठिवर्य रामकृष्णदासमहोदयानां साहाय्येन, संस्कृताध्यायिविद्यार्थिभ्यो धर्मार्थमेव वितरितुं कौमुद्याः भागचतुष्टयेऽतिसरला "फक्किकासारविवृत्तिः" मुद्रापितास्ति । सा चाधो निर्दिष्टसंकेतेन आणकद्वयस्य =) चिटिका ( टिकिट ) प्रेषणेनैवोपलब्धा भविष्यतीति ।

प्राप्ति-स्थानम्,

पं० कन्हैयालालशास्त्री, मुन्शी लाल आनन्दविद्यालय ।

जाटौली पो० हेलीमण्डी, जि० गुड़गावां । ( पंजाब )

# अध्यायि वर्गाणां सम्मेलनम्।

विदाङ्कुर्वन्तु भवन्तः यदिह उन्नावमण्डलान्तर्गतसफीपुरपत्रालये किशुनपुरटँड़वा, इत्याख्ये ग्रामे कान्यकुब्जसंस्कृतपाठशालीयैश्छात्रैस्तत्पाठशालीयसंस्कृताध्यायिवर्गेषु धर्मसंस्कार-सदाचारादि संरक्षणार्थन्तथानिजवर्णाश्रमधर्मपरिपालनार्थमेका संस्था संस्थापिता। तस्या एव तद्विद्यालयस्थश्रीमत्पूज्यप्रधानाध्यापक पं० बद्रीप्रसाद शास्त्रिमहोदयानामात्मजस्य यज्ञोपवीत-संस्कारमहोत्सवेऽद्य वैशाख शुक्लदशम्यां गुरौ १९९१ विक्रमीयाब्दके उपनयन वेदारम्भसमावर्तन संस्कारानन्तरं सायं सन्ध्यासमये कान्हपुर वास्तव्यविद्यारत्न पं० दुर्गाचरणशुक्ल ज्यो० आचार्यमहोदयानां सभापतित्वे महता समारोहेण तृतीयाधिवेशनं सञ्जातम्। तत्र श्रीमता पं० नन्दकिशोरशास्त्रिणा गम्भीरतया मधुरालापेन च प्रथममीशविनयमकारि। सम्मेलनेऽस्मिन् स्पृश्यास्पृश्यनिवारणमन्दिरप्रवेश-विवाहविच्छेदविलेति त्रयो प्रस्तावास्समुपस्थिताः। आदिमे तेषां समर्थने देशहितमुद्देशं समुद्दिश्य पं० वृन्दावनशास्त्रिमहोदयानां सारगर्भितं प्रथमं भाषणमभूत्। ततस्तन्महाशयानां समर्थनं सर्वथाऽनुचितमित्यनेकशास्त्रप्रमाणैर्युक्तिवादैश्च स्थायिसभापतिः पं० नन्दकिशोरशास्त्री "स्वे स्वे कर्मण्यभिरतःसंसिद्धिं लभते नरः" इति श्रीमद्भगवदुक्तिं समर्थयन् सन् निजधर्मस्थितिरेव सर्वप्राणिनां कल्याणकरी, सर्वं धर्मे प्रतिष्ठितं, विधिः केवलं धर्मकारणमेव समवलम्ब्य कार्यरूपं जगत्सृजति। स्वधर्मरहितास्सर्वे एव पदार्थाः क्षयं यास्यन्ति,' इतिस्वमतं प्रकटीचकार। पश्चादुपस्थापितानां त्रयाणां प्रस्तावानां समर्थने पाश्चात्य विद्याकृष्ट मस्तिष्कस्य कान्हपुरडी० ए० वी० विद्यालयस्यान्तेवासिनः पं० त्रियुगीनारायणदीक्षितस्य तथा पं० दयाशंकरशर्मणस्तथान्यव्यक्तीनां सम्भाषणानि समभवन्। अनन्तरं तत्पाठशालीयप्रधानाध्यापक पं० बद्रीप्रसादमिश्रै स्तथा सभापति-महोदयै र्युक्तियुक्तै स्सारगर्भितैरकाट्य प्रमाणै र्विचारशालिवाक्यै स्तदुक्तीनाङ्खण्डनमकारि। सम्मेलनमिद न्निर्विघ्नतया सम्पूर्णतामगात्। पश्चात्सर्वजनसम्मत्या सभापति महोदयैः समुपस्थापितानां प्रस्तावानां विरोधे प्रस्तावः संकेतद्वयेन "श्रीमान् वाइसराय महोदय-प्रधान कार्यालय "शिमला। "दी लेजिस्लेटिव एसेम्बली" दिल्ली इति सङ्केतेन प्रेषितः।

निवेदकः—स्थायी सभापतिः पं० नन्दकिशोर शा०,
का० सं० पाठशाला किशुनपुर-टँड़वा सफीपुर (उन्नाव)

# अखिल भारतवर्षीय-संस्कृत-विश्वविद्यालयान्तर्गत—

## काशी आयुर्वेद सम्मिलनीपरिगृहीत १९३४ खृष्टाब्दस्य परीक्षाफलम् ।

( अस्मिन् वर्षे परीक्षाफलप्रकाशनावसरे अहं रुग्णः संवृत्तः । अतश्च परीक्षाफलप्रकाशने विलम्बो जातः । जुलाईमासस्य १७ दिवसीय "आज" पत्रे कतिपय सदस्यैर्यत् परीक्षाफलं मदनुमतिं विना प्रकाशकनामरहितं प्रकाशितं विद्यते तत्र अनेके भ्रमादिदोषाः सन्ति । साम्प्रतं "सूर्योदये" संशोधनपुरस्सरं १९३४ ईस्वीय-आयुर्वेद-परीक्षाफलं प्रकाश्यते । विलम्बस्य कृते केन्द्राध्यक्षैः परीक्षार्थिभिश्च नूनं क्षन्तव्योऽस्मि । )

—श्रीज्योतिश्चन्द्र भट्टाचार्यः (संपादकः) ।

❀ चिन्हिताः खलु धर्म्मशास्त्रेऽपि समुत्तीर्णाः ।

### आयुर्वेदाचार्यस्य प्रथमविभागे ।

| विद्यार्थिनामानि | | | अध्यापकनामानि |
|---|---|---|---|
| श्रीमान् नर्म्मदाप्रसाद शुक्लः | होशंगाबादः | पं० | रामचन्द्रशास्त्री । |
| श्रीमान् शालिग्राम शर्म्मा गौतमः | काशी, | कविराज | दीननाथ आयुर्विज्ञानाचार्यः । |
| „ रामचन्द्र शुन्द्रियालः | „ | „ | कालीकिशोरविद्याविनोदः । |
| „ कालीचरणत्रिपाठी | काशी | „ | ज्योतिश्चन्द्र काव्यतीर्थः । |
| „ अक्षयचन्द्र उपाध्यायः | „ | „ | यतीन्द्रनाथकाव्यतीर्थः । |

### आयुर्वेदशास्त्री

#### प्रथमविभागे

| | | | |
|---|---|---|---|
| श्रीमान् शिवकुमारपाण्डेयः | काशी | „ | ज्योतिश्चन्द्रकाव्यतीर्थः । |
| श्रीमान् नवकिशोरसेनशर्म्मा | तिलुड़ी | „ | गणेशचन्द्रकविभूषणः । |
| श्रीमान् सुधांशु कुमार सेनगुप्तः | काशी, | कविराज | कालीकिशोर विद्याविनोदः । |
| „ दामोदर उपाध्यायः | „ | „ | ज्योतिश्चन्द्र काव्यतीर्थः । |
| „ नीलकण्ठपाण्डेयः | काशी | „ | कालीकिशोर विद्याविनोदः । |
| „ विरिञ्चिलालशर्म्मा❀ | चिड़ावा | „ | लक्ष्मीनारायणशास्त्री । |
| „ पुलिनविहारीचक्रवर्त्ती | काशी | „ | धीरेन्द्रचन्द्र आयुर्वेदशास्त्री । |
| „ हरिपदचौधुरी | तिलुड़ी | „ | गणेशचन्द्र कविभूषणः । |
| „ हरिशंकरचौधुरी | „ | „ | „ |
| „ भागीरथमलशर्म्मा ❀ | चिड़ावा | „ | लक्ष्मीनारायणशास्त्री । |

#### द्वितीयविभागे

| | | | |
|---|---|---|---|
| श्रीमान् राधामोहन गोस्वामी ❀ | नारनोल | कविराज | मनोहरलालशास्त्री । |
| „ पारसनाथपाण्डेयः | काशी | „ | यतीन्द्रनाथकाव्यतीर्थः । |
| „ ठाकुरदत्तत्रिपाठी | „ | „ | कालीकिशोर विद्याविनोदः |

| विद्यार्थिनामानि | | | अध्यापकनामानि |
|---|---|---|---|
| श्रीमान् रामानन्द उपाध्यायः | „ | | कविराजयतीन्द्रनाथकाव्यतीर्थः। |
| „ शिवरामशर्म्मा | „ | „ | कालीकिशोरविद्याविनोदः। |
| „ मुरलीधरशर्मा * | चिड़ावा | „ | लक्ष्मीनारायणशास्त्री। |
| „ तुलसीराम त्रिपाठी | काशी | „ | यतीन्द्रनाथकाव्यतीर्थः। |
| „ सुरेशानन्द कुकरेती | „ | „ | अक्षयवटशास्त्री। |
| „ उद्धवदासमेहता | भूपाल | „ | रामकृष्णशास्त्री। |
| „ द्वारिकानाथपाण्डेय | काशी | „ | यतीन्द्रनाथकाव्यतीर्थः। |

## वैद्यभूषणपरीक्षायां

### प्रथमविभागे

श्रीमान् मथुरादास हिन्दीभूषणः* अमृतसर, कविराज पं० रामरत्न आयुर्वेदाचार्यः

### द्वितीयभागे

| | | | |
|---|---|---|---|
| श्रीमान् बुद्धिरामशर्म्मा* | अमृतसर, | कविराज | रामरत्न आयुर्वेदाचार्यः। |
| „ टीकाराम स्वर्णकारः | होशंगावाद | „ | नर्मदाप्रसाद शुक्लः। |
| „ परमानन्दपाण्डेयः | काशी | „ | यतीन्द्रनाथ काव्यतीर्थः। |
| „ पण्डित नीलकण्ठः* | अमृतसर | „ | रामरत्न आयुर्वेदाचार्यः। |
| „ नामधर शर्मा | | कविराज | पं० ज्योतिश्चन्द्र काव्यतीर्थः। |
| गंगाविष्णु शर्मा गौड़ः | | | „ |
| रामस्वरूप शर्मा | | | „ |

## आयुर्वेद-मध्यमा

### प्रथम विभागे

| | | | |
|---|---|---|---|
| श्रीमान् सुधीन्द्रनाथभट्टाचार्यः | काशी | कविराज | यतीन्द्रनाथ काव्यतीर्थः। |
| „ क्षितीशचन्द्ररायः | तिलुड़ी | „ | गणेशचन्द्र कविभूषणः। |
| „ शिवरञ्जन सरकारः | „ | „ | „ |
| „ घनश्यामप्रसाद शुक्लः | होशंगावाद | „ | नर्मदाप्रसाद शुक्लः। |
| „ नन्दकिशोरशर्म्मा | काशी | „ | कालीकिशोरविद्याविनोदः। |
| „ द्विजेन्द्रनाथसेनः (बी, एस, सी,) | | „ | ज्योतिश्चन्द्रकाव्यतीर्थः— |

### द्वितीय विभागे

| | | | |
|---|---|---|---|
| श्रीमती दयामयीदेवी | काशी | | जगदम्बा आ० विद्यालयः। |
| श्रीमान् श्रीरामशर्माव्याकरणरत्नः | „ | „ | कालीकिशोर-विद्याविनोदः |
| „ रामप्रयत्नत्रिपाठी | „ | „ | कालीकिशोर भट्टाचार्यः। |
| „ रामचन्द्र चतुर्वेदी | „ | „ | सत्यनारायण शास्त्री। |
| „ नीलकण्ठशर्मा अनियालः | „ | „ | नन्दावल्लभशास्त्री। |
| „ अपानन्द भट्टाचार्यः | „ | „ | यतीन्द्रनाथ काव्यतीर्थः। |
| „ चन्द्रशेखर परसाद | होशंगावाद | „ | नर्मदाप्रसादशुक्लः। |

| विद्यार्थिनामानि | | | अध्यापकनामानि |
|---|---|---|---|
| श्रीमती माणिकादासी | काशी | ,, | जगदम्बा आ० वि० । |
| श्रीमान् लालताप्रसादमिश्रः | ,, | ,, | यतीन्द्रनाथकाव्यतीर्थः । |
| ,, भवानीशंकर शर्मा | ,, | ,, | ,, |
| ,, सुकुमार चक्रवर्त्ती | काशी | ,, | धीरेन्द्रचन्द्र आ० शास्त्री, । |
| ,, गिरधारीशर्म्मा | चिड़ावा | ,, | लक्ष्मीनारायणशास्त्री, । |

तृतीयविभागे—

| | | | |
|---|---|---|---|
| ,, वंशीधरशर्म्मा | काशी, | कविराज यतीन्द्रनाथ काव्यतीर्थः । | |
| ,, नत्थीलालशर्म्मा* | टिहरी | ,, | गोविन्दरामशर्म्मा । |
| ,, गंगादत्तशर्म्मा | देहरादून | ,, | गिरिधरशर्मा शास्त्री । |
| ,, हरिनारायण चतुर्वेदी | काशी | ,, | यतीन्द्रनाथ काव्यतीर्थः । |
| ,, चन्द्रचूड़ पाण्डेयः | ,, | ,, | पुरुषोत्तमजी आयुर्वेदाचार्यः । |
| ,, मुकुन्द पाण्डेयः | ,, | ,, | ज्योतिश्चन्द्र काव्यतीर्थः । |
| ,, रामकृष्ण पाण्डेयः | ,, | ,, | यतीन्द्रनाथ काव्यतीर्थः । |
| ,, परमानन्द मुनिः | ,, | ,, | नन्दावल्लभशास्त्री । |
| ,, जयदेवशर्म्मा* | टिहरी | ,, | गोविन्दरामशास्त्री । |
| ,, महावीरप्रसादशर्मा | ,, | ,, | ,, |
| ,, प्रभुनारायण शर्मा | | कविराज पं० ज्योतिश्चन्द्र काव्यतीर्थः । | |
| ,, राघवराम | | ,, | |
| ,, दुर्गाप्रसाद राजौरिया | | ,, | |
| ,, सिद्धलिंग शर्मा | | चरकानुसन्धानभवन, काशी । | |

## आयुर्वेद प्रथमा

### प्रथमविभागे

| | | | |
|---|---|---|---|
| श्रीमान् अश्विनीकुमार मजुमदारः, | तिलुड़ी | कविराज गणेशचन्द्र कविभूषणः । | |
| ,, रामदासरायः | ,, | ,, | ,, |
| ,, वालिबहिन प्याटेलः | काशी | ,, | जगदम्बा आ० विद्यालयः । |
| श्रीमती उमातारादेवी | ,, | ,, | ,, |
| श्रीमान् भुवनमोहन सेनगुप्तः | तिलुड़ी | ,, | गणेशचन्द्र कविभूषणः । |
| श्रीमती निर्मलाबालादेवी | काशी | ,, | जगदम्बा आ० वि० । |
| श्रीमान् देवीदत्तपन्तः | ,, | ,, | ज्योतिश्चन्द्र काव्यतीर्थः । |
| ,, आनन्दलालरायः | तिलुड़ी | ,, | गणेशचन्द्र कविभूषणः । |
| श्रीमती कृष्णकुमारीदेवी | काशी | ,, | जगदम्बा आ० वि० । |
| श्रीमान् ऋषिरामशर्म्मा | अमृतसर | ,, | रामरत्न आयुर्वेदाचार्यः । |
| ,, लाखीरामशर्मा नेगी (वर्मा) | गढ़वाल | ,, | भोलादत्तशास्त्री । |

### द्वितीय विभागे

| | | | |
|---|---|---|---|
| श्रीमान् लक्ष्मीदत्त पन्तः | काशी | ,, | ज्योतिश्चन्द्र काव्यतीर्थः । |
| ,, रामशरणतिवारी | देहरादून | ,, | गिरिधरशर्मा शास्त्री । |

# सूर्य्योदय-नियमाः।

१—प्रति पौर्णिममुदेति ततो द्वित्रैरेव दिनैः सदस्यसेवामातनुते। सति विलम्बे निजपत्रा-( डाकघर ) लयेऽन्विष्य कार्य्यालये पत्रप्रेषणमुचितम्।

२—धनादेशपत्र ( मनियार्डर ) द्वारैव मुद्राप्रेषणं साधीयोऽन्यथा वी० पी० मध्ये ।=) षडाणकानां व्यर्थव्ययो भवति।

३-प्राचीनग्राहकैः स्वग्राहकसंख्याऽवश्यं लेख्या। नूतनैश्च नूतनोऽहं ग्राहको भवितुमिच्छामीति लेख्यम्। निज-पूर्णस्थान-सङ्केतादिकं साधु सुस्पष्टाक्षरेणैव लेख्यम्। सूर्य्योदय-सदस्याश्च संक्षेपेण चतुर्विधाः सन्ति। १—संरक्षकाः प्रतिवर्षं ५) ददति, २—सहायकाः प्रतिवर्षं ३) ददति। ३—साधारणाश्च प्रतिवर्षं १) ददति। आचार्य्या महामण्डलीय-सदस्याश्च सूर्य्योदयस्य सम्मानित-सदस्या गण्यन्ते। तेऽपि आर्य्यमहिलाश्च पुस्तकालयाध्यक्षाश्च १) एकरूप्यकेणैव सहायकसदस्या भवितुमर्हन्ति।

# लेखका विनिवेद्यन्ते।

१—त एव लेखा इह प्रकाश्यन्ते ये सुस्पष्टाक्षरा विरलपंक्तिकाः सरल-सरला भावपूर्णाश्छात्रोपयोगिनो भवन्ति। साहित्यिका धार्मिका सामाजिका ऐतिहासिका गवेषणा-सम्बन्धिनश्च प्रसादगुणगुम्फिता लेखाः प्रकाशने प्राथम्यमाश्रयन्ति। अतश्च लेखकैः स्वलेखभावे मनोहरत्वमासञ्जनीयं न तु शब्दकाठिन्यादिषु। २—कविताश्च स्वल्पपदा भावपूर्णा अपेक्ष्यन्ते न दीर्घाः। इह "गद्यं कवीनां निकषं वदन्तीति" गद्यमया एव लेखाः प्रायो गृह्यन्ते।

विज्ञापनादिनिश्चयार्थं कार्य्यालये प्रष्टव्यम्। सर्वविधपत्रव्यवहारोऽधो-निर्दिष्ट-संकेतेनैव कार्य्यः।

अवधेशप्रसादद्विवेदी ( काव्यतीर्थः )
व्यवस्थापकः।

# परीक्षाकेन्द्रम्।

हि० एल० संस्कृतपाठशाला, गुलालवाडी, बाम्बे। एतदपि स्थानम् वर्षेऽस्मिन् अ० भा० सं० धार्मिक परीक्षायूनिवर्सिटीपरीक्षाकेन्द्रमस्ति। यस्य व्यवस्थापकाः पं० रेवाशङ्करमेघजी शास्त्रिणः सन्ति। बम्बईप्रान्तीयाः परीक्षार्थिनः तत्रैव परीक्षां दास्यन्ति। आवेदनपत्रभरणावधिः, अगस्तमासं यावद् ज्ञेयः।

रजिष्ट्रार, परीक्षाबोर्ड,
महामण्डल भवन, बनारस।

श्रीसरस्वती शरणम् ।

दशमे वर्षे ] श्रावणस्य पूर्णिमा सं० १९९१, [ द्वितीय-संख्या




रागद्वेषनिशाटनं विधुरयन् मोहं तमो नाशयन्
तामिस्रं जडवादकैरवकुलं ज्ञानत्विषा म्लापयन् ।
विद्वल्लोकमशोकयन् नयसुधीरोकश्चमुन्मीलयन्
संजातः सुमनोमनो मधुरयन् सर्वत्र '

सम्पादकः—

श्रीमान् अन्नदाचरणशर्मा तर्कचूडामणिः

[ महामहाध्यापकः, महामहोपाध्यायः ]

—०:*:०—

उद्गम-स्थानम्—

श्रीभारतधर्ममहामण्डलम्, ( जगत्गंज ) काशी ।

---

वार्षिकं मूल्यं मुद्रात्रयम् ।

संरक्षकेभ्यः ५) असमर्थेभ्यः छात्रेभ्यः ३)

विश्वविद्यालयसदस्येभ्यः ३) पुस्तकालयेभ्यश्च ३)

---

# विषयसूची—

—:*:—



---

# सूर्योदयः ।

दशमे वर्षे } श्रावणस्य पूर्णिमा सं० १६६१, { द्वितीय-संख्या

## सम्पादकीया अभिप्रायाः ।

—:o:—

### संस्कृताध्यायिनामुद्बोधनम् ।

—:o:—

भवन्ति ते सभ्यतमा विपश्चितां
मनोगतं वाचि निवेशयन्ति ये
नयन्ति तेष्वप्युपपन्ननैपुणा
गभीरमर्थं कतिचित्प्रकाशताम् । ( भारविः )

अयि सुरभारतीसमुपासकाः ! अवदधतु भवन्तोऽपि उपरि निर्दिष्टपद्यार्थमभि, विमृशन्तु महाकवे र्हार्दम्, किमुद्दिश्य स हि महाकविरिदं काव्यमुज्जहारेति।

स हि महात्मा स्वकाव्याध्येतु विदुषः प्रौढ़िमानमभिलषन् वाग्मितामाकांक्षति । सोऽभिलषति यत् संस्कृताध्यायिवर्गः सर्वत्रैव संसदि गोष्ठ्यां समाजे स्ववाचो युक्तेर्विस्तारेण स्वीयं हार्दं भावम् व्याख्यानादि-वैदुष्येण जनतायां साधु समासज्जयेत् । नीति-विदा विष्णुशर्मणापि—

"वाचां सर्वत्र वैचित्र्यं नीति विद्यां ददाति च" ।

"सदसि वाक्पटुता युधि विक्रमः" ।

इत्यादि व्याहरता साधु आविष्कृतोऽयमुपरिष्टादाशयः । परन्तु किं भवन्तः सम्प्रति पश्यन्ति संस्कृताध्यायिवर्गम् ? किं सोऽनुसरति महाकवेः पन्थानम् ?

"सिद्धं ह्येतद्वाचि वीर्य्यं द्विजानां" ।

इति भवभूतिरपि सङ्केतयति स्वकाव्याध्यायिवर्गं व्याख्यान-कला-शिक्षायाम् । परन्तु न जाने सर्वमिदमध्येतारोऽपि संस्कृतशास्त्रा विद्वांसश्च कं लोकं समाश्रित्य तिष्ठन्ति । कां सुषुप्तिं सेवन्ते यत्तेषां निद्राभङ्ग एव न भवति । पुरत एव ते पश्यन्ति यत् यत्र संसदि ते समुपविष्टा भवन्ति तस्यामेव इंगिलश-

भाषाभिज्ञा अज्ञातविषया अपि तत्रोत्थाय उपविश्य वा यथेच्छं व्याख्यानादिना जनताः सम्बोध्य स्वमतप्रचारं विदधति । तत्रैव कृततूष्णीम इमे "मनसि गुडगुडायते बहि वक्तुं न शक्यते " इति लोकोक्तिं सफलयन्ति । किं बहुना अद्यत्वे बालकादारभ्य वृद्धं यावत् सर्वेऽपि इंग्लिशभाषाभिज्ञा व्याख्यानादिना पाश्चात्यसभ्यताप्रभवान् दोषान्, स्वबुध्या तु गुणानेव, प्रतिग्रामं प्रतिनगरं प्रतिजनहृदयेषु प्रवेश्य दुग्धे मद्यमिश्रणवत् भारतीयसंस्कृतिं विदूषयन्ति । परन्तु संस्कृतज्ञा विद्वांसो भारते जन्माधिकारत एव नेतृपदे आसीना अपि सर्वतः समाजात् दैनं दिनं वहिष्कृता भवन्तो हस्तोपरि हस्तं दत्त्वा विषीदन्ति, कालं वा परमेश्वरं वा प्रारब्धं वा विनिन्दन्ति । किन्तु मूलदोषं दूरीकर्तुं न बद्धपरिकरा भवन्ति, इति वयं शतशः भूयो भूय उद्घोषयामः । श्रीव्यासदेववद् वयमपि सर्वथा कथयामः ।

ऊर्ध्ववाहु र्विरौम्येष न च कश्चिच्छृणोति माम् ।
धार्मिकीयं परीक्षाहि सर्वं दोषं व्यपोहति" ॥

इति सर्वं प्रसरन्तं दोषसंघं निरीक्ष्यैव अखिलभारत-वर्षीय-संस्कृतधार्मिक-विश्वविद्यालय-( धार्मिकाध्यात्मिक-परीक्षायूनिवर्सिटी ) तः धार्मिक्यः परीक्षाः प्रवर्तिताः सन्ति । यत्र सर्वत्रैव प्रथमा-मध्यमा-शास्त्रिपरीक्षाचार्य्य-परीक्षाप्रभृति परीक्षासु व्याख्यानशिक्षकाणां धार्मिकग्रन्थानाम् उपदेश-पारिजात-धर्मविज्ञान-पुराणरहस्य-धर्मकल्पद्रुम-प्रभृति-व्याख्यानोपयोगिनामपि सन्निवेशो विद्यते । येनानायासेनैव वाग्वैदुष्येण सहैव धार्मिक-व्याख्यानशिक्षापि साधु समधिगता भवति । सर्वोऽपि उपरि निर्दिष्टानां महाकवीनां हार्दोऽभिप्रायः सिद्धो भवति । यथाकथमपि संस्कृतज्ञाः छात्रा वराका अत्र उन्मुखा अपि भवन्ति । किन्तु तेषाम् अध्यापकाः स्वस्वाभाविकालस्यौदास्यादि दोषतस्तान्निरोधयन्ति । ते केवलं यथाकथमपि राजकीयपरीक्षापाठ्यग्रन्थानामध्ययनं तत उत्तरणमेव स्वर्गसोपानोत्तरणं मन्यन्ते । परन्तु न पश्यन्ति ते सूक्ष्मेक्षिकया पूर्वतनानामस्माकं महाकवीनाम् उपरि निर्दिष्टपद्याभिप्रायं नावलोकयन्ति सम्प्रति सर्वत्रैव प्रसरन्तं भारतीयसंस्कृति-विदूषकं पाश्चात्यसभ्यतादोषसमूहम् ।

'तैस्तु,—"अधीतमध्यापितमर्जितं यशः" ।

इति नियमात्सर्वं स्वकृत्यमनुष्ठितम् । इदानीन्तनेभ्यो भावुकेभ्यश्छात्रेभ्यस्तु नवीनोऽवसरो देय एव । तेषामुपर्य्येव सर्वे साम्प्रतिका देशकालात्मविदा विद्वांसो दोषं पातयन्ति । यत्ते वर्त्तमानयुगानुष्ठेयन्नानुतिष्ठन्ति इति । यदि ते धार्मिक-व्याख्यानाद्युपयोगि-ग्रन्थानामध्ययनेन धार्मिकीं परीक्षामुत्तरन्तो

वाग्मित्वं सम्पादयितुं लब्धावसरा भवेयुश्चेत्तेषामुपरि सर्वोऽपि आसज्यमानः कलङ्कः सम्मार्जितः स्यात्तेनैव सह तैः लोके विद्याफलमपि आसादितं स्यात्। सार्धमेव व्याख्यानादिवैभवेन भारतीयसंस्कृतिप्रचारेण भारते प्रसरन्तं साम्प्रतिक-पाश्चात्य सभ्यताभवं दोषमपि दूरीकर्तुं ते समर्था भवेयुः। अध्ययनवेलायाश्च इहत्यां धार्मिकीं परीक्षामुत्तीर्य्य ततो लब्धेन कियताऽर्थिकसाहाय्येन स्वाध्ययनेऽपि सौलभ्यं सम्पादयितुं समर्था भवेयुरिति। एकेनैव शस्त्रेण सर्वमपि स्वाभीष्टं तैः साधितं स्यादित्यत एवोक्तमस्माभिः "ऊर्ध्वबाहुरिति"

इंग्लिशभाषाभिज्ञा अपि बोध्यन्ते यत्ते स्वमनसा गुणत्वेन कल्पितानां पाश्चात्यदोषाणां प्रसारेण भारतीयसंस्कृतिं विलोपयितुंतु नैव वाञ्छन्ति? तर्हि कथन्न ते इहत्यां धार्मिकीः पी० एच० डी०, बी० डी० सी०, जुनियर, सिनियर,—प्रभृतिभारतीयसंस्कृति-परिचायिकाः परीक्षा दत्वा स्वज्ञानं परिमार्जितं कुर्वन्ति। येन स्यात्सुवर्णे सुगन्धसमवायावसर इति। नास्ति विमर्शावसरः। बहु व्यपगतं भारतीयं रत्नजातं सम्प्रति।

"उत्तिष्ठत जाग्रत प्राप्य वरान्निबोधत"

इति श्रुत्यनुसारिणी एषेयं धार्मिकी आध्यात्मिकी च परीक्षा भवतो बोधितुं सन्नद्धा सती निद्रितानां भवतां पुर एवोपस्थिता विद्यते। आर्य्यभावं पुरस्कृत्य नतमस्तका भूत्वा अस्याश्चरणयोः प्रणिपत्य वरामिमाम् प्राप्य निबोधत स्वीयं कर्तव्यजातमिति संक्षेपेणैव विरम्यते। × × × ×

---

## स्त्रीशिक्षा।

यदि कुलोन्नयने सरसं मनो—<br>
यदि विलास-कलासु कुतूहलम्।<br>
यदि निजत्वमभीप्सितमेकदा,<br>
कुरु सुतां श्रुतशीलवतीं तदा।

अयि प्रेयांसः पाठकाः!

अवधीयतामुपरि निर्दिष्टे पद्ये। सम्प्रति सर्वथा स्वाऽभ्युदयार्थं यतमाना-नराः स्वस्वपद्धत्या स्त्रीशिक्षणेऽपि बद्धपरिकरा दृश्यन्ते। केचित् पाश्चात्य-शिक्षया स्त्रीणामुन्नतिमभिलषन्ति। केचिच्च तासामशिक्षणमेव वरं मन्यन्ते। इत्थं विचारविभेदे वयं तूभाभ्यां विभिन्नमेव पन्थानं श्रेयस्करं स्त्रीशिक्षणे पश्यामः।

शिक्षणं तु स्त्रीणामावश्यकमेवेति सम्प्रति कस्यापि देशकालाभिविदो

विदुषो वैमत्यमेवेह स्यात् । यतो हि उपरितनं पद्यं भवन्तः पश्यन्त्येव । श्रीमता मनुनापि ईदृशाभिप्रायकमेव पद्यं व्याहृतम् तथाहि—

कन्याप्येवं शिक्षणीया पालनीयातियत्नतः । इति

विचारतोऽप्यायाति यद् बाल-शिक्षायां यथा मातरः प्रवीणा भवन्ति न तथा पितरः । यदि ता मातरः शिक्षिता भविष्यन्ति तर्हि स्वल्पेनैव कालेन स्वसुतान् शिक्षितान् विधास्यन्ति । इत्यत्र तु नास्ति कियानपि सन्देहलेशः । प्राक्तने काले सर्वा अपि शिक्षिता मातरः स्वसुतान् सर्वथा योग्यतमान् निर्मान्ति स्म इति पुराणादिदर्शनतोऽनुमीयते । मार्कण्डेयपुराणे मदालसायाः कथा कस्य विदुषो दृष्टिगोचरं न गता स्यात् । सा हि स्वसुतान् लालयन्ती सत्येवाध्यात्मशिक्षया विभूषितान् करोति स्म । तथा सदाचारस्य स्वधर्मस्य मानवकर्तव्यस्य सर्वस्यापि मनुष्यापेक्षितस्य शिक्षणस्य संक्रमणं बाल्ये एव मदालसाप्रभृतयो विदुष्यो नार्यः स्वसुतेषु कुर्वन्ति स्म इति मार्कण्डेय-पुराणीयानि कियन्ति पद्यानि विदुषां विज्ञानायोदाहरामः ।

### मदालसायाः स्वसुतोपदेशः ।

धरामरान् पर्वसु तर्पयेथाः समीहितं बन्धुषु पूरयेथाः ।
मायां प्रबोधेन निवारयेथा अनित्यतामेव विचारयेथाः ॥
सदा मुरारिं हृदि चिन्तयेथा स्तद्ध्यानतोऽन्तःषडरीञ्जयेथाः ।
मनः परस्त्रीषु निवर्तयेथा भार्य्यामृतावेव विचिन्तयेथाः ॥
राज्यं कुर्वन् सुहृदो नन्दयेथाः साधून्रक्षंस्तात यज्ञैर्यजेथाः ।
दुष्टान्निघ्नन् वैरिणश्चाजिमध्ये गोविप्रार्थ वत्स ! मृत्युं भजेथाः ॥
बालो मनो नन्दय बान्धवानां गुरोस्तथाज्ञाकरणैः कुमारः ।
स्त्रीणां युवा सत्कुलभूषणानां वृद्धो वने वत्स वनेचराणाम् ॥

इत्येवममृतपूर्णमुपदेशं शिक्षिता एवार्य्यमहिला दातुं समर्था भविष्यन्ति । इति स्त्रीणां शिक्षणन्तु आवश्यकमेव । परन्तु तत्र विचारणीयमिदं विद्यते यत्साम्प्रतम् पाश्चात्यशिक्षया तु तासाम् सर्वथा स्त्रीत्व-पदविलोपेन सहैव भारतीयसंस्कृतेरपि समूलमुच्छेद एव भवति । अतः सर्वतः प्रसृमरस्यास्य पाश्चात्यसभ्यताविषदिग्धस्य शिक्षणस्य निरोधे यत्नः कार्य्यः । तस्य कृते तु अयमेव सदुपायोऽस्मान् साधु प्रतिभाति यत् सर्वत्रैव प्रतिगृहं प्रतिग्रामं स्वदेशीयभाषया तासां शिक्षणं भवेत् । तत्रापि च धार्मिक-ग्रन्थानां सन्निवेश आधिक्येन स्यात् । तासां शिक्षायै पृथक् पाठ्यग्रन्थानां प्रणयनं स्यात् । प्रथ-

मतः प्रारम्भिकशिक्षात आरभ्य उच्चतरकक्षां यावत् तासामन्य एव प्रकारः स्याच्छिक्षायां। तासां शिक्षापि सरला स्यात्। कियदेवेतिहासभूगोलगणितचित्र-कर्म संगीतादि शिक्षणं विधाय धार्मिकग्रन्थानां शिक्षणमधिकं स्यात्। आयुर्वेद-स्वास्थ्यविज्ञान-सन्ततिरक्षण-शौचसूचीकर्म-प्रभृतिकर्मणामेव शिक्षणं तासां प्राकृतिकं विद्यते। इदानीम् इंग्लिशकलाशालासु तु तासां यत् शिक्षणं भवति तत्सर्वथा अप्राकृतिकमेव भवतीत्यस्माकं धारणा।

वयं स्त्रीशिक्षाया न विरोधिनः, परन्तु तासामस्वाभाविक-शिक्षायास्तु सर्वथैव विरोधिनः। इदानीं यत् पाश्चात्यभाषायां स्त्रीणां शिक्षणं भवति, तेन शिक्षणेन स्त्रीणां स्वास्थ्यं, मनोबलं, चरित्रबलं च सर्वमेव विकृतं जायते। प्रथमतस्तु सप्तसमुद्रीपारस्थाया भाषाया अध्ययनेन तासां शरीरं दुर्बलं जायते। तस्यां भाषायाञ्च धार्मिकाध्यात्मिकभावाभावेन च तासां मनोबलं दुर्बलं जायते। तस्यां भाषायांञ्च विलासमयस्यैवेतिवृत्तस्य प्राधान्येन पाश्चात्यसभ्यताविषदिग्धतया च चरित्रबलमतीव क्षीणं जायते, इति नास्ति अविदितं तच्छिक्षामर्मज्ञानां विदुषाम्। अतो वयं सर्वानेव भारतीयसंस्कृतिसंगोपनपरान् विदुषो विज्ञापयामो यत् बालकास्तु अनया पाश्चात्यशिक्षया विकृतमस्तिष्का जाता एव। तेषां संगोपनन्तु दुस्तरतरं संजातमेवास्ति। अयमेको रोगस्तु कृतमूल एवास्ति भारते, तावदयमपरो गण्डस्योपरि विस्फोटकः सम्वृत्तो दृश्यते यत् स्त्रियोऽपि तेनैव मार्गेण नीयमाना दृश्यन्ते।

स्त्रीशिक्षायान्तु नास्ति अयं रोगस्तथा दृढमूल इत्येतस्य प्रतिकारोऽधुना कर्तुं पार्य्यते। अतश्च सर्वप्रथमं सूचयामः स्त्रीणां शिक्षणं स्वहस्ते कर्तुमिति। स्त्रीणां रक्षयैव देशस्य समाजस्य सर्वथा रक्षा भवतीति सर्वतन्त्रसिद्धान्तसिद्धोऽयमर्थः।

"स्वकुलं सन्ततिञ्चैव पूर्वान् पितृपितामहान्।
आत्मानञ्च त्रिवर्गं च दारान् रक्षन् हि रक्षति" ॥

अतः—'उत्तिष्ठत, जागृत प्राप्य वरान्निबोधत' इति श्रुत्यनुशासनबलेन वराणां श्रेष्ठानां निदेशेन गमनमेव वरं भवतीति दर्शितोऽस्ति पन्थाः पूर्वजैः स्त्रीशिक्षणे।

गृहशिल्पपरिज्ञानेष्वायव्ययनिरीक्षणे।
पाकशास्त्रपुराणेषु स्त्रीणां शिक्षा विशिष्यते ॥

इति पुराणाचार्य्यैर्दर्शितेनैव मार्गेण स्त्रीशिक्षा सम्प्रति भारतीयैः सञ्चालनीया। तेनैव यथा देशस्य समाजस्याभ्युदयः शाश्वतिकः स्यादिति।

अनेनैव विचारेण विद्यापीठे वाराणसीक्षेत्रे श्रीभारतधर्ममहामण्डल-सञ्चालकैरुभयथापि स्त्रीणां शिक्षायै सुदृढः प्रयत्नो विधीयते । विद्यालयोद्घाटनेन धार्मिक-ग्रन्थ-प्रणयनेन चेति जानन्त्येव समाचारपत्रपाठकाः । श्रीभारतधर्म-महामण्डलत एक आर्य्यमहिला-महाविद्यालयः सञ्चाल्यते । यस्य पाठ्यपद्धतिर्धार्मिकग्रन्थबहुलैव विद्यते । यत्र पुराणानां धार्मिकोपाख्यानानाञ्च प्रतिदिन किञ्चित् किञ्चित् शिक्षणं भवति । सदाचाराणां, सावित्री-बहुला-मदालसानुसूया-प्रभृतिसतीनां स्त्रीणामादर्शजीवनचरितस्य शिक्षणं भवति । यस्य कृते स्वतन्त्र एक आर्य्यमहिलामहापरिषन्नाम्ना शिक्षामण्डलः संस्थापितो विद्यते । तेनैव मण्डलेन विद्यालयोऽयं सञ्चाल्यते । यस्याभ्युदयार्थम् आर्य्यमहिला-महापरिषदः प्रधानकार्य्यसम्पादिका श्रीमती विद्यादेवी महोदया सततं प्राणपणेनोद्योगमादधती सर्वतः सर्वथा प्रयतमाना विद्यते । तया महोदयया तु कियतैव वर्षेण तस्य विद्यालयस्याचिन्तनीया समुन्नतिः सम्पादिता । तेन विद्यालयेनार्य्यमहिलासु साधु शिक्षायाः प्रचारो भविष्यतीत्यस्माकं सुदृढो विश्वासः ।

अपरश्चैकोऽखिलभारतवर्षीय-संस्कृतविश्वविद्यालयनाम्ना धार्मिकपरीक्षाप्रचारको विश्वविद्यालयः प्रतिष्ठापितो विद्यते । यतः सर्वत्रैव भारते वर्षे धार्मिकपरीक्षाप्रबन्धो भवति । तत्रार्य्यमहिलानां कृते ( १ ) धर्म-प्रभा ( २ ) राष्ट्रभाषा-चन्द्रिका, ( ३ ) व्याख्यान–कौमुदीत्यादि विविधः परीक्षाक्रमः सञ्चालितो विद्यते । यस्य कृते स्वतन्त्रैका पाठ्यपद्धति विद्यते । यत्र सतीचरित्र-चन्द्रिकाप्रभृतिधार्मिक-ग्रन्थानां सन्निवेशोऽस्ति । येषां ग्रन्थानामध्ययनं विधाय स्त्रियः स्वगृहे तिष्ठन्त्य एव परीक्षां दातुमर्हन्ति । -) आणकस्य चिटिकाप्रेषणेन नियमावली विना मूल्येनैव वितीर्य्यते । स्त्रीशिक्षोपयोगिनो विविधा ग्रन्थाश्चैतो निर्मीयन्ते प्रकाशिताश्च सन्ति । ग्रन्थ-सूचिकादर्शनेनास्य ज्ञानं स्यात् । सापीत एव लभ्यते ।

इत्थं स्त्रीशिक्षणे श्रीभारतधर्म–महामण्डलेन दर्शितोऽस्ति शुभो धार्मिको मार्गो भारतीयसंस्कृति-संरक्षकः । अनेनैवाधुना भारतीयानामार्य्य-नारीणां शिक्षणं साधु समेधितं स्यात् । भारतीसभ्यतापोषकञ्च स्यादित्यस्माकं विश्वासः ।

अयमेव मार्गः सर्वैः सनातनधर्मावलम्बिभिराश्रयणीयः स्त्रीणां शिक्षणे । यत्र सौकर्य्यं स्यात्तत्र कन्यापाठशालाऽपि स्थापनीया । परन्तु पाठ्यग्रन्थानां निर्द्धारणं स्वतन्त्ररीत्यैव धार्मिकाणामेव पुस्तकानां कार्य्यम् । तत्र श्रीभारतधर्म-महामण्डलीय—'धर्म प्रवेशिका' परीक्षास्थितग्रन्थानामध्यापनं वरं भविष्यति ।

सा परीक्षापि कन्यापाठशालायां गृहीता स्यादित्यस्य व्यवस्था विधेया । सर्वथा स्त्रीशिक्षाया नियन्त्रणमधुना सनातनधर्मिणां नितान्तमावश्यकं कर्त्तव्यमित्यस्माकं निवेदनम् । × × × × × × ×

---

## स्वर्गस्थाश्चन्द्रशेखरशास्त्रिणः !

संस्कृत-भारत्याः समेधने कृतप्रयत्नानां साहित्याचार्य्य-चन्द्रशेखरशास्त्रिणां प्रयागतीर्थे आकस्मिकं स्वर्गप्रयाणमाकर्ण्य सहाश्रुधारया विगलितमस्माकं धैर्य्यम् । ते हि महात्मानोऽदैन्येनोत्साहेन स्वावलम्बनमालम्ब्य यां सेवां संस्कृतभाषायास्तथा भाविन्या राष्ट्रभाषायाश्च कुर्वन्त आसन् कथं सा सेवाऽग्रे प्रसरिष्यतीत्यस्ति अस्माकं विषादावसरः । वाल्मीकीयरामायणस्य हिन्दी-व्याख्यां समूलां प्रकाश्य अद्यत्वे महाभारतस्य तादृशीमेव व्याख्यां कुर्वन्त आसन् तावदेव क्रूरेण कालेन कवलिता इति संस्कृतभारत्या अभाग्यम् !!

कियत्कालं सन्यासिनां स्वमार्गे आनयनाय हिन्दीभाषायां 'सन्यासि'नामकं पत्रं काशीतः, ततश्च प्रयागतः 'शारदा' नाम्नीं संस्कृतमासिकपत्रिकां बहुकालं सम्पादितवन्तः । संस्कृतसाहित्यसम्मेलनस्य समृद्धिकामनया कियत्कालं संस्कृत-रत्नाकरञ्च सम्पादितवन्तः । सम्प्रति सर्वतो विरज्य प्रयागे स्थित्वा स्वाधीन-ग्रन्थमालां प्रकाशयन्तो दीर्घनिद्रां निपण्णा इति शोच्यैस्तद्बन्धुभिः सह सम वेदनां प्रकटयन्तो वयं तत्स्मृतिरक्षार्थं तत्सुहृदोऽनुरुन्ध्महे यत्तदीयमहाभारत-व्याख्यानं यथापूर्वमेव चालयेयुरिति । × × × × ×

## परीक्षाकेन्द्राणि तद्व्यवस्थापक-महोदयाश्च ।

अस्मिन् वर्षे कार्तिकशुक्ल सप्तमीतः ( १३।११।३४ ई० ) अखिलभारतीय-संस्कृताध्यात्मिक-( परीक्षायूनिवर्सिटी ) विश्वविद्यालयीयाः सर्वा अपि परीक्षा अधोनिर्दिष्टकेन्द्रेषु गृहीता भविष्यन्ति । तेषां केन्द्राणां व्यवस्थापकमहोदयाश्च क्रमशो निम्ननिर्दिष्टाः सन्ति । सर्वेषां परीक्षार्थिनां ज्ञानसौकर्य्यार्थं तेषां सूचिकाऽस्माभिरिह प्रकाश्यते । प्रथमपरीक्षात आरभ्याचार्य्यपरीक्षां यावत् सर्वेषामपि विषयाणां प्रश्नपत्राणि चतुर्होराभिरुत्तरणीयानि भविष्यन्ति । प्रति-दिनमेकं प्रश्नपत्रं प्रतिविषयं भविष्यति । परीक्षार्थिनां केन्द्र-प्रवेश-पत्राणि तत्तत्केन्द्रव्यवस्थापकमहोदयानां पार्श्वे प्रहितानि सन्ति, तत एव गृहेलिमानि । अस्मिन् वर्षे व्याकरण-काव्ययोरेव प्रथममध्यमे परीक्षे स्वीकृते स्तः। परीक्षार्थिनां धार्मिकीं श्रद्धां विलोक्य आगामिनि वर्षे तु सर्वेषामपि विषयाणां प्रथमामध्यमे

परीक्षे गृहीते भविष्यतः । केन्द्राणि तु बहूनि अखिलभारतवर्षीय-संस्कृतधार्मिकाध्यात्मिकविश्वविद्यालयेन ( परीक्षायूनिवर्सिटी ) सम्बद्धानि सन्ति । परन्तु अस्मिन् वर्षे अधोनिर्दिष्टेष्वेव केन्द्रेषु परीक्षा गृहीता भविष्यन्ति—तद्यथा केन्द्राणि तद्व्यवस्थापकमहोदयाः श्चेत्थं सन्ति—

१—श्रीमान् पं० रामविलासचतुर्वेदी, प्रधानाध्यापक-संस्कृतपाठशाला, मु० पो०—कोंच, जिला—जालौन ।

२—श्रीमान् पं० गोपालशास्त्री दर्शनकेशरी, उपदेशकमहाविद्यालय, लक्ष्मीकुण्ड, बनारस ।

३—श्रीमान् पं० महासुखशर्मा, धर्मज्ञानसभा, ( विद्यालय ) खेतरी, राजपुताना ।

४—रजिस्ट्रारमहोदय, व्रजमंडल यूनिवर्सिटी, मथुरा ।

५—श्रीमान् पं० हरिहरवल्लभठाकुर, हरिहराम्बा-राज्य सं० महाविद्यालय, अमावां, पटना ।

६—श्रीमान् पं० महेशचन्द्र शर्मा विशारद, तिलकलाइब्रेरी, चाँदपुर, बिजनौर ।

७—श्रीमान् पं० हरेरामजीशर्मा, अध्यापक हरिहरनाथविद्यालय, संवरा, रसड़ा, बलिया ।

८—श्रीमान् पं० शिवसहायचतुर्वेदी वैद्यशास्त्री, सनातनधर्ममहासभा सं० पाठशाला, इटावा, यू० पी० ।

९—श्रीमान् पं० रामनारायणशर्मा चैनपुरिया राधामोहनपुस्तकालय, पञ्चतलाव करौली, राजपुताना ।

१०—श्रीमान् पं० जनार्दन पाण्डेय चनकप-आयुर्वेदभवन, पो० कुटुम्बा चनकप, जि०-गया ।

११—श्रीमान् पं० त्रिकालेश्वरशास्त्री, साधुसंघ, पीलियाखाल हंसमठ, हंसरोड, इन्दौर ।

१२—श्रीमान् पं० रेवाशङ्करमेघजी शास्त्री, देवीदासलल्लुभाई सं० पाठशाला, गुलालबाड़ी, बम्बई नं० ४ ।

१३—श्रीमान पं० शुभनारायण पाठक, मैनेजर हिन्दी सं० पुस्तकालय, शिवपुर दियर, बलिया ।

१४—श्रीमान् गोस्वामी राधाचरण शर्मा राजवैद्य, नारनौल पटियाला ।

१५—श्रीमान् पं० रामसकल उपाध्याय, संस्कृतमहाविद्यालय, आरा ।

१६—प्रेसिडेण्ट बोर्ड आफ संस्कृत स्टीडीज एण्ड एग्ज़ामिनेशन, मैसोर ।

१७—श्रीमान् आर० सी० शास्त्री, प्रेसिडेण्ट-सनातनधर्मसभा, संगरिया, बीकानेर स्टेट ।

१८—श्रीमान् पं० विमलानन्दजी तर्कतीर्थ भिषग्शिरोमणि ९०/३ ग्रेस्ट्रीट, कलकत्ता ।

# उपयुक्तक्रिया-क्रमिकसङ्कलनम्।

सङ्कलयिता—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री।
( 'मुलतान'-स्थ-श्रीसनातनधर्मसंस्कृतकालेजाऽध्यापकः )

———:❀:———

गीर्व्वाणवाणीचरणैरिदमनुभूतचरमेव भवेद्, यत्—क्रिया विना सञ्चरणक्रिया न भवितुमर्हति संस्कृत्रिमसाहितीसंहतौ। अथ च पौनःपुन्येन तासां तासां ( पूर्व्वप्रयुक्तानां ) क्रियाणामुपयोगोऽपि वैरस्यमुपास्ते; निबन्ध-निबन्धनकाले वैशिष्ट्येन पद्यनिर्म्माणसमये च शैघ्र्येण भिन्नभिन्नक्रियाणां विभिन्नविभिन्नपर्य्याया अपि द्राक् कण्ठोपकण्ठं नायान्ति, आयाता अपि स्मृतिपथङ्केचित् सेट्कत्वाऽनिट्कत्ववेट्त्वादि-भिदा-भिया सकर्म्मकाऽकर्म्मकद्विकर्म्मकत्वाऽनिर्द्धारेण च, तद्योगविधीयमानविभक्तिसंशीत्या च प्रायो न प्रयोक्तुं शक्यन्ते ते सर्व्वसाधारणेन; वैशिष्ट्येन च परीक्षाऽर्थि-विद्यार्थिसार्थेन तदुपकारमाकलय्य विदुषामिव विद्यार्थिनामपि हितैषिणि 'सूर्य्योदय' पत्रेऽस्मिँस्तदीयसङ्कलनं विधीयते 'क्रियाकलापादिदिशा। अत्र अकाराद्यनुक्रमणिकया हैन्दवभाषायामुद्दङ्कितानामाख्यातानामकाराद्यनुक्रमणिकयैव संस्कृतपर्य्याया निर्दिष्टाः, इदमत्र वैशिष्ट्यम्। वर्त्तमानभूतेतिकालद्वयी निदर्शिताऽत्र। भूतकाले च प्रायोऽत्र लुङ् दर्शितो भूतसामान्ये सर्व्वत्र प्रयोक्तुं शक्यत्वात्, लङ् प्रायस्सुगमत्वादुपेक्षितः, ❀ क्वचिच्च दर्शितोऽपि, तस्याऽद्यतनकालवर्ज्जमन्यत्रोपयोगो विधातुं शक्यः। लिट् तु ऐतिहासिकवर्णन एव प्रायःप्रयोज्यत्वात्, सर्वसाधारणेन प्रयोक्तुमशक्यत्वादेकदेशित्वमभिलक्ष्याऽपमानितः। भविष्यदादिकालनिर्म्माणे च सेट्त्वाऽनिट्त्व-परस्मैपदाऽऽत्मनेपदादि भ्रान्तिस्तिष्ठति। अत्र च तदपनोदनाय केवलमनिड्धातुषु(१)एकाऽङ्कचिह्नं निवेशितम्, एतद्व्यतिरिक्तधातूनां सेट्कताऽनुसन्धेया। ( ३ ) त्र्यङ्कचिह्निता धातवो वेटो ज्ञेयाः। ( ४ ) चतुरङ्काऽङ्किता धातवो लुङि लृटि च सेटोऽन्यत्र चाऽनिटो ज्ञेयाः। ( २ ) द्व्यङ्कचिह्निता धातवोऽकर्म्मका ज्ञेयाः, एतद्व्यतिरिक्तक्रियासु सकर्म्मकतोह्या। + 'ति' 'त्' इत्यन्तिमवर्णेन परस्मैपदम्, 'ते' 'त' इत्यन्तिमवर्णेन च तत्तद्धातूनामात्मनेपदं ज्ञातुं सुशकमेव-इति तच्चिह्नप्रदर्शने नाऽऽदृतो यत्नः। कारकादि-

---

❀ क्वचिच्च केषाञ्चिद्धातूनां लुङादिकस्याऽप्रयुज्यमानतया लङेव दर्शितः।

+ लङ् लङ्वद् भवति, 'ति' स्थाने 'त्' कार्य्यः, 'ते' स्थाने च 'त', इति। पूर्वमडाटौ कार्य्यौ।

रन्यो वा विशेषऽक्वाचित्कश्चिप्पएयां निवेशितः। एषा कृतिर्न कृतिकृते, किन्तु साधारणानां कृते इति ध्येयम्। इमास्सङ्ख्याऽपाठकैस्सावधानं निधेयाः। निबन्धनिबन्धनसमये यस्याऽक्रियाया नवनवाऽपर्य्यायास्तैरन्वेष्टुमिष्टाः स्युः, तेऽनुक्रमणिकाऽनुसारं गवेषणीयाः। स्वबुद्ध्यनुसारञ्च यस्मिन् यस्मिन्नर्थे येषामुपयुक्तता दृश्यते, तत्तत्प्रयोग एव कार्य्यः, यतस्समानाऽर्थका अपि का अपि क्रियाऽक्वचित् २ अर्थैर्लक्षणपरीता भवन्तीत्यवश्यमूह्यम्। अस्मिन्निबन्धे काश्चित् क्रिया वर्जिता उपेक्षिताश्चाऽस्माभिः, तत्र लेखवि-स्तरशङ्कैव प्रथमं कारणम्, यस्याऽक्रियाया द्वित्राऽपर्य्यायवाचकाः, प्रायस्ता अवहेलिता एव क्रियाः, काश्चिच्च तादृश्य आदृता अपि। अत्र मुद्रायोजकदोषवशान्मामकीनमतिमान्द्याद् वा यत्र क्वचित् सङ्केतादिविशेषनि-वेशेऽन्यत्र वाऽन्यथात्वं जातं स्यात्, अन्यस्य चिह्नमन्यत्र योजितं भवेत्, क्वचिच्च चिह्नन्न योजितम्भवेत्, कुहचिच्च नवीनं किमपि चिह्नं प्रकाशितं वर्त्तेत, तत्प्रमादाऽवसादे स्वयमेव कष्टमूरीकार्य्यम्, अहमेव वा पिशुनयितव्यः, येन तद्वि-षयकस्पृक् सूचनाऽन्यदा दीयते। सम्पादकमहाभागमपि एतच्छुद्धमुद्रापण-विधौ प्रार्थये। मदीयोऽयमपि विचारो वेविद्यते, यद् आसामेव क्रियाणां क्रमशो णिच्-सन्-यङ्-भावकर्म्मस्वपि पृथक् पृथगनया रीत्या निदर्शनं विधीयेत; अस्मिन् सम्बन्धे यदि केचिन्मया सह सहमताः स्युस्तर्हि ते मत्पार्श्वे लेखनस्य कष्टं वहेयुः येनाऽहमप्युत्साहितो भूत्वा समयमासाद्य तादृशक्रियाकलापमपि विभिन्न-विभिन्नकाले-येन सम्पादकमहाभागानां कष्टं न स्यात्-प्रकाशयेयम्। अथाऽधुनो-पक्रम्यते—

( २ ) अभिमान करता है १

अभिमनुते, अभ्यमनुत। ( १ ) अभिमन्यते, अभ्यमंस्त। ( १ ) अवलि-प्यते, अवालिप्यत। ( ४ ) अहङ्करोति, अहमकार्षीत्। गर्व्वयते, अजगर्वत। गर्व्वायते, अगर्व्वायिष्ट। ( ३ ) दृप्यत, अदृप्यत्। माद्यति, अमाद्यत्।

( २ ) अलग होता है २

विघटते, व्यघटिष्ट। ( १ ) विच्छिद्यते, व्यच्छिद्यत। ( १ ) वियुज्यते, व्ययुज्यत। ( १ ) विश्लिष्यति. व्यश्लिक्षत्-व्यश्लिषत्। ( १ ) व्यतिरि-च्यते, व्यत्यरिच्यत।

( १ ) केवलाऽनिट्। ( २ ) अकर्म्मकः। ( ३ ) वेट्। ( ४ ) लृटि सेट्, अन्यत्रा-ऽनिट्। 'अनिड्धातु-परिगणना शार्दूलविक्रीडितच्छन्दोबद्धमस्माभिर्द्वितीयवर्षीय 'सूर्य्योदय'स्य समसङ्ख्यायामक्रियत।

आचमन करता है ३

आचामति, आचमीत् । ( १ ) उपस्पृशति, उपास्पार्क्षीत्,-उपास्प्राक्षीत् ।

आज्ञा देता है ४

आज्ञापयति, आजिज्ञपत् । ( १ ) आदिशति, आदिक्षत् । ( १ ) निदिशति । ( १ ) नियुङ्क्ते न्ययुङ्क्त नियोजयति, न्ययूयुजत् । व्यापारयति, व्यापारयत् ।

आता है ५

( ४ ) आगच्छति, आगमत् । ( १ ) आयाति, आयासीत् । ( १ ) एति, आगात् ।

आदर करता है ६

( ४ ) आद्रियते, आद्दत । मानयति, अमीमनत् । ( ४ ) सत्करोति, सदकार्षीत् । सत्कुरुते ( ४ ) सदकृत । सम्भावयति, समबीभवत् । ( १ ) सम्मन्यते, सममंस्त । संमनुते ।

आलिङ्गन करता है ७

आलिङ्गति, आलिङ्गीत् । ( १ ) आश्लिष्यति, आश्लिक्षत् । ( ३ ) उपगूहति, उपागूहत् । ( ४ ) क्रोडीकरोति । ( १ ) परिष्वजते, पर्य्यष्वङ्क्त । ( १ ) परिरभते, पर्य्यरब्ध ।

( २ ) आवाज़ करता है ८ ( ढोल )

ध्वनति, अध्वनत् । रणति, अरा, ( र ) णीत् । शब्दायते, अशब्दायिष्ट । स्वनति; अस्वा ( स्व ) नीत् ।

कूजति, अकूजीत् । नदति, अना ( न ) दीत् । विरौति । ८ ( पक्षी )

गर्जति, अगर्जीत् । रसति, अरासीत् । स्तनति, अस्तनत् । ८ ( बादल )

( ४ ) झङ्करोति । गुञ्जति, अगुञ्जीत् । ८ ( भौंरा )

नर्दति, अनर्दीत् । बुक्कति, अबुक्कीत् । भषति, अभषत् । ८ ( कुत्ता )

इलाज करता है ९

उल्लाघयति । चिकित्सति, अचिकित्सीत् । भिषज्यति ।

इस्तेमाल करता है । १०

अनुभवति, अन्वभूत । आस्वादयति, आसिष्वदत् । ( १ ) उपभुङ्क्ते, उपाभूङ्क्त । ( १ ) उपयुङ्क्ते, । ( १ ) उपायुक्त । ( १ ) निर्विशति ।

---

( १ ) केवलानिट् । ( २ ) अकर्म्मकः । ( ३ ) वेट् । ( ४ ) लुटि सेट्, अन्यत्राऽनिट् ।

उलाहना देता है ११

( १ ) उपालभते, उपालब्ध। ( १ ) पर्य्यनुयुङ्क्ते, पर्य्यन्वयुङ्क्त।

( २ ) उलटा होता है १२

भ्राम्यति। विपर्य्यस्यति, विपर्य्यास्थत। ( १ ) विपर्य्येति।

करता है वा बनाता है १३

( १ ) अनुतिष्ठति, अन्वष्ठात्। आचरति, आचरत्। उत्पादयति, उदपीपदत्। ( ४ ) करोति, अकार्षीत्। कल्पयति, अचीक्लृपत्। ( ४ ) कुरुते अकृत। घटयति, अजीघटत्। तनुते, अतत-अतनिष्ट। निर्व्वर्त्तयति, निरवीवृतत्। ( १ ) निर्म्माति, निरमासीत्। [ १ ) निर्म्मिमीते, निरमिमीत, निरमास्त। निष्पादयति, निरपीपदत्। ( १ ) प्रणयति, प्राणैषीत्। रचयति, अररचत्। वितनोति, व्यतानीत्। ( १ ) विदधाति, व्यदधात्, व्यधात्। ( १ ) विधत्ते, व्यधित। सम्पादयति, समपीपदत्। साधयति, असीषधत्। ( १ ) सृजति, अस्राक्षीत्।

कविता करता है। १४

उपश्लोकयति। कवयति, अकवयीत्। वर्णयति, अववर्णत्।

कहता है ( १५ ) द्विकर्म्मकः।

( १ ) अभिदधाति, अभ्यधात्। अभिधत्ते, अभ्यधित (१)। * आख्याति, आख्यात्। ( १ ) आचष्टे, आचष्ट, आख्यत। आलपति, आलपत्। आवेदयति। उच्चारयति, उदचीचरत्। ( ४ ) उदाहरति, उदाहार्षीत्। उदीरयति-उदैरिरत्। कथयति, अचकथत्। कीर्त्तयति, अचिकीर्त्तत्+। गदति, अगा ( ग ) दीत्। जल्पति, अजल्पीत्। निवेदयते, न्यवीविदत। प्रकीर्त्तयति। प्रतिपादयति, प्रत्यपीपदत्। (१)ब्रवीति, अब्रवीत्, अवोचत्। ( १ ) ब्रूते। भणति, अभा ( भ ) णीत्। भाषते, अभाषिष्ट। ( १ ) वक्ति, अवोचत्। वदति, अवादीत्। विज्ञापयति। ( ४ ) व्याहरति, व्याहार्षीत्। शंसति, अशंसत्।

( क्रमशः )

# अद्यापि योगपथ-पान्थ इहाभ्युदेति।



लेखकः—पं० श्रीभूपनारायणझाः व्या० न्या० आचार्यः।

साहित्यरत्नञ्च प्रधानाध्यापकः हाजीपुररत्नाकर सं० विद्यालयस्य।

अद्यापि सर्वतन्त्रस्वतन्त्रास्तत्रभवन्तः सुधीजनाधिनाथश्रीगोपीनाथकविराजा योगवैभवेन विराजा साम्यभाजो विद्वत्समाजोपदिदिक्षयेव धारणाध्यानसमाधिभिरन्तरङ्गोपायैर्विवेकख्यातिमुत्पाद्य परवैराग्येण असम्प्रज्ञातयोगसरणिसमारोहणक्रमेण कैवल्यमाकलयितुमाबद्धपरिकराः कस्य न विपश्चितश्चेतश्चमत्कुर्वन्तितराम्।

कविराजमहोदया एम० ए० परीक्षामुच्चकक्षायामुत्तीर्यापि संस्कृतसाहित्यनिरन्तरानुशीलनसौहित्यशीलाः शीलानुकूलेन विधिना काशिकराजकीय–संस्कृतमहाविद्यालयाङ्गभूत–सरस्वतीभवनाभिध–पुस्तकालयाध्यक्षतया नियुक्ताः सन्तः शनैश्शनैस्तदन्तर्गत–निखिलनिबन्धानतिनिर्बन्धेनावलोकयामासुः। प्रसादयामासुश्चोक्तमहाविद्यालयाध्यक्ष श्रीयुत डाक्टर गङ्गानाथ झा शर्ममनो मर्मविकासनेन निखिलतन्त्राणाम्। उपासामासुश्च योगदर्शनोपदर्शितदिशा निशावसाने दशाश्वमेध घट्टमुपस्थाय नियतम्।

अथैवं कतिषुचिदब्देष्ववसितेषु उक्तमहाविद्यालयाध्यक्षपदमपजहत्सु श्रीमत्सु डाक्टरझामहोदयेषु स्वानुष्ठीयमानयोगान्तरायत्रासात्स्वयमकामयमाना अपि झा महोदयैः, सुयोग्यतया तत्प्रत्यायितैर्डाइरेक्टरमहोदयैर्वाराणसेयैरतिप्रतिष्ठितैः पण्डितशतैश्चानुरोधातिशयेन तत्पदमधिष्ठापितास्तिष्ठन्त्येवाद्यापि कथं कथमपि निरन्तरायमनुतिष्ठन्तोऽनुष्ठेय मात्मनः।

अहो कीदृगत्यल्पजल्पिता कविराजमहोदयाना मनल्पकल्पिता च अनवस्तप्राकृतविषयानवधानता, चिदचिद्विवेचनैकावधानता च सकलदर्शनैकवाक्यत्वोपपादनकुशलता, वाङ्मञ्जुलता च वेदवेदाङ्ग रहस्योद्भेदनाद्भुतप्रतिभता, लेखकतायामप्रतिमता च। यमोद्वेजिनोऽपि ते यमनियमानुरञ्जिनः प्राणायामपरायणा अपि रेचकानुपयोगिनः, आहार विरसा अपि प्रत्याहाररसरसाः, धारणाधुरीणा अपि निर्धारणा धुरीणाः। समाधि विद्वेषिणोऽपि समाधिपरितोषिणः। नारायणादन्येऽपि गडुरासनरसिकाः, वृत्तिनिरोधप्रवृत्ता अपि वृत्तिविधायकाः चिराद्वाराणसीवासिनोऽपि असीमनवेक्षितारः, किं भूयसा—

तदाधिपत्यवेलायामदसीयमहाविद्यालये शिक्षमाणेन मया समाधिबाह्-

समयेऽपि कर्हिचित् किञ्चित्पुस्तकोदीक्षणं किञ्चिद्विलेखनं वाऽनाचरन्तो न दृष्टाः किञ्चित्पृष्टा अपि तदुत्तराधिकभणितौ मूकादविशिष्टाश्च, ईदृगचिन्तनीयचारुचरितनिचयैरुक्तमहोदयैः प्रणीतानि कतिचित्पुस्तकानि दर्शं दर्शं स्वाधिकृतजनेभ्यस्तद्वैदुष्य विशेषं श्रावं श्रावञ्चातिवेल मुल्लसय भारतशासकप्रतिनिधिर्महामहोपाध्यायपदवीम्प्रदाय स्वयमसमीहितमप्यैहिकसौभाग्यममीषामेधितवानिति अद्यापि योगस्सरणि प्रवणानां किमिहानवाप्यम् ।

---

## आधुनिकाश्छात्राः ।

—:०:—

**ले०—का०सू० साहित्याचार्य पं० रामेश्वरशास्त्री विद्यालंकारः "लक्ष्मणगढ़ः"**

छात्रशब्दविचारणावसरे श्रीमता भट्टोजिदीक्षितेन "गुरोर्दोषाणामावरणं छत्रं तदस्यास्तीति छात्र इति छात्र शब्दस्य व्युत्पत्तिः प्रदर्शिताः, चिरन्तनाश्छात्रा अस्या व्युत्पत्तेरादर्शभूता आसन्निति नास्त्यविदितं विदितवेदितव्यानां विदुषाम् । द्रोणाचार्यं एकलव्यं धनुर्विद्याशिक्षणार्थमागतं निम्नजातिजाततया विजहौ, परन्तु स तेषामिद मयुक्ताचरणमपि युक्ताचरणमिव ज्ञात्वा मृण्मयी प्रतिकृतिं कृत्वा तामेव द्रोणाचार्यं मन्वानस्तस्याः पुरतो धनुर्चालनविद्यांशिक्षते स्म, न तस्य तद्दोष गणनायां मनागपि मनःप्रासरत्, किन्तु समागते स्वगुरौ स स्वांगुष्ठं छित्वा प्रादात्, एवमेवारुणिरपि गुरूपदिष्टां स्वकीयभोजन निवारणप्रक्रियां तथैवतन्वानो बुभुक्षापीडितोऽपि तदीयधेनुचारण-संसक्तमानसो न स्ववाचा गुरोरिदम् अतिकठोरमपि कृत्यं निनिन्द । एवमेव गुरुणा यत्कथितं तत्सर्वं प्राक्तनाश्छात्रा ईश्वरोदितमिव प्राणपणेनापि व्यधुः । तेषां दिनचर्या रात्रिचर्या अपि नाधुनिकच्छात्राणामिवासीत्, अपि तु सा स्वास्थ्यविज्ञानभित्तौ विनिर्मिता धार्मिकविचारगुम्फितासीदित्यपि निभालनीयम् ।

त उषःकाल एव स्वकीयां तृणमयीं शय्यां मुमुचुः, पुनः परमेश्वरप्रार्थनां विधाय, शौचस्नानादिकं निर्वर्त्य प्रातःसन्ध्यां सूर्योदयात्प्रागेवाकार्षुः । कल्य एव तै र्हवनमपि क्रियते स्म, तद्धूमसुरभिगन्धेन तेषामाश्रम एव न पावित्र्यमभजत, किन्तु सकलोऽपि लोकः पावित्र्यभागभवत् । पुनः वेदवेदांगाद्यध्ययनपराः, स्वोदरपूर्णमात्रां भिक्षां गृहस्थेभ्यः समानीय तयैव स्वोदरं पूरयन्तोऽहर्निशं गुरुसेवापरायणा गुरुमेव परमात्मानं मन्वानास्तदादेशमीश्वरवाक्यमिव शिरसि धारयन्तो वीर्यप्रतिष्ठार्थं धृतब्रह्मचर्या महता महसा विभ्राजमानाः स्वकालं यापयामासुः ।

पूर्वजानामतिहितकरमादर्शं विस्मृत्येदानीन्तनास्तेभ्यो विपरीतमेवानुष्ठानमनुतिष्ठन्ति ! उषःकालोत्थानापेक्षया तेऽष्टवादनपर्यन्तमपि न निजां शय्यां जहति, भागीरथीपावनपयोऽवधीर्य दूषितद्रव्यमिश्रितक्षारादिसाधनादिद्रव्यैर्नैजं देहं कलुषयन्ति, यज्ञकरणवेलायां तमालपत्रधूमेन ते यज्ञोपहासं विदधति, वेदाध्ययनमपहाय समाचारपत्रपठनमेव तत्समये स्वीकुर्वन्ति, पठनवेलायां न गुरुं नमस्कुर्वन्ति, न तेषु श्रद्दधति, न तेषां वाचि तिष्ठन्ति, न तान्संमानयन्ति, किन्तु समये तानुपहसन्ति, भर्त्सयन्ति, तेषां दोषानुद्धोष्य निजच्छात्रनाम •कलंकयन्ति । सर्वेषु पठनसाधनेषु सत्स्वपि न मनोयोगेनाधुनिकाश्छात्राः पठने दत्तचित्ता भवन्ति। तमपि समयं व्यर्थैः कथालापैः गमयन्ति। सर्वदा कुम्भकर्णमिव निद्रासुखं भुञ्जाना खेलव्यसनपराः परनिन्दां परकीयवार्तामेवाहर्निशं चिन्तयन्ति । व्यर्थेषु विषयेषु तेषां चित्तं लगति, व्यर्थवार्तासु श्रद्धा समेधते, एवं च पठनविषये तेषामौदासीन्यमेव निभाल्यते । केवलं परीक्षामहोदधिसमुत्तरणाय तत्र सहायकानेव ग्रन्थांशानभ्यस्यन्ति, उपरित एव तान् जिघ्रन्ति, न तु तेषां रहस्यज्ञानाय प्रयतन्ते, नत्वामूलचूडं तान्पठन्ति विदन्ति च ।

वेषभूषापि विचित्रैव प्रतिभाति । प्राक्तनाः यं समयं पठनपाठनेषु यापयामासुस्तमेव साम्प्रतिकाः केशप्रसाधन एव गमयन्ति । यावत् स्त्रीणामिव तेषां द्विफालबद्धाश्चिकुरा न भवेयुस्तावदेते स्वकीयं सौभाग्यं सौन्दर्यमेव वा न गणयन्ति । प्राक्तनीं भारतीयां विगतोपानत्कां व्यवस्थामध्ययनविधौ विहाय सोपानत्का एवाधुनिका अधीयते, अध्यापयन्ति । तिलकन्तु किल तैः पाश्चात्यशिक्षाकोटर एव निक्षिप्तम् । पूर्वजानामितिहासज्ञानमाधुनिकानां छात्राणां न तथापेक्षितं यथांगलभाषाविज्ञानामितिहासज्ञानम् ।

स्वकीया जननीव संमान्या संस्कृतगीस्तु तेषां मते मृतभाषापदेन सम्मान्या विद्यते । एवं चैव कथयितुं पार्यते नास्त्याधुनिकेषु पूर्वजानामृषिमुनिप्रवराणा मुद्घोषिता पठनपाठनरीतिरपि तु सा विषाक्तप्राच्यशिक्षाकवलिता तदीयानुसरण परायणैरेतद्देशीयैरामूलं मुक्ता मृतैवोच्छ्वसिति । अत एवात्र स्वप्रणीता पद्यमयी कृतिः पुरतः स्थाप्यते भवताम्—

निरन्तरं भोजनमीप्समानाः, स्वाध्यायकाले विरलं लपन्तः ।
निजोदरापूरणलग्नचित्ता, विद्यार्थिनः साम्प्रतिका भवन्ति ॥
किंचित्पठित्वा बुधमानिनोऽद्य, भवन्ति भव्याशयवर्जितास्ते ।
स्वाध्यापकं शिष्यवदाचरन्ति, आज्ञां तदीयां किल लोपयन्ति ॥
स्वाध्यायकाले निजमंजुकुन्तलान् प्रसाधयन्तो निपुणं लवेण्डरैः ।

वृथाकथाभिः समयं नयन्ति ते, क्रीकेट हॉकी फुटबॉल खेलनैः ॥
हास्यं मृषोक्ति परकीयवार्तां, क्रीडां गुरोर्व्यङ्ककरणं च खाद्यम् ।
संवेशनं केशप्रसाधनं धनं, विद्यार्थिनः साम्प्रतिकाः विदन्ति ॥
न पूर्वशिष्याचरणं विदन्ति, न ये स्वपाठ्यं नितरां पठन्ति ।
धनस्पृहा साम्प्रतमेव येषां, ते सन्ति शिष्या अधुनाकुशिष्याः ॥
चित्तं न तेषां रमते स्वपाठ्ये, यथा वृथालापकथासु नूनम् ।
विद्यार्थिशब्दं च कदर्थयन्तः कुर्वन्ति नष्टं निजजीवनन्ते ॥

आशासे विद्यार्थिनोऽत्र मीमांसिष्यन्त इति ।

---

## सूर्योदयाभिनन्दनम् ।

बालोऽपि प्रौढभावः प्रकटितविभवः स्निग्धमुग्धैः प्रकाशैः ।
पादन्यासं वितन्वन् ध्रुवमिह दशमे वत्सरे सप्रमोदम् ॥
विद्वत्कोकालिशोकानलशमनकलाकौशलोल्लासशाली ।
हृत्पद्मोद्भेदचुञ्चुर्जगति विजयते कोऽपि सूर्योदयोऽयम् ॥१॥
धन्या सौभाग्यशालिन्यतनुरसचिता विश्वविख्यातनामा ।
श्रीमत्सूर्योदयाख्यापदमधिकगुणं गाहमानाऽऽसमाना ॥
हृद्याकारानवद्या सरसनवनवानेकभावा न कं वा ।
विद्वद्वन्द्यं पुमांसं सुखयति सरसं पत्रिका सुन्दरीयम् ॥ २ ॥

अनन्तरामशास्त्री वेतालः ।

# सनातनधर्मसंरक्षणस्य प्रधानोपायः।



लेखप्रणेता—शास्त्री अमृतलालशर्म्मा वेदान्तव्याकरणतीर्थः।
पेटलादपुरस्थ-श्रीनारायण-संस्कृतविद्यालयप्रधानाध्यापकः।

## वेदानां धर्मशास्त्राणां चाध्ययनस्यावश्यकत्वम्।

सर्वाभ्युदयनिश्श्रेयसनिदान-वर्णाश्रमधर्ममर्यादाविभ्रंशकारिणि करालेऽस्मिन् कलिकाले निरवधिकरुणाम्भोनिधे निखिलविद्याधिपतेर्भगवतो महेश्वरस्य कृपया भारतवर्षे परस्सहस्रा गीर्वाणवाग्विद्यालया विलसन्ति। तेषु च काव्यव्याकरणन्यायज्योतिषवैद्यकप्रभृतयो विषया अंशतस्समाकल्येन वा यथासम्भवमध्याप्यन्ते। काश्चिद्वेदपाठशाला अपि सन्ति यासु वेदानां पाठमात्रं किञ्चित्कर्मकाण्डज्ञानं वोपार्ज्यते छात्रैः।

परं शास्त्रोक्तब्रह्मचर्यादि-नियमविशेषविशिष्टं वेदाध्ययनं तदर्थज्ञानं तत्पर्यालोचनं तद्रहस्यज्ञानं मन्वादिधर्मशास्त्रश्रौतसूत्र-गृह्यसूत्राध्ययनञ्चात्यन्तमुपेक्षाविषयतामुपगतं प्रायशो दृश्यते।

येन ब्रह्मवर्चससम्पन्ना निग्रहानुग्रहसमर्थास्तपःप्रधानाः शमदमाद्युत्तमगुणोपेता ब्रह्मविद्याऽलंकृता ब्राह्मणा इदानीं विरलदर्शनास्संवृत्ताः। उक्त-गुणसम्पन्नब्राह्मणाधीनैव च श्रौतस्मार्त्तधर्मस्थितिः। अतो ब्राह्मणेषु तादृग्विद्यागुणसम्पत्तये य उपाया आवश्यकास्तेऽवश्यं विद्वद्भिर्विचारणीयास्तदनुकूला प्रवृत्तिश्चावश्यमादरणीया।

पाठशालास्वध्येतारश्छात्रास्तु गतानुगतिकास्तत्तत्परीक्षोत्तीर्णतामात्रसमुत्सुका उक्तविषयकज्ञानमाहात्म्यानभिज्ञास्स्वतस्तदध्ययने तद्विचिन्तने वा न प्रवर्त्तेरन्निति नैसर्गिकमेव। परं पण्डिताः पूर्वोक्तपरमपवित्र-स्वपरश्रेयस्साधकपरमावश्यक-वेदधर्मशास्त्रादि ज्ञानसम्पादनावश्यकत्वं जानन्तोऽपि तद्विषये शिष्याणामभिरुचिं प्रवृत्तिं चानुत्पादयन्त उदासत इति महदेतत् खेदस्थानम्।

"स्वाध्यायोऽध्येतव्य" इति श्रुतिवाक्येन स्वाध्यायपदावाच्यस्य वेदस्याध्ययनं प्राधान्येन विहितम्। तच्च संध्यावन्दनादिवन्नित्यम्। व्याकरणमहाभाष्यकारेण भगवता पतञ्जलिनाप्युक्तम्।

"ब्राह्मणेन निष्कारणो धर्मः षडङ्गो वेदोऽध्येयो ज्ञेयश्चे"ति।

निष्कारणो-दृष्टफलानुसन्धानरहितः। धर्मः-स्वकर्त्तव्यबुद्ध्यैव केवलमनुष्ठेयः। अध्येयः—शब्दतः, ज्ञेयोऽर्थतः।

शिक्षाव्याकरणकल्पादीन्यङ्गानि च सम्यग्वेदशब्दोच्चारणवेदार्थज्ञान-वेदोक्तकर्मकलापानुष्ठानादावुपयुक्तानि । पूर्वमीमांसा यथावत्कर्म-स्वरूपाधिगमाय तदनुष्ठानप्रकारज्ञानाय च । उत्तरमीमांसा च परमतत्त्वप्रतिपादक-वेदान्तवाक्यतात्पर्यनिर्णयायापेक्षिता । एवमन्यान्यपि शास्त्राणि तया तया द्वारा वेद प्रतिपादितपुमर्थसाधनसम्यग्ज्ञानोपकारिण्येव ।

परन्त्विदानीं संस्कृताध्येतॄणां काव्यव्याकरणन्यायादिषूपायभूतशास्त्रेष्वेव बाहुल्येन प्रवृत्तिरुपलभ्यते । उपेयस्वरूपवेदतदर्थपर्यालोचनादौ तूपेक्षैव दृश्यते । तदेतद् वरविहीनस्य वारयात्रिकसंघस्य महताऽऽटोपेन विस्मृतोद्देश्यं यानमनुकरोति ।

व्याकरणादिष्वाचार्यादिपरीक्षोत्तीर्णा अपि बहवः स्वशाखीयं सस्वरं वेदं गुरुमुखान्नियमपूर्वकं नाधीतवन्त उपलभ्यन्ते । न च वेदार्थज्ञानाय प्रवर्त्तन्ते । एतावन्तं महान्तं परिश्रमं कृतवतस्तावन्मात्रवेदाध्ययने तदर्थज्ञाने च कोऽतिभारः । परन्तूपेक्षैवात्र प्रवृत्त्यभावे बीजमनुमीयते ।

उपेक्षायाश्च कारणमिदमेवाभाति यद् ब्रह्मचर्य्याद्याश्रमव्यवस्थेदानीं विशीर्णप्राया । तेन बाल्य उपनयनात् प्रागुत्तरञ्च वैदिकधर्मशिक्षणरहितासु हिन्दी-गुजराती प्रभृतिप्राथमिकशिक्षणशालासु वर्षपञ्चकं वर्षषट्कं वा क्षपयित्वा किञ्चित्तत्तद्भाषादिज्ञानं लब्ध्वा संस्कृताध्ययनेच्छायां सत्यां संस्कृतपाठशालासु प्रविशन्ति । तासु च वेदाध्ययन-तदर्थज्ञानादिसमुपार्जनसाधनाभावादितर-विषयेष्वेव प्रावीण्यं सम्पाद्य तत्तद्विशिष्टपरीक्षां दत्त्वा दैवात् काञ्चिज्जीविकां प्राप्य तत्कार्यं कुर्वाणा वेदाभ्यासरहिता एवावतिष्ठन्ते । एवं मन्वादिप्रणीत-धर्मशास्त्रग्रन्थपर्यालोचनाभावात्तेषां धर्माधर्मविषयकं ज्ञानमल्पमेव भवति । यो हि धर्मस्वरूपं तदनुष्ठानप्रकारं तत्फलञ्च सम्यङ् न जानीते स कथं स्वधर्मे स्थिरमतिः स्यात् । एवमधर्मस्वरूपं तत्फलञ्च यो न जानाति स मनोवाक्कायैः कथं ततो निवर्त्तेत ? स्वयञ्चाजानन् परस्मै किमुपदिशेत् ?

अत एव वेदेषु धर्मशास्त्रेषु च वेदाध्ययनस्य महती प्रशंसा कृताऽस्ति तज्ज्ञानाभावस्य च महती गर्हणा विहिता । तथाहि—शतपथब्राह्मणे "अथातः स्वाध्यायप्रशंसा" इत्यारभ्य "प्रिये स्वाध्यायप्रवचने भवतो युक्तमना भवत्य-पराधीनोऽहरहरर्थान्त्साधयति सुखꣳस्वपिति परमचिकित्सक आत्मनो भवती-न्द्रियसंयमश्चैकारामता च प्रज्ञावृद्धिर्लोकपक्ति"रित्याद्युक्त्वा "मधुनाह वा एष देवांस्तर्पयति य एवं विद्वानृचोऽहरहः स्वाध्यायमधीते त एनं तृप्तास्तर्पयन्ति

भगवता मनुनाऽपि—

तपोविशेषैर्विविधैर्व्रतैश्च विधिचोदितैः।
वेदः कृत्स्नोऽधिगन्तव्यः सरहस्यो द्विजन्मना॥
वेदमेव सदाभ्यस्येत्तपस्तप्स्यन् द्विजोत्तमः।
वेदाभ्यासो हि विप्रस्य तपः परमिहोच्यते॥
न हायनैर्न पलितैर्न वित्तेन न बन्धुभिः।
ऋषयश्चक्रिरे धर्मं योऽनूचानः स नो महान्॥

( अनूचानः साङ्गवेदाध्येता। ) इत्यादिभिः श्लोकै र्वेदाध्ययनं प्रशस्य वेदं विहायेतरशास्त्रेषु श्रमं कुर्वतां निन्दा कृता—

योऽनधीत्य द्विजो वेदमन्यत्र कुरुते श्रमम्।
स जीवन्नेव शूद्रत्वमाशु गच्छति सान्वयः॥ इत्यादिना॥

केवलवेदपाठमात्रेणापि न कृतकृत्यत्वमिति निरुक्ते भगवता यास्केन निरूपितम्—

"स्थाणुरयं भारहारः किलाभूदधीत्य वेदं न विजानाति योऽर्थम्।
योऽर्थज्ञ इत्सकलं भद्रमश्नुते नाकमेति ज्ञानविधूतपाप्मा।" इत्यादि वचनोपन्यासेन।

यज्ञादौ याजकत्वे यजमानत्वे च वेदार्थज्ञस्यैवाधिकारो नान्यस्येति महाभाष्ये पस्पशाह्निके "यो वा इमां पदशः स्वरशोऽक्षरशो वाचं विदधाति स आर्त्विजीनो भवति" आर्त्विजीनाः स्यामेत्यध्येयं व्याकरणमिति वचनेन निरूपितम्।

किञ्चेदानीं धर्मविप्लवकारिणः सुधारकपदवाच्याः कस्मिंश्चिदपि धर्माधर्मविषयकविचारे समुपस्थिते मूलभूतं वेदवाक्यं किमिति पृच्छन्ति तदा तदनभिज्ञाः किमुत्तरं दद्युः। आंग्लविद्यालयशिक्षितास्संस्कृताभिज्ञा बी० ए० प्रभृतिपदवीधारिणो यदा कञ्चित्पण्डितं प्रति वेदविषयिणीं काञ्चिदाशंकां कुर्युस्तदाऽनधीतवेदः स कथं सन्तोषकारकमुत्तरं दातुं प्रभवेत्?

अपि चेदानीं धर्माधर्मस्वरूपाभिज्ञानां महाभारतादीतिहासग्रन्थेषु कृतश्रमाणां युक्तिपटूनामुपदेशकानां विरलत्वादेव बहवो लोका धर्माधर्मविषयकसम्यग्ज्ञानाभावाद् वेदधर्मविरोधिजनोद्भावितकुतर्कजालेषु पतिता स्तदुक्तिष्वेव दृढविश्वासयुक्ताः सनातनधर्मं परित्यजन्ति, कुमार्गे दृढदुराग्रहग्रहग्रस्ताः पुनस्ते कथमपि वशमानेतुमशक्याः।

तस्मात्सर्वासु पाठशालासु सन्ध्यादिवदावश्यकत्वेन गुरुमुखात् स्वस्वशाखीयमन्त्रब्राह्मणात्मकवेदाक्षरराशिग्रहणात्मकमध्ययनं व्यवस्थाप्यम्।

ततश्च यथेदानीं रघुवंशादिकाव्यानामर्था अध्याप्यन्ते एवमृग्वेदसूक्तानां यजुषां साम्नामाथर्वणमन्त्रादीनामप्यर्थाः कर्मप्रयोगविनियोगादिसमेताः प्रतिबोधनीयाः। अनेन क्रमेण वेदार्थज्ञानसम्पत्तौ छात्राणां तत्पर्यालोचनादिकमपि सम्पत्स्यते। इदानीं तु ये केवलवेदपाठिनः सन्ति ते वेदार्थ-ज्ञानाभावान्मुह्यन्ति कर्मसु। न च तेषां कर्म वीर्यवत्तरं भवति। "यदेव विद्ययोपनिषदा करोति तदेव वीर्यवत्तरं भवती" तिश्रुतेः। ये च व्याकरणादिशास्त्राभिज्ञाः सन्ति ते प्रायशो वेदाध्ययनाभावाद्धर्मशास्त्राभ्यासाभावाच्च श्रौतस्मार्त्तकर्म्मणां यथार्थं स्वरूपं ज्ञातुं न प्रभवन्ति। तत्तत्कर्मसम्बद्धमन्त्रोच्चारणमपि यथोक्तं तै र्न कर्तुं शक्यमिति कर्मवैगुण्यमेवापतति। एवञ्चैकेन चक्रेण यथा रथस्य गति र्न भवति तथा वेदशास्त्रयो र्मध्ये एकतराभावे नाभीष्टसिद्धिस्तस्माद्यावच्छक्यमुभयोः सम्पादने प्रयत्नः कर्त्तव्यः।

यदि च छात्राणां वेदाध्ययने स्वारसिकी प्रवृत्ति र्न स्यात्तर्हि किञ्चिच्छिष्यवृत्यादिकं प्रलोभनं विधायापि ते तत्र प्रवर्त्तनीयाः।

ये त्वाङ्गलभाषामहाविद्यालयेषु ( कालेजादिषु ) प्राप्तशिक्षास्ते खलु ऋग्वेदादिग्रन्थानां पश्चिमदेशीयैः कृतान्याङ्गलभाषानुवादपुस्तकानि पश्यन्तः केवलमैतिहासिकदृष्ट्यैव वेदानवलोकयन्ति। कस्मिन् काले ऋग्वेदस्य सूक्तानि रचितानि? ऋग्वेदे कानि मण्डलानि, कानि वा सूक्तानि प्राचीनानि कान्यर्वाचीनानि? आर्याणां निवासः प्रथमं कुत्रासीत्। कीदृशी तेषां समाजव्यवस्था, ब्राह्मणग्रन्थाः के पूर्वं जाताः के पश्चात्, कुत्र कीदृशी भाषाशैलीत्यादिकं काकदन्तपरीक्षावन्निष्फलमेव गवेषणं कुर्वन्ति। न च तैरद्यापि कालविशेषो देशविशेषो वाऽऽर्यसंस्कृतेरुपक्रमसम्बद्धो निर्धारितः। पुरुषोत्प्रेक्षामात्रनिबन्धनानां तर्काणामप्रतिष्ठितत्वात्, निश्चितेऽपि तस्मिन्फलाभावः। धर्मार्थकाममोक्षाख्याणां चतुर्णामपि पुरुषार्थानां सिद्धिर्वेदाधीना इत्येवं ते न मन्यन्ते। अत एव वेदोक्तकर्म्मसु वर्णाश्रमधर्मव्यवस्थायाञ्च नास्ति तेषां श्रद्धालवोऽपि न च मन्त्राणामद्भुतशक्तौ तेषां विश्वासः। केवलं कौतुकवशादेव वेदानवलोकयन्ति। तेन तदीयवेदार्थज्ञानेन वर्णाश्रमधर्मिणां भारतीयानां न कोऽपि लाभः सम्भवति।

यदि ब्राह्मणाः प्राचीनप्रणाल्या वेदानधीत्य तदर्थानवबुध्य मीमांसादृष्ट्या वेदतात्पर्यं निर्णीय वेदानां सर्वपुरुषार्थसाधनहेतुतां निश्चित्याधिकारिभ्यो वैदिककर्मणां वेदप्रतिपादितोपासनायास्तत्त्वज्ञानस्य चोपदेशं कुर्युर्बाहुल्येन तत्प्रचारं च कुर्युस्तर्हि महाँल्लोकोपकारः स्यात्। ब्राह्मण्यसंरक्षणपुरस्सरः समीचीनजीविकालाभोऽपि ब्राह्मणानां तथा सत्येव स्यात्।

इदानीं तु याजनाध्यायनप्रतिग्रहाख्यास्तिस्रोऽपि ब्राह्मणवृत्तयो म्लानीभूताः सन्ति । केनापि प्रकारेणोदरदरीपूरणं कर्त्तव्यमित्येव मतिर्ब्राह्मणानामपि सञ्जाताऽस्ति सा कथं निवर्त्तेत कथञ्च—

ब्राह्मणो जायमानो हि पृथिव्यामधिजायते ।
ईश्वरः सर्वभूतानां धर्मकोशस्य गुप्तये ॥ मनु० अ० १ श्लो ९९ )

इत्यादि वचसामैदंयुगीन-भूदेवेष्वपि चरितार्थता स्यात्तदुद्बोधनं भगवान्महेश्वरो विदुषां चेतसि समुद्भावयत्विति प्रार्थयमानो विरमामि लेखव्यापारादिति शम् ।

---

# समालोचनासारः ।

## प्रबन्धप्रकाशः ।

पुस्तकस्यास्य प्रणेता 'तुलनात्मकभाषाशास्त्र' प्रभृति ग्रन्थानां निर्माता, प्रिंसेस आफवेल्स-गवर्नमेण्ट संस्कृत–लाइब्रेरी सरस्वतीभवन बनारस इत्यस्याध्यक्षः, एम० ए० डी० फिल ( आक्सफोर्ड ), विद्यारत्नम्, इत्यादि विविधोपाधिविभूषितः, प्राच्य-पाश्चात्यभाषापण्डितः **श्रीमान् डाक्टर मङ्गलदेवशास्त्रिमहोदयः ।**

प्रकाशकः ( प्राप्तिस्थानं च )—इण्डियनप्रेस बनारस । मूल्यं रूप्यकैकम् १)

प्रबन्धप्रकाशस्य द्वितीयं संस्करणम् अस्मत् पुरतो विद्यते । अत्र प्रबन्धरचनाया विविधाः पाण्डित्यपूर्णा निबन्धाः नियमाः शब्दविन्यासप्रकाराः प्रबन्धरचनाभेदादयश्च प्रदर्शिताः सन्ति ।

ग्रन्थे चास्मिन्प्राधान्येन त्रीणि प्रकरणानि विद्यन्ते । उपोद्घाताख्यं हि प्रथमं प्रकरणम् । अत्र प्रबन्धरचनायाः स्वरूपम्, उपयोगः, प्रकाराः, प्रक्रिया, तदुपयोगिनोऽन्तरङ्गबहिरङ्गनियमाश्च सप्रपञ्चं प्रतिपादितानि ग्रन्थकृता । ग्रन्थस्य मुख्यभागात्मके द्वितीये प्रकरणे च "वरमद्य कपोतः श्वो मयूरात्" 'धैर्यम्' 'धर्मः' पुरुषार्थचतुष्टयम्, "व्रतपालनम्", 'इन्द्रजालमञ्जूषा, 'अयिदलदरविन्द', 'वाराणसीवैभवम्' इत्याद्युपयोगिविषयानालम्ब्य रचिता विचित्रा निबन्धाः संनिवेशिताः सन्ति । तृतीये सुभाषित-संग्रहाख्ये प्रकरणे तु 'सुभाषितपद्यावली', 'सुभाषितपद्यखण्डमाला', 'सुभाषितगद्यावली', 'लौकिकन्यायाञ्जलिः' इतिनामानश्चत्वारो मनोहराणां सामान्येनान्यत्रानुपलभ्यमानानां सुभाषितानां संग्रहा विद्यन्ते । अखिलमेतदालोकयतामस्माकमस्य ग्रन्थस्य परमोपादेयत्वे न कश्चिदपि संदेहः । विशेषतश्च परीक्षार्थिनां परमोपकारी एष ग्रन्थ इति नो दृढो विश्वासः ।

कस्याविदितं यत्साम्प्रतं संस्कृतपरीक्षार्थिनो निरन्तरं परीक्षानियतग्रन्थान् सम्यगभ्यस्यापि लेखनशैलीमजानन्तः प्रतिवर्षं बाहुल्येन परीक्षास्वसाफल्यं लभन्ते । बहवश्च परीक्षासु समुत्तीर्णा अपि प्रबन्धरचनापाटवहीनाः सभासु अन्यत्र वा स्वकीयं हृद्गतभावं प्रकटयितुमपारयन्तो ग्लानिं भजन्ते । तेषां सर्वेषामुपकारी संग्रहणीयश्चासौ ग्रन्थः ।

---

## संस्कृतसाहित्यपरिषदः ( त्रैमासिकं मुखपत्रम् ।

## 'श्रीः' ।

——:o:——

पत्रमिदं संस्कृते निःसरति । तृतीयवर्षस्य प्रथमेयं संख्या मद्दृष्टिपथं समागतास्ति । लेखाश्चात्र प्रायः सामाजिका धार्मिका दृश्यन्ते । सत्यपि गद्यानां सारल्ये प्राशस्त्ये गवेषणापूर्णे च कवितासु छन्दोभङ्गदोषो बहुत्रोपलभ्यते । नगण्येऽस्मिन्दोषे सत्यपि सम्पादकयोः परिश्रमः श्लाघनीयोऽस्ति। मुद्रणप्रकाशनादि परिष्कारः प्रशंसनीय एव । अवसाने च आयव्ययनिरीक्षणेन कोशाल्पतादोषो लज्जापयति संस्कृतविदुषः। अस्तु नाम सम्प्रति संस्कृत-पत्राणां यथाकथमपि जीवन-रक्षणमेव दुस्तरं विद्यते । तत्रैव 'श्री'रियं सर्वथा ऋणादृते एवात्मानं पोषयतीति धन्यवादार्हौ सम्पादकौ । लेखादि संग्रहेणापि तयोरुत्साहो नवीनवायुपरिष्कृतो विभाति । परन्तु विधवाविवाहादिसमर्थकलेखसंग्रहस्तु संस्कृतपथपरिपन्थीव प्रतिभाति । प्राप्तिस्थानम्—पं० कुलभूषणः, सुचारबाग, श्रीनगर, (काश्मीर)

---

## सुप्रभातम् ( सचित्रं संस्कृतपाक्षिकं पत्रम् )

——:o:——

**( सम्पादक–श्रीविन्ध्येश्वरीप्रसाद शास्त्री, व्यवस्थापकः–श्रीकेदारनाथशर्मा )**

पत्रमिदं संस्कृत-साहित्य-समाजस्य मुखपत्ररूपेण निःसरति । पूर्वं सप्त-वर्षावधि निःसृत्यार्थसाहाय्याभावान्निरुद्धमासीत् । पुनः संस्कृतसाहित्य-समाजसदस्यानामुत्साहेन सुरभारतीसेवार्थं पत्रमिदं निःसार्यते अस्य भाषा सरला मनोहरा च भवति । काशीस्थ-संस्कृतज्ञानां बहिस्थानां च परमं कर्तव्य-मिदं विद्यते, यत् पत्रमिदं सर्वदा निःसरेदेव, पुनर्निरोधस्यावसरो न आगच्छे-दिति । सञ्चालकेषु तादृगुत्साहो न दृश्यते यादृक् च पाक्षिकपत्रस्य कृतेऽपेक्ष्यते । यतो हि सर्वथा विलम्बेनैव सूर्योदयकार्यालये समुपतिष्ठते 'सुप्रभातम्' इति खेदास्पदम् । वार्षिकं मूल्यम् रु० २) छात्रेभ्यः रु० १) ।

प्राप्तिस्थानम् व्यवस्थापक 'सुप्रभात'— बनारससिटी ।

'वनौषधि' ( सचित्रं हिन्दीमासिकं पत्रम् )

( सम्पादकः—श्रीकेदारनाथशर्मा । प्रकाशकः—श्रीचन्द्रशेखरत्रिवेदी )

आयुर्वेदाचार्य्य ए० एम्० एस्० ।

पत्रमिदं प्रतिमासं सुन्दरं मसृणकर्गजमुद्रितं सुसज्जितं निःसरति । अत्र आयुर्वेदसम्बन्धिनो गभीरभावपूर्णा लेखा भवन्ति । ओषधिनामनिर्णयेऽपि गवेषणामया लेखा दृश्यन्ते । आयुर्वेदज्ञैः चिकित्सायां प्रौढिमानमभिलषद्भिरवश्यं ग्राह्यमिदं पत्रं । मूल्यं वार्षिकं रु० ३) प्राप्तिस्थानञ्च चरक-अनुसन्धानभवन, बनारससिटी ।

'भूदेवः' ( सामाजिकं मासिकं पत्रम् )

पत्रमिदं संस्कृत-हिन्दीभाषाद्वयविशिष्टम् । प्रतिमासं निःसरति । प्रथमं संस्कृतभाषायां पश्चाच्च हिन्दीभाषायां निबद्धा लेखाः साहित्यिकाः सामाजिका वा गवेषणापूर्णाः सन्ति । पत्रमिदम् सर्वैरेव ब्राह्मणैरादरणीयमिति मे मतिः । 'आह्वानम्' 'विधवानां प्रश्नाः' 'सनातनो धर्मः' संस्कृताध्यायिवर्गश्चेत्यादयो लेखा विचारणीयाः सन्ति । सर्वथा सम्पादकोऽस्य पत्रस्योत्साही समाजसेवको दृश्यतेऽस्योत्साहो वर्द्धनीयः । सूर्य्योदये' लेखप्रकाशनविषये किञ्चित् सम्पादकीयं वक्तव्यमस्ति । परन्तु तत्र लेखप्रहातुरुपेक्षैव हेतुः स्याद् यदि च तेन वैयक्तिकाक्षेपरहितो लेखः प्रकाशनार्थमिह 'सूर्य्योदये' प्रहितश्चेदवश्यमिह प्रकाशितः स्यात् । अधुनापि सम्भाव्यते । अस्तु भूदेवपत्रं ग्राह्यं विद्यते । अस्य वार्षिकं मूल्यम् १॥) सार्द्धरूप्यकं प्राप्तिस्थानम् ।'भूदेव' मन्दिर पटना सिटी इति ।

—अवधेशप्रसादशर्मा, ( काव्यतीर्थः )

## परीक्षासमयः ।

अखिलभारतवर्षीय-संस्कृतधार्मिकाध्यात्मिक-विश्वविद्यालयीयपरीक्षाणाम् समयनिर्णयो जातः । विश्वविद्यालयीय-परीक्षाबोर्डनिश्चयानुसारमग्रिम-कार्तिकशुक्लसप्तमीतः ( १३।११।३४ ) एतद्वर्षीयाः सर्वा अपि परीक्षाः प्रारब्धा भविष्यन्ति । प्रतिदिनं १२ द्वादशवादनादारभ्य चतुर्वादनं यावदेकैकं पत्रं भविष्यति । परीक्षाबोर्डसदस्यैः परीक्षार्थिनां धार्मिकमुत्साहमालोक्य सितम्बर-मासस्य १५ पञ्चदशतिथिं यावदावेदनभरणकालो निर्धारितोऽस्ति । अतश्च तत्तिथिं यावदेवावेदनं प्रहेयम् । तदनन्तरं न गृहीतं स्यादावेदनम् । अस्मिन्हायने परीक्षायां प्रथमश्रेण्यादिषु समुत्तीर्णेभ्यश्छात्रेभ्यः पारितोषिकप्रदानस्यापि व्यवस्था विद्यते । यस्माद्विद्यालयाद् दशपरीक्षार्थिनस्समुत्तीर्णाः स्युस्तदीयाध्यापकेभ्योऽपि पारितोषिक-प्रदानव्यवस्थाभविष्यति इति ।

# शोकाश्रुविन्दवः ।

( दरभंगामण्डलान्तर्गत-ठाढीग्रामवास्तव्य-पण्डितप्रवर-
शिवशङ्करशर्म्मणां कृते )

**( ले०—वाराही सं० विद्यालयस्थः श्रीहरिकान्तमिश्रः )**

विद्वन्मत्त-मतं-गजेन्द्र-दलने पञ्चास्यतामाश्रितः
शास्त्राध्यापनजात-कीर्ति विततिर्गम्भीरताऽपां पतिः ।
भक्त्या केशवसद्मपद्मनिलया-प्राण-प्रियं संस्मरन्
हा ! हा ! यादव-दासतामुपगतो हित्वा निजं बान्धवम् ॥ १ ॥
लोकाः शोक-समुद्र-मग्न मनसो दीनां दशां हा ! गता—
धीरा धीरतयाऽधरीकृतवचोनाथाः शुचा दीनताम् ।
पृथ्वी रौति नितान्ततापतिमिरै राक्रान्त-चित्ता सती
याते स्वः शिवशङ्करे शिवकरे शून्या दिशा दृश्यते ॥ २ ॥
सखा वेदान्तस्ते विरहविकलान्तः प्रतिपलं,
जनाऽऽनम्या वेदा अतिजनित-खेदा स्त्वयि गते ।
शुचा वीणां वाणी त्यजति बत ? पाणिप्रति-गता—
मिदं धातुः कृत्यं नच सम-विधातुः समुचितम् ॥ ३ ॥
शम्भुः सर्वेष्ट-दाता गहन विधिवशाद् प्राप्तवान् दिक्पटत्वं-
विष्णुर्नागेशशायी स भवति गृहिणी यस्य पद्मालया सा ।
आकाशे संभ्रमन्तौ ग्रसनमपि सुरौ पुष्पवन्तौ प्रयातौ
दुर्वारा कर्मरेखाऽपि समसुमनसां का कथा मानवानाम् ॥ ४ ॥
यस्यामी पुत्र-मित्र-प्रभृति-निजजनाः क्रन्दनं हाऽऽचरन्तो—
दृश्यन्ते लोक-संघैः सुर-पुर-सरणिं यातुमिच्छन्ति दाराः ।
गाम्भीर्यौदार्य्य-धैर्य्य-प्रकटित-यशसं नीतवाँश्चेद् विधे ! तं
संसारे वर्तसे त्वं सकलकलतया दर्शित-क्रूरभावः ॥ ५ ॥

---

सृष्टेरादित एव आर्य्यपिण्डस्य वैदिक-संस्कारशालित्वात् सृष्टौ तस्य वैशिष्ट्यमङ्गीकृतं। ते च संस्कारा वर्णाश्रम-शृङ्खलामूला आचारमूलका एव ज्ञेयाः॥ ५८॥

इदानीमन्यां शृङ्खलामाह—

तस्मात्सुसंस्कार-केन्द्रम्॥ ५९॥

तस्मात् आदित एव संस्कृतत्वात् सुसंस्कारस्य केन्द्रम् मूलस्थानम् आर्य्यपिण्डमित्यर्थः।

आर्य्य-पिण्डं हि आदित एव सुसंस्कृतत्वात पूर्णावयवशालि। पूर्णावयवशालित्वाच्च अभ्युदयनिःश्रेयससंस्कारान् पूर्णतया ग्रहीतुं केन्द्रम् भवति। अन्तःकरणं हि जीवानां प्रधानं यन्त्रम्। यदा हि जीवाः पूर्णावयवा भवन्ति तदा तेषां प्रधानयन्त्रमन्तःकरणमपि पूर्णावयवमेव भवति। एवञ्च प्रधानयन्त्रेऽन्तःकरणे पूर्णे सति तदीयावयवाश्चत्वारो मनोबुद्धिचित्ताहङ्कारा अपि पूर्णावयवा एव भवन्ति। एवञ्चान्तःकरणावयवेषु चतुर्ष्वपि पूर्णेषु सत्सु आर्य्यपिण्डेषु सुसंस्कारग्राहके चेतसि पूर्णे सति अभ्युदयनिःश्रेयसयोः संस्कारान् ग्रहीतुं स्वत एव तस्मिन् शक्तिरायाति।

सृष्टेरादौ पूर्णावयवा एव मनुष्या उत्पद्यन्ते। इति ब्रह्मणः प्रथमा सृष्टिः परमहंसानामेव भवति। ततः परमुत्पन्नाया एव सृष्टेः सुरक्षायै सुसंस्काराय च वर्णाश्रमशृङ्खला निबद्धा भवति। तदानीमेव सुसंस्कृताः संस्कारा आर्य्यपिण्डेषु अङ्किता भवन्ति। ये च रजोवीर्य्याभ्यां क्रमशोऽग्रेऽप्याकृष्यन्ते। यथोक्तं संस्कारपादे॥ ५९॥

अन्यच्च—

त्रिविधाऽकाशसम्बन्धश्च॥ ६०॥

(तस्यान्तःकरणस्य) त्रिविधश्चासौ आकाशश्चेति तेन सह सम्बन्धो भवतीति सूत्रार्थः।

पिण्डाकाशो हि चित्ताकाश इति ब्रह्माण्डाकाशश्च चिदाकाश इति अनन्तकोटिब्रह्माण्डाधाराकाशश्च महाकाश इति संज्ञायते। यदा च जीवः पञ्चकोशपूर्णतया पूर्णावयवो भवति। तस्मिंश्च संस्कारसंग्रहस्य पूर्णाधिकारोऽपि भवति। तदैव स्वत एव तस्य त्रिविधेनापि आकाशेन सम्बन्धो भवति। इत्यत एव योगयुक्तमन्तःकरणं व्यापकतां धारयति। इत्यत एव च कारणात् पिण्डात् पिण्डान्तरस्य, लोकात् लोकान्तरस्यापि वृत्तं ज्ञायते। अत एव योगिराजानान्तु कथैव का समाहितस्यान्तःकरणस्य साहाय्येन आत्-

क्रियाद्वारा लोकान्तरगतोऽपि जीव आप्यायते। उपासकश्च स्वोपासनालोके स्वेष्टदेवेन सह सम्बन्धमपि स्थापयति। इत्यत एव हेतो र्योगयुक्ता ज्योतिःशास्त्रवेत्तारः स्वब्रह्माण्डेतरब्रह्माण्डानामनेक-ग्रहोपग्रहताराराशीनां ज्ञानं कृत्वा तेषामाविष्कारं कृतवन्तः। इत्यादि बहून्युदाहरणानि त्रिविधाकाशेन सम्बन्धस्थापनाया विद्यन्ते ॥ ६० ॥

अपरश्च—

शुद्धाशुद्ध स्पर्शास्पर्शाधिकारि ॥ ६१ ॥

अत एव तत् मनुष्यपिण्डम् शुद्धं च अशुद्धं च स्पर्शश्च अस्पर्शश्च ते तथोक्तास्तेषामधिकारीति तद्योग्यम् भवतीत्यर्थः।

मनुष्यः पूर्णावयवो भूत्वा विशेषाधिकारभाग् भवतीत्येतस्योदाहरणं सूत्रकृद् ददाति। मनुष्यपिण्डं यदा पूर्णावयवं पञ्चकोशपूर्णतया सम्पद्यते, तदा तस्य पञ्चकोषाणां विभिन्नाधिकारतया शुद्धाशुद्धस्पर्शास्पर्शत्वादिप्राप्त्या शुभाशुभप्राप्त्यधिकारो जायते। एषु पञ्चकोषेषु शुद्धाशुद्धयोः स्पर्शास्पर्शयोः शोभनमशोभनञ्च फलं परिणमति। अन्नमयकोशस्याशुभ-परिणामो दर्शनशास्त्रेषु मलशब्देनोच्यते। प्राणमयकोषस्याशुभः परिणामो विकारशब्देनाभिधीयते। मनोमयकोषस्याशुभः परिणामो विक्षेपशब्दभाग् भवति। विज्ञानमयकोशस्याशोभनः परिणाम आवरणमुच्यते। आनन्दमयकोशस्य तु अस्मिता निगद्यते। यदा जीवे पूर्णता भवति। तदैषु कोशेषु शोभनाशोभनपरिणाम उदेति। तत्र शुद्ध्या शोभनः परिणामः, अशुद्ध्या चाशोभन इति।

पूर्णस्य जीवस्य पूर्णावयवावस्थायां स्वभावत एव जडताया ह्रासेन चेतनांशस्य च वृद्ध्या पञ्चापि कोषा विशेषशक्तिसम्पन्ना भवन्ति। तदा च स जीवो बहुप्रकारेण स्पर्शस्य गुणदोषौ शुद्धाशुद्धयोश्चाधिकारान् पृथक् पृथक् पञ्चकोषैः संग्रहीतुं समर्थो भवति। इत्यस्मादेव हेतोः पूर्णज्ञानमयो वेद स्तत्सम्मतः शास्त्रसमूहश्च शुद्धाशुद्धविवेकं स्पर्शास्पर्शविचारञ्चोर्ध्ववाहु उद्घोषयतः ॥ ६१ ॥

प्रथमप्रमाणमाह—

विष्ठादिभिः प्रथमः ॥ ६२ ॥

प्रथमोऽन्नमयकोषगतः शुद्धाशुद्धादिविचारो विष्ठादिभिः ज्ञेयः। शुद्धाशुद्धविचारः स्पर्शास्पर्शविवेकश्चान्नमयकोशस्य प्राधान्येन कथं भवतीत्यत्रोदाहरणेनोदाहरणरहस्यं प्रकाशयति। यथा हि स्थूल-विष्ठामूत्रादि-निकृष्ट-वस्तुसंस्पर्शेण स्थूलशरीरस्याशुद्धिस्तत्रैव च स्पर्शदोष-सम्पर्कः सम्भाव्यते। तथैव जलमृत्ति-

कादिस्थूल-वस्तुद्वारैव तदपगमोऽपि सम्भाव्यते । एवमेवान्नमय-कोशस्य स्पर्शास्पर्शशुद्धाशुद्ध-रहस्यमपि ज्ञेयम् ।

वेदे शास्त्रे च यद् शुद्धाशुद्धस्पर्शास्पर्शविवेकवर्णनमुपलभ्यते । तत्सर्वमपि स्थूलात्मकान्नमयकोश-सम्बन्धत एव नास्ति । येषां हि शुद्धपदार्थानामीदृक् सम्बन्धः स्थूलशरीर-सम्बन्धेन भवितुमर्हति तद्विज्ञानस्यैव इह दिग्दर्शनमनेनोदाहरणेन कारितम् ।

मलश्चान्नस्य निकृष्टः परिणामो निगद्यते । अयञ्च दार्शनिको मलशब्दः तामशोभनां शक्तिं वक्ति या हि शरीरे जाड्यं तमोगुणञ्च विस्तारयति । अशुद्धस्य पदार्थस्य स्पर्शेन सम्पर्केण च शरीरे मलशक्तिर्वर्द्धते । शुद्धया च ह्रसति । प्रसङ्गेऽस्मिन्निदं वक्तव्यमावश्यकं प्रतिभाति यत् शुद्धाशुद्धयोः स्पर्शास्पर्शयोः विवेकसम्बन्धे शास्त्रेषु यावान् विचारो विहितो विद्यते, तस्य मूले त्रिगुणविचारस्याधिदैवविचारस्य च महान् सम्बन्धः स्थापितोऽस्ति । आधिदैवविचारस्योदाहरणं गङ्गाजलादिकमगवन्तव्यम् । गुणविचारस्योदाहरणम् मधु, पलाण्डु, गोमुत्रं, गोमयमित्यादीनि ज्ञेयानि । मधु, तु हिंसाजन्यमपि सत्वगुणवर्द्धकत्वात्पवित्र मुच्यते । तथैव पलाण्डु द्रव्यं मूलमपि सत् तमोवर्द्धकत्वात् अपवित्रं कीर्त्यते । गोमयञ्च गवां मलमूत्रत्वेऽपि सत्वगुणप्रधानतया पवित्रतममुच्यते ।

इत्थञ्च पूज्यपादैः त्रिकालदर्शिभि र्महर्षिभिः दैवराज्यसम्बन्धं निरीक्ष्य सत्वरजस्तमसामेषां त्रयाणां गुणानां प्रभावं निरीक्ष्य दार्शनिकदृष्ट्या शुद्धाशुद्धस्पर्शास्पर्शविवेकस्य भौतिकः सिद्धान्तो निर्धारितो विद्यते । सर्वोऽप्ययं सिद्धान्तो न काल्पनिको वाच्यः, किन्तु गम्भीर-विचारणया चिन्तितो दार्शनिकभित्तिमूलकोऽवसेयः ।

अन्यत्प्रमाणं निदर्शयति—

**शवादिभिर्द्वितीयः ॥ ६३ ॥**

द्वितीयः प्राणमयकोषजन्यः स्पर्शदोषः शवादिस्पर्शतो जायते । शवादिस्पर्शतो यो हि स्पर्शदोषोऽशुद्धिर्वा शास्त्रेषूच्यते । स हि प्राणमयकोशसम्बन्धतो ज्ञेयः । तथैव शवादिस्पर्शानन्तर मग्निस्पर्शेन धातुस्पर्शेन च तद्दोषपरिहारोऽभिहितः सोऽपि प्राणमयसम्बन्धत एव निर्णीयते ।

जीवो यदा लोकान्तरे प्रतिष्ठते तदा प्राणमयकोष एवेमान् कोशानपकृषति । ततश्च शवे प्राणशक्ते र्नितरामभावो जायते ।

अतश्च प्राणरहितो हि शवोऽन्येषां प्राणमयकोशशक्तिमेवाकृष्टुं यथा देशकाल-

पात्रं प्रयतते। इत्येवं दशायां शवस्प्रष्टुः पुरुषस्य प्राणमयकोशशक्तेः क्षयस्यैव सम्भावना यथाशक्यं रूपान्तरेण सम्भाव्यते। इत्यत एव शास्त्रेषु शवस्पर्शिनः स्पर्शदोषोऽशुद्धिर्वोच्यते। अत एव स्वजातीयैरेव शवोद्वहनविधानम्, शवस्पर्शानन्तरञ्च विविधैर्विधानैः शुद्धेर्विधानं विद्यते। प्राणमयकोशसम्बन्धकारणादेव राजयक्ष्मरोगाभिभूतस्य रोगिणः शवं प्रायश्चितादिद्वारा संस्कृत्योद्वहनस्य विधान मुपलभ्यते।

पुराणेषु जाज्वल्यमान मुदाहरण मस्मिन्विषये विद्यते यत्—महाशक्तिशालिनः पूर्णावतारस्य भगवतः श्रीकृष्णस्य प्राणहीनं विग्रहं स्पृष्ट्वा भक्तोऽर्जुनः सर्वामपि स्वीयां शक्तिमपवाहितवानिति। इत्युदाहरणेनेदमौदाहरणं विज्ञेयं यदत्र स्पर्शास्पर्शविवेकाः प्राणमयकोशसम्बन्धेनैव निरूपिताः सन्तीति।

अन्ये बहवश्च शुद्धाशुद्ध-स्पर्शास्पर्श-विवेका अवस्थान्तरगताः कतिभिश्चित् कोषैः साक्षात् सम्बन्धभाजो भवन्ति। विज्ञानमिदं स्पष्टयितुमुदाहरणमुपादीयते यथाहि अन्नादि-खाद्यपदार्थानां शुद्धाशुद्धस्पर्शास्पर्शविवेकोऽवस्थान्तरेण विज्ञानमय-मनोमय-कोशाभ्यामेव सम्बन्धभागुच्यते। परन्तु प्राणमयकोशेनापि तस्य सम्बन्धोऽस्त्येव। सुवर्ण-रौप्य-कांस-मृत्तिकादि-शुद्धाशुद्ध-विवेकोऽपि अनेनैव प्राणमय-विज्ञानेन सम्बध्नाति। म्लेच्छाद्यन्तजादिस्पर्शदूषित मन्नं प्रथमं प्राणमयकोशे एव स्वप्रभावं दर्शयति। स्पर्शकर्तुः प्राणानामाकर्षण-विकर्षण-शक्तिर्हि अन्नरसं विदूषयति। तदेवान्नं भोक्तु रुदरस्थं सत्तदीयप्राणमय कोशं विदूषयति। तदेवान्नं च यदि पापिनः स्यात्तर्हि मनोमयं कोशं दूषयित्वा वीर्य्ये तद्रसपरिणामः प्रविश्य शुद्धसृष्टेर्बाधकं भवति। यतोहि—मनोवायुवीर्य्याणामेषां त्रयाणां घनिष्ठः सम्बन्धो विद्यते।

तस्यैवान्नदोषस्य विषये पितामहो भीष्मः प्रामाण्यप्रद आसुरसम्पच्छालिनो मानवस्यान्नग्रहणेन विज्ञानमयान्तःकोशो विक्रियते। यतोहि दुर्योधनान्नभोक्ता स मध्येसभायां स्व-पौत्रवधुं जघन्यरूपेण लाञ्छितां क्रियमाणां दृष्ट्वापि कृततूष्णींभाव एवासीदिति। इत्यनेनेदं स्फुटं सिध्यति यद् अन्नदोषेण विज्ञानमयान्तःकोषो मलिनो भूत्वा बुद्धिमेव विकरोति। येन सर्वविज्ञानविदपि पुमान् स्वकर्तव्ये किंकर्तव्यविमूढतामृच्छति। प्राणमयकोश-सम्बन्धेन शुद्धाशुद्ध-स्पर्शास्पर्श-विवेकव्यवस्थाऽधिकव्याप्ता विद्यते।

उपासनाया दिव्यदेशसमूहे उपासनापीठसम्बन्धेन योहि स्पर्शास्पर्श-शुद्धाशुद्ध-विचारो वर्णाश्रमशृंखलायां सम्मतो विद्यते। स सर्वोऽपि प्राणमय कोश-सम्बन्धेनैव सम्मतो विद्यते। सर्वस्मिन्नपि देव-मन्दिरे आर्य्यानार्य्याणा-

मुन्नतानुन्नतानां मानवानां समानतया यो हि प्रवेशो न विहितो विद्यते। इत्थं सिद्धान्तोऽपि प्राणमयकोशसम्बन्धेनैव निर्धारितो विद्यते। शूद्रप्रतिष्ठापित-दिव्यदेशस्थमूर्तीनां प्रणामकरणमपि ब्राह्मणानां कृते यो निषेधः। सन्यासिनां कृते सर्वेषां पीठानां केवलं स्पर्शमात्रे एव यो विधि विद्यते। तयोरपि हेतुरिदमेव विज्ञानं विद्यते। शूद्रप्रतिष्ठापिते देवविग्रहे पीठादौ वा तदीयसंस्कारशक्ति रेव निहिता तिष्ठति। सर्वत्र देवमन्दिरेषु प्रस्तरादिनिर्मितमूर्तीनां पूजनं न भवति तत्र तु प्राणमयकोशद्वारा प्रतिष्ठापितानां देवपीठानामेवार्चनं भवति। एवम्भूतम् देवपीठं शूद्रान्तःकरणसंस्कार-संस्कृतं यदि शुद्धब्राह्मणः प्रणमेत्तदा न तत्र ब्राह्मणस्य क्षतिः किन्तु तस्य देवपीठस्य प्राणशक्ते र्हानि र्भवति। एवमेवान्यद-प्योदाहरणमूह्यम्। अस्मादेव हेतो र्भगवत्पूजायां सर्वस्याप्यधिकार-समान-त्वेऽपि देवमन्दिरेषु प्रवेशाप्रवेशविषये ब्राह्मणादिजातिभेदस्य उपासनासंम्प्रदा-यादिभेदस्य स्पर्शास्पर्शादिविचारभेदस्यापि विवेकः क्रियते।

यदा हि कस्मिंश्चन देवमन्दिरे पीठेषु देवानां प्रतिष्ठा क्रियते तदोपासकः प्रथमं देवान् स्वशरीरे समावेश्य ततः पीठेषु तान् संस्थापयति। इत्यतोऽपि हेतो-स्तत्र देवेषु पीठस्थापयितुः संस्कारादिसञ्चारो मन्यते। अतश्च यस्मिन् पीठे स्पर्शा-दिव्यवस्थायाः कृते यादृशो नियमो वर्त्तते यादृशी वा मर्य्यादा परम्परातः प्रति-ष्ठापिता आयाति तद्विरुद्धाचरणेन तस्य पीठस्यैव शक्तेर्हानि र्भवति। अस्मादेव-कारणात् देवमन्दिरेषु स्पर्शास्पर्शविवेकोऽधिकतया गण्यते। इत्थञ्च वर्णाश्रम-श्रृङ्खला-मूलकस्य स्पर्शास्पर्शशुद्धाशुद्धविवेकाधिकार स्तदीयविज्ञानञ्चातिगम्भीरं रहस्यपूर्णञ्च विद्यते ॥ ६३ ॥

सम्प्रति तृतीयं प्रमाणयति—

**आशौचादिभिस्तृतीयः ॥ ६४ ॥**

तृतीया मनोमयकोशसम्बन्धस्तु आशौचादिभिः सह वर्तत इत्यर्थः

राहु-ग्रहण-जनन-मरणाद्याशौचानि तेषां शुद्धिविचारश्चः सर्वमपि मनोमय-कोशेनैव साक्षात् सम्बध्नाति। यस्य विज्ञानमननकरणेन मनोमयकोष-सम्ब-न्धिनः शुद्धाऽशुद्धविज्ञानस्यावगतौ सारल्यमुपजायते। सूर्य्यचन्द्राभ्यां सह पृथिव्या यो हि आकर्षणविकर्षणशक्तिसम्बन्धः यश्च ज्योतिः प्राणशक्तिप्रभृ-तीनां सम्बन्धः जडपदार्थवादिभिर्वैज्ञानिकैरपि स्वीक्रियते। दैवशक्ति-स्वीक-र्तार आस्तिकास्तु अस्मिन् विषयेऽधिकां श्रद्धां बिभ्रति। प्रत्यभिकश्चेमं विषयं प्रमाणयन्ति। तथाहि, सूर्य्यग्रहणावसरे चन्द्रो हि भूलोकसूर्य्ययो र्मध्ये समा-

पतति । चन्द्रग्रहणावसरे च पृथ्वीग्रहो मध्ये समायाति । येन तयोः सूर्य्य-चन्द्रशक्त्योः स्वाभाविकागमनप्रत्यागमनयोः पूर्णमन्तरायमायाति ।

ईदृग्दैवदुर्विपाकवेलायामैहलौकिकप्राणिना मन्तःकरणे महान् परिणामो भवितु मर्हतीति स्वाभाविकं प्रतिभाति । अतश्चेदृक्परिणामावसरे शुद्धाशुद्ध स्पर्शास्पर्शादिविवेकस्य शास्त्रानुकूलो बिचारोऽपि विज्ञानानुमादित एव । एवं हि जननमरणाशौचविज्ञानस्यापि अतिगूढरहस्यपूर्णत्वं ज्ञेयम् । वर्णाश्रमशृ-खलानुसारं यस्य कुलस्य रजोवीर्य्यं शुद्धं विद्यते तेन सह नित्यपितृगणस्य सर्वदा प्रातिभाव्यं विराजते । अतश्च तस्य कृते किं वक्तव्यं विद्यते तत्कुलं सर्वथा नन्दत्येव । साधारण–कुलानामपीयं कथा विद्यते यत्तत्कुलीयपरलोकप्रस्थिता आत्मानः तत्कुले जन्मग्रहीतुकामा आत्मानश्च तैःकुलैः सह निजवासनाजालैर्विजडिता भवन्ति । तैर्वासनाजाले र्मोहसम्बन्धतश्चाकर्षणविकर्षणशक्त्या च नित्यपितृ-गणानां प्रेरणया तत्कुलीयानां सर्वेषामेव प्राणिनां चित्तेषु तेषामात्मनां संयोग-वियोगयोः प्रभावः समुपसर्पति । तत्राधिदैवः सम्बन्ध इति स प्रभावो लक्षितो नैव भवितुमर्हति किन्तु गुप्त एव पततीति तद्विद एव जानन्ति । एतत्प्रभावपात-बिचारानुसारमेव जननमरणाशौचयोः शुद्ध्यशुद्धिविवेको निर्णीयते । आभ्यां शुद्ध्यशुद्धि-स्पर्शास्पर्शविवेकाभ्यां सह योहि जपदानादि-विधीनां ब्रह्मचर्यपाल-नादिव्रतनियमानां सम्बन्धो बद्धो विद्यते तत्रापीदृशमेव गूढतरं रहस्यं विज्ञयं विद्यते । इति ॥ ६४ ॥

सम्प्रति चतुर्थं प्रमाणयति—

संसर्गादिभिश्चतुर्थः ॥ ६५ ॥

चतुर्थो विज्ञानमय-कोशाश्रयो यो हि शुद्ध्यशुद्ध्यादि-परिणामः स संसर्गतो भवति । इति सूत्रार्थः ।

संसर्गेण यो हि सदसत्परिणामः पुरुषेष्वाधीयते स हि साक्षाद्रूपेण विज्ञान-मयकोषेष्वेवाधीयते । इत्यत एव हेतो र्वेदेषु तत्सम्मत-शास्त्रेषु च संसर्गसम्ब-न्धीय-शुद्धाशुद्ध विवेक-विज्ञानं निर्णीयते । उदाहरणतो यथा—वेदशास्त्रेषु ईश्वर-सत्तानङ्गीकर्तु र्नास्तिकस्य गेहे न गन्तव्यम् । तस्य संसर्गो नैव कर्तव्यः । इत्यादि श्रूयते । आचारहीनस्यानार्य्यस्य, इन्द्रियसेवापरायणानां म्लेच्छादीनां, दुराचा-राणां वेश्यादिपतितवृत्तिकानां संसर्गनिषेधः, सति च संसर्गे प्रायश्चित्तादीनां यो हि विधि रुपलभ्यते तथा तीर्थ-देव-साधु-दर्शनस्य शिष्ट-पुण्यात्म-प्रभृतीनां च सम्पर्कस्य, सत्सङ्गस्य च महिमा गीयते । सर्वमपीदमेतद्विज्ञानमूलकमेवास्ति इत्थं हि विदूषितान्तःकरणानां वेश्यानां कलुषवृत्तीनां च दुराचाराणां मानवानां

प्राणिनां वा शुभाशुभसंसर्गद्वारा एकस्मिन्नाधारे प्राणमय-मनोमय-विज्ञानमयाः सर्वेऽपि कोषाः प्रभाविता भवन्ति। तथाहि-तेषां निकटस्थवातावरणेन स्नेहप्रकर्षणविकर्षणशक्तितश्च प्राणमयकोशः प्रभावितो भवति। तेषां हावभावाचार-विचारादिप्रभावश्च मनोमयकोशेन संस्पृश्यते। तेषां कथनोपकथनस्य स्वान्तःकरणभावस्य च प्रभावो विज्ञानमयकोशे समापतति। इत्यत एव संसर्गदोषस्य संसर्गगुणजन्यशुद्धाशुद्धिविवेकस्य समुपदेशस्तज्जन्य-दोषापगतये च प्रायश्चित्तादेरपि विधानम् शास्त्रेषूपदिष्टम् विद्यते।

इत्थमेवेमां गम्भीरां दार्शनिकयुक्ति मुपाश्रित्य ईश्वरनिन्दकानां नास्तिकानामुपकण्ठे इन्द्रियपरायणानां च म्लेच्छादिगर्हितव्यक्तीनां निवासभूमिसंस्पर्शनस्य शास्त्रे निषेधः। एवञ्च बहुधा वर्णाश्रमश्रृङ्खलानुसारेण शुद्धाशुद्धस्पर्शादिविवेको विज्ञानमयकोषसम्पर्कतः शास्त्रेषु वर्णितोऽवलोक्यते। वेदेषु शास्त्रेषु पुराणादिषु यत्र कुत्रापि वा स्पर्शास्पर्शनिर्णयसिद्धान्तो दृश्यते। स सर्वोऽप्यार्यजातेरभ्युदयकामनया निःश्रेयसावाप्तिमुद्दिश्य पञ्चकोषेषु स मासज्यमानं तदीयं सूक्ष्मं प्रभावञ्चावलोकयद्भि र्योगदृष्टिमद्भि स्त्रिकालदर्शिभिः महर्षिभि र्निजालौकिकप्रत्यक्षेण प्रत्यक्षीकृत्यैव श्रुतः स्मृतो निबद्धो वा। स सर्वोऽपि सिद्धान्तो गभीरविज्ञानानुमोदितो लौकिबुद्ध्यगोचरोऽपि नोपेक्षणीयोऽपि तु संमर्शनीयो रक्षणीयः समर्थैर्स्मिश्च ॥ ६५ ॥

अधुना पञ्चमं प्रमाणयति—

**सदसद्भिः पञ्चमः ॥ ६६ ॥**

पञ्चम आनन्दमयः कोशः सदसद्भिः पदार्थैः सम्बध्नाति तस्य तज्जन्ये एव शुद्धाशुद्धी भवत इति सूत्रार्थः।

शुद्धाशुद्धयोः स्पर्शास्पर्शयोश्च विवेको वर्णाश्रमश्रृंखलाया मौलिकः सिद्धान्तो विद्यते। तस्य च जीवेभ्योऽभ्युदयनिःश्रेयसप्रापणं चरमं लक्ष्यं। मनुष्याणामस्वाभाविकं संस्कारं विहत्य स्वाभाविकस्य संस्कारस्य वर्द्धनं तदीयं रहस्यमस्ति।

इतः पूर्वपादेषु साधु समर्थितमिदं यत् जीवो धर्मसाधनेन पूर्वमभ्युदयमवसाने च निःश्रेयसमधिगत्य कृतकृत्यो भवतीति। पूर्वञ्चेदमपि संसाधितम् यत् वर्णाश्रमधर्माचाराणां पालनेन आर्य्यजातौ स्वत एव प्रवृत्तेर्निरोधेन निवृत्तेरभिवृद्धि र्भवति। यतश्च वर्णाश्रमधर्मपालनपरो जीवो बन्धनशील मस्वाभाविकं संस्कारम् निवर्तयन्नद्वितीयं स्वाभाविकं संस्कारं समर्जयति। यावान् वै तस्य स्वाभाविकः संस्कारो वर्द्धते तावदेव स जीवो मुक्तिमार्गारूढो भवति। मानवा-

नामभ्युदयनिःश्रेयसयोर्मार्गस्य सारल्यं विधातुं शुद्धाशुद्धस्पर्शास्पर्शविवेको हि अत्युत्तमः पन्थाः ।

एतदपि च पूर्वमेव प्रदर्शितम् यत् पञ्चानां कोशानां शुद्धिरत्तया यथाक्रमं मल-विकार-विक्षेपावरणास्मिताः पञ्चापि न वर्द्धितुमर्हन्ति । याभिः क्रियाभिर शुद्धिमप्राप्य आत्मावरणं वर्द्धते ! यस्याश्च स्पर्शेनेदमावरणं घनीभवति । ताः सर्वा अपि क्रिया अभ्युदयार्थिभिः निःश्रेयसेच्छुभि विचारपूर्वकं हेया एवेति । यतो हीयं क्रिया स्थूलशरीरादारभ्य कारणशरीरं यावत् स्वप्रभावं दर्शयति । अतश्चशुद्धाशुद्धयोः स्पर्शास्पर्शयो विवेकस्येदमेव रहस्यं यत् पूर्वोक्त-मल-विकार-विक्षेपावरणास्मिता वर्द्धितुं नार्हेयुरिति । शुद्धाशुद्ध-स्पर्शास्पर्श-विवेकात्मिकाः क्रिया हि पूर्णावयवजीवस्य मानवस्यान्नमय-प्राणमय-मनोमय-विज्ञानमयकोषेषु कीदृशं प्रभावमुत्पादयतीति पूर्वसूत्रेषु सामान्यतः संक्षेपेण प्रतिपादितमेव ।

सम्प्रति सूत्रेणानेन आनन्दमयकोशे क्रियाणां साक्षाद्रूपेणासज्यमानं प्रभावं वक्तुकामोऽभिधत्ते । सद् ब्रह्म, असती माया । सन् आत्मा, असन् अनात्मा । सन् शरीरस्थः कूटस्थः, असन्ति इन्द्रियाणि तद्विषयाश्च । सन् जगदात्मा जगदीश्वरः, असन्तश्च दृष्टा अदृष्टा उभयेऽपि भोग्यपदार्थाः । सन् उपास्य इष्टदेवः, असत् जगत् इत्यादि सर्वत्रैव सदसदात्मकं द्वन्द्वं दरीदृश्यते । सतः साम्राज्यं प्रत्याहारत आरभ्य समाधिपर्य्यन्तं विद्यते । असद्राज्यन्तु द्रष्टृदृश्य-सम्बन्धभाक् सर्वोऽपि त्रिपुटीविषयो विद्यते । अतश्च याभिः खलु शारीरिक-मानसिक-बौद्धिक-क्रियाभिः सह पूर्वोक्तस्य सतः सङ्गमो भवति । तेनानन्दमयः कोषो निर्मलो भवति तत्रास्मितारूपो मलो न वर्द्धितु मर्हति । तत्रैव पूर्वोक्ता-सद्विषयसम्पर्केण तु आनन्दमयः कोशः क्रमशो मालिन्यमेव बिभर्ति ।

इत्थञ्चेमं गूढातिगूढं विषयमवगन्तुं दार्शनिकं मतभेदं व्याकर्तुमिद मेव संक्षेपतो ज्ञेयम् यत् सदनुगामिनः पदार्थाः, सद्युक्ताः सर्वाः क्रियाश्च, सच्छब्द-वाच्या भवन्ति । ताभिश्च क्रियाभिः पञ्चापि कोषाः पवित्रीभवन्ति । मुनिगणा-श्चैवमुन्नतेन शुद्धाशुद्ध-स्पर्शास्पर्शविवेकेनानन्दमयं कोषं पवित्रयन्ति । असतः सकाशादागताया आपवित्रतायाः सकाशात् सतः स्पर्शेण पुनरात्मानं पवित्रयन्ति इति संक्षिप्तः शुद्धाशुद्ध-स्पर्शास्पर्शविवेकः ।

प्रसङ्गतः एषां पारस्परिकं सम्बन्धं निर्दिशति—

**अन्योऽन्य-सम्बद्धाश्च ॥ ६७ ॥**

वर्णाश्रमश्रृङ्खलायाः सदाचारस्य च लक्ष्यं जीवेभ्योऽभ्युदयप्रदानम् निःश्रेयसाधिगतिप्रापणम् । नियमेन सत्वगुण-वृद्धि करणं । आत्मनश्चावरकान् पञ्चापि कोषान् शोधयत आत्मज्ञानार्थम् उदयकरणमिति तदीयोद्देशः पञ्चस्वपि कोषेषु मालिन्यवृद्धिनिरोधः स्यात्तर्हि कथमपि अग्रे न वर्द्धते । एतद्धि शुद्धाशुद्धस्पर्शास्पर्शविवेक-रहस्यम् ।

## विहारोत्कलसंस्कृत एसोसिएशन आचार्यपरीक्षा ।

( निम्नलिखित विद्यार्थी मई मास १९३४ ई० में आचार्यके तृतीयखण्ड-परीक्षामें उत्तीर्ण हुए ।)

## केन्द्र-पटना ।

### ( पाणिनीय व्याकरण । )

( द्वितीय श्रेणी । )

| रोल नं० | विद्यार्थि नाम | पाठशाला नाम | |
|---|---|---|---|
| ४ | जगन्नाथपाठक | ब्रजभूषणविद्यालय, | खरखुरा । |
| ६ | रघुनन्दनपाठक | प्राइवेट | ( गया । ) |
| ९ | जनार्दन त्रिपाठी | संस्कृतविद्यालय, | बरहरा । |
| १० | नागेन्द्रनाथ त्रिपाठी | ,, | ,, |
| १३ | देवसृष्टिद्विवेदी-हथुवाराज | ज्ञानोदयसंस्कृतविद्यालय, | मानदिरी । |
| १४ | लक्ष्मीनाथपांडेय | संस्कृतसंजीवनविद्यालय, इङ्गलिशगंज | ( पटना । ) |
| १५ | गन्नीपांडेय | ,, | ,, |
| १७ | लालबहादुर शर्मा | रामनिरञ्जनदासमुरारका-संस्कृतमहाविद्यालय, | पटनासिटी । |
| १८ | हरिहरपांडेय | ,, | ,, |
| २१ | जटाधर मिश्र | ,, | ,, |

### ज्योतिष ।

( द्वितीयश्रेणी । )

| | | | |
|---|---|---|---|
| २३ | श्रीगोविन्दद्विवेदी | ब्रजभूषणविद्यालय, | खरखुरा ( गया । ) |
| २५ | चन्द्रशेखरपाठक | ,, | ,, |
| २७ | जलाधारी ठाकुर | ,, | ,, |
| २८ | तेजनारायण झा | श्रीकृष्णमाधवानन्दसंस्कृतकालेज, | धानामठ । |

### आयुर्वेद ।

( द्वितीयश्रेणी )

| | | | |
|---|---|---|---|
| २९ | चन्द्रभूषण मिश्र | प्राइवेट | ( शाहाबाद । ) |
| ३२ | प्रमथनाथपांडेय | प्राइवेट | बनारस । |
| ३५ | अम्बिकादत्त त्रिपाठी | सिद्धनाथ शंकरआयुर्वेद विद्यालय, | आरा । |
| ३६ | रामबैराग पाठक | रामप्रतापकमलिया आयुर्वेदविद्यालय, | पटना सिटी । |
| ३८ | रामेश्वरमिश्र | | |

### साहित्य ।

( प्रथमश्रेणी )

| | | |
|---|---|---|
| ४४ | जगदीपपाण्डेय | प्राइवेट ( गया ) |

५७ शिवप्यारे मिश्र मनोहरदास जैनारायणसंस्कृतविद्यालय, पटनासिटी।

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| ३६ | कपिलदेवपाठक | प्राइवेट ( पटना ) |
| ४२ | ब्रह्मदत्तमिश्र | ब्रजभूषण विद्यालय, खरखुरा ( गया ) |
| ४३ | कुशेश्वरप्रसादमिश्र | ,, ,, |
| ४४ | राम हर्षणपाठक | ,, ,, |
| ४५ | स्वयंबर पाठक | प्राइवेट ( गया ) |
| ४७ | रमापति शास्त्री | ,, ,, |
| ४८ | श्यामानन्द पाठक | हरिहर विद्यालय, ( प्राइवेट )। बोध-गया। |
| ५१ | आदित्यनारायण पांडेय | संस्कृत विद्यालय, नेऊत। |
| ५२ | ब्रजनन्दन शर्मा | संस्कृत महाविद्यालय; आरा। |
| ५५ | वेदानन्द प्रसाद- | रामनिरंजन दास मुरारका संस्कृत महाविद्यालय, पटना सिटी। |
| ५६ | रघुबीर पांडेय | ,, ,, |

## केन्द्र मुज़फ्फरपुर।

### पाणिनीयव्याकरण।

( प्रथम श्रेणी। )

| रोल नं० | विद्यार्थि नाम | | पाठशाला नाम |
|---|---|---|---|
| २४ | वेदप्रकाश त्रिपाठी | बी० एम० एस० कालेज, | छपरा। |
| ४८ | कमलाकान्त झा | लक्ष्मीवतीविद्यालय, | सरीसाव। |
| ५० | सूर्य्यनारायण मिश्र | ,, | ,, |
| ५१ | तेजनाथ झा | ,, | ,, |
| ५२ | जयनारायण ठाकुर, | सीतारामीय संस्कृतविद्यालय, | बराही। |
| | ( द्वितीय श्रेणी। ) | | |
| ७ | उग्रनारायण मिश्र | रामेश्वरलताविद्यालय, | दरभंगा। |
| ८ | उमाकान्त झा | त्रिलोकेश्वरी विद्यामन्दिर, | चनउर। |
| १२ | रामकरनशर्मा | डी० एस० एस० कालेज, | मुज़फ्फरपुर। |
| १३ | दिनेशमिश्र | ,, | ,, |
| १४ | जगनारायण पांडेय | ,, | ,, |
| १६ | रमाकान्त झा | ,, | ,, |
| १८ | रामजन्म शर्मा | ,, | ,, |
| १९ | विशुद्धानन्द त्रिपाठी | ,, | ,, |
| २१ | दशरथ झा | ,, | ,, |
| २२ | सूर्य्यनारायण झा | केदार विद्यापीठ, | सम्भा-ड्योढ़ी। |
| २५ | राजेन्द्र त्रिपाठी | बी० एम० एस० कालेज, | छपरा। |

| | | | |
|---|---|---|---|
| २६ | नृसिंहदत्त द्विवेदी | ,, | ,, |
| ३० | रामवचन प्रसाद् मिश्र | ,, | ,, |
| ३३ | परमानन्दन शास्त्री | विक्रम संस्कृत टोल, | चिकनउटा। |
| ३४ | बन्शीधर झा | ,, | ,, |
| ३६ | दोलानन्द झा | एम० एल० विद्यापीठ, | लोहना। |
| ३७ | कमलाकान्त झा | भैरवीभैरेश्वर टोल, | झनझारपुर। |
| ३८ | केदारनाथ मिश्र | शारदा भवन, | नवानी। |
| ४० | लक्ष्मीदत्त चौधरी | ,, | ,, |
| ४१ | सुबोधझा शर्मा | ,, | ,, |
| ४२ | पालत झा | ,, | ,, |
| ४३ | शिवनाथ झा | सरस्वती सदन कामेश्वर विद्यालय, | फुलपरास। |
| ४४ | सोमनाथ झा | सरस्वती भवन, | चिकना। |
| ४५ | जगद्धर चौधरी | संस्कृतविद्यालय, | मधुबनी। |
| ४६ | फेंकू मिश्र | ,, | ,, |
| ४७ | खगनाथ झा | लक्ष्मीवती विद्यालय, | सरिसांव। |
| ४६ | महेश ठाकुर | ,, | ,, |
| ५२ | जयनारायण ठाकुर—सीतारामीय संस्कृत विद्यालय, | | बराही। |
| ५३ | विदेश्वरशास्त्री | ,, | ,, |

( द्वितीय श्रेणी )

| | | | |
|---|---|---|---|
| ५४ | इन्द्रदेवझा शास्त्री | सीतारामीय संस्कृत विद्यालय, | बराही। |
| ५५ | हरिकान्त मिश्र | ,, | ,, |
| ५६ | जगदानन्द झा | लक्ष्मीनारायण विद्यालय, | चोरउत। |
| ५८ | अनिरुद्ध झा | ,, | ,, |
| ५६ | गणेश झा | ,, | ,, |
| ६० | रामनक्षत्र ओझा—प्रायर पुरुषोत्तम विद्यालय, | | बेतिया। |

## ज्योतिष।

( प्रथमश्रेणी )

| | | | |
|---|---|---|---|
| ६३ | उत्तमलाल झा | डी० एल० एस० कालेज | मुजफ्फरपुर। |
| ६६ | जटाधर शर्मा | सरस्वती भवन, | सुगउना। |
| ७० | छेदू झा | ,, | ,, |

( द्वितीयश्रेणी )

| | | | |
|---|---|---|---|
| ६२ | यशस्पति झा | डी० एल० एस० कालेज, | मुजफ्फरपुर। |
| ६७ | ताराकान्त झा | सरस्वती भवन, | सुगउना। |
| ६८ | सत्यदेव झा | ,, | |
| ६६ | शुभकान्तमिश्र | ,, | |
| ७३ | रामेश्वर झा | संस्कृतविद्यालय, (प्राइवेट) | मोदिहानी। |
| ७४ | गणेशचन्द्र झा | | |
| ७५ | सिद्धेश्वरशर्मा झा | | |

| | | |
|---|---|---|
| ८० गुणराज उपाध्याय | बी० एम० एस० कालेज, | छपरा। |

**धर्म्मशास्त्र।**

( द्वितीयश्रेणी )

| | | |
|---|---|---|
| ८२ तेजनारायणशर्मा | डी० एस० एस० कालेज, | मुजफ्फरपुर। |

**नव्यन्याय।**

( द्वितीयश्रेणी )

| | | |
|---|---|---|
| ८४ जयानन्द शर्मा | डी० एस० एस० कालेज, | मुजफ्फरपुर। |

**मीमांसा।**

( द्वितीयश्रेणी )

| | | |
|---|---|---|
| ८५ रामचन्द्र झा शर्मा | डी० एस० एस० कालेज, | मुजफ्फरपुर। |

**वेदान्त।**

( द्वितीयश्रेणी )

| | | |
|---|---|---|
| ८६ रत्नेश्वर ठाकुर | डी० एस० एस० कालेज, | मुजफ्फरपुर। |
| ८७ गोस्वामी सुरेन्द्र शर्मा | ,, | ,, |
| ८८ रामचन्द्रमिश्र | ,, | ,, |

**आयुर्वेद।**

( प्रथमश्रेणी )

| | | |
|---|---|---|
| ९३ वैद्यनाथ झा | डी० एस० एस० कालेज, | मुजफ्फरपुर। |

( द्वितीय श्रेणी )

| | |
|---|---|
| ९० वैद्यनाथ वाजपेयी | प्राइवेट ( चम्पारन ) |
| ९१ ऋद्धिनाथ पाठक | वैद्यनाथ विद्यालय, सरैयागंज। |
| ९४ चन्द्रदेवप्रसाद पाण्डेय | डी० एस० एस० कालेज, मुजफ्फरपुर। |
| ९५ गोस्वामी रामराज गिरि | ,, ,, |
| ९९ रामप्रीतसिन्हा वर्मा | ,, ,, |
| १०१ गणपति उपाध्याय | बी० एम० एस० कालेज, छपरा। |
| १०२ रामप्रसाद द्विवेदी | ,, ,, |
| १०४ योगीन्द्र पाठक | प्राइवेट ( दरभंगा ) |
| १०६ भवानीदत्त शर्मा | प्राइवेट ( शाहाबाद )। |

**साहित्य।**

( प्रथम श्रेणी )

| | |
|---|---|
| १२४ दरबारी झा | डी० एस० एस० कालेज, मुजफ्फरपुर। |

(द्वितीयश्रेणी)

| | |
|---|---|
| १०८ मधुकान्त झा | संस्कृत विद्यालय, मधुबनी। |
| १११ महादेव द्विवेदी | राजसंस्कृतविद्यालय, बेतिया। |
| ११२ रामजीमिश्र | डी० एस० एस० कालेज, मुजफ्फरपुर। |

११७ वैद्यनाथमिश्र शर्मा ,, ,,
११८ बलदेव ठाकुर ,, ,,
१२५ रामविलास ठाकुर ,, ,,
१२६ भुवनेश्वरत्रिपाठी विक्रम संस्कृत टोल, चिकनौटा।
१३० वृन्दाविहारी चतुर्वेदी प्राइवेट ( सारन )

कर्मकाण्ड।

( द्वितीयश्रेणी )

१३३ देवीदत्तशर्मा ब्रह्मचर्य्याश्रम संस्कृत विद्यालय, गाजीपुर।

पुराण।

( द्वितीयश्रेणी )

१३४ मंगलप्रसाद शर्मा डी० एस० एस० कालेज, मुजफ्फरपुर।
१३५ उदयकरण शर्मा

---

## केन्द्र भागलपुर।

### पाणिनीय व्याकरण।

( प्रथमश्रेणी )

| रोल नं० | विद्यार्थि नाम | पाठशाला नाम |
|---|---|---|
| ४ | राधाकान्त झा | वैद्यनाथसंस्कृत विद्यालय, देवघर। |
| | ( द्वितीय श्रेणी ) | |
| २ | भुवनेश्वर मिश्र | वैद्यनाथ संस्कृत विद्यालय, देवघर। |
| ३ | भगवान नारायण ठाकुर | ,, ,, |
| ६ | सहदेव झा | प्राइवेट ( भागलपुर ) |
| ८ | अम्बिकानन्द झा | कलावती संस्कृत विद्यालय, सुलतानगंज। |
| ९ | कमलनारायण झा | ,, ,, |
| १० | नागेन्द्र शास्त्री झा | ,, ,, |
| ११ | कृष्णदेव ठाकुर | करणगढ़ संस्कृत टोल, नाथनगर। |
| १२ | शिवनारायण झा | ,, ,, |
| १४ | अधिकनारायण झा | श्रीकृष्ण विद्यालय, खगड़िआ। |
| १५ | ब्रजनन्दनमिश्र | ,, |

## केन्द्र रांची।

### साहित्य।

( द्वितीय श्रेणी )

| रोल नं० | विद्यार्थि नाम | पाठशाला नाम |
|---|---|---|
| २ | महाराज द्विवेदी | संस्कृत संजीवन विद्यालय, जगन्नाथि। |
| ३ | जयनाथेन्द्र गुरु | |

## बिहारोत्कल संस्कृत एसोसिएशन ।

[ निम्नलिखित विद्यार्थि मई मास १९३४ ई० में आचार्य्यपरीक्षामें उत्तीर्ण हुए हैं। ]

---

### केन्द्र पटना ।

वेदाचार्य्य ।

( द्वितीयश्रेणी )

| रोल नं० | विद्यार्थि नाम | पाठशाला नाम |
|---|---|---|
| १ | ब्रह्मदत्त मिश्र | श्री रामानुज संस्कृत विद्यालय, बाभनगावाँ । |

( व्याकरणाचार्य्य )

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| २ | सूर्य्यनारायण पाण्डेय | प्राइवेट ( मुंगेर ) |
| ३ | शालग्राम झा | रामनिरंजनदासमुरारका संस्कृतमहाविद्यालय, पटना सिटी । |
| ४ | रामदेव झा | ,, |
| ५ | रामानुज ओझा | ,, |

( ज्योतिषाचार्य्य )

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| ७ | सभाकान्त चौधरी | वृजभूषणविद्यालय, खरखुरा । |
| ८ | तेजनारायण ठाकुर | ,, ,, |

( नव्य न्यायाचार्य्य )

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| ९ | रमेश झा शर्मा | प्राइवेट ( दरभंगा ) |
| १० | राधाकान्त मिश्र | वृजभूषण विद्यालय, खरखुरा । |
| ११ | कुलानन्द मिश्र | प्राइवेट ( दरभंगा ) |

( आयुर्वेदाचार्य्य )

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| १३ | यदुनन्दन पाठक | श्री सिद्धनाथ शंकर आयुर्वेद विद्यालय, आरा । |
| १४ | भूमीश्वर पाठक | रामप्रतापकमलीया आयुर्वेदविद्यालय, पटना सिटी । |

( साहित्याचार्य्य )

( प्रथम श्रेणी )

| | | |
|---|---|---|
| १६ | सत्यव्रत सिन्हा | प्राइवेट ( बलिया ) |
| १७ | अयोध्याप्रसाद शर्मा | बलदेवसहायसंस्कृतमहाविद्यालय, कानपुर, ( प्राइवेट ) |

| | | |
|---|---|---|
| २३ | जानकीवल्लभ शर्मा | प्राइवेट ( गया ) |

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| २० | नन्दकिशोर पाठक | श्री रामविनोदविद्यालय, उत्तरमानस ( गया ) |
| २२ | श्यामावल्लभ शर्मा | प्राइवेट ( गया ) |
| २४ | भृगुनाथ मिश्र | हरगौरी संस्कृत विद्यालय, सँभौली । |
| २५ | हनुमान राम | संस्कृत विद्यालय, पालगंज ( हजारीबाग ) ( प्राइवेट ) |

---

# केन्द्र मुजफ्फरपुर ।

## (वेदाचार्य्य )

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| १ | उपेन्द्रमिश्र | डी० एस० एस० कालेज, मुजफ्फरपुर । |

## ( व्याकरणाचार्य्य )

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| ३ | जयकान्त शर्मा झा | जानकी भवन संस्कृत विद्यालय, सतगढ़ । |
| ५ | लक्ष्मण मिश्र | शारदा भवन, नवानी । |
| ८ | सूर्य्यनारायण चौधरी | लक्ष्मीवती विद्यालय, सरिसांव । |
| ६ | जटाशंकर शास्त्री | सीतारामीय संस्कृत विद्यालय, बाराही । |
| १० | कुशेश्वर झा शर्मा | डी० एस० एस० कालेज, मुजफ्फरपुर । |
| १२ | रामचन्द्र झा शर्मा | ,, ,, |
| १५ | श्रीनाथ त्रिपाठी | ,, ,, |
| १६ | व्रजविहारी पाण्डेय | ,, ,, |
| १७ | कामताप्रसाद ओझा | ,, ,, |
| १८ | गणेशदत्त शर्मा | ,, ,, |
| १६ | हरिनाथ झा | ,, ,, |
| २० | शिवरत्न पाण्डेय | ,, ,, |

## ( ज्योतिषाचार्य्य )

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| २७ | लक्ष्मीकान्त पाठक | डी० एस० एस० कालेज, मुजफ्फरपुर । |
| २८ | अक्षयलाल झा | ,, ,, |
| २६ | राधारमण झा | ,, ,, |
| ३० | महानन्द मिश्र | ,, ,, |
| ३१ | बद्रीनारायण मिश्र | ,, ,, सरस्वती भवन संस्कृत टोल, सुपौला । |

| | | |
|---|---|---|
| ३५ | रामकिशोर झा | प्राइवेट ( मुजफ्फरपुर ) |
| ३६ | सत्यदेव त्रिपाठी | प्राइवेट ( सारन ) |
| ३७ | रामपुकार द्विवेदी | बी० एम० एस० कालेज, छपरा। |
| ३८ | चन्द्रशेखर झा | प्राइवेट ( बनारस ) |
| ३९ | अभिनन्दन झा | मिथिला संस्कृत विद्यालय, लहरियासराय। |
| ३९ए | रामकृष्ण झा | संस्कृत महाविद्यालय, मतिहानी (प्राइवेट) |

( नव्य-न्यायाचार्य )

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| ४० | नमोनारायण झा | प्राइवेट ( मुजफ्फरपुर ) |
| ४१ | उपेन्द्र झा | रामेश्वरलता विद्यालय, दरभंगा। |

( मीमांसाचार्य्य )

( प्रथम श्रेणी )

| | | |
|---|---|---|
| ४४ | कृष्णेश्वर झा | प्राइवेट ( दरभंगा ) |

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| ४३ | उमाकान्त ठाकुर | डी० एस० एस० कालेज, मुजफ्फरपुर। |

( वेदान्ताचार्य्य )

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| ४५ | पुरन्दर झा | रामेश्वरलता विद्यालय, दरभंगा। |

( आयुर्वेदाचार्य्य )

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| ४६ | विन्ध्य चल पाण्डेय | महाराज धर्मसमाजसंस्कृतविद्यालय, मोतिहारी। |
| ४७ | कालीकुमार द्विवेदी | डी० एम० एस० कालेज, मुजफ्फरपुर। |
| ४८ | वासुदेवप्रसाद मिश्र | ,, ,, |
| ४९ | जगदीश मिश्र | ,, ,, |
| ५० | उमेश झा | बी० एम० एस० कालेज, छपरा। |
| ५१ | धर्म्मराज मिश्र | ,, ,, |
| ५२ | पवहारि द्विवेदी | ,, ,, |
| ५३ | सरजूप्रसाद पाण्डेय | ,, ,, |
| ५४ | शशीन्द्र पाठक | प्राइवेट ( दरभंगा ) |

( साहित्याचार्य्य )

( प्रथम श्रेणी )

| | | |
|---|---|---|
| ५६ | बेचन झा | डी० एस० एस० कालेज, मुजफ्फरपुर। |

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| ५५ | महानन्द ठाकुर | संस्कृत विद्यालय, मधुबनी। |
| ५७ | कुसुमाकर पाण्डेय | डी० एस० एस० कालेज, मुजफ्फरपुर। |

| | | |
|---|---|---|
| ५८ | गोबरलाल दास | ,, |
| ६० | बाबुलाल झा | ,, |
| ६१ | जगन्नाथ झा | प्राइवेट ( भागलपुर ) |
| ६१ए, | गंगाधर मिश्र | प्राइवेट ( मुजफ्फरपुर ) |

( पुराणाचार्य )

| | | |
|---|---|---|
| ६७ | आनन्देश्वर शर्मा | डी० एस० एस० कालेज, मुजफ्फरपुर । |

# केन्द्र भागलपुर ।

( व्याकरणाचार्य )

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| ३ | शुकदेव झा | प्राइवेट ( भागलपुर ) |
| ४ | कृष्णकान्त शास्त्रि झा | कलावती संस्कृत विद्यालय, सुलतानगंज । |
| ६ | उग्रनारायण झा | कलावतीसंस्कृतविद्यालय, सुलतानगंज । |
| ७ | जटानन्द झा | वैद्यनाथ संस्कृत विद्यालय, देवघर। |
| ८ | भोलीनाथ शर्मा | वैद्यनाथ संस्कृत विद्यालय, देवघर । |
| ९ | रामेश्वर पाठक | ,, ,, |
| १० | देवनन्दन झा | ,, ,, |
| ११ | सौदामिनीनन्दन झा | ,, ,, |
| १२ | हरिनारायण झा | ,, ,, |
| १३ | अर्जुन झा | ,, ,, |
| १४ | शशिशेखर राजहंस | ,, ,, |
| १५ | वैद्यनाथ झा | ,, ,, |
| १५ए, | मतिकान्त झा | श्याम भवन संस्कृत विद्यालय, नेलडीह । |

( साहित्याचार्य )

( द्वितीय श्रेणी )

| | | |
|---|---|---|
| १७ | महेश्वरप्रसाद मिश्र | दीव्यप्रभासंस्कृत विद्यालय, मनुषिया । |

# सूर्योदयः ।

दशमे वर्षे } भाद्रस्य पूर्णिमा सं० १९९१, { तृतीय-संख्या

## सम्पादकीया अभिप्रायाः ।

——:o:——

### श्रीकृष्णजन्माष्टमी ।

——:o:——

अत्यद्भुतं कर्म चकार योऽर्भकोऽवधीद्युवाऽनेकनराधमांस्तदा ।
गीतामृतं वेदरहस्यमादिशत् कृष्णः स नोऽव्याद्भगवान् सनातनः ।

अयि सूर्य्योदय-पाठक-महानुभावाः !

पुरा द्वापरे अस्यामेव भाद्रकृष्णाष्टम्यां सर्वत आसुरभाव-प्रसारेण उद्दण्डायमाने सनातन-मर्यादा-विलोपके राजवर्गे गोब्राह्मणविध्वंसाऽऽत्मकस्य भावस्य सर्वतः प्रसारे सति स भगवान् लीलाद्भुतव्यसनी सनातन-मर्यादारक्षकः द्रौपदी-त्राणकर्ता भगवान् श्रीकृष्णोऽवततार इति सर्वेऽपि जानन्ति पुराणविदः ।

ब्राह्मणाश्चैव गावश्च यज्ञश्चेति हरेस्तनुः ।
त एव सर्वथा वध्या हरिद्वेषो मतो मम ॥

इत्यादि तदानीन्तनानां राज्ञां घोषणा भवति स्म । तथैव सम्प्रति सर्वत्रैव पाश्चात्य-शिक्षाप्रभावेण प्रायशः सर्वेऽपि इंग्लिशभाषाभिज्ञा भारतीया गो-देव-ब्राह्मण-द्वेषिणः सञ्जाताः सन्ति । ते हि देवानामस्तित्वमेव न स्वीकुर्वन्ति । गोस्थाने कुक्कुरपोषणं कुर्वन्ति । ब्राह्मणानामुपरि तु एतेषां महान् कोपो दृश्यते । ते कथयन्ति यद् ब्राह्मणा एव सम्प्रति अस्माकं समुन्नतौ देशस्य चाभ्युदये बाधकाः सन्ति । यतो हि पाश्चात्य-भौतिकमात्रस्य निरीश्वरवादप्रचारकस्य शिक्षणस्य प्रसारेण ते भारतीय-संस्कृति-विलोपकमेव कृत्यमभ्युदयकरं मन्यते । ब्राह्मणाश्च स्वभावत एव तत्परिपन्थिनो भवन्ति । यतश्च ते सृष्टिकालादारभ्य ईश्वरादेश-स्वरूपस्य वेदस्य रक्षकाः, तदनुकूलस्यैव भावस्य प्रचारे साहाय्यमाचरन्ति ।

तद्विपरीत–भावस्य तु ते जन्मत एव विरोधिनो भवन्ति । अत एव साम्प्रतिका इंग्लिशभाषाध्यायिनः पाश्चात्यान् स्वगुरून् मत्वा आत्मगौरवं भारतीय-संस्कृति-महत्त्वं च विस्मृत्य तन्मतानुसारेण बहुधा ब्राह्मणान् निन्दन्ति । ते कथयन्ति यद् "ब्राह्मणा एव भारते राज-मन्त्रिण आसन् । ते हि तांश्च राज्ञो विविधैरुपायैः स्ववशे कृत्वा स्वब्राह्मणत्वोत्कर्षप्रख्यापकान्येव शास्त्राण्यन्यानि च धर्मशास्त्रप्रभृति-नियम-जातानि विरचय्य प्रकाशितवन्तः। तद्द्वारा प्रतिपालितवन्तश्च, सर्वत्रैव समाजे, धर्मे राजनीतौ यत्रैव वा पश्यन्तु तत्रैव ब्राह्मणानामेवाधिपत्यं दृश्यते । किमन्य देशीया भारतीयान् लुण्ठन्ति ? ततः सहस्रगुणमिमे ब्राह्मणाः सर्वदाऽस्मान् विलुण्ठन्ति । जन्मकालादारभ्य मरणावधि नहि नहि मरणानन्तरमपि सर्वदैव इमेऽस्मान् भक्षयन्ति ! शासकस्तु पञ्चषकृत्व एव तत्राप्येकस्मादेव गृह-स्वामिनः करं गृह्णाति । इमे ब्राह्मणास्तु सहस्रकृत्वः सर्वेभ्योऽपि कुटुम्बेभ्यः करं गृह्णन्ति । किं बहुना शासकस्तु जीवद्भ्य एव करं गृह्णाति । इमे ब्राह्मणास्तु मृतादपि करं गृह्णन्ति ।" इत्यादि बहवो गर्हिता भावा ब्राह्मणानामुपरि शिक्षितशब्द–वाच्याना-माधुनिकानां भारतीयानां मनसि प्रादुर्भवन्ति ।इति महान् खेद-विषयः । इमांश्च भावांस्ते अन्यदेशीया एव प्रथमं भारतीयेषु प्रवेशितवन्तः । इदानीञ्च भारतीया अपि परस्परं भावानिमान् स्वेषु सञ्चालयन्ति । किं बहुना इंग्लिश-भाषाभिज्ञा ब्राह्मणा अपि इमानेव भावान् प्रतिपालयन्ति । अनेन भ्रान्ति-मूलक-प्रचारेण देशस्यास्य राष्ट्रिय-समुन्नते हिन्दू-समाजस्य च महती हानि र्भविष्यति भविष्यति । एतस्यापि कृते उपर्युक्त-भावप्रचारकैः प्रायश्चित्तं करणीयमेव । सर्वतःप्रखरतामेषां भावानां निरोधाय संस्कृतज्ञा विद्वांसः किमाचरन्ति ? अन्येषु ब्राह्मणेषु तु अस्य भावस्य प्रभावोऽप्रत्यक्षरूपेण पतति, परन्तु संस्कृतज्ञेषु तु प्रत्यक्षरूपेणैव । पश्यन्तु संस्कृतज्ञापेक्षया इंग्लिशभाषाभिज्ञा नापि विद्वांसो भवन्ति, नापि विचारवन्तो भवन्ति । किन्तु सर्वत्रैव समाजे तेषामधिकं समादरणं दृश्यते । शिक्षापि संस्कृतस्य भारतीयैरेव स्वद्रव्यैः सञ्चाल्यते ।

अद्यत्वे नेतृ-पदासीना अपि ब्राह्मण्यमपसारयितुमेव यतन्ते । न ते तस्य महत्त्वं जानन्ति । ज्ञात्वापि देश-काल-शासकनीतिप्रभावादुदासीना एव तिष्ठन्ति । अत्रत्यैस्तु सर्वैरपि प्राक्तनै र्नेतृभि र्महर्षिभि र्ब्राह्मण्यस्य प्रतिपालनाय दृढतर उद्योगः कृतो दृश्यते । सर्वप्रथमं नीतिविदा चाणक्येनाभिहितम्—

व्यवस्थितार्य्यमर्य्यादः कृतवर्णाश्रमस्थितिः
त्रय्या हि रक्षितो देशः प्रसीदति न सीदति । इति ॥

भगवता शङ्कराचार्य्येणापि गीताभाष्ये समुदीरितं ब्राह्मण्यस्यैव सुरक्षितेन सर्वं सुरक्षितं स्यादिति ।

अस्य भारतीयविरुद्ध-भावस्य विनाशाय ब्राह्मणैस्तत्रापि संस्कृतज्ञैरेव यतनीयम्। श्रीमता भगवता श्रीकृष्णेन ब्राह्मणरक्षाप्रयत्नः स्वयं विहितः, स्त्रोपदेशेनापि अन्यैः कारितः। बाल्यकालादारभ्य स्वलोकगमनावधि गोब्राह्मण-प्रतिपालनमेव तेनानुष्ठितम्। बाल्ये तस्य गोचारणादिकं प्रसिद्धमेव। स्वगुरोर्मृत-पुत्रप्रदानेन सुदामाऽपरनाम्नः कुचैलब्राह्मणस्य राजत्वसम्पादनेन च ब्राह्मणानुकम्पा प्रसिद्धैव। प्रसिद्धिरप्यस्ति—"अविद्यो वा सविद्यो वा ब्राह्मणो मामकी तनुः" इति।

श्रीमतो भगवतः कृष्णस्यैवानुकरणेनोपदेशेन च अद्यापि जगति सर्वत्रैव गोब्राह्मणप्रतिपालनपद्धतिः प्रचलिता दृश्यते। पाश्चात्यशिक्षापद्धतेः प्रसारात् पूर्वं सर्वेऽपि पत्रलेखनकाले 'गोब्राह्मणप्रतिपालक' इति विशेषणं लेख-विषयीभूताय पुरुषाय ददति स्म। शास्त्रादिषु सर्वत्रैव गोब्राह्मणरक्षणमाहात्म्यश्रुतिरुपलभ्यते। मार्कण्डेय-पुराणे मदालसापि स्वसूनुमुपदिष्टवती।

"गोविप्रार्थे वत्स! मृत्युं भजेथाः।" इति

एतादृशो भावः पुनरपि देशे जागृतः स्यात्, पाश्चात्यशिक्षाप्रचारतोऽयं जातो ब्राह्मणद्वेषिभावः सर्वथा समुच्छिन्नः स्यादिति संस्कृतज्ञैरेव सम्पादनीयम्। सत्यपि सर्वतो बाधाव्यतिकरे, यदि ब्राह्मणाः सम्प्रत्यपि संघीभूय कृतप्रयत्ना भवेयुस्तर्हि सर्वथैवायं भावो विलीनः स्यादिति निश्चितं विदन्तु। भगवान् श्रीकृष्णोऽपि स्वप्रतिज्ञानुसारमस्माकं रक्षकः स्यादेव। उक्तञ्च तेन भगवता श्रीमद्भागवते—

"अस्ति चेदीश्वरः कश्चित् फलरूप्यन्यकर्मणाम्
कर्तारं भजते सोऽपि नह्यकर्तुः प्रभुर्हि सः" ॥

इत्येवं सर्वथा ब्राह्मणरक्षण-परायणस्य भूमावतीर्यापि स्वलीलाकृत्येन तद्रक्षणपरस्य भगवतः स्वाविर्भावकालो भाद्रस्येयं कृष्णजन्माष्टमी विद्यते। यस्यां तिथौ सर्वेऽपि प्रतिवर्षं भारतस्य गेहे गेहे भगवतः श्रीकृष्णस्य चरितस्मरणं पूजनं सुमहता समारोहेण विदधति। ब्राह्मणैः विशेषतः संस्कृतज्ञैः विमर्शनीयं यत् तस्य भगवतो ब्राह्मणरक्षयैव सर्वं सुरक्षितं मन्यमानस्य तथैवोपदिशतश्च कथमाज्ञा प्रतिपालिता स्यात्? कथमधुना अस्माकं ब्राह्मणानां तथा देशस्य, भारतीय-संस्कृतेरपि रक्षा स्यादिति विमृशन्तु सर्वे संस्कृतज्ञा विद्वांसो ब्राह्मणाः क्षत्रियादयोऽन्येऽपि भारतीय-संस्कृतिप्रेमभृतो भारताभ्युदय-समेधकाः सुधियो महोत्सवेऽस्मिञ्जन्माष्टमी-नामके इति विरम्यते। × ×

## विहारोत्कल-संस्कृत-परीक्षाफलम्।



अस्माभि र्विगत-सूर्योदयाङ्के विहारोत्कल-संस्कृतपरीक्षा-फलं प्रकाशितम्। यत्र च परिश्रमाधिक्यमर्थव्ययोऽपि समधिकः समजनि। परन्तु सर्वमिदमगणय्य विहारोत्कलस्थानां विद्यार्थिनां विदुषाञ्च सौकर्यार्थमस्माभिरेवमनुष्ठितम्। यतो हि मूल्याधिक्यात् आंग्लभाषाप्रकाशित-राजकीय-गजट-पत्रो-

पलब्धिरेव प्रथमं संस्कृतज्ञानां दुस्तरा, तदुपलब्धावपि तद्भाषापरिज्ञानं सुदुर्लभतरमिति । ईदृशस्योपकारस्य प्रत्युपकारकरणाय संस्कृतज्ञा विद्यार्थिनो विद्वांसो वा बद्धपरिकरा भवेयुश्चेदयं प्रकारोऽस्माभिः सर्वथैव सञ्चालितः स्यात् । यदि सर्वेऽपि विहारोत्कल-परीक्षादातारश्छात्रा एकस्यैकस्य ग्राहकस्य संख्यां वर्द्धयेयुः, विद्वांसश्च स्वविद्यालयार्थं प्रतिमासं सूर्योदयस्यैकां संख्यां गृह्णीयुः। बहुधा वयं निवेदयामो यत् संस्कृत-पत्राणामार्थिकी दशा न समीचीना, तत्र संस्कृतज्ञैरेवावधानीयम् । नास्ति तत्र बहुप्रयास-करणस्य प्रयोजनम्। केवलं छात्रैरेकं रूप्यकं विद्वद्भिश्च रूप्यकत्रयं भूयस्यां संख्यायां यदि प्रतिवर्षं प्रहीयेत चेद्वयं 'सूर्योदयं' नितरामितोऽतिदीप्तिमन्तं सम्पादयितुमर्हामः । विलम्बभयाद् अस्मिन् वर्षे केवलं आचार्यपरीक्षाफलं प्रकाशितम् । यदि समुचित-समये माननीया विहारोत्कल-परीक्षाध्यक्षा कृपया त्वरयैव परीक्षाफलमस्माकं पार्श्वे प्रहिणुयुश्चेदधिको लाभः स्यात् परीक्षार्थिनां सम्पूर्णं परीक्षा फलमपि प्रकाशितं भवेदिति सर्वेभ्यः प्रार्थ्य विरमामो विज्ञेषु बहूक्त्या इति ।

× × × ×

## विहारप्रान्ते दैवप्रकोपः ।

एकस्य दुःखस्य न यावदन्तं गच्छाम्यहं पारमिवार्णवस्य ।
तावद्द्वितीयं समुपस्थितं मे छिद्रेष्वनर्था बहुलीभवन्ति ॥

सम्प्रति सर्वथा सर्वतः समासाद्यते सङ्कटसमुद्रेकोऽस्मिन् संसारे, बाहुल्येन चेह भारते वर्षे । जानन्त्येव 'सूर्योदय'-पाठकाः, यद् भूकम्पेन विहारप्रान्तस्य खण्डप्रलयः समजनि । निदाघेनापि यत्र कुत्राग्निप्रकोपेन दाहितमेव ग्राम-नगर-खर्वटजातम् । सम्प्रति जलप्लावनेन विहार-बङ्गाल-संयुक्तप्रान्तादिषु बहवो ग्राम-नगर-सङ्घा भग्नतां गताः सन्ति । इत्येवमैषमः सर्वत्रैव प्रकृति-प्रकोपो दृश्यते । तत्र को हेतुरिति स एव भगवान् सर्वनियन्ता परमेश्वरो जानाति ।

अस्माकं दृष्टौ तु एतेषामाकस्मिकानां सर्वेषामप्युपद्रवाणां समष्टि-कर्मणां वैगुण्यमेव हेतुः प्रतीयते । बहवोऽपि मानवाः सम्प्रति वैदेशिक-शिक्षणप्रभावात् विस्मृतभारतीय-सदाचाराः देवाराधन-स्वकर्तव्यप्रतिपालन-गोब्राह्मणसेवाप्रभृति-देशसमृद्धिसमेधनव्यापारं विस्मृत्य शिश्नोदर-परायणा भूत्वा पाश्चात्यानीश्वरवादमेव स्वोन्नति-मार्गमाकलयन्ति ! इष्टापूर्तादि पञ्चभूतपरिष्कारकं कर्म नैव राजाधिकारिणः सम्पादयन्ति। नापि तन्मार्गानुगाः प्रजा एवानुतिष्ठन्ति। येन सर्वथैव महाभूतादयो विकृतिमापन्ना देशमिमं विघातयन्ति । सत्येवं व्यतिकरे धार्मिकाणां मानवानामिदानीं सर्वतो धर्मकृत्यानुष्ठानेनेश्वरादेशप्रतिपालनेन, पुनर्भारतीयसदाचारसमेधनेन, रक्षणीयोऽयं देश इत्येव संक्षेपेणास्माकं निवेदनमस्ति । ब्राह्मणैश्च धर्मोपदेशेन सदाचारवर्गे पुनः प्रजाः संस्थाप्या इति । महाकारुणिको भगवान भूतभावनः श्वःश्रेयसं विदध्यात ॥

## राष्ट्रिय-महासभावस्था ।

साम्प्रतं राष्ट्रिय-महासभायाः ( कांग्रेस ) धार्मिक-सामाजिक-कार्येऽनुचित-हस्त-क्षेपात् तथा श्रीमतो गान्धि-महोदयस्य अन्त्यजोद्धारव्याजेन स्वराज्य-लाभलोभेन देवमन्दिर प्रवेशान्दोलनम्, असवर्ण-विवाहादि कृत्यं च विलोक्य भारतीय-जनेषु विशेषतः सनातन-धर्मावलम्बि-जनता-हृदयेषु महद् दुःख-मासीत्। सम्प्रति तु साम्प्रदायिक-निर्णयजन्यमत-भेदेन नेतृवृन्देष्वपि महान् मत-भेदो दृश्यते । अतश्च जलगावतः प्रकाशितस्य महाराष्ट्र-भाषापत्रस्य सहयोगिनः 'प्रागतिकस्य' मतमेवाधः प्रकाश्यते ।

"गते शुक्रवासरे मोहमय्याम् ( मुम्बय्याम् ) सरदारगृहमिति प्रथिते हिंदूनाम् सुविख्यातनिवासे केचन हिंदूनाम् नेतारः सम्मिलिताः सन्तः जाति-निर्णयविषयजम् प्रश्नमधिकृत्य विचिन्तयन्त एकामागामिनीम् परिषदम् निश्चिन्वाना विविधानाम् पक्षाणाम् मध्ये ऐक्यप्रस्थापनाय प्रयत्नमकुर्वन् इति भृशम् प्रमोदामहे । सम्प्रति, अखिलानाम् हिंदूबन्धूनाम् विशेषतस्तेषाम् मध्ये सनातन-वैदिकधर्मीयाणां च,दैवदुर्विपाकात् भारतवर्षीया राष्ट्रिया सभा गान्धीमहोदयानाम् नेतृत्वेनास्वाभाविकेऽधर्म्येऽमार्गे निपतिता सती गतेषु पंचदशवर्षेषु न किंचिदपि हितकरम् राजकीयम् कार्यम् कर्तुम् समर्थाऽभवदिति अधुना संसिद्धमेव । अहो, दुःखमयोऽयम् पंचदशवर्षीयो गतः कालः, यस्मिन् विविधेषु क्षेत्रेषु यवनैः प्रभूतमाक्रान्तम् । सहस्रेषु स्थानेषु कलहोत्सुकैः 'मुस्लिमगुण्डै' हिन्दवः सन्त्रासिताः । प्रायः सर्वेषु नगरेषु मुम्बई, मद्रास, कलकत्ता, दिल्ली इति राजनीति-ख्यातेषु नगरेष्वपि,-यवनैः वारंवारम् आंग्लसत्ता-धारिणाम् शान्त-तासंरक्षकानाम् राजपुरुषाणामग्रेऽपि हिंदुबंधवस्ताडितास्त्रासिताः केऽपि हताश्च ! अवधीरितम् खल्वेतैः गान्धीमहोदयानामहिंसासत्यादिकम् भ्रममूलकमूल तत्त्व-ज्ञानम् । आंग्लानाम् राजनीतिकौटिल्यम्, गान्धश्चास्वाभाविकमसम्यग्वर्तितमेव अस्मिन् विषये उत्तरदायीति निर्धारितम् हिंदुबंधुभिर्दुःखेन ।

अपरंच राजकारणीय-कर्तव्ये अनेकानि मतान्तराणि सञ्जातानि अस्मिन् पंचदशवर्षीये गान्धियुगे । बहवः पक्षोपपक्षाः प्रवृत्ताः । तेषाम् गतागतम् नवीनानांश्चागमनम् प्रत्यक्षीकुर्वद्भिः प्राज्ञैरधुनाऽऽशाऽपि त्यक्ता ! अस्तु ।

अधुनाऽपि अयमेव प्रसंगः। जातीय निर्णायके विषये राष्ट्रीयसभायाःकार्य-कारिण्या समित्या तथा च 'पार्लमेंटरी बोर्ड' इति ख्यातया अपरया समित्या च स्वीकृत एकः प्रस्तावोऽतीव हानिकरो भविष्यतीति बहूनाम् नेतॄणाम् सुनिश्चितम् मतम् । अखिला वङ्गीया नेतारस्तु कतिपयदिवसेभ्यः प्रागेवाक्रोशपूर्वक-मेवमेव प्रतिपादयन्ति । पण्डित मालवीयमहोदयाः स्वनामधन्या राष्ट्रीय-

सभाया भीष्माचार्याः, तथा च केलकर अणे प्रभृतयः बृहन्महाराष्ट्रीया नेतारः जमनादास मेहताप्रमुखा मुम्बई प्रान्तीया अनेके राष्ट्रसभाभक्ताः, सर्वेऽपि इमम् जातीयनिर्णयविषयकम् गान्धेस्तथा तस्यान्धानुयायिनां च मतम् हानिकरमेवेति मन्यन्ते ।

एवं प्रवृत्ते वादेऽद्यापि कश्चन निर्णयो नाभवत् । अत्रान्तरे राष्ट्रीयसभाया नवचत्वारिंशत्तमस्य महाधिवेशनस्य कार्यभारोऽङ्गीकृतः मुम्बईनिवासिभिर्गान्धीभक्तैः । तदधिवेशनमागामिन्याश्विनमासेऽवश्यपक्षे भविष्यति । तस्मिन्नेव अयमेव जातीय-निर्णयो वादविषयी भविष्यति । अपरं च, अस्याम् सभायाम् अनेके नेतारः राष्ट्रसभाभक्ताश्च विविधैर्बन्धनैः प्रतिरुद्धाः प्रवेष्टुम् न शक्नुवन्ति । तथा अस्याः सभाया अधिवेशने मताधिकारमपि ते न प्राप्नुवन्ति । अत एव विविधैरुपपक्षैर्मिलित्वा जातीयनिर्णयस्योपर्यवश्यम् विचारः कर्तव्यः । तदेव कार्यम् सरदारगृहे निश्चितायाम् परिषदि संप्रतिपत्स्यते इति सुबहु स्पष्टम् । अत एवाभिनन्दामो वयम् सर्वानपि नेतनिति शम् ।"

अस्यामवस्थायां हिन्दूहितैषिणां माननीय मालवीयमहोदयानामन्येषां नेतॄणां साम्प्रतिकः समुद्योगः व्यवस्थापरिषद्प्रवेशरूपः समीचीन एव ।

---

## ग्राहकमहोदयेभ्यो विज्ञापनम् ।

श्रीमन्तः पाठकमहोदयाः ! घोरेऽस्मिन् धर्मविप्लवसमये सर्वाभ्युदयप्रदस्य सनातनधर्मस्य प्रचाराय प्रयतमानोऽयं "सूर्योदयः" भवतां सकरुणमवलोकनमाकाङ्क्षति । श्रीमतां व्यतीताब्दस्य वार्षिकं साहाय्यं यदासीत् तत्तु गताषाढमासे समाप्तिमगात् । अतः शीघ्रं धनादेश-( मनीआर्डर ) द्वारा स्वकीयं वार्षिकं साहाय्यं प्रेषयन्तु । सनातधर्मस्य कृते किञ्चित् साहाय्यं वितरितुं सनातधर्मपक्षपातिनो भवन्तः पराङ्मुखा न भविष्यन्तीति सुदृढोऽस्माकं विश्वासः । आशास्महे भवन्तोऽस्य वार्षिकं साहाय्यं नूनं प्रेषयिष्यन्तीति । अथवा वी० पी० द्वारा "सूर्योदयं" प्रेषयितुमाज्ञापत्रं कार्य्यालये संप्रेष्य स्वकीयं ग्राहकत्वं संरक्षिष्यन्ति । धनादेशपत्रे स्वपूर्णसंकेतेन सह नवीनोऽहं ग्राहकः, प्राचीनो वा इति सुस्पष्टतया लेखनीयम् ।

येषां खलु महोदयानां "सूर्योदय" ग्रहणेच्छा न वर्त्तते, तैः कृपया एतत्-विज्ञप्ति-पठनानन्तरमेव वयं विज्ञापनीयाः, अन्यथा निरर्थकं वयं क्षतिग्रस्ता भविष्याम इति सबहुमानं सानुरोधं च निवेदयामः ।

× × × ×

ग्राहक संख्या नामानि—

३२५८ श्रीविजयप्रसाद गिरिजाशंकर द्विवेदी,-अहमदाबाद ।
३२५९ श्रीसत्यनारायणमिश्र, दानापुर-कैण्ट ।
३२६० „ विद्यार्थी अयोध्यानाथशर्मा, हजारीबाग ।
३२६१ „ रामविलास शुक्ल, अम्बालपुर ।

ग्राहक संख्या नामानि
३२६२ „ जनार्दनपाण्डेय विद्यार्थी, भागलपुर ।
३२६३ „ नारायणगोपाल पौराणिक, नासिक ।
३२६४ „ जगदीशमिश्र, आरा ।
३२६५ „ सुखदेववर्मा विद्यार्थी, मुजफ्फरगढ ।
३२६६ „ विद्यार्थी दयानन्द छगन लाल, मोड़ासा ।
३२६७ „ विद्यार्थी उत्सवलाल रामकृष्णजी पौराणिक, मोड़ासा ।
३२६८ „ संपादक छात्रसमिति, फतूहा ।
३२६९ „ शिवप्रसादमिश्र विद्यार्थी, कटैया ।
३२७० „ पुरुषोत्तमदास पुरोहित बी० ए०, मारवाड़ ।
३२७१ „ आनन्दराम ब्रह्मचारी, श्रीनगर ।
३२७२ „ विद्यार्थी विभूतिप्रसाद त्रिपाठी, गोरखपुर ।
३२७४ „ एम० रामचन्द्रराव प्रिंसिपल, उडिपी ।
३२७५ „ पं० दामोदर महापात्र, पुरी ।
३२७६ „ गजानन नानालाल पाठक, बड़ौदा ।
३२७७ „ विष्णुशंकर विजयशंकर पंड्या, „
३२७८ „ कन्हैयालाल मोतीलाल जोशी, „
३२७९ „ भवानीशंकर विद्याशंकर विद्यार्थी, „
३२८० „ गोपालकृष्ण शास्त्री, „
३२८१ „ प्रिंसिपल चमरजेन्द्र, सं० कालेज ।
३२८२ „ टी० के० नरसिंहाचारी । हैदराबाद ।
३२८३ „ शिवकुमारझा विद्यार्थी, दरभंगा ।
३२८४ भालचन्द्रराव तैलंग, बी० ए० रामपुर ।
३२८५ द्वारिका प्रसाद विद्यार्थी, भागलपुर ।
३२८६ सकलसिंह, हेडमास्टर, सारन,
३२८७ पं० तीर्थनाथ झा, दरभंगा ।
३२८८ यमुनाशंकर देवशंकर शास्त्री, गुजरात
३२८९ योगानन्दशर्मा, श्रीदुर्गादत्त मंदिर वाचनालय,
३२९० मार्कण्डेय राय चुन्नीलाल रावल, वीरगांव ।
३२९१ जानकीनाथ विद्यार्थी, श्रीनगर
३२९२ पं० चन्द्रभालमणि त्रिपाठी साहित्याचार्य्य, अयोध्या ।
३२९३ हरिप्रसाद राजपुरोहित, गढ़वाल
३२९४ लक्ष्मणदत्त शास्त्री कविराज, लाहौर
३२९५ सत्यनारायण मिश्र, मिश्रविगहा
३२९६ पं० व्रजनाथशर्मा सारस्वत, आगरा
३२९७ लाइब्रेरियन एम० ई० मिशनस्कूल लाइब्रेरी, रानीखेत,
३२९८ मंगलपाण्डेय, महेवा
३२९९ आद्याचरण झा विद्यार्थी, मगरौली

३३०० विश्वनाथ शर्मा, भूधरमल चण्डीप्रसाद-छात्रावास काशी ।
३३२७ वी० आर० देव वकील, बड़ौदा
३३२८ भट्ट मणिलाल मूलजीराम, मोड़ासा
३३२६ पंड्या भाईलाल भाई दामोदर बड़ौदा
३३३० शास्त्री महाशंकर हिम्मतरामजी "
३३३१ गोर शम्भुप्रसाद जगजीवनजी, "
३३५५ पं० गिरिधरशर्मा शास्त्री मुलतानसिटी,
३३५६ वंशीधर शर्मा शास्त्रीयः "
३३६४ वं० रावजी, केशवरामजी जोशी बड़ौदा
३३६५ नाथु भाई कृपाशंकर शुक्ल— "
३३६६ गौरीशंकर छोटालाल शुक्ल "
३३६७ चन्दुलाल दौलतराम देव जोशी "
३३६८ रुद्राराध्यशर्मा काशी ।

## परिशिष्ट-परीक्षा केन्द्रम् ।

निम्नाङ्कितस्थलान्यपि अखिलभारतीयसंस्कृताध्यात्मिक-विश्वविद्यालयस्य केन्द्राणि सन्ति । एषु केन्द्रेष्वपि अस्मिन् वर्षे परीक्षागृहीता भविष्यन्तीति व्यवस्थापकैः सह तेषां नामानि निर्दिश्यन्ते ।

१—श्रीयुत पं० गंगाविष्णुपाण्डेयः, काव्यपुराणतीर्थः । हितकारिणी संस्कृतपाठशाला, जब्बलपुर । २—श्रीयुत पं० चिरञ्जीलालशर्मा वैद्यरत्न विश्वविद्याश्रम, कठकुइयां, चन्दौसी, ( मुरादाबाद ) ३—श्रीयुत पं० दिवाकर-शुक्ल विद्याभूषण, कुंवरलालसिंह मानसिंह ब्रह्मचर्याश्रम, मैनपुरी, यू० पी० । ४—श्रीयुत हृषिकेशभट्टाचार्य एम० ए० प्रिन्सिपल, सनातनधर्मकालेज, नवाबगञ्ज, कानपुर । ५—आर० सी० शास्त्री, प्रसिडेण्ट-सनातनधर्मसभा, संगरिया बीकानेर ।

× × × × ×

## "संगरिया ( बीकानेर ) संस्कृतपरीक्षा केन्द्रविज्ञप्तिः" ।

बीकानेरप्रान्तीया विशेषतश्च श्रीगङ्गानगर मण्डलीया जना एतद्विज्ञाय नूनमेव प्रसन्ना भविष्यन्ति यत् संगरियायाः ( मण्ड्याः ) सनातनधर्म सभा, वाराणसीयेनाऽखिलभारतवर्षीय संस्कृत विश्वविद्यालयेन, केन्द्रत्वेन स्वीकृताऽस्ति । अयं हि विश्वविद्यालयः प्रसिद्धेष्वन्यतम इति नाऽविदितं संस्कृतज्ञानाम् । अत एवाऽस्य परीक्षासु प्रवेष्टमहमेतत्प्रान्तीयान् सर्वानेव संस्कृताध्यायिनोऽनुरुन्धे । परीक्षा पाठ्यपुस्तकज्ञानायाऽऽवेदनपत्रप्राप्त्यै च मन्त्री, अ०भा० सं० वि० वि० महामण्डल भवन, जगतगंज बनारस इति सङ्केतेन व्यवहर्त्तव्यम् ।

ले०—आर० सी० शास्त्री प्रैसिडेन्ट सनातनधर्मसभा संगरिया ( बीकानेर )

# उपयुक्तक्रिया-कर्मिकसङ्कलनम् ।

सङ्कलयिता—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री ।
( 'मुलतान'-स्थ-श्रीसनातनधर्मसंस्कृतकालेजाऽध्यापकः )

——:※:——

( क्रमागतम् )

कंपाता है १६ ।

आन्दोलयति । कम्पयति, अचकम्पत् । चलयति, अचीचलत् । तरलयति । दोलयति, अदूदुलत् । ( ३ ) धुनाति, अधुनात् । ( १ ) धुनोति, अधुनोत् । धूनयति, अदूधुनत् । ( ३ ) धूनोति, अधूनोत् । प्रेङ्खयति । प्रेङ्खोलयति । भ्रमयति, अबिभ्रमत् । विघूर्णयति । वेपयति, अविवेपत् । ( ऋदित्त्वान्न ह्रस्वः ) ।

( २ ) कांपता है १७ ।

एजति, ऐजीत् । कम्पते, अकम्पिष्ट । चलति, अचालीत् । परिप्लवते । प्रेङ्खति, प्रैङ्खत् । वेपते, अवेपिष्ट । वेल्लति, अवेल्लत् । स्पन्दते, अस्पन्दिष्ट । स्फुरति ।

( २ ) कूदता है १८ ।

( १ ) उत्प्लवते, उदप्लवत् । कूर्दते, अकूर्दिष्ट ।

कृपा करता है १९ ।

अनुकम्पते, अन्वकम्पिष्ट । ( १ ) अनुक्रोशति, अन्वक्रुक्षत् । अनुगृह्णाति, अन्वग्रहीत् । अनुगृह्णीते । ( २ ) कृपायते । ( २ ) करुणायते । *दयते, अदयिष्ट ।

( २ ) कोशिश करता है २० ।

उत्सहते । ( १ ) उद्यच्छते, उदयंस्त । ( १ ) उद्युङ्क्ते, उदयुङ्क्त । क्रमते । प्रयतते, प्रायतिष्ट । ( १ ) व्यवस्यति ।

खण्डन करता है २१ ।

( अपनयति । ( ४ ) अपाकरोति, अपाकार्षीत् । अपास्यति । अपोहति । द्रवयति । निरस्यति, निरास्थत् । ( ४ ) निराकरोति, निराकार्षीत् । निराचष्टे ( १ ), निराचष्ट, निराख्यत् । ( १ ) निरुणद्धि, न्यरौत्सीत् । निवारयति । ( ४ ) पराकरोति । परास्यति । प्रत्याख्याति ( अस्येट् नाऽस्ति, आर्द्धधातुके प्रयोगाऽभावात् ) । प्रत्याचष्टे, प्रत्याचष्ट ( १ ) । ( १ ) प्रत्यादिशति, प्रत्यादिक्षत् । ( १ ) व्यपनयति । व्युदस्यति ।

---

* दयते । दयधातोः कर्म्मणः शेषत्वेन षष्ठी भवति ।

(१) केवलाऽनिट् । (२) अकर्म्मकः : ( ३ ) वेट् । ( ४ ) लृटि सेट् अन्यत्राऽनिट् ।

खरीदता है २२ ।

( १ ) क्रीणाति, अक्रीणात, अक्रैषीत् । क्रीणीते, अक्रेष्ट ( १ ) ।

खाता है २३ ।

( १ ) अत्ति, आदत् । ( ४ ) अभ्यवहरति, अभ्यवहार्षीत् । अश्नाति, आश्नात् । कवलयति । ( ४ ) कवलीकरोति । खादति, अखादीत् । ग्रसते, अग्रसिष्ट । जक्षिति । जेमति । ( १ ) प्रत्यवस्यति । ( १ ) प्साति । भक्षयति, अबभक्षत् । ( १ ) भुङ्क्ते, अभुङ्क्त, अभुक्त ।

( २ ) खिलता है २४ ॥

उन्मिषति । उन्मीलति । पुष्प्यति ( १ ) प्रबुध्यते । फुल्लति ( १ ) भिद्यते, अभिद्यत । विकचते । विकसति । विजृम्भते व्यजृम्भिष्ट । स्फुटति, अस्फुटीत् ( कुटादिः ) ।

( पुष्प ) खिलाता है २५ ( क )

उन्निद्रयति । उन्मीलयति । दलयति, अदीदलत् । विकासयति ।

( अन्न ) खिलाता है २५ ( ख ) द्विकर्म्मकः ।

आदयते + । अभ्यवहारयति ॐ । आशयति, आशिशत् । खादयति × अचखादत् ( ऋदित्वात् ) । प्रत्यवसाययति । भोजयति, अबूभुजत् । ( तेन ) भक्षयति ।

खुश करता है २६ ।

अनुरञ्जयति । आनन्दयति, आननन्दत् । आप्याययति । आवर्जयति । आह्लादयति, आजिह्लदत् । तर्पयति अतीतृपत्-अततर्प्पत् । तोषयति, अतूतुषत् । निर्व्वापयति । प्रमुदं ददाति ( १ ) । प्रमुदमुत्पादयति । प्रमोदयति, प्रामूमुदत् । प्रसादयति, प्रासीषदत् । प्रह्लादयति । ( ४ ) प्रियाकरोति । प्रीणयति, अप्रीणयत् । ( १ ) प्रीणाति, अप्रीणात् । प्रीतिं जनयति । मदयति । मुदं ( १ ) यच्छति । रमयति, अरीरमत् । सुखयति । सुखाकरोति ( ४ ) । हर्षं दिशति ( १ ) । ( १ ) हर्षमादत्ते ।

खुशबूदार करता है ॥ २७ ॥

वासयति । सुरभयति । ( ४ ) सुरभीकरोति । ( ४ ) सुरभीकुरुते ।

---

+ आदयते, खादयति-अनयोर्योगे कर्मत्वं न, आदयते खादयति वाऽन्नं बटुना ।

ॐ अभ्यवहारयति, आशयति, प्रत्यवसाययति, भोजयति-योगे तु कर्म्मत्वम्, तत्र बटुमिति योज्यम् ।

( १ ) अनिट् । ( २ ) अकर्म्मकः । ( ३ ) वेट । ( ४ ) लृटि सेट्, अन्यत्राऽनिट् ।
( ५ ) लृटि सेट्, अन्यत्राऽनिट् ।

( २ ) खुश होता है २८।

आनन्दति। आनन्दमालिङ्गति। आप्यायते। ( १ ) तुष्यति, अतुष्यत्। ( ३ ) तृप्यति, अतर्पीत्-अताप्र्सीत्-अत्राप्सीत्-अतृपत्। नन्दति, अनन्दीत्। निर्वृणोति। निर्वृतिं विवृणोति। परितोषं परिशीलति। प्रमुदितो निष्पद्यते ( १ )। ( १ ) प्रमोदमायाति। ( १ ) प्रसीदति, प्रासदत्। ( १ ) प्रहृष्टः सम्पद्यते। प्रीणाति ( १ )। प्रीतिञ्चुम्बति। प्रीतो जायते। ( १ ) प्रीयते, अप्रीयत। माद्यति, अमाद्यत्। ( १ ) मुदमादत्ते। मोदते, अमोदिष्ट। रमते, अरंस्त ( १ )। सन्तुष्टो भवति। सुखायते, असुखायिष्ट। सुमनायते। सुमनीभवति। ( ४ ) हर्षं स्वीकुरुते। हृष्यति, अहृष्यत्। ह्लादते, अह्लादत।

( २ ) खेलता है २९।

आक्रीडते। क्रीडति, अक्रीडीत्। खेलति। दीव्यति, अदीव्यत्। (१) रमते, अरंस्त। विलसति। ( ४ ) विहरति, व्यहार्षीत्।

खोलता है ३०।

उद्घाटयति, उदजीघटत्। विवृणोति।

गिनता है ३१।

गणयति, अजी ( ज ) गणत्। संख्याति * समख्यात्। ( १ ) सञ्चष्टे, समचष्ट।

( २ ) गिरता है ३२।

क्षरति, अक्षारीत्। ( १ ) च्यवते, अच्योष्ट। पतति, अपप्तत्। भ्रंशते। भ्रश्यति। विगलति, व्यगलत्। विशीर्यते, व्यशीर्यत। विस्रंसते। स्खलति, अस्खालीत्।

※ गुस्सा होता है ३३।

कुप्यति, अकुप्यत्। ( १ ) क्रुध्यति, अक्रुध्यत्। रुष्यति। (१) संरभते।

गूंथता है ३४।

गुम्फति, अगुम्फीत्। ग्रथ्नाति, अग्रथ्नात्। ग्रन्थयति, अजग्रन्थत्। ( १ ) निबध्नाति, न्यभान्त्सीत्। ( १ ) प्रबध्नाति, प्राबध्नात्। सन्दृभति।

( २ ) घटता है ३५।

( १ ) अपक्षीयते। ( ३ ) अपचीयते। अल्पीभवति। क्षयति (१)।

( २ ) घूमता है ३६।

---

* सम्पूर्वस्य ख्यातेः प्रयोगो न्यासकारमते नास्ति। अस्याऽर्धधातुके प्रयोगाभावादिड् नास्ति।

( १ ) अनिट्। ( २ ) अकर्मकः। ( ३ ) वेट्।

※ क्रोधार्थधातूनां योगे चतुर्थी भवति; सोपसर्गस्य क्रुध्यतेस्तु द्वितीया।

अटति, आटीत् । अटाट्यते । घूर्णते । चङ्क्रमीति । पर्य्यटति । भ्रमति, अभ्रमीत् । भ्राम्यति, अभ्राम्यत्, अभ्रमत् । बम्भ्रमीति । सञ्चरति + समचरत् ।

( २ ) चलता है ३७ ॥

चलति, अचालीत् । ( १ ) प्रतिष्ठते, प्रातिष्ठत-प्रास्थित ।

चाटता है ॥ ३८ ।

आस्वादयति, आसिष्वदत् । रसयति । लीढे, अलीढ ( १ ) । ( १ ) लेढि, अलेट् ।

चाहता है ३९ ।

अपेक्षते । अभिलष ( ष्य ) ति; अभ्यलष ( ष्य ) त् । अभीप्सति । आकाङ्क्षति, आकाङ्क्षीत् । आशंसते, आशंसिष्ट । आशास्ते, आशासिष्ट । इच्छति, ऐच्छत्-ऐषीत् । ईप्सति, ऐप्सत्-ऐप्सीत् । ईहते, ऐहिष्ट । कामयते, अचीकमत । लिप्सते, अलिप्सिष्ट । वष्टि । वाञ्छति, अवाञ्छीत् । समीहते । स्पृहयति ( एतद्योगे ईप्सितश्चतुर्थीभाक् ) ।

चुराता है ४० द्विकर्मकः ।

( ४ ) अपहरति, अपाहार्षीत् । चोरयति, अचूचुरत् । मुष्णाति, अमुष्णात् । लुण्ठयति, अलुलुण्ठत् । स्तेनयति ।

चुगली करता है ४१ ।

पिशुनयति । सूचयति, असुसूचत् ( अदन्तोऽयम् ) ।

( २ ) चूता है ४२ ।

गलति । क्षरति, अक्षरत् । (१)च्यवते । द्रवति, अदुद्रुवत्(१) । श्चोतति । श्च्योतति, अश्च्योतीत् । स्यन्दते, अस्यन्दिष्ट । (१)स्रवति, असुस्रुवत् ।

छिपाता है ४३ ।

अन्तरयति । अपलपति । ( १ ) अपह्नुते, अह्नोष्ट । ( १ ) अपिदधाति, अप्यधात् । आच्छादयति, आच्छादयत् । आवृणीते । आवृणोति, आवृणोत् । गोपयति, अजूगुपत् । गोपायति, अगोपायीत्-अगोपीत्-अगौप्सीत् । तिरयति । ( ३ ) निगूहति, न्यगूहत् । निघुलयति । निह्नुते, न्यह्नुत (१) । ( १ ) पिदधाति । पिधत्ते ( १ ) प्यधित । ( १ ) व्यवदधाति । संवृणीते । संवृणोति, समवृणोत् । स्तृणाति, अस्तृणात् । ( १ ) स्तृणोति, अस्तृणोत् । स्थगयति । ( क्रमशः )

---

+ सञ्चरतिस्तृतीयायुक्तस्त्वात्मनेपदी भवति, रथेन सञ्चरते ।

( १ ) अनिट् । ( २ ) अकर्मकः । ( ३ ) वेट् । ( ४ ) लुटि सेट्, अन्यत्राऽनिट् ।

# जगद्गुरु "स्वामिशङ्कराचार्यस्य निश्चितसमयः ।

ले० पं० छज्जूरामशास्त्री विद्यासागरः ।

शंकरः शंकरः साक्षात्प्रशस्यः कस्य नास्ति हि ।
लोकतापहरो यस्याद्वैतवादसुधाकरः ॥ १ ॥

जगद्गुरोः स्वामिशंकराचार्यस्य भगवतो जन्म केरलदेशान्तर्गत 'कालदी' नामकग्रामे द्रविड़ब्राह्मणशिवगुरुशर्मणो धर्मपत्न्या मन्दालसाभिधाया गर्भादभूत्, कदाभूदित्यत्र महान् मतभेदो वर्तते । केचिद्विद्वांसो भणन्ति, यद् द्वारिकामठस्थितायां पत्रिकायां स्वामिशंकराचार्यस्य जन्म युधिष्ठिर-संवत्सरेऽर्थात्कलियुगस्यैकत्रिंशदधिकषड्विंशतिशते संवत्सरे ( २६३१ ) अभूदिति लेखो विद्यते । तदा 'ईस्वीय सनतः सप्तत्यधिकचतुःशतहायनेभ्यः ( ४७० ) प्राक्संपद्यते । यदि च राजतरंगिणीमतमनुसृत्य कलिसंवत्सरोपक्रमं. ईस्वी संवत्सरतः वसुवेदाब्धिनेत्राब्देभ्यः ( २४४८ ) पूर्वं मन्येरन्, तदा स्वामिशंकराचार्यस्य जन्मकालो वह्निनागेन्दुहायने ( १८३ ) ईस्वी संवत्सरे भवति । अस्मन्मते तु " विधिनागेशवह्न्यब्दे ( ३८८८ ) विभवे मासि माधवे । शुक्लपक्षे दशम्यां तु शंकरार्योदयः स्मृतः" ॥ अस्य पद्यस्यानुसारेणैव मन्तव्यः । प्रो० म्याक्समूलर प्रो० मुग्धानलप्रभृतीनां पाश्चात्यविदुषां पं० राजारामशास्त्रि-पं० हरप्रसादशास्त्रिप्रभृतीनां भारतीयाभियुक्तानामपि चेदमेव मतम् । तैलंगकाशीनाथमतानुसारेण स्वामिशंकराचार्यः पूर्णवर्मणः समकालीनोऽवर्तत, यतः काव्यशारीरिकभाष्ये पूर्णवर्मणो नामायातम् । मगधाधिपः पूर्णवर्मा च सप्तम्या ईस्वीशताब्द्याः प्रारंभे बभूव । परं नायं हेतुर्निर्णायको भवितुमर्हति । शारीरिके हि कतिपयनृपाणामन्येषामपि नामान्यागतानि । यद्येकः शंकराचार्यः सर्वेषां समकालीनो मन्येत, तर्हि विचित्रव्यवस्था भवेत् । तैलंगमहोदयश्चेदमपि वदति, यच्छारीरिकभाष्ये पाटलिपुत्रस्य नाम शंकराचार्येणेत्थं लिखितं, येन ज्ञायते तदानीं तत्पुरं यथावदुवास । ईशाष्टमशताब्द्यां च तन्नगरं ननाश । अतः पूज्यस्वामी, समयादस्मात्पूर्वमेवाविद्यत । परन्तु तैलंगमहोदयस्येदमप्यनुमानं न सत्यम्, यत ईशाष्टमशताब्द्यां हि ननाशेत्यत्र नास्ति किमपि पुष्टं प्रमाणम् । वयमद्य स्वोक्तसमयसाधकं प्रमाणमुदाहरामः । स्वामिशंकराचार्येण पूर्वमीमांसाभाष्यकारस्य शबरस्वामिनो नामशारीरिकभाष्ये लिखितम्, यथा—"इत एवाकृष्याचार्येण शबरस्वामिना प्रमाणलक्षणे वर्णितम्" शबरस्वामिनश्च निश्चितकालः

ईशाष्टमशताब्दी वर्तते। यस्माच्छवरस्वामिना कुरुक्षेत्रमध्यवर्तिस्थानेश्वर-नगराधिपतिसम्राजो हर्षवर्धनस्य लिंगानुशासनकोषो व्याख्यातः यथाच तैर्व्याख्यान्ते लिखितम्। "भट्टदीप्तस्वामिसूनुः शवरस्वामिपंडितः। लिंगानुशासनव्याख्यां कृतवान् विदुषां मुदे॥ लिंगानुशासनकोषश्च हर्षवर्धनेन पाणिन्यादिमुनिमतमनुसृत्य प्रणीतः। यथा-व्याडेः किंच पतंजलेर्वररुचेर्विद्यानिधेः पाणिनेः। सूक्तांल्लिंगविधीन् विचार्य सुगमं श्रीवर्धनस्यात्मजः। अव्यं व्यापि च हर्षवर्धन इदं स्पष्टीकृतप्रत्ययं लिंगानामनुशासनं रचितवान् विद्यार्थिसंसिद्धये"*॥ रत्नावलीनागानन्दप्रियदर्शिकानाटकानां लिंगानुशासनकोषस्य च प्रणेतुर्नृपतिहर्षस्य राज्यकालः षडधिकषट्शतात् (६०६) ईस्वीसंवत्सरादारभ्याष्टचत्वारिंशदधिकषट्शतेस्वीवर्षपर्यन्तं बहुशिलालेखैस्तत्कालीनस्य चीनीयात्रिणो ह्वांत्साङ्गस्य लेखेन च निश्चितः। कविवरा बाणमातङ्गमयूरादयोऽस्यैव महाराजहर्षवर्धनस्य सभापण्डिता आसन्। यथा च लिखितमपि—"अहोप्रभावो वाग्देव्या यन्मातंगदिवाकरः। श्रीहर्षस्याभवत्सभ्यः समो बाणमयूरयोः॥ बाणेन "हर्षचरिते" अस्यैव नृपतेर्हर्षस्य जीवनचरित्रं चित्रितम्। सुप्रथितां कादम्बरीमयमेव महाकविर्बाणो लघुपुत्रश्चास्य प्रणीतवान्। यथा धनपालकृतसूक्तिमुक्तावल्यां प्रतिपादितम्—"केवलोऽपि स्मृतो बाणः करोति विमदान्कवीन्। किं पुनःक्लृप्तसंधानपुलिन्दकृतसंनिधिः। शंकरदिग्विजये माधवाचार्यो महाकविबाणं स्वामिशंकराचार्यस्य समकालीनममन्यत। किन्तु मिथ्यैतत्। यतो बाणस्य स्वामिनश्च प्रादुर्भावकाले शतद्वयवर्षस्यान्तरं पतति, यन्महदधिकम्। पूज्यस्वामिनः "ब्राह्मणस्य च देहोऽयं क्षुद्रकामाय नेष्यते। परमात्मविचाराय प्रेत्यानन्त्यसुखाय च। इत्यादिमहर्षिवाक्यानुसंधानाद्बाल्यावस्थायामेव वैराग्यमजायत। येन स विवाहसंस्कारं मुक्तिप्रबन्धकं ज्ञात्वा "यदहरेव विरजेत्तदहरेव प्रव्रजेदिति'—वेदवाक्यमनुसृत्य परिव्राजको बभूव। परिव्राजकतामवाप्य तेन स्वात्मैव नोद्धृतः, किन्तु सकलसंसाराय मुक्तिमार्गो दर्शितः। सर्वेषु जनपदेषु गत्वा निजाद्वैतसिद्धान्तं वितस्तार। ततश्च "कीर्तिरक्षरसंबद्धा चिरं तिष्ठति भूतले" इतिन्यायानुसारेण स्वसिद्धान्तपोषकान् वेदान्तसूत्र-शारीरिकभाष्य-भगवद्गीताभाष्योपनिषद्भाष्य-सौन्दर्यलहरी-चर्पट-मंजर्यानन्दलहरीप्रभृतीन् वेदान्तग्रन्थानपि प्रणिनाय। वेदान्तसिद्धान्तो यद्यपि प्राचीनसमयादारभ्य भारतवर्षे प्रचलितस्तथापि बहुप्रचारः स्वामिशंकराचार्यस्य तदनुयायिनां च विदुषां ग्रन्थैरभवत्। यथापूर्वमीमांसायां धर्मजिज्ञासा विहिता, तद्वदुत्तरमीमांसायामर्थाद्वेदान्ते—ब्रह्मणो जिज्ञासा विद्यते। वैशेषिके विशेषपदार्थविवेचनम्, न्याये पंचावयव-

न्यायस्य विचारः, सांख्ये संख्यायाः ( बुद्धेः ) प्रधानत्वं प्रतिपादितम्। योगे चित्तवृत्तिनिरोधो विशेषतयाऽभिहितः। "वेदान्त, इत्यस्य संज्ञास्मादेवार्थाज्जाता। यद्वेदस्यान्तिमभागोपनिषद्वाक्यानामस्मिन्समन्वयः समपाद्याचार्यैः। वेदान्तसूत्रेषु विंशतिसन्नानि भाष्याणि विद्यन्ते। परं शारीरिकभाष्यं सर्वेषु तेषु परमुत्कर्षमावहति। प्रथमं तावत्सर्वेभ्य एव पुरातनं तत्, पुनश्च'गद्यरचना' तस्मिन्नेतादृशी विद्यतेऽनुपमा, यत्संस्कृतसाहित्ये तत्समा न कस्मिन्नपि ग्रन्थे लभ्यते। अयं त्वन्यो विषयो यद्बहुसूत्राणि श्रुतीश्च भाष्यकार एवमाकर्षति। यत् श्रुतयः सूत्राणि च तदभिमुखमागमनं नाभिनन्दन्ति। अस्तु। भाष्येऽस्मिन् तोटकाचार्यस्य ( आनन्दगिरेः ) रत्नप्रभा, सर्वतन्त्रस्ववाचस्पतिमिश्रस्य च भामतीटीकाऽतिप्रथिता विद्यते। न्यायवैशेषिकसांख्ययोगादिदर्शनेषु यावांस्तर्कवादो विद्यते न तावच्छ्रुतिप्रामाण्यं गृहीतमस्ति। किन्तु शारीरिक-भाष्ये प्रतिपदं श्रुतिप्रामाण्यं गृहीतम्। स्वामिशंकराचार्यस्य सिद्धान्तस्त्वेवः—ब्रह्मसत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः, ब्रह्मविद् ब्रह्मैव भवति" ब्रह्मज्ञानी संसारान्नित्यमुक्तो भवति, परं सा मुक्तिः केवलाज्ज्ञानादेवोत्पद्यते, न कर्मानुष्ठानात्। यथा च लिखितमपि—"ज्ञानादेव तु कैवल्यम्" यतः पुण्यपापकर्माणि संसारकारणानि भवन्ति। रमणीयचरणा रमणीयां योनिमापद्येरन्,, कपूयचरणाः कपूयां योनिमिति। शंकरदिग्विजयादिदमपि प्रतीयते, यत्स्वामिशंकराचार्यस्य भट्टपादकुमारिलस्य च प्रयागे समागमोऽभूत्। भट्टपादकुमारिलः कर्मकाण्डस्य प्रकाण्डपण्डित आसीत्। शावरभाष्यस्यानेन तन्त्रवार्तिकटीका विरचिता। अस्य सिद्धान्तो विद्यते—यद्वेदविहितकर्मानुष्ठानादेव जीवो ब्रह्मज्ञानाधिकारी भवति। यथा च लिखितमपि—"उभाभ्यामेव पक्षाभ्यां यथा खे पक्षिणां गतिः तथैव ज्ञानकर्मभ्यां प्राप्यते शाश्वती-गतिः॥ मण्डनमिश्रः पूर्वमेतस्यैव शिष्य आसीत्, ततः शास्त्रार्थे पराजितो भूत्वा स्वामिशंकराचार्यस्य शिष्यो बभूव। नाम चास्य स्वामिना 'सुरेश्वराचार्य, इति विहितम्। स्वामिकृतोपनिषद्भाष्यस्य व्याख्याऽनेन विहिता। भट्टपादकुमारिलोऽनीश्वरवादि-बौद्धान् पराजित्य पुनः श्रौतस्मार्तक्रियाः प्रचालयास। निष्प्रत्यूहमवर्धन्त श्रुतिशाखाः समन्ततः॥ तदनन्तरमेव शिष्टबौद्धान् समूलमुन्मूल्य स्वामि-पादैरपि वैदिकधर्मरक्षार्थं मठचतुष्टयं स्थापितम्। स्वजन्मभुवि शृङ्गेरीमठं, द्वारिकायां शारदामठं, जगन्नाथपुर्यां गोवर्द्धनमठं, केदारे ज्योतिर्मठं च। एतेषु चतुर्षु मठेषु क्रमेण तोटकाचार्यः, पद्मपादाचार्यो हस्तामलकाचार्यः सुरेश्वराचार्य श्चेति चतुरो विदुषः शिष्याँस्तेऽधिपतीनकार्षुः। एतच्चतुर्मठाधिपतयः साम्प्रतमपि जगद्गुरुशंकराचार्याः कथ्यन्ते। ते च परमविद्वांसो भवन्ति।

# शिशुचन्द्रवर्णनम् ।

—:o:—

"मनोभुवा मानवतीमनःस्थल-
प्ररूढमानाङ्कुरकर्त्तनाय किम् ।
लवित्रमेतच्छिशुचन्द्ररूपतः
शशाङ्कधारं प्रगुणीकृतं निशा ॥ १ ॥

"तारावर्णनम्"

दिवानिशभ्रान्तिवशात्पयोनिधौ
निशागिरेः श्रान्तरवेः प्रकम्पनात् ।
नभःप्रदेशे निशितारकामिषात्
विमुत्थिता भान्ति जलस्य बिन्दुवः ॥ २ ॥

"विरहिजनं प्रति चन्द्रप्रकृति वर्णनम्"

"क्षीराब्धौ जननं महेशशिखरे स्थानं स्वयं विप्रराट्
पुत्रो यस्य बुधश्च कल्पविटपी लक्ष्मीश्च यद्बान्धवौ ।
सोऽप्येवं विरहायुजां जनयति क्लेशोच्छ्रयं चन्द्रमा
या यस्य प्रकृतिः स्वभावजनिता सा न क्वचित् त्यज्यते ॥३॥

"प्रातश्चन्द्रवर्णनम्"

लोकं प्रमथ्य विरहाकुलितं निशायां
जातश्शशी स्फुटकलङ्कयुतस्तु युक्तम् ।
प्रातर्विमुच्य सकलं परपीडनं तत्
सूर्योदये कथमयं कृशतामयासीत् ॥ ४ ॥

"प्रातः सूर्यवर्णनम्"

चक्राणां परिपालकः प्रशमनः शान्तेरुलूकद्विजे
पद्मानां सुविकाशकः कुमुदिनीकान्तेः समाकर्षकः ।
पान्थान् हर्षयिता व्यथां जनयिता चौरस्य चेतःस्थले
काम्बोजप्रमदाकपोलसुभगः सूर्यो नभो गाहते ॥ ५ ॥

**श्रीमहेशदत्तद्विवेदी काव्यतीर्थः साहित्यशास्त्री,**
**श्रीगायत्रीयोगेश्वरब्रह्मचर्याश्रमसंस्कृतविद्यालयः,**
**बांदकपूर, जिला-सागर सी. पी. ]**

# सदुपदेशः ।

[ बृहद्भारत भातृमण्डले तथा छात्रालय-
बन्धुसमाजे प्रेषितं वक्तव्यम् । ]

—:※:—

अविप्लुतब्रह्मचर्यस्य नियतेन्द्रियग्रामस्य स्वाध्यायशीलस्यैव विद्या प्रसीदतीति छात्रैः स्वाध्यायविरोधिनोऽर्थान् दूरतो विहाय यथाशक्ति विधिना ब्रह्मचर्यव्रतं चरद्भि र्गुरुवचनमनुपालयद्भिश्च दीर्घकालं नैरन्तर्येण श्रद्धापूर्वकमध्ययनकर्मण्येव यत्नो विधेयः । तदेव हि छात्राणां परमं तपः ।

परोपकारादयः प्रशंसनीया धर्मास्तु स्वाध्यायस्याविरोधेन तदङ्गतया तदुपोद्बलकत्वेन सेवितव्या एव ।

विद्याप्रसादे हि निखिलमलापनयनात् सर्वार्थम् अबाधितविषयञ्च दिव्यं चक्षुरुन्मीलति, क्लेशानामपहत्या परमानन्दः समुद्भवति, गुणानां परिणामक्रमसमाप्त्या मनुष्यजीवनं सर्वथा कृतकृत्यं सम्पद्यते च ।

अत एव स्वजीवनस्य सार्थकता-संपत्तये विद्यार्थिभिः सकलै रुपायै र्विद्यैव समुपासनीयेत्याशंसनम् । छात्रवर्गाणां शुभमिच्छतः

गोपीनाथदेवशर्मणः

( महामहोपाध्याय, एम. ए., गवर्नमेण्ट संस्कृतकालेज—अध्यक्षस्य )

---

# संस्कृत-साहित्यस्याऽऽवश्यकता ।

——:o:——

ले०—श्रीमान् पं० केदारनाथत्रिपाठी ( गोलास्थः )

वाङ्मनःकर्मभिर्जातं सर्वपापं क्षमस्व मे ।
शरण्योऽसि हि देवेश पार्वतीप्राणवल्लभ ! ॥

भगवते परब्रह्मणे कोटिशो नमस्कारा विलसन्तु । यस्याऽसीमाऽनुकम्पाऽस्मासु संविभ्राजते । सम्प्रति सर्वे राष्ट्रसंघास्समुन्नति-लाभार्थं प्रयतन्ते । भारत-वर्षेऽपि समुन्नति-चर्चा प्रसरति । विचारणीयमत्र यत् "कया रीत्या समुन्नति र्भविष्यति समुन्नतेर्मूलं च किमिति" ।

कस्याऽपि राष्ट्रस्य समुन्नति-संचयार्थं प्रथमं तत्रत्य-साहित्ये दृष्टि-निक्षेप आचरणीयः। साहित्यादेव सर्वमवगम्यते। यत्र साहित्यं नास्ति तत्र समुन्नतिरपि व्योम-कुसुमायते। साहित्यमेव राष्ट्रस्य जीवनम्।

अस्माकं भारतीयानां साहित्यं सर्व-श्रेष्ठं सर्व-मान्यं च वर्तते। नास्त्यत्र संदेह-लेशः। किन्तु वयं साहित्यमजानन्तस्समुन्नतिं वाञ्छामस्तर्हि कथं सिद्धिं विन्देम।

प्रथमं साहित्यस्योन्नतिः कर्तव्या। साहित्यमस्माकं संस्कृतम्। संस्कृत-वाङ्मय एवास्माकं भारतीयानां कला-कौशल-चर्चा। नैतिक-धार्मिक-सामाजिकाः सर्वविधा ग्रन्थास्संस्कृत्रिमे वाङ्मये वर्तन्ते। अतोऽतीवोपयोगिनी संस्कृत-साहित्यस्य समुन्नतिः।

संस्कृत-साहित्यस्य तुलनां किमपि साहित्यं नार्हति। यादृशी मनोहारिणी भाषा संस्कृतसाहित्ये वर्तते, नान्यस्मिन् साहित्ये तादृशी।

बाणकवि-विरचिता कादम्बरी, दण्डि-विरचितं दशकुमारचरितं, अन्य-काव्याख्यायिकादीनि ग्रन्थरत्नानि समुपस्थितान्येव। येषां टीकाटीकान्तराणि भाषान्तरेष्वपि लभ्यन्ते।

कवि-शिरोमणि-कालिदासस्य कविताकुसुमोद्यानमिदमेव। भारवि-भवभूति-भास-माघाश्वघोष-प्रसन्नराघवकर्तृजयदेव-गीतगोविन्दकर्तृजयदेवेत्यादि कवीनां काव्यमस्मिन्नेव।

यादृशं पूर्णं व्याकरणमत्र विलसति, न तादृशं क्वापि साहित्ये। छन्दसां का वार्ता यत्राऽपौरुषेया वेदास्स्वयमेव छन्दोनिबद्धाः। शिक्षा-कल्प-निरुक्त-प्रभृतीनां प्रथम आविष्कारोऽस्मिन्नेव। अद्वैतप्रतिपादको वेदान्तस्याऽपि प्रथमं जन्माऽत्रैव। न हि केवलं भारतीयानामेव मनोहारिणी भाषाऽत्र विलसति, अपि तु पाश्चात्या अपि मुक्तकण्ठं प्रशशंसुः। किमधिकेन चतुर्दश विद्या विलसन्ति यत्र—

अङ्गानि वेदाश्चत्वारो मीमांसा न्यायविस्तरः।
धर्मशास्त्रं पुराणं च विद्याश्चैताश्चतुर्दश॥

अतस्स्वर्णप्रसवितृ-भारत-भू-मातृ-हितेच्छवस्संस्कृत-साहित्यस्योन्नतौ प्रयतन्ताम्।

# "कलौ स्वेच्छा प्रवर्त्तनम्"

लेखकः—श्रीरामविलासचतुर्वेदी काव्यपुराणतीर्थः पुराणरत्नम् ।
लक्ष्मी-संस्कृत-विद्यालय, मेहदीबगान (वर्द्धमान)

करालेऽस्मिन् कलौ सर्वे जनाः स्ववर्ण-धर्मरहिताः कालमतिपातयन्ति । परस्परं विवदमानाः सन्तोऽधार्मिकान्दोलनं कुर्वन्ति । भगवद्भक्ति-रहिता एते जना मिथः कलहमुत्पाद्य जल्पन्ति, "यद् भो भोः ! मूर्तिपूजा न कर्त्तव्या, अश्मनिर्मितमूर्तौ किं भगवान् तिष्ठति ! परित्यजन्तु यूयमतः मूर्तिपूजनम् । पितृ-श्राद्धादिकं च न करणीयम् । अस्माकं पितरः लोकमिमं विहाय कुत्र गतवन्त इति निर्णेतुमशक्यत्वात् । तर्हि कमुद्दिश्य पिण्डदानादिकं कर्त्तव्यम्" ? किं पुनः हीनवर्णाः, अपि तु ब्राह्मणा, यान् ब्राह्मणान्—श्रीभगवान् ब्रह्मदेवो वेदादि-रक्षणार्थं नियुक्तवान्, ते ब्राह्मणा अपि स्वधर्मं कर्म च विहाय अन्यानपि जनान् समुपदिशन्ति—यत् मूर्तिपूजा न कर्त्तव्या, श्राद्धादि कर्म च परि-हरणीयम् । सम्यगुक्तम् भगवता वाल्मीकिना रामायणे यथा—

"ब्राह्मणाः कलिमाश्रित्य, जायन्ते ब्रह्मयोनिषु ।
परस्परं विरुध्यन्ति, भगवद्धर्म-बाधकाः ॥"

सम्प्रति पाश्चात्यशिक्षादीक्षिता भारतीयाः पाश्चात्य-सभ्यतामेवानुकुर्वन्ति । वदन्ति चैते—यदस्माकं पूर्वजा मूर्खा आसन् । इदानीं त्वेते प्रतिदिनमेव नवीनां नवीनां पद्धतिमाविर्भावयन्ति । विधवाविवाहं च संचालयन्ति । "विगतो धवो पतिर्यस्याः सा विधवा । या हि पतिरहिता सा पति सहिता कथमुच्यते ? अपि च विधवायां याः खलु वर्णसंकर-संततयः समुद्भविष्यन्ति, ताः पितृश्राद्धादि कर्म च त्यक्ष्यन्ति । भगवन्तं वासुदेवं प्रति अर्जुनस्योक्तिरियम् । गीतायां—

"संकरो नरकायैव, कुलघ्नानां कुलस्य च ।
पतन्ति पितरो ह्येषां, लुप्तपिण्डोदकक्रियाः ॥
दोषैरेतैः कुलघ्नानां, वर्णसंकरकारकैः ।
उत्साद्यन्ते जातिधर्माः कुलधर्माश्च शाश्वताः ॥
उत्सन्नकुलधर्माणां, मनुष्याणां जनार्दन !
नरके नियतं वासो, भवतीत्यनुशुश्रुम ॥

अतो निगदित श्लोक प्रमाण्यात् विधवाविवाहो न कर्त्तव्यो दोषावहत्वात्, कुलधर्म-सनातनधर्मनाशकत्वाच्च ।

अपि चैते वदन्ति, भोः! "यदि वयं सर्वे परमात्मनः पुत्राः, तदा कथमस्माकं मध्ये उच्चनीचव्यवहार इति। सर्वे वयं समान-भाजनतां प्राप्स्यामः। यः खलु अयं ब्राह्मणोऽयं क्षत्रियो वा इति व्यवहरति स तु पापात्मैव। यतोऽस्माकमेकस्मादीश्वरादेवोत्पत्तिरतः सर्वे वयं समानभागमभिलषामः"। अत्र विचारणीयम्—यदेकस्मात् स्थानादुत्पन्नो जीवो वस्तु इति वा सामान-वर्णतां रूपतां कर्मतां च भजन्ति किम्? न कदाचिदेतादृशी व्यवहारोपपत्तिः।

किन्तु, ये किल स्वधर्मपरायणाः सनातनधर्माणः, तेषां वेद-पुराण-धर्मशास्त्रादिषु च सर्वेषामेवाण्डज-पिण्डजादीनां भेदो निर्धारितः। यथा मनुष्ययोनौ, ब्राह्मणोऽयं क्षत्रियोऽयमित्यादिरूपो व्यवहारः। पशुयोनौ गौरयं महिषीयं अश्वेत्यादि व्यवहारः। अण्डजादिकेषु कोकिलोऽयं काकोऽयमित्यादि। स्थावरे च आम्रोऽयं पनसोऽयं तिन्तिडी इयमिति। एवं च ब्राह्मण्यां ब्राह्मणतः जायमानः पुत्रः ब्राह्मण एव भवति, क्षत्रियायां क्षत्रियतः क्षत्रिय इत्यादि, श्रीभगवदुक्तिश्च न विस्मरणीया।

"तद्य इह रमणीयचरणा अभ्यासो ह यत्ते रमणीयां योनिमापद्येरन्, ब्राह्मण-योनिं वा, क्षत्रिय-योनिं वा, वैश्ययोनिं वा, अथ य इह कपूयचरणा अभ्यासो ह यत्ते कपूयां योनिमापद्येरन्। श्वयोनिं वा, सूकरयोनिं वा, चाण्डालयोनिं वा," (छान्दोग्योपनिषत् ५।१०)

कर्माणि चैतेषां ब्राह्मणादीनां श्रीभगवता परब्रह्मणैव विभाजितानि। शमो-दमः तपःशौचमित्यादि विस्तरभयान्नोट्टङ्कितम्। सम्प्रति, मन्दिरप्रवेशरूपमान्दोलनमुद्घाटितं गान्धिमार्गानुयायिभिः। देवालये चाण्डालादिप्रवेशं च समर्थयन्ति। किन्तु, गीतायां श्रीभगवता कृष्णेन यन्निगदितं तद् विस्मरन्ति। यथा—

> स्वकर्मणा तमभ्यर्च्य सिद्धिं विन्दति मानवः,
> स्वे स्वे कर्मण्यभिरतः संसिद्धिं लभते नरः।

इत्यादि प्रमाण्यात् नाविहितकर्मणा कोऽपि सिद्धिं समुपलब्धुं शक्नोति। वेदविहित-कर्मजन्यो धर्मः, निषिद्धकर्मजन्योऽधर्मः, इति यो न स्वीकरोति, तस्यैतादृशी गतिर्भवति, यथा स्मृतौ मनुना,—

> वरं स्वधर्मो विगुणः, न पारक्यः स्वनुष्ठितः।
> परधर्मेण जीवन् हि, सद्यः पतति जातितः॥

उक्तमनुवचनात् स जातितः पतति, यो वर्णधर्मं कुलधर्मं च न पालयति। अतः शास्त्रविहितिकर्मण्येव मनो विधेयं नाकर्मणि। मनुस्मृतौ—

न सीदन्नपि धर्मेण, मनोऽधर्मे निवेशयेत्।
अधार्मिकाणां पापानामाशु पश्यन् विपर्य्ययम्॥

(मनुस्मृ० ४ अ० १७२ श्लो०)

अतः स्वधर्मो न हातव्यः, यद्यपि कलिः स्वप्रभावं दर्शयति। अपि च करालकलिकालस्य पाश्चात्यशिक्षाभिमानिनो भक्ताः! सनातनधर्मावलम्बिनो जनानाक्रोशन्ति, गालिं च प्रददति। भवतु, न कापि क्षतिः, कलिकालमाहात्म्यमेव पठन्त्येते पाश्चात्यसंस्कृत्यनुकारिणः गान्धिमार्गानुयायिनः—सुधारपन्थिनः। किन्तु, भोः! भोः! सनातनधर्मावलम्बिनो भ्रातरः! बद्धपरिकरा भूत्वा श्रीमन्तः "स्वधर्मे निधनं श्रेय इति श्रीभगवदुक्तिं चरितार्थयन्तः सनातनधर्मे वतमाना भवन्तु भवन्तः। सनातनधर्मप्रवर्तको भगवान् वासुदेव एवाऽस्मान् रक्षिष्यति—पालयिष्यति वा। यतः प्रतिज्ञातमनेन—

"धर्मसंस्थापनार्थाय, सम्भवामि युगे युगे"

अन्ते च विनिवेदयामि, यद् भोः! अनाथनाथ! दीनबन्धो! अवत्वस्मान् धर्मसङ्कटात् यथा सर्वे स्वे धर्मकर्मणि च मनो निवेशयेयुः।

---

## "आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः।

—:※※:—

(ले० झोपाख्यः श्रीयुगेश्वरशर्म्मा "अष्टकः"
श्यामसुन्दरलताविद्यालयः, "धमदाहा" स्थः।)

अयि! निगमागम-मधुपायमानाग्रगण्याः सदसद्विवेक-शालिनः शिष्टविशिष्ट-विद्या-सम्भार-भासमानाः विद्वत्प्रकाण्डाः!

आलस्यं खलु उत्साहराहित्यम् भण्यते। यथा करिष्यामि करिष्यामीति कृत्वा समुचितावसरस्य यापनम्। अस्मिन् घोरे करालकलिकाले आलस्यम् मनुजानाम् महदनिष्टकारकम्। जगदर्चनीयेन विश्वसृजा परमेश्वरेण पाणिपादादिमयं गात्रमिदम् कर्मार्थं व्यरचि, तथाऽपि ये खलु आलस्य-वशात् स्वकीयकार्य्यं स्वयमनिष्पाद्य इतरप्रत्याशया तिष्ठन्ति ते प्रतिपदम् विपदं संप्राप्नुवन्ति। आलस्य-परवशा मानवाः खलु विश्वगुण-विभूषिता अपि असीमानन्देनानवरतम् वञ्चिता एव सन्तिष्ठन्ते। परमपेक्षमाणाः तुन्दपरि-

मृजा मानवा अनिर्वचनीयं दुःखमनुभवन्तः क्षुधाऽनल-शिखया दन्दह्यमाना अपि अक्षमा भवन्ति । एवं पिपासाकुला भूत्वाऽपि निपानात् सलिलं निष्कासयितुं न स्पन्दन्ते। आलस्यवशात्-उषसि पुरीषमुत्स्रष्टुमगच्छन्तो मानवा बहुभी रोगै भृशमाक्रान्ताः, कदाचित्, शिरोवेदनया कदाचित्, उदरपीड़ादिभी रोगैरनिशं सीदन्तः किमपि कर्तुं न क्षमन्ते । आलस्येन धनोपार्जने असमर्थाः गृहस्थाः पुत्रकलत्रादिभि भृशमनाद्रियन्ते । अपि च अद्य तिष्ठतु तावदिदं कार्य्यम्, श्वः परश्वो वा इदम् कर्तव्यमिति धिया उपेक्षितं कर्म समयान्तरे सम्पादयितुमक्षमा भृशमनुतापं लभन्ते । आलस्यं महाशत्रुत्वमिति तु सर्वथा प्रमाणितम् । तथा च अनिष्टपदार्था एव शत्रुसंज्ञयाऽभिधीयन्ते । तथापि शत्रुता लक्षणम् आलस्ये यथा संघटते तथा नान्यत्रेति । तथा हि केचन विरोधेन केचन निन्दया केचन धनादीनामपहरणेन ये शत्रवो भवन्ति ते भिन्नाधिकरणा भवन्ति । आलस्यवैरिणस्तु मानवानां शरीरे उषित्वा चतुर्वर्गापवर्गादिकं भृशमवरुन्धानाः जनान् महत्कष्टकरे नरके पातयन्ति । अतः साधु भणितं केनापि कविना यत

आलस्यं हि मनुष्याणां शरीरस्थो महान् रिपुः ॥

---

## स्वधर्मसोपानम् ।

ले०—पं० नमजीरामशास्त्री विद्याभूषणम् राजगुरु बनेड़ा ( मेवाड़ )

अयि विद्वद्वर्यप्रकाण्डाः !

परोपकारसम्पादने सदार्द्रचित्ता वेदादि-सच्छास्त्रकूपारपारावार-कुशलाः सद्धर्मानुष्ठानपूतप्रेक्षादृशा सम्यगभिप्रेक्षमाणाः पाश्चात्यविद्याध्ययन-प्रबलप्रचारजाज्ञानान्धतमसाऽस्तीकृतं सद्धर्मार्कं पुनः समुद्धर्तुकामा विद्वांसः, ये चापि जगद्गुर्वाद्युपाधिभूषिताः श्रीमच्छङ्कराचार्य्य स्वामिनां सुयशोधारका दयासिन्धवो योगीन्द्रवर्य्या अत्युदारचरितास्तथा ये श्रीमद्वैष्णवसंप्रदायसंचालकाः श्रीमद्रामानुजाचार्य-स्वामिनामुत्तमयशोधारका विविध-सम्प्रदायनायका स्त्वाचार्य्यादयश्च, श्रीमदखिल-भारतधर्म-महामण्डलादि-विविधधर्मसंस्थासंस्थापका स्तत्संचालका योगीन्द्रवर्याः सन्यासिनः, ये च श्रीसूर्य्योदयाभिधान-लेखवाहक-दलोत्तम-सम्प्रचालका स्तत्संरक्षकाश्चान्येऽपि ये वेदादिसच्छास्त्राध्ययनप्रवरा लोकोपकारकुशला दयावन्तः सर्वभूतार्त्तिहरणतत्पराः सनातन-धर्मोद्धर्तुकामास्त्यक्त गृहाश्रमाः साधवो विद्वद्वर्यास्ते यूयम् सर्वे, श्रीमतां भवतामनुचर-

स्य मे विज्ञप्तिमिमां शृणुत, चेच्छ्रीमतां भवतां लोकोपकारे स्वदेशोद्धारे चैव हार्दिकेच्छास्ति तर्हि नारिकेलवत्सारगर्भितां परिणामेऽमृतोपमामिमां लघ्वीं मे प्रार्थनां स्वीकृत्य समुपस्थितो विषमः कालः पाश्चात्यानुकरणेन नो नेयः, किन्तु सर्वानर्थानां दृढदुर्गम् द्वन्द्वादिभिः सह लोभं विहायाधुना स्वपूर्वजानां सतां कर्मपद्धतेरनुकरणं विधेयम्। तावल्लोकमंगलार्थं सच्छिक्षाभिवृद्धये प्रजास्वधर्माभ्युत्थानापकरणधृताश्रमैः सर्वभूतदयापरैः वर्णाश्रमधर्मगुप्तये धृतविग्रहैः श्रीमच्छङ्कराचार्य्यश्रीमद्रामानुजाचार्याद्याचार्यवर्य्याणां यशोधारकैः योगीन्द्रवर्य्यैश्चैव द्विजवंशावतंसैः वेदोक्तधर्मप्रचारार्थं धृताच्युतावतारैः सर्वशास्त्रपारगैः कोविद मण्डली मण्डनभूतैः कोविदैश्च शास्त्रोक्त-स्वस्वकृत्याकृत्यकर्मविवेक तत्परैरेव भाव्यम्। तत्रैवेत्थं मनुनाऽप्युक्तं ॥

ब्राह्मणस्य तु देहोऽयं क्षुद्रकामाय नेष्यते ॥
ब्राह्मणो जायमानो हि पृथिव्यामधिजायते ॥
ईश्वरः सर्वभूतानां धर्मकोषस्य गुप्तये ।
वेदाभ्यासो हि विप्रस्य परमं तप उच्यते ॥इति॥

यतो भवत्सदृशानां सतां धर्मसम्प्रदायसंरक्षकाणां योगीन्द्रवर्याचार्याणां च द्विजवंशावतंसानां निखिल-शास्त्रपारगानां कोविद-वर्य्याणामिहैवार्य देहो विषयभोगविलाससिद्धये नैव, किन्त्विन्द्रियाणीन्द्रियार्थेभ्यो नियम्य सर्वभोगविलासेच्छां विहाय शुकदत्तात्रेयादिवत् भूमण्डलभ्रमण पुरस्सरं सर्व-वर्णान् सदुपदेशेन श्रुत्युक्त-धर्मे स्वे स्वे कर्मणि च नियोजनायैव। तस्माद्धेतो र्जायमानः ब्राह्मणः पृथिव्यां सर्वभूतानां धर्मकोषस्य गुप्तये ईश्वरावतार एवाधिमन्यते च। अनेनैव कर्मणा सर्वस्य पूज्यो गुरुरेव भवति। तस्येह परमं तपः वेदाभ्यास एवोच्यते। यतः स्वधर्मरक्षाभिलाषै र्ब्रह्मवंशपङ्केरुहोष्णरश्मिभूतै र्भूदेवदेवकल्पै र्ब्राह्मणैरप्यखिलैः स्वपरमतपसि वेदाभ्यासे स्वाचारविचारे सर्व-भूतोपकारे च दृढा रति र्विधेया। शास्त्रोदिते कर्मणि स्व कुमारानप्युपनीय तावत् च्छास्त्रोक्तशौचाचारादिसच्छिक्षया साकं पूर्णब्रह्मचर्य-पालन-पूर्वकं षडङ्गवेदाध्ययनं कारयितव्यमेव। तदुद्भवनिजार्यधर्मनिष्ठापूर्तिकृत्तद्धृदयस्थलान्यनार्यधर्मबीजाङ्कुरप्ररोहणायोषरीभूतान्येव प्रजायन्तेतराम्। ततो धनेहया वा लोकयात्राज्ञानेहया या प्रशस्ता राजभाषाद्यन्यविद्या प्रपाठनीया। तथापि यावद्बालानां हृदि स्वधर्मनिष्ठा स्थिरा न भवति तावत् पाश्चात्य-भाषाभ्यसनं कदापि नो विधेयं तदभ्यासेनाऽपक्वबालबुद्धौ तद्धर्मपदं स्थिरीभवत्येव। धर्मसंस्थापकैः, धर्मसंस्था-नायकैरपि धर्मरक्षणे चैवं प्रयत्नो विधेयः। ततो ये ब्राह्मणा ब्रह्मत्वसम्पादकं वेदाध्ययनसन्ध्यावन्दनादिकं विहाय ब्रह्मत्वविनाशिनी कुवृत्तीहया तावत्पाश्चात्यविद्याध्ययने तत्परा भूत्वा स्वदेशाचार-विचारादिभ्यः प्राङ्मुखा दरीदृश्यन्ते, ये च शास्त्रोदितं स्वधर्माङ्गभूतं तं देशाचार-कुलाचारविचारादिकं परित्यज्य द्विजातीनामगम्यं द्वीपान्तरं गच्छन्त्येव ते ब्रह्मकर्म-ब्रह्मकायभ्रष्टा भवन्त्येव। यथा—

सन्ध्या स्नानं जपो होमः स्वाध्यायो देवतार्च्चनम् ।
वैश्वदेवातिथेयश्च षट् कर्माणि दिने दिने ॥ १ ॥
शौचमास्तिक्यमभ्यासो वेदेषु गुरुपूजनम् ।
प्रियातिथित्वमिज्या च ब्रह्मकायस्य लक्षणम् ॥ २ ॥
अग्नि काय्यात्परिभ्रष्टाः सन्ध्योपासन-वर्जिताः ।
वेदं चैवानधीयानाः सर्वे ते वृषलाः स्मृताः ॥ ३ ॥
धर्म एव हतो हन्ति धर्मो रक्षति रक्षितः ।
तस्माद्धर्मो न हन्तव्यो मा नो धर्मो हतोऽवधीत् ॥ ४ ॥
आचार हीनं न पुनन्ति वेदाः यद्यप्यधीता सह षड्भिरङ्गैः ।
छन्दांस्येनं मृत्युकाले त्यजन्ति नीडं शकुन्ता इव तापतप्ताः ॥ ५ ॥

यतो ये स्वाचारादिभ्रष्टास्ते श्रीमद्भिराचार्यवर्य्यादिभि र्ब्राह्मणैश्च परिहेया वा तेषां शुद्धौ सर्वसम्मत्या नवीनप्रबन्धो विधेयः । चेत्थंकारं कार्याचरणं विना भारताया पूर्वायितुं कथमपि समर्था नैव बोभूयन्तेतराम् ।

यद्यदाचरति श्रेष्ठ स्तत्तदेवेतरो जनः ।
स यत्प्रमाणं कुरुते लोक स्तदनु वर्तते ॥

इत्येषा पारंपर्याल्लोकानां प्राकृतिका प्रकृति र्बलीयसी वर्तते । यतो ब्राह्मणै स्तावत्स्वधर्म-कर्माचारविचारतत्परैरेव भाव्यम् । सर्वे वर्णा ब्राह्मणानामनुकरणं चरीकर्ति । धर्मसम्प्रदायनायकैः सच्छास्त्रदूषितां राजसीचर्यां दूरेण प्रविहाय स्वसात्विकीं चर्यां स्वीकृत्य धर्मोपदेशकुशलै र्विबुधैः साकं जैनश्रमणकादिवत् स्वधर्मप्रचाराय भारते चंक्रमणं विधेयम् । यावद्धर्माचार्या एनां चर्यां चरितुमुत्सुका नो भविष्यन्ति तावत् भारतोन्नतिरपि स्वप्नेऽपि दुर्भाव्यैव । पूर्वाचार्यैः यदर्थं सम्प्रदाय-मठानां स्थापनं कृतं तदर्थं सम्प्रदायाधीश्वरै र्भवद्भिरपि प्रयत्नो विधेयः । तावत्ब्राह्मणानामाचार विचारादीनां विद्याध्ययनस्य प्रबन्धं कृत्वा अगम्यद्वीपान्तरगतानां शुद्धौ गन्तुमिच्छुकानां निरोध करणे च प्रबन्धो विधेयः । यावदाचारशुद्धिर्नैव भविष्यति तावद्ब्राह्मणवर्णस्याप्युन्नति र्न भविष्यति । देशोद्धारे तावत्ब्राह्मणा मुख्याः तेषां सुधारस्तु देशोद्धाराय भविष्यति—नान्यथा । तद्यथा–

धर्मशास्त्र-रथारूढा-वेद-खड्गधरा द्विजाः ।
विद्याकलातपःसैन्या भारतोद्धरणे क्षमाः ॥
सर्वत्र दान्ताः श्रुतिपूर्णकर्णाः जितेन्द्रियाः प्राणिवधान्निवृत्ताः ।
प्रतिग्रहे सङ्कुचिताग्रहस्ता स्ते ब्राह्मणा स्तारयितुं समर्थाः ॥
स्वजात्यां यदि भक्तिर्वो यदि देशोन्नतौ रतिः ।
लक्ष्यं जात्युन्नतिं कृत्वा कर्म वीरा भवन्तु भोः ॥

इह हि स्पर्शास्पर्श-शुद्धाशुद्धयोर्विवेको यथा विविच्य स्पष्टतया आनन्द-मय-विज्ञानमय-मनोमय-प्राणमयान्नमयकोष-विचारणया निर्णीतः, स खलु वेद-शास्त्रादिषु सामान्यतयैवोपनिबद्धो दृश्यते, न तत्र तस्यैवं स्पष्टतया पृथक् पृथक् अधिकारविवेकः कृतोऽस्ति। तत्र हेतुरयमस्ति यदिमे पञ्चापि कोषाः परस्पर-मेवं दृढगुम्फिताः सन्ति यदेकस्मिन्नपि काऽप्यशुद्धिः संस्पृशेच्चेत्तस्याः प्रभावो न्यूनाधिकतया सर्वत्रैव समासज्यते। एकमन्नमयं प्राणमयमन्या कोषं मलिनयन्न-शुद्धपदार्थोऽस्पृश्यो वा विषय एतं तं कोषं मलिनयन् न्यूनाधिकतया सर्वत्रैव स्वप्र-भावमासञ्जयति। यद्यपि साशुद्धाऽशुद्धकारिणी क्रिया एकस्मिन् कोषे समारब्धा भवति, तथाऽपि सर्वानेव कोषान् न्यूनाधिकतया प्रभावयति। यतो हि सर्वोऽपि कोषः परस्परसम्बन्धभागेवास्ति ॥ ६७ ॥

अन्यच्च—

त्रिविधाश्च ॥ ६८ ॥

स्पर्शास्पर्शशुद्धाशुद्धविवेकाः ( त्रिगुणभेदेन ) त्रिविधाश्चापि भवन्तीति सूत्रार्थः।

शुद्धाशुद्ध-स्पर्शास्पर्श-विवेक-विषये विचारभेदोऽधिकारभेदश्चाभाद्यते। देशभेदानुसारेणाप्यनयोर्द्वयोरनेकधा पार्थक्यं विलोक्यते। वर्णाश्रमभेदेन स्त्री-पुरुषभेदेन बालवृद्धादिभेदेनापि स्पर्शास्पर्शव्यवस्था शास्त्रेषूपलभ्यते। आचा-र्य्याणामपि बहवो मतभेदा इह विषये विद्यन्ते। सम्प्रदायभेदेनापीह भेदो दृश्यते। अतश्च जिज्ञासूनां शंकायाः समाहित्यै समभिधीयते यत्—

त्रिगुणभेदानुसारं विभिन्नाधिकारनिमित्तके हि शुद्धाशुद्धस्पर्शास्पर्शविवेके प्रायश्चित्तादिविधानविषये च मतभेदः प्रतीयते। परन्तु सत्यपि मतभेदेऽशुद्धेः स्पर्शदोषस्य च प्रभावो यस्मात्कोशादारभ्यते, तस्यैव कोषस्य शक्तिं लक्ष्यीकृत्य शुद्धि-सम्पादको विहितः प्रायश्चितः सर्वथोपादेयो भवति नान्य इति। तत्रैव आधिदैवशक्तिमतां गोदानगङ्गास्नानादिपुण्यकार्य्याणां सर्ववादिसम्मतत्वेऽय-मेव हेतुरस्ति यत्तेषामाधिदैवशक्तिप्राधान्येन त्रिगुण-भेदभिन्नाधिकारिणां सर्वे-षामेव समानतया हिताधायकत्वमस्तीति। एतेषां पञ्चकोषाणामधिकारस्य परस्परं सम्बद्धतया वर्णाश्रम-शृङ्खलायाः शुद्धाशुद्ध-स्पर्शास्पर्श-विवेकेऽधिकं वैचित्र्यमायाति। अत एवान्नदोषस्य प्रभावो नान्नमयकोषमात्रमेव विदूषयति किन्तु प्राणमय-मनोमय-विज्ञानमय-कोषानपि स्वदोषदुष्टान् करोतीति।

प्रायश्चित्तमपि ईदृशेनैव विचारेण विधापनीयम्। तत्र देश-काल-पात्राणां विचार आवश्यकः। यावद्धि प्रायश्चित्तकर्तुरन्तःकरणं परिमार्जितं भविष्यति

तावानेव प्रायश्चित्तस्य प्रभावस्तदन्तःकरणे पतिष्यति। अन्यतश्च ज्ञानी पुमान् दोषप्रभावमेवमेव विना प्रायश्चित्त ज्ञानेनेव भस्मसात्कुर्वन् विदूरयति । तस्यकृते प्रायश्चित्तानुष्ठानस्यावसर एव नास्ति ।

अतश्च प्रायश्चित्तप्रक्रियायामिदमेव विज्ञानमाश्रयणीयम् यत्, यस्य दोषस्य येन कोषेण सह प्राधान्येन सम्बन्ध स्तमेव कोषं लक्ष्यीकृत्य प्रायश्चित्तं प्रकल्पनीयम्। येन च वर्णाश्रमशृंखलायाः सहायकस्य शुद्धाशुद्धविवेकस्य स्पर्शास्पर्श-विज्ञानस्य च दृढतरदार्शनिकभित्तिमूलकतया तदीया व्यवस्था परममङ्गलकरी भवेत्। तदनुसारतश्चाचारानुष्ठानेन विचारपूर्वकं प्रायश्चित्तप्रकल्पनेन च आर्य्यजातेरार्य्यपिण्डस्य चोन्नतिपथः परिष्कृतः सरलश्च स्यादिति ॥६८॥

तेनैव सम्बन्धेनापरामप्यावश्यकतामाह—

अधिकारभेदः ॥ ६९ ॥

अधिकाराणां भेदः पार्थक्यमपि अपेक्ष्यते इति सूत्रार्थः । यथा हि जैवकर्मणोऽधोगामिस्रोतोनिरोधाय वर्णाश्रमधर्मयोरत्यन्तोपकारिता दर्शनस्यास्य पूर्वसूत्रोक्त–विज्ञानैरुपदर्शिता, तथैव जैवकर्मणोऽधोस्रोतसः सकाशाज्जीवानुन्मुच्य तेषां क्रमोन्नतिमार्गं विनिश्चेतुमधिकारभेदस्यापि परमावश्यकता विद्यते ।

मानवो हि प्राकृतिकधारात्यागानन्तरं स्वपिण्डाधिकारी भवन् तत्प्रभुत्वमासाद्य निरङ्कुशो भवति। पूर्णावयवभाक् स इन्द्रियसम्बन्धेनात्याचरन् प्राकृतिकनियमतोऽपि विरुद्धाचरण–सामर्थ्यवान् सन् नैजीं प्रकृतिमधोगामिनीमेव कुर्वन् शनैः शनैः तां पातयत्येव । इत्यत एव स गमागमचक्रे पौनः पुन्येन परिभ्रमति । तदानीं स अवश्यफलद-धर्माश्रयणमन्तरा स्वक्रमोन्नतिं विधातुं नितान्तमसमर्थ एव। इत्थं हि तस्यामसमर्थावस्थायां यादृगधिकारविशिष्टः स जीवोऽस्ति तादृगधिकारानुसारमेव धर्मोपदेशस्तस्मै हितकरः। तादृशधर्मानुष्ठानेनैव स नियतां स्वोन्नतिं कर्तुं समर्थो भविष्यति नान्यथा। तथा हि—अत्यन्त-विषयासक्तस्य कर्मसङ्गिनो मलदिग्धस्य प्राणिनः कृते सकामकर्मकाण्डोपदेश एव हिताधायको भवति । तदनुष्ठानेनैव च तदुन्नतिरपि निश्चिता । विषयवैराग्यजुषः शास्त्राभ्यासनिरतस्यापि आवरणदोषदुष्टस्य मानवस्य कृते तु ज्ञानकाण्डोपदेश एव नियतोन्नतिं कर्तुमर्हं इति। इत्थमेवान्यदप्युदाहरणमूहनीयम् । तथा हि—

नारीणां तपोमूलकस्य धर्मस्यानुष्ठानम् । पुंसान्तु यज्ञप्रधानस्य धर्मस्याचरणं श्रेष्ठमित्युभयोरेव स्वाधिकारानुकूलस्यैव धर्मस्यानुष्ठानेनोन्नतिमार्गः सरलो भवति। अन्यथा तु क्रमशो जटिलतामेवासादयति । गृहस्थस्य कृते प्रवृत्ति-

धर्म्मस्य, सन्यासिनः कृते च निवृत्तिधर्म्मस्योपदेश एव श्रेयान्। अन्यथा तु तयोरुन्नतेः पन्थाः कण्टकाकीर्णः स्यादिति।

ईदृशेनोदाहरणेनेदं स्फुटं सिध्यति, यत् विभिन्नाधिकारिणां तद्योग्याधिकारानुरूपमेवोपदेशं प्रदाय तेषां क्रमोन्नतिमार्गः परिष्करणीयोऽन्यथा बुद्धिभेदेन हानेरेव सम्भावना स्यात्। यथा अज्ञानिनः कृते राजयोगोपदेशः। साधनचतुष्टयरहिताय च पुंसे वेदान्तस्य मनननिदिध्यासनोपदेशः। तत्त्वज्ञानिने शिष्याय च बहिःपूजायां मन्त्रयोगसाधने वा समासक्तिरादिष्टा स्याच्चेत्तर्हि ईदृशानामधिकारिणां क्रमोन्नतौ बाधैव केवलं न स्यात्, किन्तु तेषामवनतिरपि सुतरां सम्भाव्यते।

जगति यावन्तो धर्ममार्गाः प्रसृताः सन्ति, तेषु अधिकारभेदक्रमाभावात् असम्पूर्णा एव ते धर्मा अभिधीयन्ते। सनातनधर्मे एवास्मिन् केवलमधिकारभेदशृंखलायाः पूर्णतया विद्यमानत्वात् नित्यसिद्धस्यास्य वैदिकधर्मस्य सर्वाङ्गपूर्णता प्रख्यायते। सुतरामेतावता प्रबन्धेनायमेव निर्गलितोऽभूदर्थो यत् जैवकर्मणि यदि अधिकारभेदव्यवस्था स्थास्यति, तदैव साधकस्य क्रमोन्नति निश्चिता सम्भाव्यते नान्यथेति ॥ ६९ ॥

सम्प्रति द्वितीयामावश्यकतामाह—

**शुद्धि-त्रैविध्यञ्च ॥ ७० ॥**

( जैवकर्मणोऽधोगति निरोधाय ) शुद्धीनां त्रैविध्यं तद् शुद्धित्रैविध्यमपि समपेक्ष्यत एवेति सूत्रार्थः।

अधोगामिस्रोतःसम्पन्नस्य जैवकर्मणोऽधःप्रसरणोन्मुखीं गतिं निरोध्य तस्य नियमितां क्रमोन्नतिं स्थिरीकर्तुं यथा वर्णाश्रमधर्मस्याधिकारभेदस्य चावश्यकता प्रतीयते तथैव त्रिविधायाः शुद्धेरपि ध्रुममपेक्ष्यते प्रयोजनम्।

मनुष्याणां नियतक्रमोन्नतौ त्रिधा हि संदृश्यते बाधा। एका स्थूलकायबाधा, द्वितीया सूक्ष्मशरीरात्मिका बाधा, तृतीया देहजन्या चेति। एतत्त्रितयसम्बन्धेनैव शारीरिक-मानसिक-बौद्धिक-पवित्रताः स्वीकृताः सन्ति। एतत्सम्बन्धेनैवाधिभौतिक-शुद्ध्या मलस्य, आधिदैविक-शुद्ध्या विक्षेपस्य, आध्यात्मिकशुद्ध्याऽऽवरणस्य च नाशोऽभ्युपेयते। इमे त्रयोऽपि यावदेकदैव न सम्पद्यन्ते तावन्नैव संभाव्यते जीवानां स्थिरा नियता क्रमोन्नतिरिति ध्रुवमूहनीयम्।

अत एव वेदात्मना भगवता एकदैव काण्डत्रय-साधनानामुपदेशो वितीर्य्यते। तत्र कर्मकाण्ड-साधनेनाधिभौतिकी शुद्धिरुपासनाकाण्ड-साधनेनाधिदैविकी शुद्धिर्ज्ञानकाण्डसाधनेन तु आध्यात्मिकी शुद्धिः सम्पद्यते। फलतस्त्रि-

सृणामासां शुद्धीनामपि विशेषतो जैवकर्मद्वारा नियमतः क्रमोन्नतावेवोवश्यकत्वं विद्यते ॥ ७० ॥

प्रसङ्गप्राप्तमिदं विज्ञानं संक्षिप्य सम्प्रति तृतीयस्य ऐशकर्मणः स्वाभाविकीं गतिं वर्णयति—

ऐशमुभयवाहि ॥ ७१ ॥

ईशस्येदम् ऐशं कर्म उभयम् ऊर्ध्वमधश्च वा वहति तच्छीलमिति उभयवाहि उभयदिगुपकारीति सूत्रार्थः ।

श्रेणित्रयरूपेण विभक्तानां कर्मणाम् ऐशकर्मणो वैशिष्ट्यमभिधातुं ब्रवीति यद् ऐश-कर्मणः स्वाभाविकी गति रुभयतः प्रवहति ।

यदा जीवोऽधःपतति तदाऽपि ऐशकर्मणः साहाय्यापेक्षा भवति । यदा चोपरि समारोहति तदाऽपि ऐशकर्मण एवावश्यकता समुदेति । तथाहि—यदा जीवो मानवयोनितोऽसद्भोगोपभुक्तये प्रेतनरकादिलोकानुपैति, आहो जन्मान्तरलाभायैव तिर्य्यग्योनिषु समुपसर्पति, तदाऽपि देवा एव तं तत्र प्रापयन्ति । यदा च सत्कर्मोपभोगाय स पितृ-देवासुराणां लोकान् समेति तदापि तत्र तस्य कृते देवसाहाय्यात्मकैशकर्मण एवोपैति साहाय्यम् । विज्ञानमिदमन्यविधयाऽपि विवरीतुं शक्यते । तथाहि—सहजं कर्म केवलमूर्ध्वगमेव भवति । तथैव जैवं कर्माधोगाम्येवेति कथने न कोऽपि दोषः । यतो हि पूर्वं प्रमाणितमप्यस्ति, यद् वर्णाश्रमधर्मं तदीयाऽधोगामिनी प्रवृत्ति निरुध्यते इति । अतश्चेमे उभे अपि कर्मणी एकदेशीये इति नास्ति सन्देहावसरः । यतो हि एकस्योर्ध्वप्रवृत्तिर्द्वितीयस्याधःप्रवृत्तिरिति स्फुटमेवप्रतीयते । ऐशकर्मणस्तु गतिरुभयप्रवाहिणीत्यसन्दिग्धमेव । यतो हि तदैशं कर्म उपरि गच्छतोऽपि जीवस्य साहाय्यमाचरति । नीचैर्गमनशीलस्यापि जीवस्य तथैव साहाय्यमादधाति । अतश्चैशकर्मणो व्यापकत्वं सर्वतोमुखीनमिति सर्वथापि स्वीकर्तव्यमेव ॥ ७१ ॥

प्रसङ्गत ऐशकर्मणो महत्त्वमब्रूते—

अतो विचित्रमलौकिकं च ॥ ७२ ॥

अतोऽस्मादेव हेतोः, उभयत उपकारकत्वादिति यावत् , ऐशं कर्म विचित्रं विलक्षणम् अलौकिकं लौकिकपदार्थभिन्नमतिरहस्यमयमित्यर्थः ।

सहजं कर्म जैवं कर्म चेत्युभयमपि स्वाधिकारानुरूपं यद्यपि विस्तृतम् अतिशक्तिशालि चास्ति, तथापि तत् स्वप्रकृत्यैकदेशीयमेवोच्यते । प्रत्यक्षत एव

तस्योभयस्यापि स्वरूपावगतिर्भवति। ऐशं कर्म तु तत्रैव पूर्वोक्तविज्ञानानुसारेण सर्वतोमुखीनतया सर्वशक्तिशालितया सर्वसहायकतया च विचित्रशक्तिसम्भृतमलौकिकञ्चोच्यते। तत्र हि सर्वतोमुखीना शक्तिरस्तीति विचित्रं तदुच्यते। सर्वशक्तिशालित्वेऽपि गुप्ततया रहस्यसम्भृततया चालौकिकं च गीयते॥ ७२॥

प्रसङ्गादिदानीं कर्मबीजसंग्रह-स्थानं निर्णयति—

**संस्कारस्थानं त्रिविधं चित्ताकाशं चिदाकाशं महाकाशञ्च॥ ७३॥**

संस्काराणां स्थानं निवासक्षेत्रं त्रिविधं त्रिधा विभक्तं विद्यते। एकं चित्ताकाशरूपेण द्वितीयं चिदाकाशरूपेण तृतीयं महाकाशतया चोच्यते इति सूत्रार्थः।

कर्मणां श्रेणिविभागं तेषां स्वरूपञ्च स्फुटमभिधाय सम्प्रति सूत्रकृन्महर्षिः कर्मणां संग्रहो बीजरूपेण कुत्र कुत्र तिष्ठतीत्याख्याति—

कर्मविटपी यदा संस्कारात्मकबीजरूपे स्वात्मानं परिणमयति तदा कारणात्मतया स त्रिषु स्थानेषु तिष्ठति। चित्ताकाशे, चिदाकाशे,महाकाशे चेति। तत्र मानवान्तःकरणाकाशो हि चित्ताकाश उच्यते। ब्रह्माण्डसमष्ट्यवच्छिन्नाकाशो हि चिदाकाशः कथ्यते। फलतः पिण्डाकाशश्चित्ताकाशः, ब्रह्माण्डाकाशश्च चिदाकाश इति, अनन्तकोटिब्रह्माण्डव्यापी य आकाशः स एव महाकाशोऽभिधीयते। विज्ञानमिदमन्यथाऽपि समधिगन्तुं शक्यते। तथा हि–आधिभौतिकसृष्टिसम्बद्धश्चित्ताकाशः, आधिदैविकसृष्टिसम्बद्धश्चिदाकाशः, आध्यात्मिकसृष्टिसम्बद्धश्च महाकाश इति। आसां तिसृणामपि सृष्टीनां दैवीमीमांसापरपर्य्याये मध्यमीमांसादर्शने साधु विचारो विस्तारेण विहितो विद्यते॥ ७३॥

त्रयाणां यथायोग्यं सम्बन्धमाह—

**त्रयाणां त्रिभिः सम्बन्धः॥ ७४॥**

त्रयाणां प्रारब्धक्रियमाणसञ्चितानां कर्मणां त्रिभिः क्रमेणैव चित्ताकाश-चिदाकाश-महाकाशैः सह सम्बन्धो ज्ञेय इति सूत्रार्थः।

जीवा यानि कर्माणि जन्मजन्मान्तरे समुपार्जयन्ति, तेषां बीजरूपः संस्कारो यदा संगृह्यते, तदा प्रारब्ध-सञ्चित-क्रियमाणसंज्ञया स त्रिधा विभज्यते। जन्मग्रहणात्पूर्वं तज्जन्मात्मकवृक्षार्थं यावान् हि संस्कारो बीजरूपेण परिणमति स एव प्रारब्धसंस्कारः कथ्यते। जीवानामनन्तकोटिजन्मनां येऽनन्ताः संस्कारराशयस्त एव सञ्चितसंस्कारशब्देनाभिधीयन्ते, येषाञ्च बीजरूपेणैव स्थितिर्विद्यते नाङ्कुरितावस्था समागतास्तीति। यानि च नवीनानि कर्माणि जीवोऽस्मिन् जन्मनि विदधाति, येषां च बीजरूपतया संग्रहो भवति, तान्येव

कर्माणि क्रियमाणसंस्कारशब्देनावगम्यन्ते इति । वस्तुतस्तु प्रारब्धकर्मणा सह चित्ताकाशस्य प्राधान्येन सम्बन्धः, क्रियमाणसंस्कारैः सह चिदाकाशस्य, सञ्चितैः संस्कारैः सह महाकाशस्य मुख्यतया सम्बन्धो मन्यते । यद्यपि च त्रयोऽप्याकाशा उपाधिभेदेनैव भिन्ना एकत्वमेव भजन्ते प्रत्युत प्रथमौ द्वावाकाशौ चरमस्य महाकाशस्याङ्गभूतावेवोच्येते । यथा च घटाकाशमठाकाशमहाकाशास्त्रयोऽप्येक एवाकाशः केवलमुपाधिभेदेन भिन्नो दृश्यते, तथैव सत्यपि त्रयाणामप्याकाशानामेकत्वे, कर्मबीजरूपाणां संस्काराणाञ्चैकत्वे, तेषां संस्काराणामङ्कुरितावस्थानुसारम् तत्स्थानानाम् उपाधिभेदभिन्नानामाकाशानाञ्चैवं विभागो विहितः । त्रयोऽपीमे आकाशा एकस्यैवाकाशस्य स्तरविशेषा उच्यन्ते ।

यथा हि घटाकाशे मठाकाशे चेत्युभयत्रापि महाकाशो विद्यते । परन्तु घटाकाशस्य स्तरः सर्वेभ्योऽपि नीचैरस्ति । तदुपरि च मठाकाशस्तरो विराजते । महाकाशस्तरस्तु सर्वव्यापी महान् विद्यते । तेषामेव स्तराणां तारतम्येन तत्र विकीर्णानां संस्कारराशीनाम् अङ्कुरोत्पत्तिरूपायाः शक्तेरपि तारतम्यं विवक्षितमेव । इत्यत एवैषामाकाशानामपि त्रिधा स्वतन्त्र-सत्ता समुदीरिता । कर्मबीजानामपि त्रिधा विभागो विहितः ॥ ७४ ॥

तृतीयस्य स्वरूपं ब्रूते—

**तृतीयं नित्यमेकमनाद्यनन्तत्वात् ॥ ७५ ॥**

तृतीयं महाकाशं आदिश्चान्तश्च तौ न विद्येते यस्य तत् तथोक्तं तस्य-भावः अनाद्यनन्तत्वं तस्मात् नित्यमविनाशि एकञ्चेति सूत्रार्थः ।

तृतीयो हि महाकाशो भगवतो विराड्देहेन सह सम्बध्नाति, अतः स अनाद्यनन्तो गीयते । यतश्च भगवतो विराड्वपुरपि अनाद्यनन्तमेव निगद्यते । अतश्च महाकाशोऽपि विराड्रूपधारिणा भगवता सदृश एको नित्यश्चोच्यते । तथाहि एकस्मिन् ब्रह्माण्डे बहूनि पिण्डानि समुत्पद्यन्ते विलीयन्ते च । तथैव महाकाशदेहात्मके विराड्रूपे भगवति ब्रह्माण्डानां कोट्यः समुत्पद्यन्ते विलीयन्ते चेति । परन्तु भगवतो विराड्देहस्वरूपः स महाकाशः सर्वदैव एकरस एव तिष्ठति न तत्र कापि विक्रिया समुदेतीति ॥ ७५ ॥

स्तः। यथा हि प्रत्येकं पिण्डस्य आदिरन्तश्चास्ति, तथैव प्रत्येकं ब्रह्माण्डस्यापि आदिरन्तश्च विद्येते। एवं हि आभ्यामेव पिण्डब्रह्माण्डाभ्यां सम्बन्धभाजौ चित्ताकाशचिदाकाशौ ध्रुवं सादिसान्तौ भविष्यत इत्यत्र कः सन्देहावसरः। यथा च घटनाशेन घटाकाशो मठनाशेन च मठाकाशो विनश्यति। उपाधिनाशानन्तरमुभावपि महाकाशे विलीयेते, तथैव चित्ताकाशचिदाकाशौ द्वावपि सादिसान्तौ। एकस्य पिण्डस्य जीवस्य मुक्तौ तद्बन्धककेन्द्रस्य विनाशेन कर्मबीजसंस्कारस्योपयोगिनस्तत् पिण्डाकाशस्यापि ब्रह्माण्डाकाशे प्रलय आवश्यकः। इत्थं हि एकब्रह्माण्डस्य महाप्रलयावस्थायां तद्ब्रह्माण्डीयाकाशोऽपि महाकाशे विलीनो भवति। अत्रेयं शङ्का समुदेतुमर्हति यत् कर्मबीजात्मकाः संस्कारास्तदा कुत्र कथञ्च गच्छन्तीति। तत्रोच्यते—

यो हि जीवो मुक्तो भवति तदीयपिण्डस्य पञ्चापि भूतानि यथायोग्यं स्वप्रकृतिविलीनानि जायन्ते। तस्य चित्ताकाशश्च स्वकेन्द्रं विहाय चिदाकाशे विलीनो भवति। अतश्च तेन जीवकेन्द्रेण सम्बद्धानि सर्वाण्यपि कर्मबीजानि स्वत एव ब्रह्माण्ड-केन्द्रमालम्ब्य ब्रह्माण्ड-प्रकृत्याश्रयेण ब्रह्माण्डीयचिदाकाशे स्वाश्रयं प्रकल्प्य तस्य ब्रह्माण्डस्य भाविन्यां फलोत्पत्तौ साहाय्यमाचरन्ति।

इत्थं हि एकं ब्रह्माण्डं यदा महाप्रलयगर्भे विलीनं भवति। तदा तदीयानि पञ्चापि महाभूतानि केषाञ्चिन्मतेन परमाणुरूपतां गत्वा केषाञ्चित्सिद्धान्ते स्वकारणविलीनानि भूत्वा यथाकथमपि स्यात् मूलप्रकृत्यङ्के तु प्रविशन्त्येव, तेषां स्वतन्त्रसत्ता तदानीं नैव तिष्ठतीति सर्ववादि राद्धान्तः। तदानीं हि तद्ब्रह्माण्डीयकर्मबीजधारकश्चिदाकाशोऽपि स्वसत्तां विहाय महाकाशे विलीनो भवति। यदा हि पुन ब्रह्माण्ड सर्गो भवति तदा "यथा पूर्वमकल्पयद्" इति श्रुत्युक्तविज्ञानानुसारं स पुनराविर्भवतीति निश्चितमेव। ततश्चेदमवश्यमुरीकरणीयम् यत् तानि समष्टिकर्मबीजान्यपि कुत्रचिद्विलीनानि तिष्ठन्तीति। तानि च तस्यां महाप्रलयावस्थायां यत्र तिष्ठन्ति, तस्यैवाकाशीय-सर्वव्यापकानाद्यनन्तस्य स्तरस्य महाकाश इति संज्ञा भवति। एवं स्थितौ न कापि शङ्केदानीमवशिष्यते।

सम्प्रति शङ्कान्तरमुत्थापयति यत् जीवैः सह क्रियमाण-सञ्चित-संस्काराणां कोऽपि सम्बन्धस्तिष्ठति न वा? तिष्ठति चेत्तेषां जीवकेन्द्राणां विद्यमानावस्थायां कथं तिष्ठति? विलयावस्थायाञ्च कथं विलीयते? एतदुत्तरस्वरूपेणाधोनिर्दिष्ट-विज्ञानं विशदयति। तथा हि—

यथा व्यापकाकाश-घटाकाश-महाकाश-समावेशवत् महाकाशे चित्ताकाशचिदाकाशयोः समावेशः, तथैव चित्ताकाशे चिदाकाशे च महाकाशस्यापि

सन्निवेशः, केवलं तेषां त्रयाणां स्तरसन्निवेश, एव स्वातन्त्र्येण पृथग् विद्यते । तत्र जीवानां चित्ताकाशेन सह प्रारब्धस्य संस्कारस्य प्राधान्येन सम्बन्धः । यतो हि सोऽङ्कुरितदशायां तिष्ठति । परन्तु क्रियमाण-सञ्चितयोरपि संस्कारयो गौणतया स्थितिस्तु विद्यत एव । नो चेज्जीवानां क्रियमाणकर्म-संस्कारस्य स्मृतिरेव न स्यात् । यतोहि जीवानां चित्ताकाशेनैव स्मृतेः सम्बन्धो गण्यते । अतश्च जीवानां क्रियमाणकर्मसंस्कारा चिदाकाशस्तरगता अपि स्मृतिमवलम्ब्य गौणतया चित्ताकाशेनापि सम्बद्धास्तिष्ठन्त्येव । ते हि जन्मान्तर-ग्रहणवेलायां क्रियमाण-संस्काररूपतां गताः कर्मबीजसमूहा यथावसरं कियन्तः चित्ताकाशं समुपेत्य प्रारब्धतां भजन्ते, कियन्तश्च महाकाशस्तरपतिताः सञ्चितसंस्कारतां प्राप्नुवन्ति । एवञ्चावश्यमेव जीवकेन्द्रस्य मुक्तिदशायां विलये सति, तेन सह गौणतयापि सम्बन्धभाजौ क्रियमाण-सञ्चित-संस्कारौ मूलप्रकृतेराश्रयेण महाकाशे स्वस्थानं प्राप्नुतः । समयान्तरे च ब्रह्माण्डस्योत्पत्ति कारणतामाश्रयन्ति

एवमेव सञ्चितसंस्कारेणापि चित्ताकाशस्य गौणः सम्बन्धस्तिष्ठत्येव । यतो हि जीवानां जन्मान्तरे यो हि प्रारब्धसंस्कारः समुद्भवति स हि आधिक्येन सञ्चितसंस्कारेभ्य एवाकृष्यते एतद्विज्ञानमंशतः शास्त्रान्तरेण समर्थ्यते ।

जीवानां निधने काले सर्वे संस्कारराशयः ।
प्रादुर्भवन्ति संसुप्ता भावसंस्मरणानुगाः ।
यादृग्भावस्तदानीं स्यात्तादृशी कर्मवासना ।
भाववायु-समानुन्ना कर्मबीजानि चालयेत् ।
तानि सर्वाणि तुल्यानि कर्मबीजानि सत्वरम् ।
भावनावायुवेगेन चित्ताकाश-विपाकतः ।
प्रारब्धकर्मतां गत्वा यान्ति जन्मनिमित्तताम् ।
यं यं वापि स्मरन्भावं त्यजत्यन्ते कलेवरम् ॥
स तमेवेति कौन्तेय सदा तद्भाव-भावितः ॥ ७६ ॥

उभयोर्नाशप्रकार माह—

संस्कारप्रणाशान्नाशः ॥ ७७ ॥

संस्काराणां प्रकृष्टो नाशः संस्कारप्रणाशः, तस्मात् नाशो विनाशः चित्ता-काशचिदाकाशयोरिति शेषः ।

# सूर्योदयः ।

दशमे वर्षे } आश्विनस्य पूर्णिमा सं० १९९१, { चतुर्थ-संख्या

## सम्पादकीया अभिप्रायाः ।

—:o:—

### राष्ट्रियसभायामपि मतानैक्यम् ।

—:o:—

सम्प्रति भारतीय-राष्ट्रमहासभायां विभेदावसरो दृश्यते । बारत्रयं कृतोऽप्युद्योगो नैव श्रीमालवीयाणेमहोदयौ सन्तोषयितुं सफलतां गतस्तत्र कारणं किम् ? मम सम्मतौ तु गान्धिप्रभृति-राष्ट्रियमहासभा-( कांग्रेस ) सदस्यानां साम्प्रदायिक-निर्णयविषये मौनधारणं ( तस्य विरोधकरणे स्वीकरणे वा तटस्थताप्रदर्शनं ) राष्ट्रिय-हित-विरुद्धं प्रतीयते । यथा च मालवीय-महोदया अपि कथयन्ति, यद् सप्त चत्वारिंशद्वर्षेत आरभ्य राष्ट्रियमहासभा हि राष्ट्रहितविरुद्धस्य कस्यापि राजकीय-निर्णयस्य समर्थनं न कृतवती । परन्तु अद्यत्वे श्वेत-भवन-घोषणा-विरोधं कृत्वापि साम्प्रदायिक-निर्णये मौनधारणं कृत्वा "मौनं स्वीकारलक्षणम्" इति नियमाद् अर्धस्वीकरणन्तु करोत्येव । इदं हि हिन्दुहित-विनाशकत्वे सति राष्ट्रहित-विनाशकत्वमेव राष्ट्रियमहासभायाः प्रतीयते । यद्यपि साम्प्रदायिक-निर्णयेन मोहम्मदीयानां हितं सम्प्रति सम्पद्यत इति आपाततः प्रतीयते । परन्तु राष्ट्रहित-चिन्तया तु तद्धितमहितमेव । इदं तु शासकानां कृते न समीचीनं यदेकस्य सम्प्रदायस्य हितं कृत्वा अन्यस्य सम्प्रदायस्यासन्तोषाचरणम् । तथापि राष्ट्रियसभया तु निष्पक्षपातिन्या भाव्यम् ।

यथा हि श्वेत-पत्रस्य विरोधो राष्ट्रियसभया क्रियते तथैव साम्प्रदायिक-निर्णयस्यापि विरोधस्तथैव कर्तव्य आसीद् । एवं कृते पृथक् नेशनलिष्टपार्टी-स्थापनेन साम्प्रदायिक-निर्णय-विरोधार्थं कृतः श्रीमालवीयमहोदयानां समुद्योगो व्यर्थीकृतः स्यादिति । यद्यपि वयन्तु उभयस्यापि दलस्य नेशनलिष्टपार्टी-पार्लियामेण्टरी बोर्डात्मकस्य विरोधिन एव, यतो हि श्वेतपत्रीय-निर्णयानुसारमिदं दलद्वयं स्वात्मोपलाभं लभते । राजकीयमहासभायां गत्वा तदीयमेव निर्णयं विरोत्स्यति, इति स्पष्टतयैव व्याघातदोष आपतति ।

अस्तु यावान् हि राष्ट्रियसभाया राजसभाप्रवेशेनाधःपातस्ततो द्विगुणं दलद्वयविभागेनेति ईश्वरस्यैवमभीष्टं प्रतीयते । कथितमपि केनापि कविना—

मतिरुत्पद्यते तादृग् व्यवसायोऽपि तादृशः ।
सहायास्तादृशा ज्ञेया यादृशी भवितव्यता ।

सम्प्रति भारते कलेरेव राज्यं विद्यते । हिन्दुमोहम्मदीयेषु परस्परं कलिः । राष्ट्रियमहासभायां परस्परं कलिः । प्रान्तीय-मण्डलीय-राष्ट्रियसभायां परस्परं कलिः । प्रतिसमाजं परस्परं कलिः । प्रतिगृहं परस्परं कलिः, प्रतिधर्मसभं परस्परं कलिः । हिन्दुसमाजे स्पृश्यास्पृश्यादिनिमित्तमादाय परस्परं कलिः । ब्राह्मणाब्राह्मणादिभेदमादाय परस्परं कलिरिति सत्यं कलिसाम्राज्यमिदानीं भारते विद्यते । सर्वथा परमेश्वर एव श्वःश्रेयसं विदध्यादिति शिवम् ।

× × × × ×

## महाशक्तिः सुप्ता भजतु परिबोधं भगवती ।

—०:※:०—

यदैवाहं स्व-संस्कृतविद्वत्समाजे विद्यार्थिसमाजे वा दृष्टिपातं करोमि, तदैव हृदयं निराशयाऽवरुध्यते नेत्रे अन्धतमसेनाव्रियेते । सर्वथा प्रेक्ष्यमाणस्यास्य समाजस्य निद्राभङ्ग एव न भवति । परीक्ष्यग्रन्थमात्राभ्यासपरेऽस्मिन् समाजे देश-कालात्मविज्ञानमायात्येव नहि, इति सर्वेऽपि साम्प्रतिका विद्वांस आमनन्ति । इह प्रधानतया पञ्चैव विश्वविद्यालयो विद्यन्ते, यत्र संस्कृतपरीक्षा भवन्ति । पञ्जाम्बु-काशिक-विहारोत्कल-वङ्गीय-मद्रास प्रान्तीया विश्वविद्यालयास्तत्र प्रसिद्धाः । तत्र सर्वत्रैव ग्रन्था अपि त एव पाठ्यन्ते ये तासु परीक्षासु निर्धारिताः सन्ति । तत्र पञ्जाम्बुविश्वविद्यालये निबन्धलेखन-व्यवस्थायां सत्यामपि ग्रन्थाध्यापन-पाटवं नैव साधु सम्पाद्यते । काशिक-राजकीय-विद्यालये तु ग्रन्थानामेव घोषणं कार्य्यते तत्परीक्षार्थिनां निबन्धादि-लेखने ज्ञानाभाव एव तिष्ठति । गतवर्षतस्तत्रापि शिथिल-

पद्धत्या निबन्धलेखनव्यवस्थार्थं क्रियते मन्थरप्रयत्नः। विहारोत्कलीय-विश्वविद्यालयस्तु काशिकविश्वविद्यालयमेवानुकरोति। वङ्गीयविश्वविद्यालयीय-परीक्षा सरला सती सर्वतो देशकालोपयुक्तापि पूर्वोक्तदोषतो न व्यतिरिच्यते। मद्रासप्रान्तीयाऽपि अंशतः साध्वी सत्यपि सर्वत्रैव परीक्षासु विद्यमानात् बहुज्ञताऽभावदोषतो नैव परिहीयते। इतोऽन्या अपि महीसुर-जयपुरप्रभृति नगरस्थ-विद्यालया अपि संस्कृत-परीक्षां गृह्णन्ति। परन्तु तत्रापि संस्कृतज्ञानां कृते साम्प्रतिकप्रगतिप्रतिस्पर्द्धि व्यवस्थानं यथापेक्षितं तथा तु नैवास्ति। परन्तु तत्परीक्षोत्तीर्णानां विदुषां वैदुष्ये दृश्यते किञ्चिदाभ्यः सर्वाभ्योऽपि परीक्षाभ्यः समुत्तीर्णेभ्यो विद्वद्भ्यो वैलक्षण्यम्।

अस्तु नाम, सर्वा अपि इमाः संस्कृत-परीक्षा वर्तमानकाले संस्कृत-विदुषां तादृश्यो हितकर्यो नैवावलोक्यन्ते यादृश्यश्चापेक्षिताः सन्ति। सम्प्रति प्रथम-मध्यमयोः परीक्षार्थिनां कृते भूगोलेतिहासज्ञानं नितान्तमावश्यकम् गणितस्यापि कियान्भागस्तत्रावश्यक एव। लेखन-पद्धति-परिचयकृतेऽपि कापि व्यवस्थाऽपेक्ष्यते। इतः सर्वेभ्योऽपि विषयेभ्यो धर्मज्ञानं स्वास्थ्यविज्ञानञ्च सामान्यतया सर्वेषामेव परीक्षार्थिनां सुतरामावश्यकम्। तयोः कृते कुत्रापि परीक्षासु नास्ति व्यवस्था। राजकीय-परीक्षास्तु सर्वा अपि धर्मशून्या एव प्रचलन्ति। तत्र कारणं विद्यते। अस्माकं वर्तमान-शासनस्येयं पद्धतिरेवास्ति यत् कस्यापि धर्मस्य विषये विरोधो वा प्रोत्साहनं वाऽकृत्वोपेक्षाकरणमेव न्याय्यमिति। इत्यनेन हेतुना कुत्रापि राजकीय-परीक्षासु धर्मज्ञानार्थं नास्त्येव काऽपि व्यवस्था। तदनुकरण-परास्वन्यास्वपि सैवोपेक्षा प्रवृत्ता दृश्यते। यतश्च ताः सर्वा अपि परीक्षा दत्ताः छात्रा धर्मज्ञानशून्या एव भवन्ति। अस्यैव दोषस्य सर्वथा निरासाय श्रीभारतधर्ममहामण्डलीयाऽखिलभारतीय-विश्वविद्यालयतः (परीक्षायूनिवर्सिटी) सर्वा अपि परीक्षाः प्रवर्तिता विद्यन्ते। यासां कृते साधु दृढः प्रचारप्रबन्धोऽपि कृतोऽस्ति। सर्वेषामेव विषयाणामुपरि निर्दिष्टानां तासु परीक्षासु आगामिवर्षतः सन्निवेशो भविष्यति। धर्मस्य तु प्राधान्यं तत्र सम्प्रत्यपि विद्यत एव।

तेषां सर्वशक्तेरुद्बोध एव न भवति । यतश्च ते स्वजीविकानिर्वाहेऽप्यनुपयुक्ता भवन्ति । अस्माकं लक्ष्यमेतद् विद्यते, यदाभ्यः परीक्षाभ्यः समुत्तीर्णाश्छात्रा जीवनयात्रासमर्जनार्थं पराधीना न भवेयुः । संसारेऽस्मिन्सर्वत्रैव क्षेत्रे तेषां प्रवेशः स्यात्ते भूगोलेतिहासगणितधर्मादीनां सर्वेषामेवितानामावश्यकविषयाणां ज्ञातारो भूत्वा व्याख्यानादिना वाक्शक्तिं निबन्धलेखादिना च लेखशक्तिं बिभ्रतोऽत्रत्यां परीक्षां दत्वा जगति कार्य्यक्षेत्रेऽवतरिष्यन्ति चेन्नैव कोऽपि तेषां प्रतिस्पर्धी भवितुमर्हति ।

अतश्च संक्षेपेणैव तावत्ते निवेद्यन्ते यत् सर्वप्रथमं ते संस्कृतज्ञाः स्वलेख-शक्त्युद्बोधाय तु प्रतिदिनमेव किञ्चिल्लिखित्वा स्वगुरवे दर्शयन्तु । वाक्शक्तिप्रवर्द्ध-नाय च प्रति प्रतिपदं प्रत्यष्टमि, आहोस्विद् यदैव यस्यामेव तिथौ तेषां सौकर्य्यं स्यात्तस्यामेव तिथौ सर्वे मिलिता व्याख्यानरीत्या परस्परं विवादं कुर्य्युः । केवलमुपविश्य शास्त्रार्थपद्धत्यैव न हि, किन्तु उभाभ्यामेव प्रकाराभ्यां ते स्ववा-क्शक्तिं प्रबोधयेयुः । ततश्चाखिलभारतीय-संस्कृताध्यात्मिक-विश्वविद्यालयीय-संस्कृतपरीक्षास्थ-धार्मिकग्रन्थानामध्ययनेन सर्वथा स्वात्मानं योग्यतमं विदध्यु-रिति । राजकीय-परीक्षायास्तु सर्वथा अनुपयुक्तत्वे सिद्धेऽपि, सम्प्रति सर्वथा तस्या स्त्यागोऽसम्भवीति तामपि साधयेयुस्तया सहैतदुपरि निर्दिष्टं कर्म तु सर्वथा सर्वतः सम्पादनीयमित्येवास्माकं वक्तव्यम् । अत्र कोऽपि प्रतिबन्धः केनापि क्वापि कर्तुं न पार्य्यते । राजकीयसहायतां बिभ्रत्स्वपि विद्यालयेषु छात्राः स्वीयं संघं निर्माय संस्कृतच्छात्रसमिति-नाम्ना विवाद-व्याख्यानादिकं कुर्वन्तः स्वीयां वाक्शक्तिं वर्द्धयितुमर्हन्ति । वयञ्च नूतनां परीक्षानियमावलीं निर्माय सर्वत्रैव पाठशालाध्यक्षेषु तदिच्छुकेषु प्रेषयिष्यामः ततोऽत्रत्यायाः परीक्षायाः पाठ्यग्रन्थाना-मपि ज्ञानं भविष्यति । सर्वथा संस्कृतविद्यार्थिषु सुप्तानां शक्तिसंघानां समुद्बोधः स्यादित्येवास्माकं लक्ष्यं विद्यते । आंगूल-कुमारविद्यालये ( स्कूल ) विपठिषूणां आंग्लकलाशाला-( कालेज ) प्रभृतिविद्यालयच्छात्राणामपि धार्मिकी शक्तिः परिबुद्धा स्यात् । येन भारतस्य धार्मिकगुरुत्वेन सह सर्वोऽपि पुरातनः स्वात-न्त्र्यभावः पुनः समेधितो भवेत् । भारतीयायाः क्षत्रिय-ब्राह्मणधैर्य-धर्मशक्तेः पुनरुद्बोधेन सर्वस्यापि देशस्य मङ्गलमभ्युदयश्च भविष्यतीति सा महामाया आद्या शक्तिः 'या देवी सर्वभूतेषु शक्तिरूपेण संस्थिता' इति व्यास-वचनात्सर्व-त्रैव प्राणिषु प्रतिष्ठिता, सम्प्रति प्रतिबुद्धा स्यादिति तामेव महाशक्ति-मभ्यर्थयामहे—"महाशक्तिः सुप्ता भजतु परिबोधं भगवती" ।

## शक्तियागः

:०:

कर्मोपासनाज्ञानानामेकरूपेणैव समादरं कुर्वन्त्या आर्य्यजातेः सदाचारो यज्ञप्रधानोऽस्ति । आर्य्यजातेर्वेदानां प्रधानतया यज्ञ एवाधारभित्तिरुच्यते । देवा अपि यज्ञैरेव तृप्ताः सन्तो मानवेभ्यः सुखमैश्वर्यं भोगादिकञ्च प्रयच्छन्तो धरातलं शान्तमानन्दमयञ्च विदधति । यज्ञानां न्यूनतैवार्य्यजातेः साम्प्रतिकावनतेः प्रधानं निदानं विद्यते । अतश्च सम्प्रति यावानेव यज्ञप्रचारः स्यात्तावती एवोन्नतेरार्य्यजातेः पुनः प्रबलायिता स्यादिति । विशेषतश्च साम्प्रतम् भारते वर्षे यथा यथाऽऽधिक्येन यज्ञानुष्ठानं भविष्यति तथा तथा अस्य देशस्य, आर्य्यजातेः, सम्राजः साम्राज्यस्य किम्बहुना सर्वस्यापि पृथ्वीतलनिवासिनः प्राणिनो मङ्गलं भविष्यति ।

मानवसमाजश्च त्रिधा विभक्तो विद्यते । तामसिको जना राक्षस-सम्पत्तिमन्तो भवन्ति । राजसिकाश्चासुरसम्पत्तियुजः सात्त्विका एव देवसम्पत्तिशालिनो गीयन्ते । तामसिका जना अज्ञान-व्यसनादिकार्य्यप्रियाः । राजसा इन्द्रियभोग-मूलकप्रवृत्तयो रागद्वेष-मूलककार्य्यप्रिया भवन्ति । सात्त्विकास्तु जना पारलौकिक-चिन्ताविशिष्टा आत्मज्ञानेहासम्भृताः सात्त्विकयागादिसाधनाः परोपकारादिधर्मप्रियाश्च भवन्ति । ये च यज्ञा रागद्वेषमूलक-फलकामनाविरहिताः केवलं धार्मिक-कर्तव्यबुद्ध्यैव सम्पाद्यन्ते, वेदशास्त्रविधिमनुसृत्यानुष्ठीयन्ते, त एव सात्त्विका यागा अभिधीयन्ते । ईदृशा यागा यावन्त एवेहानुष्ठिता भवन्ति तावदेव देशस्य, समाजस्य, राज्ञः प्रजायाः किं बहुना समेषां प्राणिनां मङ्गलं भविष्यति ।

सनातनधर्माणश्च सर्वाधिकं दैवे जगति विश्वसन्ति । अयञ्च सर्वतन्त्र-सिद्धान्त-सिद्धोऽर्थो विद्यते यदयमस्माकं मृत्युलोको भूलोकस्य चतुरशीतितमो भागोऽस्ति । भूलोकस्य सप्त द्वीपानि सन्ति । तत्र जम्बूद्वीपस्यैव केवलस्य पितृलोकः प्रेतलोको नरकलोको नव वर्षाणि चेति द्वादश भागाः सन्ति । अयञ्चास्माकं भारतवर्षात्मको मृत्युलोको भूलोकस्याल्पायानंशो निगद्यते । इत्थञ्चास्माकमयं मृत्युलोकः सप्तस्वर्गसप्तपातालात्मकस्य ब्रह्माण्डस्य सप्तदशोत्तरशततमो-भागः कथ्यते । तात्पर्य्यतः सनातनधर्मस्य सूक्ष्मविज्ञानानुरूपं स्थूलो महानपि मृत्युलोकोऽयमस्माकं ब्रह्माण्डस्याल्पतमो भागोऽस्ति । अन्ये च सर्वे देवलोकाः सन्ति । सनातनधर्माणश्चार्य्याः सूक्ष्मं दैवराज्यमेवास्य स्थूलस्य मृत्युलोकस्य सञ्चालकमाधारञ्चामनन्ति ।

इह भारते प्राक्तने काले दैवस्य जगतः सम्बर्द्धनाय देवानाञ्च प्रसादावाप्तये सर्वदा सर्वत्रैव याग-दान-होमा भवन्ति स्म। देवाश्च जीवानां कर्मणां सञ्चालकास्तत्फलदातारश्च सन्ति। देवानां प्रसादेनैव देशस्य समाजस्य सर्वथा मङ्गलं भवति। राजानः प्रजाश्च सुखसमृद्धिभाजो भवन्ति। इत्थमेवार्य्याणां दृढो विश्वासः।

सम्प्रति हि नैव केवलं भारते वर्षे प्रत्युत सर्वत्रैव पृथ्वीभागे घोराया अशान्तेः साम्राज्यं विद्यते। देवासुरसंग्रामे चासुरा एव विजयं लभमाना दैनन्दिनं प्रबलायन्ते। अतश्च देवानां प्रसादमधिगत्य यज्ञ दैवस्य जगतो दैव्याश्च शक्तेः सम्बर्द्धनेन असुराणां दमनोत्तरं जगति शान्तिसाम्राज्यं प्रतिष्ठापयितुं पार्य्यते। अतश्चाद्यत्वे येषु काऽपि स्याच्छक्ति स्तैस्तैरवश्यं यथाशक्ति यज्ञानुष्ठानेनासुरशक्ते र्निरोधपूर्वकं दैव्याश्च शक्तेः सम्बर्द्धनार्थं यतितव्यमेव।

इत्यत एव श्रीभारतधर्ममहामण्डलीयप्रधान-कार्य्यालये वाराणसेये नैमित्तिकयागातिरेकेण नियमतो हिन्दूमहापर्वसु यथा जन्माष्टम्यां, महाशिवरात्र्यां, सरस्वतीपूजायां,लक्ष्मीपूजायां, अन्येषु च प्रधान-पर्वसु त्रयस्त्रिंशद् यागा भवन्ति। तत्रैव शारद-नवरात्रेषु वासन्तीयनवरात्रेषु च घटस्थापनपुरस्सरं भगवत्याः पूजनप्रभृति-पवित्र-कर्माण्यनुष्ठीयन्ते। यदर्थञ्च महामण्डलेन सम्बद्धस्यैकस्य-सर्वजनीन-कोशस्य संस्थापना विद्यते। येनैतादृशस्य नित्यनैमित्तिक-पूजामहोत्सवयज्ञादि-कर्मणोऽनुष्ठानस्य व्यवस्था कृता विद्यते। इतोऽधिकतया च उभयोरपि नवरात्रयोः शतचण्डीयागस्य हवनात्मकस्य च यागस्य, शक्तियागस्य चानुष्ठानव्यवस्था विद्यते। अक्षयतृतीयायाञ्च गायत्रीयागस्य इत्थमेवान्यत्रापि पर्वणि शुभकार्य्याणामनुष्ठानस्य प्रबन्धो नियमतो विद्यते।

तथैव पद्धत्याऽस्मिन्हायनेऽपि आश्विनशुक्लप्रतिपद्धिशिष्टमङ्गलवासरतो विजयदशमीं (बुधवासरं) यावत् शारदनवरात्रोपलक्षये महामण्डलीययज्ञमण्डपे पाठपूजाजपहवनात्मकस्य शक्तियागस्यानुष्ठानं महता समारोहेणाभूत्। महाष्टम्याञ्च श्रीमतो हनूमद्देवस्य विशिष्टपूजनेन सह श्रीमहामण्डलीयध्वजादण्डस्य षाण्मासिकः संस्कारश्च समजनि। ब्राह्मणानां पूजनं सत्कारो भोजनादिकञ्च शुभकृत्यजातं सम्पन्नम्। तत्र च महोत्सवे समवेताः श्रद्धालवो धर्मप्राणाः सज्जना महोत्सवं पूजादिकं पश्यन्तो धार्मिकोत्साहं वर्द्धयन्तो महामण्डलीय-सन्यासि-साधुमहात्मनां विदुषाञ्चाशीर्वादभाजनान्यभूवन्निति। इत्थं हि सर्वत्रैव सम्प्रति देशे शुभ-कृत्यानुष्ठानं भवतु इति परमेश्वरं प्रार्थयामहे।

× × × ×

# ग्राहकाभिवृद्धिः ।

—:※:—

अस्माकं 'नववर्षारम्भ' इति शीर्षकं विनिवेदनं पठित्वा बहवो महानुभावास्तत्कर्मानुष्ठितवन्त इति तेभ्यो धन्यवादं दद्मः । तत्रैव प्रसङ्गे धवलपुरस्टेट्निवासिनः श्रीमन्तो भालचन्द्रमुखोपाध्यायाः सूचयन्ति यद् "अहं कस्मैचन पुस्तकालयाय वाचनालयाय वा सूर्य्योदयस्यैकमङ्कमेकहायनपर्य्यन्तं दास्यामीति" यो हि पुस्तकालयस्य वाचनालयस्य वाध्यक्षस्तेभ्य इदं साहाय्यमभिलषति, स तान् सूचयतु तेषामाज्ञया वयं वर्षं यावदेकमङ्कं तस्य सङ्केतेन प्रेषयिष्यामः । एवमन्येऽपि महानुभावाः सूर्य्योदयग्राहकसंख्यावर्द्धनाय प्रयत्नं विधास्यन्तीत्यस्माकं विश्वासः ( संपादकः )

× × × × ×

# विद्वत्समादरणम् ।

—:o:—

सनातनधर्ममार्तण्डः, "धर्मशास्त्राचार्यः," इति विविधोपाधिविभूषितेभ्यः—पं० श्रीरेवाशङ्कर मेघजी पुरोहित—देलवाड़ाकर—इत्येतेभ्योऽभिनन्दनपत्रम् "तर्कालंकार"—इत्युपाधि-सुवर्णपदकप्रदानं कर्तुं भाद्रपदशुक्ल त्रयोदश्यां मोहमय्यां, महोपाध्याय पं० श्रीदयाराम खटाउ वेदान्तवाचस्पति—महोदयानामध्यक्षत्वे तत्कृतसनातनधर्मपरिचर्याकृतज्ञतां प्रकाशयितुं सनातनधर्मिणां संमेलनं समजनि । तस्मिंश्च स्थानीयाः पं० श्रीकार्तान्तिकमहोदयाः; पं० श्रीधनंजय पांधी,"—अलंकारभूषणम्; सद्धर्मभास्करः श्रीनगीनदास पु० संघवी; श्रीमगनलाल खख्खर जे० पी; श्रीमोहनलाल देशाई एडवोकेट; श्रीमोतीरामशास्त्री-इत्यादयः प्रसिद्धा विद्वांसः समुपातिष्ठन् । किं च शारदापीठाधीश्वराः श्रीशंकराचार्याः; श्रीधरआपाजी अग्निहोत्रि-प्रमुखाः-श्रीसनातन समस्त हिन्दुधर्मसभा,-अ० भा० व० स० संघ-अमदावाद; इत्यादयो विद्वत्संदेशैः, श्रीमनुभाई सॉलिसिटर B.A.L.L.B; श्रीनरवरलाल देशाई B.A. तंत्री "गुजराती;" श्रीरामचन्द्र माधवराम भट्ट जे० पी; श्रीपीताम्बर दास मजिस्ट्रेट-सिन्ध,-इत्यादयश्च दलप्रेषणैः स्वसहानुभूतिं प्राहिण्वन् । परिषदस्यां शास्त्रिणां विविधधर्मसेवाप्रशस्त्यनंतरं संसद् एकं "सौराष्ट्रछात्र निवास" इति संस्थायाश्च द्वितीयमभिनन्दनपत्रं तेभ्यः समर्पितम् । नास्तिकैः क्षिप्तेभ्यः कुतर्ककुठारा

घातेभ्यः कुतर्कैर्धर्मतत्त्वं संगोप्य विशदतया धर्मरहस्यप्रतिपादनेन "तर्कालंकार" इति–अन्वर्थोपाधिना विभूष्य धर्मैककार्यपरितोषेण सुवर्णपदकं समर्पितञ्च। इति पं० श्रीरेवाशङ्कर शास्त्रिणां धर्मरक्षणदक्षता सनातनधर्मिणां च तत्कृतज्ञते-त्युभे अन्योन्यं समलमकार्ष्टाम् ।

निवेदकः—

**देवकृष्णदेव काव्यतीर्थः–अध्यापकः डी० जे० सं० पाठशाला बुम्बई ।**

---

## ग्राहकमहोदयेभ्यो निवेदनम् ।

——:o:——

श्रीमतां व्यतीताब्दस्य वार्षिकं साहाय्यं यदासीत् तत्तु गतश्रावणमासे समाप्तिमगात्। अतः शीघ्रं धनादेश-( मनिआर्डर ) द्वारा स्वकीयं वार्षिकं साहाय्यं प्रेषयन्तु ।

३३०१—मन्त्री–अकलंक पुस्तकालय सहारनपुर ।
३३०२—श्रीहेरम्बचन्द्र, मेदनापुर ।
३३०५—श्रीशिवप्रसादमिश्र धमारी ।
३३०६—श्रीशिवचन्द्रझा विद्यार्थी, दरभंगा ।
३३०७—श्रीपद्मनाथशर्मा–सुकेतस्टेट ।
३३०८—श्रीत्रिलोकीनाथ विद्यार्थी दिल्ली ।
३३१०– पं० कस्तुरीलालशर्मा जम्मू ।
३३११—सेक्रेटरी–स्टूडेण्ट एसोशियेशन मैलापुर, मद्रास ।
३३१२—श्रीगुरुशान्तदेवजी काशी ।
३३१४—पं० रामनाथपाण्डेय शास्त्री इटावा ।
३३१५—श्रीसिद्धलिङ्ग शर्मा वंकापुर, काशी ।
३३१६—श्रीमुरलीधरशर्मा विद्यार्थी, भागलपुर ।
३३१७—श्रीजनरञ्जनराय सेक्रेटरी नवद्वीप ।
३३१६—श्रीभागवतप्रसादशर्मा घुघुली ।
३३२१—मन्त्री–छात्रसभा, गजाधरी ।
३३२३—शान्तिशर्मा उमाशंकर डाकोर ।
३४०३—व्यासभ्रमर, कोटास्टेट ।

---

# उपयुक्तक्रिया-क्रमिकसङ्कलनम्।

सङ्कलयिता—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री।

('मुलतान'-स्थ-श्रीसनातनधर्मसंस्कृतकालेजाऽध्यापकः)

———:❀:———

(क्रमागतम्)

छोड़ता है ४४।

अपास्यति, अपास्यत्। उज्झति, औज्झीत्। (१) उत्सृजति, उदस्राक्षीत्। (१) जहाति, अजहात्। (१) त्यजति, अत्याक्षीत्। निरस्यति-निरास्थत्। (४) परिहरति, पर्यहार्षीत्। मुञ्चति (१) अमुञ्चत्। मोचयति। रहयति। वर्ज्जयति, अववर्ज्जत्। विघटयति। विमुञ्चति, (१) व्यमुचत्। (१) वियुङ्क्ते। विरहयति। विश्लेषयति, व्यशिश्लिषत्। विसृजति (१) व्यस्राक्षीत्। संन्यस्यति।

जतलाता है ४५ (द्विकर्म्मकः)

अवगमयति। अवसाययति। ज्ञ (ज्ञा) पयति, अजिज्ञपत्। निवेदयति। प्रत्याययति। बोधयति। विज्ञापयति। वेदयति।

जलाता है ४६।

उद्द्योतयति, अदिद्युतत्। ज्व (ज्वा) लयति, अजिज्वलत्। (१) दहति, अधाक्षीत्। प्लुष्यति, अप्लुषत्। सन्दीपयति। सन्धुक्षयति।

जवाब देता है ४७।

(१) अभिवक्ति। उत्तरति। उत्तरयति, उदततरत् (उत्तरमाख्यत्, अत्र आग्लोपित्वान्न सन्वत्)। (१) प्रतिवक्ति, प्रत्यवोचत्। (१) प्रत्याह, प्रत्यब्रवीत्।

जाता है ४८ (एतद्योगे द्वितीया चतुर्थ्यौ भवतः)।

अञ्चति। अयते, आयिष्ट। (४) इयर्त्ति, आरत् (१) ईयते। ऋच्छति आर्च्छीत्। एति, अगात् (१)। (४) गच्छति, अगमत्। (१) जिहीते, टीकते। प्रतिष्ठते (१)। (१) याति, अयासीत्। (१) विसर्पति, व्यसृपत्। व्रजति, अव्राजीत्। (४) सरति, असार्षीत्।

(२) जागता है ४९।

जागर्त्ति, अजागः—अजागरीत्। (१) प्रबुध्यते, प्राबुद्ध।

---

(१) अनिट्। (२) अकर्मकः। (३) वेट्। (४) लृदि सेट्, अन्यत्राऽनिट्।

जानता है ५० ।

( ४ ) अधिगच्छति, अध्यगच्छत् । ( ४ ) अवगच्छति, अवागमत् । अव-धारयति । ( १ ) अवबुध्यते । अवयाति ( १ ) । अवैति, ( १ ) अवैत् । उन्नयति ( १ ) । ( १ ) उपलभते । ( १ ) जानाति, अजानात्—अज्ञासीत् । ( १ ) जानीते, अज्ञास्त । ( १ ) प्रतिपद्यते, प्रत्यपद्यत । ( १ ) प्रत्येति । ( १ ) बुध्यते, अबोधि, अबुद्ध । मनुते, अमनुत । ( १ ) मन्यते, अमंस्त । वेद—वेत्ति, अवेदीत् ।

ज़िद करता है ५१ ।

( १ ) अभिनिविशते । आगृह्णाति, आगृह्णीते । ( १ ) निर्बध्नाति ।

( २ ) जीता है ५२ ।

जीवति, अजीवत् । प्राणिति । श्वसिति ।

जोड़ता है ५३ ।

घटयति, अजीघटत् । ( १ ) युनक्ति, अयुनक् । योजयति, अयूयुजत् । ( १ ) सन्धत्ते, समधित ।

ठगता है ५४ ।

( १ ) अभिसन्दधाति । ( १ ) अभिसन्धत्ते । उल्लापयते । छलयति । प्रतारयति । वञ्चयते, अववञ्चत । ( ४ ) विप्रकरोति । विप्रलभते ( १ ) । ( १ ) सन्दधाति ।

( २ ) ठीक नहीं ५५ ।

विघटते । विपर्य्यस्यति । ( १ ) विपर्य्येति । विसंवदति । व्यभिचरति ।

( २ ) डरता है ५६ भययोगे पञ्चमी ।

आशङ्कते, आशङ्किष्ट । उद्विजते । त्रसति । त्रस्यति । प्रकम्पते । बिभेति ( १ ) अभैषीत् ।

डराता है ५७ ।

त्रासयति, अतित्रसत् । भापयते, अबीभपत ( हेतुभये ) । भीषयते, अबी-भषत ( हेतुभये ) । भाययति, अबीभयत् ( करणभये ) ।

ढकना है ५८ ।

अपवारयति । अपिदधाति ( १ ) । आच्छादयति, आचिच्छदत् । आवृ-णोति, आवृणोत् । तिरयति । ( ४ ) तिरस्करोति । ( १ ) पिदधाति, प्यधात् । ( १ ) व्यवदधाति । स्तृणाति । ( १ ) स्तृणोति । स्थगयति । सङ्गोपयति । संवृणोति । स्थगयति । ऊर्णौति, ऊर्णोति ।

---

( १ ) अनिट् । ( २ ) अकर्मकः । ( ३ ) वेट् । ( ४ ) लटि सेट्, अन्यत्राऽनिट् ।

ढूंढता है ५६ ।

अन्विच्छति । अन्विष्यति । अन्वेषयति । गवेषयति । मार्गयति; अममार्गत् । मृगयते, अममृगत । मृग्यति, अमृग्यत् । ( १ ) विचिनोति ।

तिरस्कृत करता है ६० ।

( ४ ) अध ✕ करोति । अधरयति । ( ४ ) अधरीकरोति । अभिभवति, अभ्यभूत् । गलहस्तयति । ( १ ) जयति, अजैषीत् । तर्ज्जयते, अततर्ज्जत । ( ४ ) तिरस्करोति । ( ४ ) तृणीकरोति । त्रपयति । धर्षयति । ( ४ ) धिक्करोति । नमयति, अनीनमत् । ( ४ ) निकरोति । निम्नयति ( ४ ) न्यक्करोति, न्यगकार्षीत् । पराभवति । परिभवति, पर्य्यभूत् । भर्त्सयते, अबभर्त्सत । लघयति । ( १ ) लघूकरोति । लज्जयति, अललज्जत् । विलङ्घयति । विजयते । ( १ ) व्रीडयति । हसति, अहसीत् । ह्रेपयति, अजिह्रिपत् ।

तोड़ता है ६१ ।

कृन्तति, अकृन्तत् । खण्डयति, अचखण्डत् । ( १ ) छिनत्ति, अच्छैत्सीत् । ( १ ) छिन्ते । छेदयति । ( १ ) द्यति । ( १ ) भिनत्ति, अभिनत अभैत्सीत् । ( १ ) भिन्ते । भेदयति । लुनाति, अलुनात् । लुनीते, अलुनीत । विदारयति, व्यददरत् (अत्स्मृद् । ( ३ ) वृश्चति । शकलयति ।

( २ ) थकता है ६२ ।

आयस्यति । ( १ ) ग्लायति; अग्लासीत् । ताम्यति । श्राम्यति, अश्राम्यत् । प्रयस्यति । ( १ ) म्लायति ।

( २ ) था ६३ ।

अवर्त्तत, अवर्त्तिष्ट, अवृतत् । अविद्यत (१) अवित्त । अभूत् । आसीत् । आस्त, आसिष्ट ।

दुःखी करता है ६४ ।

उन्मनयति । कदर्थयति । ( ३ ) क्लिश्नाति, अक्लिश्नात् । क्लेशयति । खेदयति, अचीखिदत् । ग्ल ( ग्ला ) पयति; अजिग्लपत् । तापयति, अतीतपत् । ( १ ) तुदति, अतौत्सीत् । दुःखयति ( ४ ) दुःखाकरोति । ( १ ) दुनोति, अदुनोत् । दुमनयति । पीडयति, अपीपिडत्, अपिपीडत् । बाधते । विह्वलयति । व्यथयति, अविव्यथत् ।

( २ ) दुःखी होता है ६५ ।

(१)अनुतप्यते । अनुशेते । उद्विजते , उदविजिष्ट । कृच्छ्रायते । क्लाम्यति ।

( १ ) अनिट् । ( २ ) अकर्म्मकः । ( ३ ) वेट् । ( ४ ) लृटि सेट्, अन्यत्राऽनिट् ।

क्लिश्यते। (१) खिद्यते, अखित्त। (१) ग्लायति (१) तप्यते अतप्यत, अतप्त। ताम्यति। दुःखायते, अदुःखायिष्ट। दुर्म्मनायते, दुरमनायिष्ट। दुर्म्मनीभवति। दूयते, अदूयत। (१) निर्व्विद्यते। मलिनीभवति। (१) म्लायति। (१) विखिद्यते, व्यखिद्यत। विमनीभवति। विमनायते, व्यमनायिष्ट। (१) विषीदति, व्यषीदत्। व्यथते, अव्यथिष्ट।

दुश्मनी करता है ६६।

(१) अपरज्यति। (१) द्वेष्टि। विगृह्णाति। (१) विद्वेष्टि। विराध्यति। (१) विरुणद्धि। (१) विरुध्यते। (२) वैरायते। विवदते विप्रतिपद्यते (१)।

देखता है ६७।

अवलोकयति, अवालुलोकत्। आलोकते, आलोकिष्ट। ईक्षते, ऐक्षिष्ट। (१) दृशा पिबति। (४) दृशोरुपहरति।—दृग्गोचरीचरीकर्त्ति। (१) दृष्टिमुपनयति। (१) नयनाऽतिथिं विधत्ते। निचायति। (१) निध्यायति। निभालयति। निरूपयति, न्यरूपयत्। निर्व्वर्णयति। निशामयति। नेत्रप्राघुणकतामातनुते। नेत्रयोर्ढौकयति। (१) पश्यति, अद्राक्षीत्-अदर्शन्। लक्षयति। विभावयति, व्यभावयत्। विलोकते, व्यलोकिष्ट। वीक्षते, ऐक्षिष्ट। (४) साक्षात्करोति।

देता है ६८ (एतद्योगे चतुर्थी भवति)।

अर्प्पयति, आर्प्पिपत्। (१) दत्ते, अदित। ददते, अददिष्ट। ददाति (१) अदात्। वितरति, व्यतारीत्। विश्राणयति, व्यश्राणयत्। (परस्वत्वाऽनुत्पादने तु न चतुर्थी)।

(२) देर करता है ६९।

चिरयति। मन्दायते। विलम्बते। विलम्बयति, व्यललम्बत्।

धारण करता है ७०।

आलम्बते, आलम्बिष्ट। कलयति, अचकलत्। दधते, अदधिष्ट। (१) दधाति, अदधात्, अधात्। (१) धत्ते, अधित। (४) धरति। धारयति, अदीधरत्। (४) बिभर्त्ति, अभार्षीत्। (१) वहति, अवाक्षीत्। वहते (१) अवोढ॥

धोता है ७१।

धावति। प्रक्षालयति। शोधयति। (क्रमशः)

(१) अनिट्। (२) अकर्मकः। (३) वेट्। (४) लृदि सेट्, अन्यत्राऽनि।

# कालिदासस्य निश्चितसमयः ।

—:०:—

[ ले० पण्डितलक्ष्जूरामशास्त्री विद्यासागरः । ]

महाकविकालिदासस्य समयः संस्कृतसाहित्यस्य विवादपूर्णसमयेष्व-न्यतमः । अस्मिन् विषये परःसहस्रविद्वद्भिः स्वस्वमतानि प्रकटितानि परमद्यावधि कश्चिदपि निश्चितसिद्धान्तो नासाद्यत । केचिदाहुः-संवत्प्रवर्तकविक्रमादित्यस्य सभायाः प्रधानपण्डितः कालिदास आसीत् । विक्रमादित्यश्च स ईशातः सप्तपञ्चा-शद्वर्षपूर्वं वर्ततेस्म । परन्तु वयमत्र विप्रतिपद्यामहे । अस्मन्मते वर्तमानविक्रमसंवत् सर्वप्रथमं विक्रमादित्येन न प्रचालितः । किन्त्वयं प्रथमं मालवसम्वत्कथ्यतेस्म । सम्प्रति बहूनि ताम्रपत्राणि एतादृशानि लब्धानि येषु "मालवानां जयः" इत्येवं लिखितमस्ति । स च जयोऽस्मन्मते मालववीरद्वारा ग्रीकयवनराजं मिलिन्दं परा-जित्य पुष्पमित्रेण तत्पुत्राग्निमित्रेण वा कृत आसीत् । तेनैव तज्जयोपलक्षये एको यज्ञोऽपि कृतः । यस्मिन्महाभाष्यकारः पतञ्जलिरपि सम्मिलित आसीत् । यदुक्तं महाभाष्ये "इह पुष्पमित्रं याजयामः" स मालवसंवत्तेनैव प्रचालितो भवेत् । डा० भाण्डारकरप्रभृतिभिर्यः समयोऽग्निमित्रस्य प्रदर्शितः स खलु नितरामशुद्धः । पुन-श्च तस्यैव मालवसंवत्सरस्य नाम गुप्तवंशीय चन्द्रगुप्तद्वितीयेन, मालववीरद्वारैव शकान् विजित्य स्वनाम्ना विक्रमसंवद्रक्षितम् । तस्य चारम्भकालस्तेन स एव रक्षितः । चन्द्रगुप्तविक्रमादित्यस्तस्मिन्समये उज्जयिन्यां राज्यमकरोत् । एतस्यैव-सभायाः प्रधानपण्डितः कालिदास आसीत् । एतत्सर्वं कालिदासेनैव "ज्योतिर्वि-दाभरणग्रन्थे" स्पष्टतया लिखितम् । यथा—"वर्षे सिन्धुरदर्शनाम्बरगुणै र्याते" कलौ सम्मिते । मासे माधवसंज्ञके च विहितो ग्रन्थक्रियोपक्रमः ॥ तथा—शाकः शराम्भोधियुगो ( ४४५ ) नितो हृतो माने खतर्कैरयनांशकाः स्मृताः ॥ ज्यो० वि० १ । १८ । अर्थात्-अयं ग्रन्थो मया विक्रमसंवत्सरस्य चतुर्विंशे वर्षे लिखितः । यः शाकसंवत् ( १३५ ) विक्रमसंवद्वर्षेभ्यः पश्चात्प्रचलितः । तस्याधुना चतुःशत-वर्षेभ्योऽप्यधिका वर्षा(?) व्यतीयुः । अत्रेयमाशंका भवति, यो ग्रन्थो विक्रमीयचतु-र्विंशे वर्षे लिखितोऽभूत्तस्मिन् शाकसंवत्सरस्य नाम कथमायातम् ? (१३५) विक्रम-संवदब्दानां पश्चादेव शाकसंवत्सरस्य प्रचलितत्वात् । तत्रायं समाधिः-ग्रन्थकारेण लिखितं मयाऽयं ग्रन्थो वराहमिहिरमतमनुसृत्य लिखितः । वराहमिहिरमतानुसारं कलेः ( ३०६८ ) वर्षाणां मध्यात् युधिष्ठिरशाकस्य ( २५६६ ) वर्षाणां वियोजनेन ( ५२३ ) विक्रमाब्दः । * ( ५०२ ) शाकाब्दः । (५८०) खिष्टाब्दो ग्रन्थरचनाकालः

* कोऽयं गणना क्रम इति न साधु स्फुरति ( सं० )

समायाति। यश्च सर्वथा प्रकृते संगतः। ग्रन्थान्ते कालिदासेन लिखितमस्मन्महाराजविक्रमादित्येन भारतशत्रुं रूमदेशाधिपतिं शकराजमेकं विजित्य स्वनाम्ना संवदेकः प्रचालितः। अस्य सभायां वराहमिहिरप्रभृतयो ज्योतिर्विदः, अमरसिंहवररुचिमादृशाश्च कवयः सन्ति। संप्रति महाराजो विक्रमादित्य उज्जयिन्यां विराजते। किञ्चेदमपि लिखितं यन्मया रघुवंशादिकाव्यत्रयमपि, निर्मितं संभवतो नाटकत्रयं तावत्तेन न लिखितमासीत्। रघुवंशादिग्रन्थेषु बहुत्र स्थलेषु गुप्त-कुमार-विक्रमशब्दा उल्लिखिताः सन्ति। ते भङ्ग्या चन्द्रगुप्त-कुमारगुप्तादीनामेव बोधकाः स्युरित्यत्र नास्ति संदेहावसरः। व्यङ्ग्यार्थप्रिया हि कवयः। विक्रमादित्यश्च कालिदासवर्णितोऽत्र चन्द्रगुप्तद्वितीय एव भवितुमर्हति। अन्यकल्पने मानाभावात्। वराहमिहिरेणापिस्वसंहितानिर्माणसमयः (४२७) शकाब्दस्तदनुसारं (५६२) विक्रमाब्दश्च लिखितो यः खलु सर्वथा प्रकृतेऽनुकूलः। विक्रमादित्यतो लब्धामरसिंहापरनामकस्यामरकोषकर्तुं दुर्गसिंहस्याप्ययमेव निश्चितसमयः सम्प्रति शिलालेखेषूपलब्धः। मालविकाग्निमित्रनाटके कालिदासेन "भाससौमिल्लकविशूद्रकादीना" मित्येवं शूद्रककवेर्नाम गृहीतं स च शूद्रको मृच्छकटिकप्रणेता कविः स्कन्दपुराणानुसारं (३२९०) कलिगताब्देषु तदनुसारं विक्रमीयतृतीयशतकेऽभूत्। अयमेव हि संप्रतिशूद्रककवेः निश्चितसमयो मन्यते। एतेन-रघुवंशादिकाव्यत्रयकर्तैव कालिदासो मालविकाग्निप्रभृतिनाटककर्ता सिद्ध्यति। विक्रमस्य द्वितीयशतके कनिष्कराजो राज्यमकरोत्तत्सभायामश्वघोषकविरासीत्। एतन्निर्मितात् बुद्धचरितकाव्यात्सौन्दरानन्दकाव्याच्च कालिदासेन कतिचित् पद्यांशाः स्वकाव्येषु गृहीताः। यथा—नवं वयो दीप्तमिदं वपुश्च बु० च०] नवं वयः कान्तमिदं वपुश्च, र० वं०] प्रमदानामगतिर्न विद्यते,, सौन्द०] मनोरथानामगति र्न विद्यते, कु० सं०] नैष दोषः। सर्वैरेव कविभिः स्वपूर्ववर्तिनां कवीनामाश्रयो गृहीतस्तद्यथा—"माघेन भारवेः, भवभूतिना कालिदासस्य, जयदेवेन मुरारेः मया च जयदेवस्य, शूद्रकेण भासस्य, कल्हणेन विल्हणस्य, बाणेन सुबन्धोः, साहित्ये विश्वनाथेन मम्मटस्य, न्याये विश्वनाथपञ्चाननेन गंगेशोपाध्यायस्य। व्याकरणे भट्टोजिदीक्षितेन कौमुद्यां सारस्वतस्य, नागेशभट्टेन शेखरे तत्त्वबोधिन्याः। कति ब्रूमः। भर्तृहरिणापि योगिराजेनाश्वघोषस्य पद्यद्वयं वैराग्यशतके उद्धृतम्। किं सोऽपि न मन्यते महाकविः। सुबन्धुना वासवदत्तायां भर्तृहरेः पद्यद्वयमविकलं गद्ये परिणतम्, कादम्बरी तु बाणस्य वासवदत्तायाः संस्कृतसंस्करणमेव मन्यते बहुभिः। किं नास्ति बाणस्यापि महाकवित्वं यद्विषये बाणोच्छिष्टं जगत्सर्वमिति प्रसिद्धिः। एतावतेदं सिद्धं यत्कालिदासस्य तथाकृतेऽ

पि सति महाकवित्वमव्याहतम्। "हालेनोत्तमपूजया कविवृषा श्रीपालितोलालितः। ख्यातिं कामपि कालिदासस्युकविर्नीतः शकारातिना॥ एतयाऽभिनन्दकवेरुक्तया—केऽभूवन्नाढ्यराजस्य (शालिवाहनस्य) काले प्राकृतभाषिणः। के न श्रीसाहसांकस्य ( विक्रमादित्यस्य) काले संस्कृतभाषिणः॥ इति सरस्वतीकण्ठाभरणकृतो महाराजभोजस्योक्तया चेदं सिद्धयति। यत् शाकप्रवर्तकशालिवाहनः पूर्वं, शकारिर्विक्रमादित्यः पश्चादभूत्। शालिवाहनकृतगाथासप्तशत्यां "संवाहनसुखरसतोषितेन ददता तव करे लक्षम्। चरणेन विक्रमादित्यचरितमनुशिक्षितं तस्याः"॥ इत्येवं वर्णितो विक्रमादित्यो बृहत्कथोक्तश्च राजतरंगिणीगणनानुसारं काश्मीरिकहर्ष-विक्रमादित्यो भवितुमर्हति। यत्सभापण्डितेन मातृगुप्तेन कालिदासोपनाम्ना हर्षमित्रस्य प्रवरसेनस्य नाम्ना सेतुबन्धनामकं प्राकृतकाव्यं निर्मितं, यस्योल्लेखो दण्डिना काव्यादर्शे बाणभट्टेन च हर्षचरिते कृतः। हर्षविक्रमादित्यस्य शकपराजयकर्तृत्वं संवत्प्रवर्तकत्वं राजतरंगिण्यां न लिखितं कल्हणेन। इदन्तु लिखितं-'यदेकः परमप्रतापो विक्रमः षष्ठशतकेऽप्यभूदिति। स च चन्द्रगुप्त द्वितीय एव भवेत्। विक्रमसभापण्डितवररुचिभगिनीपुत्रः सुबन्धुर्लिखति "सारसवत्ता विहता नवका विलसन्ति चरति नो कंकः। सरसीव कीर्तिशेषं गतवति भुवि विक्रमादित्ये॥ एतत्पद्यान्तर्गतविलापेन सुबन्धोर्विक्रमद्रष्टृत्वं सिध्यति। सुबन्धुसमयश्च विक्रमीय-सप्तमशतके निश्चितः। "शृङ्गारे ललितोद्गारे कालिदासत्रयी किमु" इति राजशेखरोक्त्या कालिदासास्त्रयः प्रतीयन्ते। प्रथमो मातृगुप्तकालिदासः। द्वितीयोऽस्माकम्। तृतीयः सिन्धुलविक्रमाश्रितः पद्मगुप्तकालिदासश्च। चालुक्यवंशेऽप्येको विक्रमोऽभूद्यस्य वर्णनं मिताक्षरान्ते वर्तते। अस्माकं कालिदास उज्जयिनीवास्तव्य एवासीदिति बहुभिः प्रमाणैर्ज्ञायते। अधिकमस्मत्प्रणीते "संस्कृतसाहित्यपरिचये" द्रष्टव्यम्। *

* ( विवादपूर्णोऽयं विषयो विस्तारेण लेखनीय आसीदिति पुनरन्यमतखण्डनपुरस्सरं लेखितुं मेऽनुरोधः। सं० )

## एकःशास्त्रीयप्रश्नः।

आषाढ़-शुक्लपूर्णिमायां गुरौ यत् ग्रस्तोदयं चन्द्रग्रहणं जातं तत् कुत्रचिद् दृष्टं कुत्रचन न दृष्टम्। यत्र ग्रहणं न दृष्टं तत्र केचन विद्वांस एवं मन्यन्ते यत् भारतवर्षस्यैकस्मिन् प्रान्ते ग्रहणस्य सत्वेऽपि प्रतिप्रान्तेऽदृष्टेऽपि च ग्रहणे स्नानादिकं कार्यमेव एकदेशत्वात्। यत्र ग्रहणं भवति तत्रतु स्नानादिकं भवत्येव। यत्र च ग्रहणं न दृश्यते तत्रापि ग्रहणस्योद्देशेन स्नानपुण्यादिकं कार्यं न वेति सप्रमाणमस्मिन्नेव समाचारपत्रे सुधीभि र्लेख्यम्।

मंत्री सनातनधर्मसभा नवलगढ।

# समालोचनासारः ।

## शिखा रहस्यम्

विद्याविशारदादि विविधविरुदावली विभूषितेन पुरोहितोपाह्वेन पं० श्रीरेवाशंकरमेघजी शास्त्रिणा मुंबापुरीस्थ-देवीदास-लल्लुभाई संस्कृत-पाठशालाऽध्यापकेन निर्मितमिदं पुस्तकं शिरःस्थशिखा विषये साधु वैज्ञानिक-विवेचनविशिष्टं विद्यते । पुस्तकेनानेन साम्प्रतिकपाश्चात्य-शिक्षाविदूषितमस्तिष्कैः कृतानां सर्वेषामेवैतद्विषयकाक्षेपाणां समाधानं भवति । सर्वैरेव विशेषतो गुर्जरभाषाऽभिज्ञैः संग्राह्यमिदं पुस्तकम् । मूल्यमाणकचतुष्टयम् । लेखकादेव प्राप्यते ।

( २ )

### उपवीतविवाहसंस्काररहस्यम् ।

इदं पुस्तकमप्युक्तपण्डितनिर्मितं वर्तते । ये हिन्दुधर्मशास्त्रीयविधिरहस्याऽनभिज्ञा उपनयनविवाहसंस्कारौ मिथ्येति भाषन्ते, तैरवश्यमिदं पुस्तकं पठनीयम् । उपनयनस्य कोऽर्थः, किमर्थं धारणीयं, शौचादिषु दक्षिणकर्णे किमर्थं धार्यं, धारणानन्तरं किमनुष्ठेयं, तदकरणे किं दूषणं,—इत्यादि यज्ञोपवीतसम्बन्धि सम्पूर्णं रहस्यं गुर्जरभाषया सप्रमाणं प्रतिपादितम् । अस्मिन्नेव पुस्तके विवाहसंस्कारे क्रियमाणानां सर्वेषां विधीनां लौकिकं वैदिकं च विज्ञानरहस्यं सम्यक् प्रतिपादितमस्ति । कन्याविक्रयनिषेधः, सप्तपदीविधौ वरकन्ययोरन्योऽयं प्रतिज्ञाकरणमित्यादि बहवो विषया गुर्जरभाषया लिखिताः । संग्राह्यमिदं पुस्तकं सर्वेषां विशेषतो गुर्जर भाषाविदाम् । मूल्यम्—आणकषट्कम् । प्राप्ति लेखकादेव ।

( ३ )

### एकादशगीतम् ।

उपर्युक्तपण्डितेन निर्मितमिदमपि । अत्र भक्तिज्ञानवैराग्यबोधकानि ११ गीतानि, विविधानि परमात्मस्तोत्राणि श्रीमद्भागवतान्तर्गतानि प्रतिश्लोकं गुर्जरभाषान्तरान्वितानि सन्ति ।

श्रीमद्भागवतस्य प्रतिस्कन्धाध्यायानां सारांशसूचकानि सूचिरूपाणि स्त्रीभिर्गेयानि गुर्जर-भाषानिबद्धानि भक्तहरिदास-कृतानि गीतानि सन्ति । श्रीभगवतो विविधानि १२ चित्राणि बहुवर्णानि सन्ति । पृ० २४० मूल्यं १।) रुप्यकम् । उपरिनिर्दिष्टानां सर्वेषां पुस्तकानां प्राप्तिस्थानम्—

शास्त्री श्रीरेवाशंकरमेघजी,

देवीदासलल्लुभाई, संस्कृत पाठशाला, गुलालवाड़ी, बम्बई ४ ।

# ❀ श्रीसन्तराम-मन्दिर-वर्णनम्

——:o:——

**ले०—पण्डित अनन्तरामशास्त्री वेतालः ।**

अस्त्येकं किल पत्तनं '१नटपुरं' नामोत्तमं गुर्जर—
प्रान्ते, यत्र च मन्दिरं विजयते श्री-'सन्तरामा'भिधम् ।
भव्यात्युन्नत-भूमिकाद्वयवतो दीर्घत्वविस्तारयोः
सीमा काप्यसमा च यस्य सुषमा नूनं विदूरे गिराम् ॥ १ ॥
प्रोत्तुङ्गस्य हि मन्दिरस्य समभूदस्य प्रतिष्ठापकः
साधु र्मानधनः स कोऽपि सुकृती श्री'-सन्तरामा'भिधः ।
वृत्तं विस्मयकृत् समाधिसमये यस्येत्थमाकर्ण्यते
यद्दीपाः स्वयमज्वलन् किल सिताद्वृष्टिस्तथाऽभूद् भृशम् ॥ २ ॥
धैर्यौदार्यनिधेर्नयैकजलधेः शान्तात्मनः शान्तिम—
न्मूर्तेः पार्वणशर्वरीशविलसत्कीर्तेः शताब्युत्सवः ।
तस्याभूत्तपसि स्थिते सितदले सत्पौर्णमासीतिथौ
शैलाष्टाङ्कवसुन्धरा ( १९८७ ) परिमिते संवत्सरे वैक्रमे ॥ ३ ॥
पारम्पर्यपदक्रमादुपगते तस्मिन्पदे 'जानकी—
दासो' नाम दयानयादिवसतिः सौजन्यरत्नाकरः ।
साधू राजति, राजकीय-विभवास्ते ते पुनस्तुच्छतां
यस्याग्रे दधते, स एष सुमना मूर्तो नु शान्तो रसः ॥ ४ ॥
प्रारब्धोऽस्त्यमुना गजाष्टनवभू ( १९८८ ) वर्षेऽत्र माघत्रयो-
दश्यां शुक्लदले सहस्रदिवसैः साध्यो महानध्वरः ।
वेदान्तोपनिषत् पुराणनिवहो यत्रेतिहासस्तथा
निर्वक्तुं विषयास्त्रयो नियमिता एते कृते तद्विदाम् ॥ ५ ॥
पूतात्मा सुमहान् समिद्धमहिमाऽवाप्तो बृहद्रूपतां
विश्वेषामुपकारकोऽध्वरवरः सत्कीर्तिमुज्जृम्भयन् ।
याते विक्रमवत्सरे वसुमतीनन्दाङ्कचन्द्रे ( १९९१ ) मिते
माघे मास्यधिपूर्णिमाशुभतिथि प्राप्स्यत्यसौ पूर्णताम् ॥ ६ ॥
प्रातर्भक्तजनेन साधु 'तुलसीरामायण' स्यादराद्
'गीता' सम्पुटितं सदर्थरुचिरं पारायणं तन्यते ॥
कश्चिच्चित्तहरं ततः प्रकिरति श्री-'योगवासिष्ठक'—
व्याख्यासारसुधारसं श्रवणयोः सद्ब्रह्मचारी सुधीः ॥ ७ ॥
सायं स्वामिमहोदयेन विदुषा 'श्रीमन्महाभारत'—

---

* इदं नटपुरे नडियाद नगरे चन्द्रनन्दाङ्कभू ( १९९१ ) मिते वर्षे । ज्येष्ठे कृष्णे भौमवत्या-मन्मायां निरमीयत ॥

१ 'नडियाद' इति प्रसिद्धम् ।

स्योद्यद्भक्ति कथामृतं सुकृतिना केनापि संपाद्यते।
सान्द्रानन्दममन्दसुन्दरमिदं सायं प्रगे प्रत्यहं
सोत्साहं पुरुषाः स्त्रियोऽपि सकलं शृण्वन्ति तुष्यन्ति च ॥ ८ ॥
स्थानेऽस्मिन् सुखसाधने विधिवशादभ्यागतस्यातिथेः
सर्वस्योत्तम-भोजनादिविषयोऽप्यस्ति प्रबन्धो वरः।
सत्कारादि यथोचितं च विदुषां सन्तोषकृज्जायते
नो कश्चिद्विमुखो व्रजत्यतितरामेतत्प्रशंसास्पदम् ॥ ९ ॥
इत्थं नेत्रपथेऽत्र चित्रजननं यन्मे यथा भूत्तथा
सोत्साहं कवितात्मना तदधुना सत्यं निबद्धं मया।
नेदं तद्विषयप्रशंसनधिया नो तत्प्रचारेच्छया
किन्तु स्वान्तगया दिदर्शयिषया वस्तुस्थितेः केवलम् ॥१०॥
काशीस्थः समुपागतो नटपुरं पश्यन्नहं गुरुं—
प्रान्तं कान्त-'मनन्तराम' सुकृती 'वेताल' वंशोद्भवः।
सन्तुष्यन्निह सत्प्रबन्धमखिलं दृष्ट्वाऽर्थये 'जानकी—
दास'स्यास्य महात्मनो भगवतीमायुः समानां शतम् ॥११॥

## सन्देशः *

[ प्रणेता—महावीरप्रसादजोशी काव्यतीर्थः, डूण्डलोद ]

( वरवै वृत्तम् )

यदा यदा ते वेणुः सम्मुखमेति ॥
सुमनसि मनसिज-महिमा मे समुदेति ॥ १ ॥
यावत्प्रेम प्रकटितं पटहरणेन ॥
चेतश्चलतामञ्चति तत्स्मरणेन ॥ २ ॥
करुणा-वरुणालयोऽसि कथमनवद्य !
करुणा वरुणालये गताऽथ किमद्य ॥ ३ ॥
केशव ! केश-कलापो धूसरितोऽपि ॥
किं ते मनो दुनोति न हृदयभृतोऽपि ॥ ४ ॥
क्रौर्य-कलङ्कं यत्त्वं भृशं दधासि ॥
जितं मण्डलं विधोः सत्यमुद्भासि ॥ ५ ॥
अनुकम्पां विदधात्वनुरक्ते श्याम ! ॥
सन्तापयतु समन्तादपि वा नाम ! ॥ ६ ॥
त्वदनुचरी त्वियमविचल-प्रेम दधाति ॥
रविं विना किं नलिनी मुदं प्रयाति ॥ ७ ॥

* राधया श्रीकृष्णं प्रति प्रेषितः।

# समालोचनासारः ।



**अभिनवः काव्यप्रकाशः** ( सटिप्पणः ) प्रणेता श्रीमान् पं० गिरिधरलाल-व्यासः साहित्यशास्त्री साहित्याध्यापकः श्रीमहाराणाफतेहभूपालसंस्कृत-कालेज उदयपुरम्, प्राप्तिस्थानम्—पं० गिरिधरलालशास्त्री, साहित्यसदन-ब्रह्मपोल, उदयपुर ( मेवाड़ )। मू० १)

पुस्तकमिदं श्रीमम्मटदेवविरचितस्य काव्यप्रकाशस्य षष्ठसमुल्लासावधि सवृत्तिकारिकाभागस्य विषयमादाय वृत्तिटीकेत्युभयनाम्ना निबद्धं पद्यम-यमेव विद्यते । अवसाने ग्रन्थकर्तृवंशप्रशस्तिरस्ति । परिशिष्टे लक्षणाभेदो-परि आलङ्कारिकाणां मतान्युपन्यस्य ध्वनिसंख्यागणनां कृत्वा सर्वावसाने काशीस्थविदुषां सम्मतिरस्ति ।

अस्य पुस्तकस्य प्रणयने प्रयासकर्तुराशयो मया नोपलभ्यते । पाण्डित्यन्तु पद्यानां सारल्येन काव्यप्रकाशीय सर्वाभिप्रायसन्निवेशेन च स्फुटमेव विद्योतते । परन्तु काव्यप्रकाशाध्यायिनां छात्राणामेतेन कियांल्लाभ इति मे मनसि नायाति ।

भूमिकालेखकस्य शब्देन "मूलग्रन्थस्यावलोकनं साधुकृतवतां विदुषां तत्सिद्धान्तान् स्वहृदि समासतः पद्यरूपेण संस्थापयितुमतीवोपकारी नूतनग्रन्थोऽ-यमिति नः प्रतिभाति" इदं फलन्तु दृश्यते । यतो हि सम्प्रति राजकीय संस्कृत-परीक्षाप्रभावात्साहित्याचार्य्यपरीक्षान्तं ग्रन्थघोषणमेव प्रधानमस्त्रं परीक्षो-त्तरणस्य विद्यते । अस्तु मुद्रणप्रकाशनादि कृत्यं समीचीनं विद्यते । शतद्वय-पृष्ठात्मकस्यास्य पुस्तकस्य मूल्यं नाधिकमुत्कण्ठितैरवश्यं गृहेलिमम् ।

**साहित्यबिन्दुः**—पुस्तकमिदं कुरुक्षेत्रभूषण पं० छज्जूरामशास्त्रिणा निर्मितम् । आलङ्कारिकग्रन्थे प्रविविक्षूणां छात्राणामुपकारि । विषयविन्यासप्रकारोऽपि रमणीयो विद्यते । गद्यानां सारल्यमुदाहरणानामुपयोगित्वञ्चेत्यादि चेतश्चमत्कृतिमातनुते । इत्थमस्य सर्वगुणसम्पन्नत्वेऽपि मुद्रण-प्रकाशन-कर्गजादित्रुटि र्व्यथयति मानसम् । मूल्यमपि संस्कृतबालकानां कृतेऽधिकमेव भाति । ७० पृष्ठात्मकस्य मू० ॥=) आणकदशकम् । प्राप्तिस्थानम् मास्टरखेलाड़ीलाल, कचौड़ीगली, बनारस ।

समालोचकः—साहित्याचार्य्यः श्रीगोपालशास्त्री ( दर्शनकेशरी )



**सज्जनेन्द्रप्रयोगकल्पद्रुमः** । ग्रन्थोऽयं धर्माधिकारि कृष्णपण्डितविरचितः। काशीस्थ उदयप्रतापकालेजाध्यापकेन साहित्योपाध्यायेन श्रीमता पण्डित-अनन्तरामशास्त्रिवेतालमहोदयेन भूमिकादिभिः समलङ्कृतः संशोधितश्च।

प्राप्तिस्थानम्—जयकृष्णदास हरिदासगुप्त, चौखम्भा संस्कृतसीरिज आफिस, विद्याविलासप्रेस, बनारससिटी। मूल्यं १॥) सार्द्धैकरूप्यकम्।

अस्य ग्रन्थस्य प्रतिपाद्यो विषयो व्याकरणमेव। कारकसमास-तद्धिततिङन्तकृदन्तेति प्रकरणपञ्चकप्रतिपादितान् प्रसिद्धान् उपयुक्त-मांश्च कांश्चिद् विषयान् कौमुद्युक्तसूत्रार्थप्रतिपादनविधया विशेषकौशलेनानु-ष्टुप्छन्दोरूपेण सङ्ग्रथ्य सर्वत्रोदाहरणानि स्वनिर्मितान्येव प्रदर्शितानि ग्रन्थ-कारेण। श्रीमत्सज्जनसिंह-भूपाल-वर्णनरूपाणां च तेषामुदाहरणानां सङ्घट-नमपि साधु सम्पादितम्।

ग्रन्थेऽस्मिन् ग्रन्थनामानुरूपं प्रकल्पितानि प्रकरणभेदप्रतिपादकानि पद्यकुसुमानिसन्ति। व्याकरणज्ञानसम्पादनेन सह काव्यानन्दरसास्वादन-रसिकैः विद्यार्थिभि र्नूनं संग्रहणीयोऽयं ग्रन्थ इति विरम्यते विस्तरात्।

**पञ्चतन्त्रकम्**—श्रीविष्णुशर्मसंकलितम्—श्रीमता कृष्णदत्तवैद्येन विर-चितया सुबोधिनीनामिकया हिन्दीभाषाटीकया समन्वितम्। उदयप्रताप-विद्यालये हिन्दीसंस्कृताध्यापकेन साहित्याचार्य-पण्डित—अनन्तरामशास्त्रि-वेतालेन संशोध्य सुपरिष्कृत्य च टिप्पणीभिः सनाथीकृतम्, मनोहराक्षरैः मुद्रितं प्रथमपरीक्षापाठ्यरूपेण निर्धारितं पुस्तकमिदं परीक्षार्थिनां कृते परमोपयोगि विद्यते। मूल्यं आणक चतुष्टयमात्रम्।)

प्रकाशकः प्राप्तिस्थानं च-जयकृष्णदास हरिदासगुप्तः, चौखम्बा संस्कृत-सीरिज आफिस, बनारससिटी।

समालोचकः—अवधेशप्रसादद्विवेदी।

**वैद्यकौस्तुभः**—भिषक्प्रवरेण कविमूर्धन्येन श्रीमेघारामिश्रेण प्रणीत विचित्रश्चित्रकाव्यमयो वैद्यकौस्तुभेत्यन्वर्थनामा ग्रन्थोऽयं प्रथमवारमेव मुद्रयित्वा प्रकाशितः। सम्पादितश्चायमायुर्वेदविशारदवैद्यवरश्रीहरिनारा-यणशर्मणाऽर्थावबोधकटिप्पण्या पाठान्तरैश्च संयोज्य। अस्मिन् ग्रन्थे षोडश सर्गेषु ज्वरादिरोगाणां निदानं चिकित्सा च स्वल्पायाससाध्यैः सिद्धसिद्धैः प्रयोगैर्वर्णिता। रसोपरसादीनां विशुद्धाः प्रात्ययिकाश्च भस्मीकरणादिविधयो रसचिकित्सापि च सविशदमत्र संनिवेशिताः।

ग्रन्थस्यास्य अपरं वैशिष्ट्यं यमकानुप्रास-गोमूत्रिकादिनानाविधालंकारालंकृतेषु पद्येषु विद्यते । वस्तुतो ग्रन्थोऽयं चिकित्सापाटवं काव्यानन्दं च युगपदेव जनयन्ननुशीलनपराणां चेतश्चमत्करोति । सर्वथाऽतिशेते चाभिधेयसंपदा भिषक्कविना लोलिम्बराजेन निर्मितं वैद्यजीवनम् ।

अतश्च न केवलमायुर्वेददृष्ट्यैव, किन्तु मनोहरमेतत्काव्यं मञ्जुलसाहित्यदृष्ट्यापि, वैद्यसमाजस्य समादरभाजनं भविष्यतीति दृढमस्माकं विश्वासः । न केवलं भिषग्भिरेव किन्तु छात्रैरप्यवश्यमेव संग्राह्योऽयं ग्रन्थः । अस्य प्रेषणव्ययवर्जं मूल्यम् १।।) सार्धरूप्यकम् प्राप्तिस्थानं च—बाबूकृष्णदास गुप्त, बुकसेलर, ठठेरी बाज़ार, बनारस ।

समालोचकः—कश्चन प्राच्यपाश्चात्यभाषा–पण्डितः ।



## प्राप्तपत्र-प्रतिध्वनिः ।

### रसूलपुरे पण्डित-सम्मेलनम् ।

——※——

श्रीभगवत्प्रसादपाण्डेयः सूर्यपुरवास्तव्यः सूचयति—भाद्रकृष्णाष्टम्यां प्रत्यब्दानुसारमस्मिन्नपि वर्षे 'आजमगढ़' मण्डलान्तर्गत 'रसूलपुर' राजधान्यां दिनद्वयावधि पण्डितसम्मेलनस्य समारम्भः समपद्यत । सभापतिपदे श्रीमन्तो न्यायव्याकरणसाहित्याचार्याः पण्डितप्रवरसूर्यनारायणशर्मशुक्ला आसन् । प्रथमदिने सुसज्जिते सभास्थले व्याकरणे ज्यौतिषे न्याये च दूरादागतानां विभिन्न-पण्डितानामन्योन्यं शास्त्रार्थः सम्भूत । द्वितीये च दिने संस्कृतहिन्दी-कविसम्मेलनं जातम् । उभयत्रापि राजपुरुषाः सर्वसाधारणजना अपि सोत्साहं समधिक-संख्यया समुपस्थिता अभूवन् । स्व-स्वक्षेत्रे विशेषताप्रदर्शनार्थं तत्तज्जनेभ्यो राजधानीश्वरेण श्रीलश्रीमद्भुवनेश्वरीप्रसादनारायणसिंहमहोदयेन पदकपुरस्कारादयः प्रदत्ताः । व्याकरणशास्त्रार्थे साफल्यसम्पादनाय श्रीसरस्वतीदत्तशास्त्रिणा रजतपदकं लब्धम्, संस्कृतहिन्दीकवितायां सर्वोत्तमश्रेणीसम्पादनाय श्रीमदम्बिकादत्तशास्त्रितनूजश्रीमदीशदत्तपाण्डेय 'श्रीश' महोदयेन सुवर्णपदकोपलब्धिः कृता । तत्रैव तृतीयश्रेणीमागतेन

श्रीशिवनाथेन शर्मणा रजतपदकं प्राप्तम्। नाट्ये च रघुपतिसिंहेन पदकम् प्राप्तम्। दूरादागतेषु पण्डितेषूल्लेख्याः सज्जनाः सर्वश्रीकाः श्रीरामशिरोमणि-शास्त्रिणः पं० सिद्धनाथव्याकरणपुराणाचार्याः, सरस्वतीदत्तशर्मशास्त्रिणः, विन्ध्येश्वरीप्रसादज्योतिषाचार्याः, साहित्यरत्न श्री-ईशदत्तशर्माणः, प्रभृतयः। मार्गव्ययातिरिक्तं सर्वैरपि विद्वद्भिः स्वस्वयोग्यतानुसारं दक्षिणा लब्धा।

---

## संस्कृतभाषाऽवनतिः।

### ले०—श्रीगुणेश्वरशर्मा।

[ वाराणसीस्थ श्रीचन्द्रमहाविद्यालयसदस्यः ]।

अयि संस्कृतप्रियसदस्याः! सुहृदः! विदितमेव तत्रभवतां भवतां यन्नृपति विक्रमादित्यराज्यानुशासनसमये कुम्भकारादयोऽपि संस्कृतगद्य-पद्य-निर्माण नैपुण्य-प्रगटित-प्रचुरपुण्या इतिहासपुस्तकेषु विश्रुताः समुपलभ्यन्त इति। कदाचित्तृणभारमुद्वहन्नपि कश्चिन्नृपतिना भारो न बाधतीति पृष्टः "भारो न बाधते राजन् यथा बाधति बाधते" इति समीचीनमुत्तरम्प्रददौ तत्सकलं विदितमेव भवेत्, का कथा तत्र ब्राह्मणानान्तेषान्तु कर्तव्यमेवासीत्। हन्त! तदेवेदानीं संस्कृतमस्माकम्मृतप्रायमिव वर्वर्ति। कथन्नो युवानो विहायालस्यमिह प्रयतन्ते; पुरा परस्परभाषणं सदस्सु विषयव्याख्यानम् पत्रिकासु लेखप्रदानं गीर्वाणवाण्यामेव कुर्व्वन्तेस्म प्राकृतनाः। सम्प्रति तदेकमपि साधुतया नावलोक्यते। तत्राभ्यासविरह एव निदानमस्ति। अतोऽवश्यमालस्यमपहाय पुरातना इव संस्कृत-पाटव-वर्धक-सकल-व्यवहारमनुकुर्व्वन्तः संस्कृत-सूर्योदयपत्रे यथाशक्तिसाहाय्यम्प्रददमानाः गद्यपद्यमयलेखैः स्वकुलगौरवम्प्रगटयन्तु भवन्त इति भूयो निवेदनम्। अहह! धन्यवादार्हमेतत्पत्रं पूर्वजानां कर्तव्यसमाचारमन्यमनस्केष्वस्मासु भृशं सूचयति। यथेदञ्चिरस्थायि-सद् भूयःप्रमोदयेदस्मांस्तथा ग्राहकसंख्याप्रवर्धनपुरस्सरं मनोरमगद्यपद्यैः प्रमोदयन्तामित्यलम्विस्तरेणेतिशम्।

---

# संगृहीत समाचाराः ।

——:※※:——

साम्प्रतं भूमण्डलेऽस्मिन् ८६० भाषाः, ५०००, पञ्चसहस्रमिता व्यवहारिक्यो भाषाः प्रचलिताः सन्तिः । सर्वासां भाषाणां प्रतिनिधय एकत्रिता भवेयुः, तर्हि का दशा भविष्यति ? यूरोपे ८९, एशियाप्रदेशे १२३, अफ्रिकायां ११४, अमेरिकायां ११७, भारतीयद्वीपे तथा प्रशान्तमहासागरीयद्वीपेषु च ४१७, भाषा व्यवहृता भवन्ति ।

× × ×

चीनदेशस्य पश्चिमीय ह्यूपे प्रान्ते चूशानमण्डले अधुना मनुष्या मनुष्यान् खादन्ति । एवं कथ्यते यत् मध्यचीनप्रान्ते शतशो मानवाः पञ्चत्वं गच्छन्ति, तान् तत्रत्या नरा भक्षयन्ति ।

× × ×

## गवर्नमेण्ट संस्कृतकालेजपरीक्षा ।

काशीस्थगवर्नमेण्टसंस्कृतकालेजस्य १९३५ ईस्वीया संस्कृतपरीक्षाः फरवरीमासस्य २१ तिथौ गुरुवासरतः २८ तिथिपर्यन्तं भविष्यन्ति ।

(१) प्रथमा परीक्षा २१ तिथितः २३, पर्यन्तम् । प्रतिदिनं पत्रद्वयम् । (२) मध्यमापरीक्षा २१ तारिकात–२८ पर्यन्तम् । प्रतिदिनं पत्रद्वयम् । (३) सर्वविषयाणां प्रथमवर्षीया शास्त्रिपरीक्षा २१ तः २२ तिथिपर्यन्तम्, द्वितीयवर्षीया शास्त्रिपरीक्षा सर्वविषयाणाम् तथा आचार्यपरीक्षा प्रथमवर्षीया–२३–२५, दिनद्वयम् । तृतीयवर्षीया शास्त्रिपरीक्षा सर्वेषां विषयाणाम्, एवं आचार्यस्य द्वितीयतृतीयवर्षयोः परीक्षा २६–२७ तिथिपर्यन्तम् दिनद्वयं यावत् ।

× × ×

राष्ट्रियमहासभायाः (कांग्रेस) अष्टचत्वारिंशत्तमं महाधिवेशनं वम्बई नगरे अक्टूवर मासस्यान्तिमे सप्ताहे महता समारोहेण भविष्यति । विहारप्रान्तस्य नेता छपरामण्डलनिवासी श्रीमान् बाबूराजेन्द्रप्रसादमहोदयः सभापतिपदं समलं करिष्यतीति ।

× × ×

अखिल भारतवर्षीय–सनातनधर्मावलम्बिनां प्रतिनिधि भूतायाः श्री भारतधर्ममहामण्डलाभिधायाः सभायाः सुप्रसिद्धे यज्ञमण्डपे आगामिनीम् आश्विनशुक्लप्रतिपत्तिथिम् आरभ्य नवमीपर्यन्तं शतचण्डीयागो महता समारोहेण सम्पत्स्यते ।

× × ×

# अन्योक्तयः ।

प्रणायकः—चन्द्रमणिः शाण्डिल्यः 'मधुरः' ( रामनिकेतनम् )

हंसः—

इमे बका यद्यपि शुभ्र-पक्षती
धुवन्ति सादृश्यतया तवेह भोः !
तथापि हंसेश ! भवान् गुणालयः,
करोति भेदं नयनं विपश्चिताम् ।

द्विरेफः—

द्विरेफ-राजो भ्रमतीह पङ्कजे
स पातुकामो मकरन्दमुत्कटम् ।
अयं च जानाति भविष्यकालिकम्,
रसान्न मृत्युं विविनक्ति मूर्खराड् ।

चातकः—

हा ! हन्त चातक ! मुधैव विलोकय मेघम्,
नव्यं जलं यदिह कामयसे तपस्विन् !
सत्यम्, पयोद कृपणः नवरूपकृष्णः,
नीरं न चार्पयति भोः ! 'कुटिलाहिकृष्णः'

काकः—

भोः ! काक ! काक ! मम चित्तगतं नु मित्रम्,
शब्दैः प्रियैः 'शकुन' जैः स्तव वायसैतु ।
निर्माय हेमरजतैः तव चञ्चुमङ्घ्रिम्,
पाणौ निधाय निज-भोजनमर्पयामि१ ।

पिकः—

पिकोऽस्ति धन्यो, यदयं गृहे गृहे
करोति नोऽद्य भ्रमणं निजेच्छया ।
रुतं न नित्यं कुरुते बहुत्र भोः !
अतो हि मूल्येन गतो न कीरवत् ।

१ अत्र भाषा कविताऽनुकृता । ( प्रणायकः— )

कर्मसाम्राज्यस्याद्यान्तत्वपरिज्ञानाय कर्मबीजाश्रययोश्चित्ताकाशचिदाकाशयोराद्यान्तत्वपरिज्ञानं नितान्तमावश्यकम्। यथा हि ग्रन्थिबन्धनाय तद्विमोकाय चैकविध एव हस्तव्यापारो भवति। परन्तु एकेन व्यापारेण ग्रन्थिर्बध्यतेऽन्येन च व्यापारेण विमोच्यते। तथैव कर्मयोगात्मक-सुकौशलविरहितं कर्म बन्धनाय भवति, कर्मयोगात्मकसुकौशलेन सम्पादितं कर्म विमुक्त्यै कल्पते। अतश्च येन सुकौशलेन निष्कामकर्मयोगेन कर्मबीजानां संस्काराणां विनाशस्तेनैव सुकौशल सम्पादितेन निष्कामकर्मयोगात्मक-व्यापारेण अनयोराकाशयोरपि विघातो भवितुमर्हति।

यदा च वासनाविनाशतत्त्वज्ञान-साधनोपयोगि-साधनानां साहाय्येन साधकः संस्कारनाशं विदधाति तदैव तेन मुक्तात्मना सम्बद्धयोरनयोराकाशयोरपि विलयो बोभूयते। यदा हि साधकः कर्मोपासनाज्ञानात्मककाण्डत्रयस्यान्यतमसाधनानां साहाय्येनात्मज्ञानं लब्ध्वा निःसङ्गो निष्क्रियश्च भवति, तदानीमेव आत्मज्ञानेन वासनामयमनोनाशो भवति। तस्य च जैवकेन्द्रोऽपि समूलतो विनष्टो भवति। यदा च जैवकेन्द्रो विनष्टो भवति, तदा तद्द्वारा आकृष्यमाणयोः सञ्चितक्रियमाणयोरपि कर्मणो बीजात्मकानां संस्कारसमूहानां ततो विभागो भवति। ततश्च ततो विभक्तास्ते संस्काराः सर्वेषां पदार्थानां विलयस्थले ब्रह्मप्रकृतौ विलीना भवन्ति। एवञ्च सति तस्य जैवकेन्द्रस्य सम्बन्धेन सम्पन्नयोश्चित्ताकाशचिदाकाशयोः स्वरूपस्य स्वत एव ज्ञानं भवतीति न तत्र व्यापारान्तरापेक्षा॥ ७७॥

विज्ञानमिदमन्यथापि द्रढयति—

**तदन्ते क्रियावसानात्॥ ७८॥**

तेषाम् (संस्काराणामित्यर्थः) अन्तः तदन्तः तस्मिन् सति, क्रियाणाम् अवसानम् तस्मात् अपि जीवकर्मकेन्द्रात्मकचित्ताकाशविनाश इति सूत्रार्थः।

यदा हि संस्कारः कर्मबीजत्वेनाभिधीयते तदा संस्कार-नाशेन कर्मनाशस्तु सुतरां सिध्यत्येव। यथा हि कस्यचन वृक्षविशेषस्य बीजोच्छेदो धरातलादेव कृतः स्यात्तदुपरि कश्चनैतादृशो दृढ उपायोऽपि सम्पादितः स्याद् येन पुनस्तस्य बीजस्येह धरातले प्रादुर्भाव एव न स्यादिति। ईदृश्यामवस्थायामस्माद् धरातलादेव तस्य वृक्षविशेषस्योच्छेदो नितरां भविष्यति। तथैव केनापि सुकौशल-पूर्णेन साधनेन यदि कर्मबीजानां संस्काराणामेवोच्छेदः शाश्वतिकः स्यात्तदा कर्मनाशः सिद्ध एव। ततश्च तदाश्रयस्य चित्ताकाशस्य तद्वशाच्च प्रवर्तमानस्य संसारचक्रस्यावरोधः सुसिद्ध एवेति संक्षेपः॥ ७८॥

प्रसङ्गाज्जीवसम्बन्धमाह—

जीवः शरीरत्रयसम्बद्धः ॥ ७६ ॥

( कर्माधीनो ) जीवः शरीराणां त्रयं तेन सम्बद्धो युक्तो भवतीति सूत्रार्थः । कर्म-परवशो जीवः त्रिभिः शरीरैः सम्बन्धयुक्तो भवति । तानि शरीराणि कारण-सूक्ष्म-स्थूलभेदात् त्रीणि कथ्यन्ते । तत्र जीव-सृष्टेः प्रारम्भावस्थायां या हि सर्वप्रथमा चिज्जडग्रन्थिः प्रादुर्भवति सैव कारण-शरीरमुच्यते । चतुर्विंशतितत्त्वेषु पञ्च महाभूतानि मूलप्रकृतिश्च विहायावशिष्टेभ्यस्तत्त्वेभ्यः सूक्ष्म-शरीरं सम्पद्यते । इमे उभे अपि शरीरे गतागतचक्रे जन्मान्तरग्रहणव्यापृते भवतः । स्थूलशरीरन्तु तत्तल्लोकानुकूल-तत्त्व-शृङ्खला-सम्बद्धं पञ्चीकृतेभ्यः पञ्चभ्यो महाभूतेभ्य एव सम्पाद्यते । यच्च मृत्युकाले इहैव त्यज्यते । तदेव मातापितृजमप्युच्यते । तत्तल्लोकानुकूल-तत्त्वशृंखला-सम्बद्धमुदाहरणतो यथा प्रेतलोकीयं स्थूलशरीरं वायुप्रधानं भवति । स्वर्लोकीयं स्थूलशरीरं तेजःप्रधानं जायते । मृत्यु-लोकोद्भवं पार्थिवप्रधानं गण्यते । इदञ्च शरीरविज्ञानमन्यथापि बोद्धुम्पार्य्यते । तथाहि पञ्चकोशेषु आनन्दमयकोशेन कारणशरीरं, विज्ञानमय-मनोमय-प्राणमयकोशैश्च सूक्ष्मशरीरम्, अन्नमयकोशेन च स्थूल-सम्बद्धं शरीरमुच्यते । एभिरेव त्रिभिःशरीरैः सम्बद्धितो जीवः सृष्टि-प्रवाहे कर्मवेगेन प्रवाह्यते ॥ ७६ ॥

सम्प्रति शरीरत्रयस्यापि सम्बन्धमाह—

त्रिभावसम्बद्धं तदतः ॥ ८० ॥

अतोऽस्मादेव कारणात् तत् शरीरत्रयं त्रयो भावास्त्रिभावास्तैः सम्बद्धं जायत इति सूत्रार्थः ।

पूर्वोक्तं शरीरत्रयमपि सृष्टे भावत्रयेण यथाक्रमं सम्बद्धं तिष्ठति । यथाहि सृष्टेः सर्वेऽपि पदार्थाः त्रिभावात्मकाः सन्ति, तथैव तन्नैसर्गिकनियमानुसारं शरीरत्रयस्यापि त्रिभावात्मकत्वमेव सिध्यति । तथा हि कारण-शरीरमध्यात्मभाव-सम्वलितं, सूक्ष्मशरीरमधिदैवभावमिश्रितं स्थूलशरीरञ्चाधिभूतभावयुक्तमुच्यते। स्थूल-शरीरं हि लोकान्तरित-जीवेन तत्रैव त्यज्यते यत्र लोके तत्तिष्ठति । अतश्च भौतिक-सम्बन्धवैशेष्यात् तद्धि आधिभौतिकमुच्यते । सूक्ष्मशरीराश्रयेणैव दैव-कार्य्यं सम्पाद्यतेऽतश्च तस्याधिदैवत्वमपि युक्तियुक्तमेव । कारणशरीरं हि सर्व-कारणमित्याध्यात्ममुच्यते ॥ ८० ॥

कर्मप्रसङ्गेन सृष्टिविस्तारमाह—

कर्मणा त्रिभावात्मिका सृष्टिः ॥ ८१ ॥

त्रयो भावास्त्रिभावास्ते आत्मा स्वरूपं यस्याः सा तथोक्ता सृष्टिः सर्गः कर्मणा कर्मद्वारैव सञ्जायत इति सूत्रार्थः ।

सृष्टिकारणं कर्मोच्यते। तेन कर्मणा प्रादुर्भूता सृष्टि स्त्रिभावात्मिकैव भवति। अतो हि सृष्टेः सर्वेऽपि पदार्था स्त्रिभावात्मका भवन्ति। सृष्टिरपि आध्यात्मिकी, आधिदैविकी, आधिभौतिकी चेति त्रिधोच्यते। पाञ्चभौतिकेऽस्मिन् दृश्यप्रपञ्चे यत्र चित्सत्ताप्राधान्यमस्ति यत्र च प्रकाशस्य ज्ञानस्य च सम्बन्धाधिक्यं भवति तद्धि आध्यात्मिकमुच्यते। यत्र च क्रियाशीलता दृश्यते, यतश्च देवगणाः स्वकर्मणि व्यापृता प्रगतिं लभन्ते स हि सृष्टेरंश आधिदैवोऽभिधीयते। यत्र च स्थूलत्वस्य जडत्वस्याज्ञानादीनाञ्च सम्बन्धः प्राबल्येन प्रतीयते स एव सृष्टेरंश आधिभौतत्वेन संज्ञायते॥ ८१॥

ऽसङ्गप्रासमाह—

**तेनातस्तदधिष्ठातृ-सम्बर्द्धनम्॥ ८२॥**

अतोऽनेनैव हेतुना तेन कर्मणा तेषामाध्यात्माधिदैवाधिभौतानां भावानां येऽधिष्ठातारो (देवाः) तेषां सम्बर्द्धनम् पोषणं भवतीति सूत्रार्थः।

कर्मैव दृश्यप्रपञ्चस्य कारणं विद्यते। कर्मणैव सृष्टिस्थितिलया जायन्ते। अतश्च कर्मणा त्रिभावात्मिका क्रमोन्नतिः कथं सम्भाव्यत इत्याह—सृष्टेराध्यात्माधिदैवाधिभौतानां विभागानां सञ्चालकाः क्रमश ऋषयो देवाः पितृगणाश्च सन्ति।

सगुण-ब्रह्मरूपिणो मूर्तित्रयस्य प्रतिनिधिस्वरूपाः, ऋषिगणा आध्यात्मराज्यस्य, देवगणा आधिदैवराज्यस्य, पितृगणाश्च स्थूलस्याधिभौतराज्यस्य क्रमशः सञ्चालनं, संरक्षणं, सम्बद्धर्धनञ्च कुर्वन्ति। कर्मणैवेमे श्रेणित्रयगा देवाः प्रसन्ना भूत्वा साधकस्य त्रिविधां समुन्नतिन्तु कुर्वन्त्येव। इतोऽप्यधिकं ते स्वयमपि तेनैव कर्मणा सम्बर्द्धिताः सन्तः ब्रह्माण्डमात्रेऽपि स्वस्वाधिकार-समुन्नतिं विदधति। अनेनैव नियमेन कर्मणां प्रभावः एषामाधिदैवानां सम्बन्धेन जगतां समुन्नते र्निदानतामाव्रजन्ति॥ ८२॥

केन कर्मणा कस्य तृप्तिरित्याह—

**तत्सम्पृक्तकर्मणा तत्तुष्टिः॥ ८३॥**

तेन ऋषिदेवपितृष्वन्यतमेन सम्पृक्तं सम्बद्धं तथोक्तेन कर्मणा तस्य तेष्वन्यतमस्य तुष्टिस्तृप्ति र्भवतीति सूत्रार्थः।

सृष्टि-प्रपञ्चस्य ज्ञान-सम्बद्ध-विभाग-सञ्चालकाः तद्व्यवस्थापकाश्च ऋषिगणाः सन्ति। कर्मणां तत्फलानाञ्च व्यवस्थापका देवगणा निगद्यन्ते। स्थूलशरीर-प्रभृति-विषयाणां पर्य्यवेक्षकाः पितृगणा गीयन्ते। अतश्च ज्ञानसम्बद्धकर्मभिः ऋषिगणा यज्ञादिभि र्देवाः श्राद्धादिकर्मभिश्च पितृगणाः प्रसीदन्ति तृप्यन्ते च। इत्थं च तर्पितास्ते स्वस्वाधिकारानुसारं जगदुन्नतये भवन्ति।

यतो हि जगति यावन्त्यपि ज्ञान-विद्या सम्बद्धर्नोपयोगीनि शारीरिकवाचनिकमानसिकानि कर्माणि सन्ति, तानि सर्वाण्यपि ऋषिभिः सम्बर्द्धितान्येव प्ररोहन्ते । तद्वद्धि यज्ञादि-सदाचार-वर्णाश्रमधर्म-प्रभृतीनि यावन्त्यपि क्रिया-सिद्धांशजातानि सन्ति तै र्देवाः सम्बर्द्ध्यन्ते । तथैव पितृयागैः, पितृपूजनादिभिः श्राद्ध-तर्पण-प्रभृति-कर्मभिः पितृगणाः तृप्यन्ते । तेषां तृप्त्या समृद्धया च तत्तत्सम्बद्धभावराज्याधिकाराणां यथाकामं समुन्नति र्भवतीत्यत एव साधको यथोचित-कर्मानुष्ठानेन सकलमप्यभ्युदयं कर्तुं समर्थो भवतीति परिचितः पन्थाः ॥ ८३ ॥

प्रसङ्ग-सङ्गत्या तद्विशेषमब्रूते—

**प्रतिब्रह्माण्डं भिन्नास्ते ॥ ८४ ॥**

ब्रह्माण्डे ब्रह्माण्डे इति प्रतिब्रह्माण्डं ते ऋषि-देव-पितृगणा भिन्नाः पृथक् पृथक् सन्तीति सूत्रार्थः ।

नानापिण्डैः समन्वितेषु चतुर्दश-भुवनात्मक-ब्रह्माण्डेषु स्वस्वाधिकाराणां संरक्षण-सञ्चालन-सम्बर्द्धनादि-कृत्य-सम्पादनार्थं पृथक् पृथगेव ऋषिदेव-पितृगणा नियुक्ता विराजन्ते ।

वस्तुत इमे श्रेणित्रयगा देवाः सगुण-ब्रह्मरूपिणो मूर्तित्रयस्य प्रतिनिधि-रूपाः सन्ति । इमे त्रयोऽपि पदाधिकाराः कर्मानुरूपतयैव पृथक्तया निर्णीताः सन्ति । तथा तत्र तत्पदाधिकारेषु परिवर्तनमपि भवति । यथा कस्यचन वनस्य कस्याश्चन नद्या वा यदि कोऽपि अधिष्ठातृदेवो विद्यते स देवस्तावदेव तत्पदे स्थातुमर्हति यावत्तस्य वनस्य तस्याश्च नद्याः संस्थितिर्विद्यते । विनष्टे तस्मिन् वने विनष्टायाञ्च तस्यां नद्यां न तत्पदं तिष्ठति नापि च सोऽधिष्ठातृदेव एव विराजत इति ।

इत्थं हि इन्द्र-वरुणादि-पदानां नित्यत्वेऽपि तत्पदाधिष्ठातृणामुन्नतिरवनति र्वा क्रमशः कर्मानुसारं भवत्येव । पितृगणानाञ्च मनुष्ययोनितः सम्बन्धः प्रारभ्यते। तथाहि मृत्युलोकेन सम्बन्धभाजः पितृगणाः पितृलोके निवसन्ति । पितृलोकश्च धर्मराजस्य यमस्याधिकारान्तर्गतोऽस्ति । देवानां पितरश्च तदुपरितन-लोकेषु निवसन्ति । ऋषिगणानाञ्चाधिकारा अनेकधा भिद्यन्ते । तेषां निवासस्तु सूक्ष्मलोकेषु विद्यते । इह मानवलोके ऋषि-देवगणयोरवतारोऽपि भवति ॥८४॥

देवानामधिकारं विवृणोति—

**समष्टि-व्यष्टयोः सम्बन्धस्तेषाम् ॥ ८५ ॥**

तेषां देवानां सम्बन्धोऽधिकारः, समष्टिश्च व्यष्टिश्च ते तयोक्ते तयोः समस्तव्यस्तयोः ( सर्वत्रैवेति यावत् ) विद्यत इति सूत्रार्थः ।

देवानां सर्वत्रैव सम्बन्धोऽधिक्रियते। यतो हि सूक्ष्मो देवलोकोऽखिला-नामेव लोकानां मूलं निगद्यते। जडं हि कर्म चेतनै दैवैरेव सञ्चाल्यते। चतुर्विधभूतसंघेषु उद्भिज्जस्वेदजाण्डजजरायुजादियोनिषु, नदीपर्वत-समुद्रादि-स्थूलभूतादि-भगवद्विभूतिषु, सुवर्ण-लोहादि-धातुखनिषु, स्थावरेषु जङ्गमेषु वा सर्गेषु, स्थूलेषु मर्त्यादि-लोकेषु, आहोस्वित् सूक्ष्मेषु दैवादिलोकेषु, किं बहुना सर्वत्रैव व्यष्टिपिण्डेषु समष्टिब्रह्माण्डेषु च दैव्याः शक्तेः सम्बन्धो विराजते। यतो हि कर्मणो जडत्वात्तत्र जडशक्तौ चेतनशक्तेः सत्ता निश्चितैवापेक्षिता। अतश्च कर्मणः सत्तासम्बन्धेन देवानामस्तित्वं तथा समष्टि-व्यष्ट्योः सर्वत्रैव देवानां साक्षात् परोक्षो वा सम्बन्धो निश्चित एवेति दिक्॥ ८५॥

सम्प्रति कर्मप्रवाहस्य विशेषगती वर्णयति—

द्विविधः कर्मप्रवाहोऽनुलोमविलोमभेदात्॥ ८६॥

कर्मणः प्रवाहो गतिः प्रसर इति यावत् अनुलोमश्च विलोमश्च तौ तथोक्तौ तयोर्भेदात् द्विविधः द्वे विधे यस्य स तथोक्तो ज्ञेय इति सूत्रार्थः।

कर्मणः प्रवाहो गतिः प्राधान्येन द्विधा विभक्तुं शक्यते। तत्रैकाऽनुलोम्नी द्वितीया च प्रतिलोम्नीति संज्ञापयितुमपि पार्य्यते। तत्र द्वैतप्रपञ्चे या हि गतिः आत्माभिमुखी भवति सैवानुलोम्नीति संज्ञायते। या च कर्मणो गतिरात्माधि-गमनमार्गमनादृत्यानात्माभिमुखं प्रवहति सैव प्रतिलोम्नीत्याख्यायते॥ ८६॥

विज्ञानमिदं स्पष्टयति—

चेतन-जड़सम्बद्धौ॥ ८७॥

तौ द्वौ कर्मप्रवाहौ (अनुलोमप्रतिलोमानाविति यावत्) चेतनश्च जड-श्चेति तौ तथोक्तौ ताभ्यां सम्बद्धौ संसक्तौ इत्यर्थः।

तयोश्च स्थावर-जङ्गमात्मसृष्ट्या यथाक्रमं सम्बन्धोऽवसेयः। तत्रैका जडराज्यं व्याप्नोति द्वितीयश्चेतनराज्यं समाश्रयति। अनयोर्मध्ये यो हि कर्म-प्रवाहो जडात्मकाज्जगत आत्माभिमुखं प्रवहति, स एव चेतन-राज्यव्यापी प्रवाहो निगद्यते। स हि कर्म-प्रवाहो जडात्मकात्परमाणोः प्रस्थाय चिज्जडग्रन्थि-मारभमाणः चतुरशीति-लक्षात्मकयोनिषु जीवान् भ्रामयन् मानवपिण्डं प्रापयति। ततश्चावसाने गतागतचक्रस्य नानावस्थावर्तचक्रेऽपि विश्रामय्य परमात्मरूप-स्वस्वरूपपारावारे समुपस्थापयति। द्वितीयश्च कर्म-प्रवाहश्चेतनराज्याज्जडाभि-मुखं धावति। यो हि सर्वासामपि अनात्मसृष्टीनां कारणं विद्यते। केवलं जीवान् विहाय सर्वोऽपि सृष्टिप्रवाह एतदन्तर्गत एव गीयते। कदाचिच्च जीवगणा अपि

एतस्य प्रवाहस्य चक्रे पतिता-दण्डभाजो भूत्वाऽधः पतन्ति । परन्तु स तेषामधःपातः कियतः समयस्यैव कृते भवति । यथा यमलार्जुनयोर्द्रुमत्वम्, भरतस्य च मृगयोनिपरिग्रहः, इत्यादयोऽन्येऽपि तथाविधा आरूढपतिता उदाहार्य्याः । वस्तुतस्तु अस्य कर्मप्रवाहस्य सम्बन्धो जडेनैव जगता विद्यते ।

तत्र प्रथमे कर्मणश्चेतन-प्रवाहे जीवानां जीवत्वं दैववलञ्चाभे अपि साहाय्यमातन्वाते । द्वितीयस्मिञ्जडप्रवाहे तु केवलं देवगणा एव सहायकाः भवन्ति । ते च देवा गिरि-नदी-पञ्चभूत-धातुरत्नादीनामधिष्ठातृगणा एव गीयन्ते । इत्थं हि कर्मगति द्विधा प्रवहन्ती विराड्वपुष्मतः परमात्मनो देहमभिविशतीति दिक् ॥ ८७ ॥

इदानीं च भेदान्तराण्याह—

**द्विविधः प्रथमः ॥ ८८ ॥**

प्रथमो हि चेतन-प्रवाहो द्वे विधे यस्य स तथोक्तो विज्ञेय इति सूत्रार्थः ।

यो हि जीवमयः प्रथमः कर्मप्रवाहो विद्यते तस्यापि द्वे शाखे स्तः । यथाहि शाखानदी प्रधाननद्या सह सङ्गता वृहदाकारां तां प्रधाननदीमातनोति । यथा हि गङ्गासङ्गता यमुना गङ्गा-प्रवाहं वर्द्धयन्ती उद्धततरङ्गां गङ्गां प्रवाहयति । तथैव जीवमयीयं चेतनकर्मधारा शाखाभ्यां प्रवहन्ती चरमे एकरूपिणी भूत्वा ब्रह्मसमुद्रे विलीना भवति । ८८ ॥

विज्ञानमिदं विस्पष्टयति—

**प्राकृतिक एकः स्वतन्त्रोऽपरः ॥ ८९ ॥**

उभयोः शाखयो रहस्यं स्पष्टयितुं सूत्रकृन्महर्षिः सूत्रयति प्राकृतिक इति । तत्रैकः प्राकृतिकः प्रकृत्या सम्पद्यमानोऽपरोऽन्यः स्वतन्त्रः स्वाधीन इत्यर्थः ।

सहजकर्मणा संम्बद्धा प्राकृतिकी, जैवकर्मणा च सम्बद्धा स्वाधीना इति द्वे जीवधारे शाखाभेदेन सम्मते स्तः । प्राकृतिकी हि जीवधारा उद्भिज्जादिषु प्रकटीभूय मनुष्यत्वे सुगुप्ता पुनर्जीवन्मुक्तावस्थायामुदेति । स्वाधीना हि धारा मनुष्यपिण्डे दैवपिण्डे च प्रकाशीभूय गतागतचक्र भ्रमन्ती पुनर्मुक्तिभूमौ गत्वा तस्मिन्नेव साहजिकायां धारायां विलीना भवति । वस्तुत इमे द्वे अपि शाखे जीवमयस्यैव प्रवाहस्याङ्गीभूते स्त इति ॥८९॥

उभयोः कार्य्यमाह—

**मुक्तिबन्धननिमित्ते ॥ ९० ॥**

ते उभे अपि शाखे क्रमेण मुक्तिश्च बन्धनञ्च ते तथोक्त तयो र्निमित्ते कारणे भवत इति सूत्रार्थः ।

अनयोरुभयोर्मध्ये स्वाधीना जीवधारा बन्धनहेतुः, प्राकृतिकी जीवधारा च मुक्तिनिदानमुच्यते। जीवो हि यदा क्रमशः स्वपञ्चानामपि कोशानां पूर्णतामासादयन् मानुषत्वमाश्रयति, तदा स स्वपिण्डस्याधीश्वरो भवति। इमां स्वाधीनतां समुपार्ज्य स स्वीयया नवीनया वासनया नूतं कर्मराशिं सञ्चिन्वन् गतागतचक्रं दृढीकरोति। अतश्चेयं धारा बन्धनकरी विद्यते।

द्वितीया धारा या च प्राकृतिकनियमानुसारं स्वभावत एव प्रवहति। सा हि गतागतचक्रस्यापि भञ्जिका मुक्तिदोच्यते। यथा हि तरलतरङ्गिणी पतितपावनी गङ्गा पदार्थमात्रमेव स्वप्रवाहोढं कृत्वा महार्णवं प्रापयति। यदि च किमपि प्रवाह-पतितमपि वस्तु मध्य एव तस्या घोरे आवर्तचक्रे समासक्तं सत् मज्जोन्मज्जं कुर्वद् विषण्णं स्यात्तथापि कालान्तरे तस्मादावर्तचक्रान्निःसृतं सदेव तद्वस्तु पुनरपि सरलगत्या वारिधिमेवासादयति। तथैवेयमपि प्राकृतिकी कर्मधारा प्रथमावस्थायामुद्भिज्जादि-जीवानां क्रमोन्नतिं विदधती मानवयोनिं प्रापयति। तत्र च तस्य जीवस्य गतागतचक्रात्मके घोरावर्तेऽवरुद्धस्यापि सतः कालान्तरे मुक्तिकारणतां व्रजत्येवेति निःसन्दिग्धः पन्थाः। ६० ॥

प्रथमं विशेषतः परिचाययति—

**आद्यो देवरक्षितः सारल्यात्॥ ६१॥**

आद्यो द्वयोश्चेतनशाखयोर्मध्ये प्रथमः (प्राकृतिको जीवप्रवाह इति यावत्) सरलस्य भावः सारल्यमार्जवं तस्मात् देवरधिष्ठातृभी रक्षितो गुप्तो भवतीति सूत्रार्थः

चेतन-प्रवाहस्य भेदद्वयमुक्तम्। एकः प्राकृतिकोऽपरः स्वतन्त्र इति। तत्र प्राकृतिकोऽतिसरलतया देवैः सर्वथा सुरक्षितः। दैवीमीमांसादर्शने विस्तरादिदं संसाधितं विद्यते, यत् सहजपिण्डावस्थायां प्रत्येक-योनिगजीवानां नियामिकाः पृथक् पृथक् स्वाधिकारसंरक्षिका देवताः सन्तीति। अन्यच्च यदा स एव प्रवाहो गुप्तावस्थातो मुक्तिदशायां पुनराविर्भवति तदापि दैवैरेव सुरक्षितो भवतीति। यतो हि जीवन्मुक्तस्य महापुरुषस्य वासनाजालविरहात् किमपि कर्म तदिच्छया नैव सम्पाद्यते। स हि जगत्कल्याणाय यत् किमपि कर्म करोति तत्सर्वमपि दैव्येच्छयैव प्रेरितो यन्त्रवत्समापयतीति।

इह सम्भाव्यमानायामपि कस्याञ्चन शङ्कायामिदं समाधानं विज्ञेयं यद्, जीवन्मुक्ते महापुरुषे यो हि प्रारब्धसंस्कार-वेगो विद्यते। स हि तादृश एव विज्ञेयो यादृक् च स्वेदजाण्डजादि-जीवेषु स्वप्रकृति-वशगेषु तदीयभोगसम्पादकः संस्कारो भवतीति। फलतो यथा हि अज्ञानाधीना मनुष्येतरजीवाः कर्म कुर्वन्ति तथैव स्वरूपस्थिता जीवन्मुक्तगणा अपि जैववासना-विरहिताः केवलं प्रारब्ध-

वेगत एव कर्म कुर्वन्ति । अस्यामवस्थायां देवसाहाय्यमवश्यं प्राप्तमेव भवति । यतो हि देवगणा एव जड-जगतः सञ्चालकाः सन्ति । अपरतश्च ईशकोटिगाः जीवन्मुक्ता यदि जगत्कल्याण-व्यापृताः क्रियमाणकर्म-शीला अपि प्रतीयेरन्, तथापि तत्रेदमेवावसेयम् यत्ते दैव्याः क्रियाया निष्पत्तौ भगवत्प्रेरिता एवमनुतिष्ठन्तीति ॥ ६१ ॥

द्वितीयस्यापि विशेषपरिचयमाह—

विभूत्या रक्षितोऽपरो वैपरीत्यात् ॥ ६२ ॥

अपरो द्वितीयः ( स्वाधीनो जीवप्रवाह इति यावत् ) विपरीतस्य भावो वैपरीत्यम् तस्माद् विपरीत-भावापन्नत्वाद् विभूत्या गृहपतिप्रभृति-भगवद्विभूत्येत्यर्थः रक्षितः परिचालितो भवतीति सूत्रार्थः ।

सकामतया शाखाबहुलेऽस्मिन् स्वाधीनप्रवाहे जैवकर्मणां विस्तारानन्त्याच्च तस्य रक्षणे देवसाहाय्यन्तु सर्वदैवास्ति । यतो हि देवा एव कर्मफलसञ्चालकास्तत्फलदातारश्च सन्ति । एवं सत्यपि मनुष्यपिण्डेषु समुत्पन्नैर्भगवद्विभूतिस्वरूपै र्विशिष्टजीवैस्तस्य सदसद् व्यवस्थानं सम्पद्यत इति नैव विस्मरणीयम् ।

यथा हि प्राकृतिकः प्रवाह एक-रसमयोऽविच्छिन्नो निर्बाधं विवर्द्धिष्णुर्विद्यते, न तथायं स्वाधीनः प्रवाहः । जैवी वासना हि देवीमाहात्म्योक्तरक्तबीजवत् विस्तारशालितया बहुलशाखासंयुक्ताऽनन्ता चास्ति । कर्मणां जडतया तत्प्रेरकत्वेन तत्फलदातृत्वेन च सर्वथैव गौणतया देवसाहाय्यसत्त्वेऽपि स्वाधीने प्रवाहे विभूतीनां प्राधान्येन साहाय्यमपेक्षितमेव । अतोहि जैव्या वासनायाः प्राधान्येन दैव्याः सहायतायाश्च गौणतया मनुष्यलोकसमुत्पन्नैर्भगवद्विभूतिमत्सत्त्वैरस्य प्रवाहस्य रक्षणमावश्यकमेव । सामान्यतो मानवेतरेषु चतुर्विधेष्वपि भूतसंघेषु तथा मनुष्येष्वपि अग्रिम-कोटिगेषु जीवन्मुक्तजीवेषु केवलं प्रकृतिवेग एव कर्म कारयतीति । तत्र प्राकृतिके प्रवाहे सारल्यं विद्यते । स्वाधीने प्रवाहे तु सर्वेऽपि जीवाः स्वाधीनतया सदसदात्मकं संस्कारं सञ्चिन्वन्ति, वासनाजालमपि जटिलयन्तीति शाखाबाहुल्याद्विपरीतभावापन्नो जटिल इति यावद्, अयं प्रवाहो विज्ञेयः । प्रवाहेऽस्मिन्मानवानां स्वाधीनतया देवानां रक्षणात्मिका दृष्टि र्गौणतयैव पतति । तस्य प्रवाहस्य नियमने तेषामुपेक्षैव भवतीत्यतश्चास्यामवस्थायां सर्वशक्तिमतः सर्वहितनिरतस्य परमेशितुरिच्छाऽनुरूपं तदीयजगद्धितकरनियमानाश्रित्य गृहपति-समाजपति-गुर्वाचार्य्य-राजप्रभृतिविभूतयः प्रवाहमिमं रक्षन्ति, नियमयन्ति च । अत एवेह मानवसमाजे राजानुशासनं, शब्दानुशासनं, योगानुशासनमिति त्रिविधं शासनमप्यपेक्ष्यत इति ॥ ६२ ॥

# सूर्योदयः ।

दशमे वर्षे } कार्तिकस्य पूर्णिमा सं० १९९१, { पंचम-संख्या.

## सम्पादकीया अभिप्रायाः ।

—:o:—

### दीपावली ।

—:o:—

भारतीयराष्ट्रियमहापर्वाणि चत्वारि सन्ति । श्रावणी ( उपाकर्म ) विजया दशमी ( दशहरा ) दीपावली ( दीपमालिका ) होलिका ( होली ) इति । इमानि चत्वारि महापर्वाणि भारतीयसंस्कृतिपरिचायकानि परिगण्यन्ते ।

तत्र प्रथमं श्रावणीनामकं महापर्व विद्यते । यच्च श्रावण-पूर्णिमायां भवति । यत्र च सर्वेऽपि दशविधा ब्राह्मणा विन्ध्योत्तरदक्षिणदिग्भागिनो वर्षमात्रं वेदाध्ययनगतोच्चारण-परिभ्रंशमात्रात्रुटिप्रभृतिदोषमार्जनाय वर्षं यावत् कृतानाञ्च विविधानां शारीरिकमानसिकवाचनिकानामपराधानां दूरीकरणाय गङ्गाप्रभृति-महानदीषु स्वनगरग्रामदेशसन्निहितासु अन्यास्वपि यासु कासुचिन्नदीषु संकल्पपूर्वकम् सक्षौरं गोमय-मृत्तिकापामार्गदूर्वाद्युपलक्षितं बहुप्रकारं स्नानमाचरन्ति ।

पश्चाच्च ऋषिपूजनपूर्वकं यज्ञोपवीतधारणं कुर्वन्ति । तस्मिन्नेव पर्वणि ऋषिपूजने प्रयुक्तानामेव यज्ञोपवीतानां वर्षं यावदुपयोगं कुर्वन्ति तदर्थं पूर्वत्र एव बहु यज्ञोपवीत-निर्माणं बहवस्तु स्वहस्तेनैव कुर्वन्ति । एतावत्यां संख्यायां यज्ञोपवीतानि ऋषिपूजने नियोजयन्ति, यानि च वर्षं यावत् परिधानाय पर्याप्तानि स्युरिति ।

पश्चाच्च सूर्य्योपस्थानपूर्वकं परस्परमभिवादनं कुर्वन्ति । तस्मिन्नेव ऋषिपूजनकर्मणि प्रयुक्तानां रक्षासूत्राणां स्वबन्धुवर्गेभ्यः क्षत्रिय-वैश्यशूद्रादिभ्यश्च भद्राभिलाषुकेभ्यः स्वाश्रित-वर्गेभ्यो रक्षार्थं प्रदानं कुर्वन्ति । यच्च सम्प्रति रक्षा-

बन्धन-( राखीबन्धनं ) मिति शब्देन व्यवह्रियते । अयं हि सत्त्व-प्रधानानां ब्राह्मणानामुत्सवो भारतीयराष्ट्रियमहापर्वसु प्रथमो महोत्सवो निगद्यते ।

द्वितीयं महापर्व विजया दशमीत्याम्नायते । यत्र च सत्त्वाश्रितरजःप्रधानाः क्षत्रियाः सर्वेऽपि स्ववंश-परम्परागतं शस्त्रास्त्रपूजनं विधाय सायं दिग्विजयमिषेण प्रस्थानं कुर्वन्ति । कियद्दूरं विभ्रम्य सम्प्रति पाश्चात्य-शासनाधीनतया ग्रामसीमानमेव प्रदक्षिणीकृत्य परावर्तन्ते । विजयादशमीति नामैव द्योतयति भारतीयानां विजयदिनमिदमिति ।

अस्मिन्नेव दिने सत्ययुगे महामाया श्रीभगवती महादुर्गा महासुरराजस्य निशुम्भस्य वधं कृत्वा त्रिदशेभ्यो विजयं दत्तवतीति विजया दशमीत्युच्यते । अस्मिन्नेव दिने भगवान् मर्य्यादापुरुषोत्तमावतारो महामहिमशाली श्रीरामचन्द्रो राक्षसराजं प्रतापततितिरोहितत्रिलोकेश्वरं लङ्केश्वरं प्राङ्गणे समराङ्गणे निपात्य भारतीयेभ्यो विजयं समर्पितवानिति विजया दशमी समाख्यायते । साम्प्रतमपि 'रामलीला' व्याजात्प्रतिवर्षमस्यामेव विजयदशम्यां रावण-वधो भवति । भगवतो रामचन्द्रस्य च विजयो बालकैस्तद्भूमिकामाश्रित्य विधीयते । पराधीनैरपि भारतीयैः क्षणमात्रस्य कृते विस्मृत्य परशासन-पारतन्त्र्यं स्वविजयस्वप्नोऽनुभूयते । इति द्वितीयं भारतीयं राष्ट्रियमहापर्व विजया दशमी विद्यते ।

तृतीया संख्याऽस्ति दीपावल्याः । इयं हि दीपावली दीपमालिका कुतः कालात् प्रारब्धेति मूलमृगणमसम्भवीति विरम्यते तद्व्यापाराद् । धर्मशास्त्रादिषु लक्ष्मीपूजनमहोत्सवोऽयं गीयते । कार्तिके मासि अमायां तिथौ प्रदोषे लक्ष्मीपूजनं, तदुद्देशेन दीपोत्सर्ग-प्रदानञ्च कुर्वन्ति भारतीयाः । महोत्सवोऽयं भारतीयां वैश्यशक्तिं तमोगुणाश्रितरजःप्रधानामिच्छाशक्तिशालिनीं समेधयतीत्यस्य सामाजिकरचनया परिचीयते ।

पश्यन्तु, कार्तिक-मासारम्भत एव वार्षिक-चातुर्मासजन्य-पङ्ककर्दमादिशोषणतो मार्गा विमलाः प्रजायन्ते । यतश्च वाणिज्यादि व्यापारवद्धेन-सौविध्यमायाति । शारदमहोत्सवश्च भारतीयानां कृते महान् प्रसिद्ध आसीद् मगधभूपतीनां समृद्धियुगे ।

अस्तु नाम, सम्प्रत्यपि कार्तिके मासि पूर्णिमावधि बहुत्र स्थानेषु जनतायाः सम्मर्दो भवति । येन च वाणिज्य-विस्तारस्य सौकर्य्यमासाद्यते । इहैव दीपमालिकामहोत्सवतः पूर्वं धन्वन्तरिजन्मोत्सवो भवति । धनत्रयोदशीति प्रसिद्धायामस्यां तिथौ काश्यां सर्वेऽपि वर्णा नूतनं किमपि कांस्यपात्रं क्रीणन्ति एव ।

# 'न स्त्री-स्वातन्त्र्यमर्हति'।

लें०—रामोदारशर्मा (आइ० ए० छात्रः)

कीदृशोऽयङ्काल स्समागतः। अस्माकं भारतीयानां सभ्यता विलुप्तैवाधुनाऽवलोक्यते। विदेशीय भाषावेषाचारप्रचार संदूषितमस्तिष्काः वेदशास्त्रादृयवलोकनरहिता इमे करसंख्येया हिन्दूनामग्रगण्यम्मन्या नेतारः सर्वान् प्राचीननियमानुन्मूलयितुमुद्यता एवेति प्राप्यन्तेऽस्माभि धर्मैकशरणैर्जनैः। मुन्युपदिष्ट-सिद्धान्तप्रणाशं चिकीर्षुभिः स्त्री-संसारे तासां स्वातन्त्र्याय भागीरथप्रयासोऽनुष्ठीयते। ते तु अन्यदेशीयपुस्तकानि अनुदिनमधीयानाः तदीयाः सभ्यता अनुकुर्वाणाः 'यथाऽन्यदेशेषु स्त्रियः समासादितस्वातन्त्र्याः' तथैवेह जगदीशावतरणस्थले धर्मप्रधानदेशे भारते ताभ्यः स्वातन्त्र्यं दित्सवो वर्त्तन्ते। तेषाम्मत्यनुसारेण युरोपस्य स्त्री-सभ्यता अनुकरणीया। परन्त्वेतत् विचार्यते न तैः यत् तत्रत्यं वातावरणम् अस्माकं देशाद्विभिन्नमेव। तेषां विचारस्त्वयमेव यत् 'यदि वयं विचरणशीलाः राजनैतिकक्षेत्रादिष्ववतरितुं योग्याः तदा ताः कथमेभिरधिकारै र्वञ्चिताः? किन्त्ववितथमिदं सारासारविचारचणानां विपश्चिताम् मत्यौ। निभालयन्त्वत्र सुधारकाः यत् तत्र भवतां भवताम्मध्ये किं सर्वेषां कार्यपद्धतिरेकैव? सर्वे तु सर्वकार्य्यकुशलाः कथमपि न। विश्वसृजा तु महीतलावतीर्णानां स्थावरजङ्गमादीनां कार्याणि स्वभावरूपेण पृथक्कृतानि। अतो यदि प्रमदावर्गः स्वतन्त्रतामारोहति तदा समाजहानिरवश्यम्भाविनीति। कथं तासाङ्कर्त्तव्यन्त्वेवमेवाऽस्ति यथोपदिष्टं त्रिकालदर्शिना मनुना।

'पिता रक्षति कौमारे भर्त्ता रक्षति यौवने'।
पुत्रश्च स्थाविरे भावे न स्त्री स्वातन्त्र्यमर्हति॥ ६॥ ३॥

पुनरप्युक्तं तेन स्त्रीकर्त्तव्यमित्थं,

अर्थस्य संग्रहे चैनां व्यये चैव नियोजयेत्,
शौचे धर्मेऽन्नपक्त्यां च पारिणाहस्य चेक्षणे॥ ११॥ ६॥

कीदृशी अत्र निभाल्यते मनोर्दूरदर्शिता। एतदीयम्मतमनुसरतामस्माकमुन्नतिरवश्यं भवितुमर्हति।

यदि स्त्रीजनः मानवं वाक्यं सदैव स्मरेत् तदीयाभिप्रायानुकूलं स्वकीयव्यवहारादिकमाचरेच्च तर्हि तु ता अवश्यमुन्नतिपथमारोहेयुः। महिलाजगदु-

स्थानन्तु स्वातन्त्र्य-प्राप्त्या कदापि भवितुं नार्हति। अत्र तु प्राचीनैतिहासिक-मेव साक्षि। यावत्कालपर्य्यन्तं अत्रत्याः प्रमदाः श्रुति-स्मृतीनामादेशानुसारं कार्य्याणि कुर्वन्त्य आसन् तावत्तु भारतस्योन्नतिर्दृष्टैव। अपरञ्चापि यदि स्त्रियः स्वतन्त्रताधिकारिण्यो भवेयुस्तदा व्यभिचाराधिक्येनावश्यम्भाव्यमिति। अत्राऽपि तु मानवं वाक्यमेवाऽवतिष्ठते प्रमाणीभूतम्। यथा—

'पत्या च विरहोऽटनम्' १३ ॥ ६ ॥

यदि व्यभिचारप्राबल्यं भवेत्तर्हि तु संस्कारहीन-सन्तानोत्पादनात् लुप्त-पिण्डोदकक्रियादिकं स्यादेव। एवम्भूते सति तु सर्वं विनष्टमेव। अत्र प्रमाणी-भूता बहवो नार्य्योऽन्यदेशीयास्स्वदेशीयाश्च। या यत्र तत्र विचरणशीलाः सम्भूय पतिव्रतत्वं प्रणाशयन्ति। स्वकीयगेहमर्य्यादाञ्चाधस्तलं विनिपातयन्ति। तासां कामशक्तिरपि तु पुरुषेभ्यः अष्टगुणाधिकतरा, अत एव तासां स्वच्छन्द-विचरणे पतिव्रतत्वस्योल्लङ्घनं दृष्टिपथमागच्छति। व्रीडायुक्तहसितभाषितगम-नादिकं प्रमदानां शोभां वर्धयति, न तु लज्जानुपस्थितिः। यथोदीरितं भट्टिकविना गोपाङ्गनानां विषये द्वितीये सर्गे।

'स्त्रीभूषणं चेष्टितमप्रगल्भं चारूण्यवक्राण्यपि वीक्षितानि।
ऋजूंश्च विश्वासकृतः स्वभावान् गोपाङ्गनानां मुमुदे विलोक्य ॥ १५ ॥

वर्णिताऽत्र गोपाङ्गनानामनोहरता अप्रगल्भे चेष्टिते एव। अत एव शील-मेव पतिसेवैव तासां श्रियं विकर्षयतः अपहरतश्च स्त्रीस्वभावसुलभानि दुर्गु-णानि पापानि वा। स्त्रियः तु पतिवर्त्मगाः। भो भो आत्मानम्पण्डितम्मन्य-मानाः नेतारः! विचारयन्तु यत्तासां स्वास्थ्यलाभश्चाऽपि स्वच्छन्दतया न प्राप्यः। कारणमिदं, देहोपचितिस्तु ब्रह्मचर्य्येण भवति न तु यत्र तत्र विचरणे-नैव केवलम्। पुरुषाः तु विचरन्त्येव, कथं न ते पुष्टकायाः भवन्ति। स्त्रियः तु क्षुद्रप्रकृतयः विवेचनाहीना अतः ताभ्यां न देयं स्वातन्त्र्यं पुरुषैः। नेतारस्तु कथयन्ति अन्यत् कुर्वन्ति अन्यत्। ते सदैव शिक्षां प्रयच्छन्ति 'विदेशीयवस्तूनि त्यजत' परन्तु आश्चर्य्यमेति मे मानसं तेषाङ्कर्त्तव्यमवलोक्य। ते तु विदेशी-यसभ्यतारञ्जिताः सन्ति। अतः श्रुतिशास्त्रादेशमनुसरद्भिरस्माभिः कदाप्येवं न कार्य्यमिति।

# महाकवि माघस्य काव्यकौशलम् ।

ले०-जगदानन्दझाः साहित्यशास्त्री ।
व्यापार मण्डल संस्कृत विद्यालय फतुहा, पटना ।

——:*❀*:——

वसुधायामस्यां प्राच्यकाले कविकुल कुमुदकलाधरो दत्तकसुनुः कां भाषां न वेत्तिस्म ? किं शास्त्रं न जानातिस्म ? कां गुणावलिमाश्रयतेस्म ? इति सुविदितचरं तत्रभवतां विदुषाम्। "काव्येषु माघः कविकालिदासः" इति प्राच्योक्तिः केषामविदिता । भूतलेऽत्र माघस्य काव्यकौशलं पराम्मुदमातनोतीत्यपि नाज्ञातम् ।

नवसर्गगते माघे नवशब्दो न विद्यते ।

इयं वृद्धोक्ति विद्वन्मण्डलेनाऽज्ञात इत्याशास्महे । शब्दकाठिन्ये भारवेरेव कविचये मान्यत्वम् । परन्तु—

"भारवे र्भारवेर्भाति यावन्माघस्य नोदयः"

यावन्माघमासस्य नोदयस्तावदेव पद्मिनीपतेर्भा भाति तथा च भारवेस्तदाख्यस्य कवेस्तावदेव भा भाति यावन्माघस्य तदाभिधेयकवेर्नोदयः । इति प्राच्यलेखेन भारविकृतकाव्यापेक्षया शब्दकाठिन्यं परमेवेति । माघकविकाव्ये उपमानोपमेयभावः शब्दकाठिन्यं पद-लालित्यं विद्वज्जनविदितमेवेति । अतः केनापि कविनोक्तमपि ।

उपमा कालिदासस्य भारवेरर्थगौरवम् ।
दण्डिनः पदलालित्यं माघे सन्ति त्रयो गुणा, इति ।

अत्र यथामति मयोदाह्रियते । कवे र्माघस्य पूर्वं वैयाकरणत्वं द्योत्यते । श्रीकृष्णकृतकथनोद्यतोद्धवोक्तौ ।

अनुत्सूत्रपदन्यासा सद्वृत्तिः सन्निबन्धना ।
शब्द-विद्येव नो भाति राजनीतिरपस्पशा ॥ २-११२ ॥
निपातितसुहृत्स्वामिपितृव्यभ्रातृमातुलम् ॥
पाणिनीयमिवालोचि धीरैस्तत्समराजिरम् ॥ १९-७५ ॥

श्लोकोऽयं चैद्ययुद्धवर्णनपरः । कविरत्र श्लोकयुगले श्लाघनीयां श्लेषकौशलीं व्याकरणविद्यावैदुष्यञ्च प्रदर्शयन् कथंनाम राजनीतौ युद्धे शब्दविद्यासादृश्यं प्राचीकशत् । राजनीतिदक्षता माघकवेः कवियूथं अहार्यैव ।

उदेतुमत्यजन्नीहां राजसु द्वादशस्वपि ।
जिगीषुरेको दिनकृदादित्येष्विव कल्पते ॥ २-८१ ॥

बुद्धिशस्त्रः प्रकृत्यङ्गो घनसंवृतिकञ्चुकः ॥
चारेक्षणो दूतमुखः पुरुषः कोऽपि पार्थिवः ॥ २-८४ ॥

श्लोकयुगलेऽत्र कवी राजनीतिदक्षतां कीदृशीं प्रकटीचकारेति विद्वन्मण्डलीभि-र्ज्ञातम्। श्रीकृष्णचन्द्रप्रेरित उद्धवः कीदृशी राजनीति-रिति स्पष्टमवालोचयत्। इत्थं बहूनि प्रमाणानि राजनीतिदक्षत्वसूचकानि समुपलब्धानि सहृदयैर्बोध्यानि। साहित्य-शास्त्र-पाण्डित्यं प्रकटीकर्तुमक्षमा वयम्। तथापि किञ्चिदुदाह्रियते।

विद्भिरागमपरैर्विवृतं कथञ्चिच्छ्रुत्वापि दुर्ग्रहमनिश्चितधीभिरन्यैः ॥
श्रेयान्द्विजातिरिव हन्तुमघानि दक्षं गूढार्थमेष निधिमन्त्रगणं बिभर्ति ॥४।३७॥

निधिगणं बिभ्राणे रैवतके गोत्रे मन्त्रसमूहवद्ब्राह्मणोत्तमसाम्यप्रदर्शनस्य कौशलमुल्लसति श्लोकेऽत्र कविराजस्य। पौराणिकीं कथामनुसृत्य प्रयुक्तम् निम्बपत्रेण सार्कं कलितं चूतपल्लव मुद्वमति कस्मिंश्चदुग्रे म्लेच्छमध्यस्थितं मुखगतं ब्राह्मणं दहन्तं ह्युज्झितवता तार्क्ष्येण सादृश्यं प्रकाशयत्यपरोऽयं श्लोकः।

सार्धं कथञ्चिदुचितैः पिचुमर्द-पत्रैरास्यान्तरालगतमाम्रदलं म्रदीयः।
दासेरकः सपदि संवलितं निषादैर्विप्रं पुरा पतगराडिव निर्जगार ॥ ५-६६॥

इत्थं महत्त्वसूचकं पद्यं समुल्लसति शिशुपालबधे। सर्वतोभद्र-गोमूत्रिकादिरूपरचनाविशेषदुष्प्रवेशे चैद्यसैन्ये सर्वतोभद्र गोमूत्रिकादि प्रभृतिनामधेयप्रसिद्धबन्धविशेषदुर्बोधमहाकाव्यसाम्यप्रतिपादकं पद्यमिदं चकास्ति।

विषमं सर्वतोभद्रचक्र गोमूत्रिकादिभिः ॥
श्लोकैरिव महाकाव्यं व्यूहैस्तदभवद्बलम् ॥ १६-४१ ॥

उपमाया विचित्रमुदाहरणं जलधरनीलस्य मुक्तालतालङ्कृतस्य श्रीकृष्णवक्षसः साम्यं मनसि कृत्य कविना प्रदर्शितम्।

उभौ यदि व्योम्नि पृथक् प्रवाहावाकाशगङ्गापयसः पतेताम्।
तेनोपमीयेत तमालनीलमामुक्तमुक्तालतमस्य वक्षः ॥ ३।८ ॥

इत्यादीनि बहून्युपमायाः सहृदयहृदयङ्गमाया उदाहरणानि शिशुपालबधादुपलभ्यन्ते। अर्थ-गौरवमप्यत्र काव्ये पर्याप्तं बिलसतीति ग्रन्थावलोकनतः स्फुटं प्रतीयेत। अस्याप्युदाहरणमेकं प्रदर्श्यतेऽस्माभिः।

अपशङ्कमङ्कपरिवर्त्तनोचिताश्चलिताः पुरः पतिमुपेतुमात्मजाः।
अनुरोदितीव करुणेन पत्रिणां विरुतेन वत्सलतयैष निम्नगाः ॥४-४७।

काव्य-शास्त्र इव शास्त्रान्तरेऽपि माघकवेः प्रगाढं पाण्डित्यमासीदित्यपि निश्शङ्कं वक्तुं पारयामः। सांख्यप्राविण्यं समुल्लसति पद्येऽमुष्मिन्।

उदासितारं निगृहीतमानसैर्गृहीतमध्यात्मदृशा कथञ्चन ।
बहिर्विकारं प्रकृतेः पृथग्विदुः पुरातनं त्वां पुरुषं पुराविदः । १-३३ ।
अपरं च—
तस्य सांख्यपुरुषेण तुल्यतां बिभ्रतः स्वयमकुर्वतः क्रियाः ।
कर्तृता तदुपलम्भतोऽभवद्वृत्तिभाजि करणे यथर्त्विजि ॥ १४-१९ ॥
योगशास्त्र प्राविण्यं प्रकटी करोति कविरस्मिन् ।
मैत्र्यादि चित्तपरि कर्म विदो विधाय ।
क्लेशप्रहाणमिह लब्धसबीजयोगाः ।
ख्यातिं च सत्वपुरुषान्यतयाधिगम्य ।
वाञ्छन्ति तामपि समाधिभृतो निरोद्धुम् ॥ ४-५५ ॥
बौद्ध शास्त्रप्राविण्यं पद्येऽस्मिन् राजते ।
सर्व्वकार्य्यशरीरेषु मुक्त्वाङ्गस्कन्धपञ्चकम् ।
सौगतानामिवात्मान्यो नास्ति मन्त्रो महीभृताम् ॥ २-२८ ॥
मीमांसा नैपुण्यमपि स्फुटीभवत्येताभ्यां पद्याभ्याम् ।
शब्दितामनपशब्दमुच्चकैर्वाक्य-लक्षणविदोऽनुवाक्यया ।
याज्यया यजनधर्म्मिणोऽत्यजन् द्रव्यजातमपदिश्य देवताम् ॥ १४ २०॥
प्रतिशरणमशीर्णज्योतिरग्न्याहितानां
विधिविहितविरिब्धैः सामिधेनीरधीत्य
कृतगुरुदुरितौघध्वंसमध्वर्युवर्य्यै-
र्हुतमयमुपलीढे साधुसान्नाय्यमग्निः ॥ ११-४१ ॥
मानवशास्त्रपाण्डित्यमपि विलसत्यस्मिन्पद्ये ।
पूर्वमेष किल सृष्टवानपस्तासु वीर्य्यमनिवार्य्यमादधौ ।
तत्र कारणमभूद्धिरण्मयं ब्रह्मणोऽसृजदसाविदं जगत् । १४-६७ ।
सङ्गीतशास्त्रपरिशीलनकौशलमप्यस्ति ।
रणद्भिराघट्टनया नभस्वतः पृथग्विभिन्नश्रुतिमण्डलैःस्वरैः ॥
स्फुटीभवद्ग्रामविशेषमूर्च्छनामवेक्षमाणं महतीं मुहुर्मुहुः । १-१० ।
श्लेषसौन्दर्यसमलङ्कृतनाट्य शास्त्रनैपुण्यस्याप्युदाहरणम् ॥
दधतस्तनिमानमानुपूर्व्या बभुरक्षि वक्त्रो मुखे विशालाः ॥
भरतज्ञकविप्रणीतकाव्यग्रन्थिताङ्का इव नाटकप्रपञ्चाः । २०-४४ ॥
स्वादयन् रसमनेकसंस्कृतप्राकृतैरकृतपात्रसङ्करैः ॥
भावशुद्धिविहितैर्मुदं जनो नाटकै रिव बभार भोजनैः ॥ १४-५० ॥
इत्थं सकलशास्त्राध्वगजपरीक्षणनिकषो माघ एव नान्य इति मे मतिः
धिक्लेखविस्तरभयाद्विरमामि । विशेषस्तु सहृदयैः स्वयमुहनीय इति ।

---

# "प्रतीक्षा

[ ले०—हनुमद्दुर्गवास्तव्यो रामचन्द्रशर्मा शास्त्री ' विजयचरणः ' ]

नारद एकस्मिन् दिने भ्रमन् सुरालय मा[1]च ॥
हरिणा भारतभावुकं पृष्टश्चेत्थमुवाच ॥ १ ॥
भो मनोनिरोधशिक्षक ! क्षितौ नरा
वृद्ध काम कोप-लोभमोहमत्सराः ॥
नो नियन्तुमीशते मनोऽतिचञ्चलं
त्वां प्रतीक्षते ततो हरे ! धरातलम् ॥ २ ॥
ये रकारि वाडवैः[2] स्वधर्ममण्डनं
वेदयुक्तिभिः पुरा विधर्मखण्डनम् ॥
दर्शयन्ति ते हि धर्मनाशि कौशलं
त्वां प्रतीक्षते ततो हरे ! धरातलम् ॥ ३ ॥
बाहुजैः सुरेश ! हा ! सुरा प्रपीयते
न प्रजाभिरक्षणे प्रभो ! ऽवधीयते ॥
रम्यते विजातिजाभि रम्यते पलं
त्वां प्रतीक्षते ततो हरे ! धरातलम् ॥ ४ ॥
नैगमा विभोऽप्यनल्पधैर्यधीधनाः
कार्ष्यपाशुपाल्यनैगमत्वजीवनाः ॥
अक्षदेवितामवाप्य कुर्वते छलं
त्वां प्रतीक्षते ततो हरे ! धरातलम् ॥ ५ ॥
प्रक्रि[3]यां विनाऽपि वेदवागधीतिनः
प्रांशुपीठसंस्थिता बतोपवीतिनः ॥
पादजा यदाचरन्ति तद् गिराऽप्यलं
त्वां प्रतीक्षते ततो हरे ! धरातलम् ॥ ६ ॥ *
नेति तेऽग्रजन्म-बाहुजाऽर्यपादजा—
भूतलोद्धृतिं विधातुमीशते प्रजाः ॥ ×
आश्रय स्त्वमेव " रामचन्द्र !" केवलं ।
त्वां प्रतीक्षते ततो हरे ! धरातलम् ॥ ७ ॥

---

१—'अतु गतौ याचने च ' इति भौवादिकाद् धातो र्लिटि प्रथमपुरुषैकवचने रूपमिदम् ।

२—ब्राह्मणैः ३—अधिकारम् "प्रक्रिया त्वधिकारः स्यात् "इत्यमरः ।

* प्रक्रियां विनाऽपि यदाचरन्तीत्यन्वयः ।

+ इति-एवम् ( उक्तप्रकारेण ) अग्रजन्मबाहुजार्यपादजा एते तव प्रजाः सन्ताना भूतलोद्धृतिं विधातुं नेशते नैव समर्थाः सन्तीत्यर्थः ।

# दिव्या गीर्वाणभारती ।

——:※:——

निबन्धा गङ्गाविष्णुशर्म्मा सारस्वत शशास्त्री, ओ० टी०,

( 'अलीपुर' स्थ-राजकीय'विद्यालय-संस्कृताध्यापकः । )

——:o:——

भाषासु मुख्या मधुरा, दिव्या गीर्वाणभारती ।
तत्रापि ( तस्यां हि ) काव्यं मधुरं, तस्मादपि सुभाषितम् ॥ १ ॥
पृथिव्यां त्रीणि रत्नानि. जलमन्नं सुभाषितम् ।
मूढैः पाषाणखण्डेषु, रत्नसंज्ञा विधीयते ॥ २ ॥
द्राक्षा म्लानमुखी जाता, शर्करा चाश्मतां गता ।
सुभाषितरसस्याग्रे, सुधा भीता दिवं गता ॥ ३ ॥

अयि गीर्वाणभारत्यामतुलं प्रेमाणमुद्वहन्तः ! संस्कृतसाहित्यवन-विवस्वन्तः ! श्रीमन्तः ! प्रेक्षावन्तः ! सुमनः सरस्वती रसा स्वादेन समुल्लसन्तोऽन्ते वसन्तश्च !'

केनचिद्विपश्चितामपश्चिमेनाऽभियुक्तेन युक्तियुक्तमुपर्युक्ता मुक्तासमा द्राक्षानिर्यद्रस-भर सपक्षभणितयः केषामक्षरजूषां विदुषां मानसानि न रञ्जयन्ति ? के वा सरस्वतीसेवका विद्वच्चक्राऽवक्र-वक्त्र सुधानिधिसमुद्भूतप्रभूत काव्य सुधा कल्लोलिनी-निर्झरान् स्वकैः कर्णपुटैः पातुन्नोद्युञ्जते ?

नास्त्यणीयानपि सन्देहलेशावसरः यदियं गीर्वाणभारती भारतीय-यावत्प्रचलितभाष्यमाणासु समस्तासु भाषासु प्रशस्तैव । महनीयमहिमा गृहे-लिमगुणगरिमा माधुर्यपरमसीमावसु-धायामपि वसुधायां सुधासमैषा नि-र्जर-निर्जरभाषा स्वयमपि निर्जराऽमरा माधुर्येणाऽधरीकृतमाध्वीक-मधु-मृद्वीका, वामाऽधरमाधुरीमप्यधरीकरोति । यतो वै एषा परमपूता, समस्त-भाषामूलभूता, स्वर-वर्ण संस्कृत्युपेता, दोषौघाऽपेता, सुस्पष्टवर्णजाता, नैक-सदुपदेशगर्भिता, पुरुषोपयोगि पुरुषार्थप्रदा, उच्चावचवाचोच्चारणेऽलंभूष्णुः, प्रचुर-पर्याय-शब्द-संवलिता, ललितललिता, विश्वजनीना जननीव सर्वभाषा जननी वर्तते ।

एतस्या गुणगणमुद्गरीतुन्नागविशेषः शेषः, समुट्टङ्कयितं प्रचुरवीर्यैः कार्तवीर्यैः, निर्वर्णयितु मलङ्कर्मीण उद्दामरौजा बिडौजा अपि नाऽलम्, का कथेत-रेषां समेषां विदुषाममृतान्धसाममृतनिर्विशेषाया भारत्या गणनातीतं गुणगणं

गणयितुम् । मान्याः ! एतद्गुणगणवर्णनं गुणिनां पुरस्तात्, अम्बरमणे र्दीपक-दर्शनमिव मे प्रतिभाति ।

शब्दप्रधानाः स्रष्टृ-सृष्ट-सृष्टौ सर्वपौरस्त्या अज्ञानाऽकूपारप्रवहत्प्रचुर-प्रवाहप्रपतितजीवजातोद्धरण–तरणयः, अर्थिजन–प्रार्थना-सार्थ-सार्थ कीकरण–चिन्तामणयः, अन्तरायव्रातध्वान्तावृतसरणिद्युमणयः, भवध्वान्त-भ्रान्त-नितान्त-तान्त-पान्थ-पद्धतयः प्रभुसम्मिताः सर्वार्थवेदका वेदाः सुरगवीमवलम्ब्य भूतार्थ-( सत्यार्थ ) प्रतिपादकास्सन्ति ।

" सर्गश्च प्रतिसर्गश्च वंशो मन्वन्तराणि च ।
वंशानुचरितश्चैव पुराणं पञ्चलक्षणम् "

इत्यभियुक्तोक्तानि, महामहिममहितानि, सखिसम्मितानि मतिमत्सम्मतानि तानि तान्यष्टादशपुराणानि संस्कृतवागगुम्फितानि समुल्लसन्ति ।

कान्ता-सम्मितानि, अपरिमितानि, रसप्रधानानि सचेतसां चेतांस्यावर्ज-कानि, कान्तानि, कवयितृ-भावव्यञ्जकानि ( चतुर्वर्गफलप्राप्तिः सुखादल्पधियामपि काव्यादेव ' ( "अनायासं कृत्याऽकृत्यप्रवृत्तिनिवृत्त्युपदेशपराणि " " चतुर्वर्गप्राप्तिर्हि वेद-शास्त्रेभ्यो नीरसतया दुःखादेव परिणतबुद्धीनामेव-जायते। परमानन्द सन्दोहजनकतया सुखादेव सुकुमारबुद्धीनामपि पुनः काव्यादेव । इति ' दर्पणकारः ' । ) काव्यानि रसवती-भास्वती-सुरसरस्वती-प्रोक्तान्येव सन्ति, इति के नाम कोविदा विदङ्करं न विदाङ्कुर्वन्ति । 'भोज प्रबन्ध' कृताऽपि साधु-व्याहारि ।

" सुधामयानीव सुधां गलन्ति, विदग्ध संयोजनमन्तरेण ।
काव्यानि निर्व्याजमनोहराणि, वाराङ्गनानामिव यौवनानि " ॥--

काव्यमाधुरी-विषये किमुच्येत—'भामिनी–विलासे', काव्ये 'भामिनी-विलास, प्रणेता, कविताकामिनीकान्तः पण्डितराजो जगन्नाथः स्वकाव्यविषये स्वयमभिधत्ते—

"गिरां देवी वीणा,–गुणरणन-हीनादरकरा
यदीयानां वाचाममृतमयमाचामति रसम् ।
वचस्तस्याकर्ण्य श्रवणसुभगं पण्डितपते-
रधुन्वन्मूर्धानं नृपशु रथवायं पशुपतिः ॥
मधुद्राक्षा साक्षा–दमृतमथ वामाधरसुधा,
कदाचित्केषाञ्चिन्न खलु विदधीरन्नपि मुदम् ।
ध्रुवन्ते जीवन्तोऽप्यहह मृतका मन्दमतयो-

न येषामानन्दं जनयति जगन्नाथ-भणितिः ॥

विद्वांसो वसुधातले परवचःश्लाघासु वाचंयमाः,
भूपाला कमला-विलास-मदिरोन्मीलन्मदाऽघूर्णिताः ।
आस्ये धास्यति कस्य लास्यमधुना धन्यस्य कामालस-
स्वर्वामाधरमाधुरी मधरयन् वाचां विलासो मम ॥
धुर्यैरपि माधुर्यै-द्राक्षा-क्षीरेक्षु माक्षिका दीनाम् ।
वन्द्यैव माधुरीयं पण्डित राजस्य कवितायाः ॥

काव्यानांतत्त्वमपि काव्यरसज्ञा अवयान्ति, नाऽपरे, इत्यत्र पण्डितराजः प्रणिगदति पीयूषकल्पां गिरम्—

"तत्त्वं किमपि काव्यानां जानाति विरलो भुवि ।
मार्मिकः को मरन्दाना मन्तरेण मधुव्रतम्" । +

काव्यानां महिमानं गायन् 'भोजप्रबन्ध' कारश्चारु भणति काव्यानि धीरङ्कमपि सुधियामग्रगण्यं कुर्वन्ति—

"कृतो यैर्न च वाग्मी च व्यसनी तन्नयैः पदम् ।
यैरात्मसदृशो नार्थी-किन्तैः काव्यै र्बलैर्धनैः ॥"

सुभाषितविषये तु पूर्वं प्रणिगदितमेव-

"सुभाषितरसस्याग्रे-सुधा भीता दिवं गता ।"

अस्तु, प्रकृतमनुसरामि—

वैद्य वेद्यानि अनवद्यगद्यपद्यमयानि, आधिव्याधिव्यूह-प्रत्यूहानिरसन-पराणि, पराणि वैद्यक-पुस्तककदम्बकानि संस्कृत्रिमायां वाचि । संयतान तानि ताम्यायतिमितानि ।

समास-व्यासपटुरूपोऽभिरूपश्चतुर चतुराननिभः वेद व्योषकृत ( वेद विभागकृत् ) वेदव्यासो वैयासिकीं संहितां स-हितां सौपर्वणीं सौवर्णीं वाणी-माश्रित्याऽववर्णत् ।

वैयासकी ( शुकदेवः सुधासध्रीचीनां सुरवाचमधिकृत्य धर्मपरीक्षकैः परीक्षितं परीक्षितं ( अभिमन्युतनुजनुषं परीक्षिद्रूपम् ) 'विद्यावतां भागवते परीक्षा' इतिभागवतमशिश्रवत् ।

प्राचेतसीय ममृतबिन्दुनिष्यन्दि कथा वस्तु ( श्रीमद्वाल्मीकीयं रामायणम् ) कस्य सुधी-वरस्य कौतुकं न कन्दलयति ।

सुरभिपालो दोग्धृनन्दनो दोग्धा संस्कृत प्राञ्जलभाषानिबद्ध-सर्वोप निषत्सौरभेयं सौरभं गीतामृतपयः पार्थवत्सं प्रथममपीप्यत (अपाययत) । किम्बहुना—

---

+ काव्यरसज्ञै मर्मज्ञै र्लीढ 'भामिनीविलास' रसै र्भाव्यम् ।

"पुराण न्याय-मीमांसा-धर्मशास्त्राङ्गमिश्रिताः ।
वेदाः स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

इत्यखिला स्थिरा साहिती सुरगवीमयी वरीवृर्नीति इति । कियद् वर्ण्येत संस्कृतभाषाया महत्त्वम् । यदि संस्कृतभाषामहत्त्वजिज्ञासा स्याद्भावुकानां तर्हि-अष्टमाब्दीय-सुप्रभातस्य प्रथमसंख्यायां कविवर विश्वविश्रुत-भट्ट श्री-मथुरानाथ शास्त्रि-साहित्याचार्यस्य 'संस्कृतभाषामहत्त्वम्' इति शीर्षके लेखे रसखन्यास्तल्लेखन्याश्चमत्कारो दृगोचरी कर्तव्यः । तत्र तत्रभवता प्रतिभावता 'आस्मानमें-जब बादल घिर रहे थे, उस समय मैं संस्कृत साहित्यसम्मेलनके लिए घरसे रवाना हुआ, वाक्यमेतत् २५ प्रकारैरन्ववादि वादीभपञ्चाननेन ।

अष्टमवर्षीय-तृतीय संख्यायां 'सुप्रभातस्य' 'संस्कृतशिक्षा समालोचनम्' विद्वज्जन जात लोचन गोचरतां नयता विनयवता विद्यावाचस्पति श्रीशाल-ग्राम शास्त्रि साहित्याचार्येण, आर्यवर्येण, सच्चर्येणोट्टङ्कितमेतत् ।

'प्राचीनं गौरवं, विद्यां, वैभवं शान्तिमात्मनि ।
सैव बोधयितुं शक्ता, भारती-सुरभारती ॥

सत्स्वपि, असंख्यसंख्यातिगेषु निर्मुक्ता हीन्द्रधवलेषु बहुलपक्षदल-च्छशभृच्छेदोज्वलेषु, अचलेन्द्र-मन्थनदण्डमथितक्षीरोदधिगर्भगौरेषु गुणेषु सुरभारत्या, अन्यदेशीयभाषावेषस्पृहयालवोऽमरभारत्या मद्योद्योद्रेकवन्तः शिष्टानुशिष्टविशिष्टेष्टसरणिं परिहरन्तः सत्सम्प्रदायविध्वंसिनो धराऽधरसमु-दायविद्वेषिणः, वैदिकमताचारविचार-प्रचारपरिपन्थिनः, अनाचारात्याचार-व्यभिचारपोषका वैदिकसमयसमूलोन्मूलने श्राद्धाः (श्रद्धावन्त) पाश्चात्य-शिक्षा दीक्षा-शिक्षिता-दीक्षिताः केचिदाशङ्कन्ते निरातङ्कं धीरङ्काः, यदेषामृत-भाषा, ब्राह्मणानां भाषा, किमनयाऽस्माकमधीतया, नांशतोऽपि लाभावाप्तिरनया, बर्बर भाषेयम् नार्थकरीयम् इति करटा इव कर्णकटु रटन्तो दृग्गोचरतामापद्यन्ते। तेषामिदं प्रमत्तगीतमाकर्ण्य गुणैरसामान्यो मान्यः 'सनातनधर्मविजय महा-काव्य प्रणेता 'कविरत्नम् विबुधभारती विलासासादितहृदयानन्दः पण्डित-मण्डलमण्डितोऽखिलानन्दः, अन्वर्थकाभिधानोऽखिलानन्द स्तान् मन्दमतीनित्थं तर्जयति 'संस्कृत साहित्यं तत्कालिस्यञ्चेति' स्वसन्दर्भे । तथाहि "यामाश्रित्य सुरभारतीं भारत भूषणायितमूर्तयः, पूर्तयः सौन्दर्यं जगद्विजयवैजयन्त्याः पदे पदे गीयमानाऽभिनवकीर्तयः ।

वाल्मीकि गौतम कणादपराशराद्या, व्यासात्रिजैमिनिपतञ्जलिनामधेयाः ।
श्रीहर्ष-बाण-भवभूतिमुखाः कवीन्द्रा जीवन्ति, सा कथमहो मृतभारती स्यात्

(क्रमशः)

( २ ) पछताता है ७६ ।

( १ ) अनुतप्यते, अन्वतप्त । अनुशेते, अन्वशेत, अन्वशयिष्ट । ( १ ) पश्चात्तपति ।

पढ़ता है ८० ( एतद्योगे पञ्चमी भवती ) ।

( १ ) अधीते, अध्यैष्ट-अध्यगीष्ट । अभ्यस्यति । पठति, अपा-( प ) ठीत् । शिक्षते, अशिक्षिष्ट ।

पढ़ाता है ८१ द्विकर्म्मकः ।

अध्यापयति, अध्यापिपत्-अध्यजीगपत् । अनुशास्ति । पाठयति, अपीपठत् । व्युत्पादयति । शिक्षयति, अशिशिक्षत् ।

( २ ) परछाईं पड़ती है ८२ ।

प्रतिफलति । संक्रामति । स्फुरति ।

पवित्र करता है ८३ ।

पवते । पवित्रयति । पावयति, अपीपवत् । पुनाति, अपुनात् ।

पहिचानता है ८४ ।

( १ ) परिचिनोति, पर्य्यचिनोत् । संस्तौति ( १ ) समस्तावीत् ।

पहिनता है ८५ ।

( १ ) आमुञ्चति । परिदधाति ( १ ) पर्य्यदधात् । परिधत्ते ( १ ) । ( १ ) पिनह्यति । ( १ ) प्रतिमुञ्चति । वस्ते, अवसिष्ट । संवासयति । ( १ ) संव्ययति ।

पीता है ८६ ।

आचामति, आचमीत् । पिबति, ( १ ) अपिबत्, अपात् । ( १ ) पीयते । ( १ ) धयति, अधयत् ।

पीसता है ८७ ।

( १ ) क्षुणत्ति । चूर्णयति, अचुचूर्णत् । दलयति, अदीदलत् । ( १ ) पिनष्टि, अपिनट् । मृद्नाति, अमृद्नात् । म्रदयति, अमम्रदत् ( अमम्रद्- ) ।

पूछता है ८८ ( द्विकर्म्मकः )

( १ ) अनुयुङ्क्ते, अन्वयुङ्क्त, अन्वयुक्त । जीप्सति, अजीप्सीत । ( १ )पृच्छति, अप्राक्षीत् । प्रश्नयति ।

पूजता है ८९

अर्चति । अर्च्चयति, आर्चिचत् । आराधयति, आरीरधत् । ( १ ) आराध्नोति । ( १ ) आराध्यति । पूजयति, अपूपुजत् । महयति । मानयति । सपर्य्यति । सभाजयति ।

---

( १ ) अनिट् । ( २ ) अकर्म्मकः । ( ३ ) वेट् । ( ४ ) लुङि सेट्, अन्यत्रानिट् ।

पैदा करता है ८०

उत्पादयति, उदपीपदत् । जनयति, अजीजनत् । ( ३ ) प्रसूते, प्रासूत, प्रासोष्ट । प्रसूयते, प्रासूयत ।

( २ ) पैदा होता है ८१ ( एतद्योगे पञ्चमी ) ।

( १ ) उत्पद्यते, उदपादि । उद्भवति; उदभूत् । जायते, अजनि–अजनिष्ट । ( अङ्कुरः– ) प्ररोहति ( १ ) सम्भवति ।

( २ ) प्यासा होता है ८२

उदन्यति । तृष्यति । पिपासति ।

प्रकट करता है ८३

( ४ ) आविष्करोति, आविरकरोत् । उद्घाटयति । द्योतयति, अदिद्युतत् । प्रकटयति, प्राचकटत् । ( ४ ) प्रकटीकरोति । प्रकाशयति, प्राचकाशत् ( अदित्वादुपधाह्रस्वनिषेधः अभ्यासस्य लघुपरकत्वाऽभावाच्च सन्वत् । ) विवृणुते । विवृणोति, व्यवृणोत् । विशकलयति । विशदयति । वृणीते, अवृणीत । ( ४ ) व्यक्तीकरोति । व्यञ्जयति, व्याञ्जिजत् । ( ३ ) व्यनक्ति, व्यानक् । ( ४ ) व्याकुरुते । ( ४ ) स्फुटीकरोति । स्फोटयति, अपुस्फुटत्-स्फोरयति ।

( २ ) प्रकट होता है ८४ ।

आविरस्ति, आविरासीत् । आविर्भवति, आविरभूत् । उदञ्चति । ( १ ) उदयति । उद्यते । ( १ ) उदेति, उदगात् । उद्भवति, उदभूत् । प्रकाशते, प्राकाशिष्ट । प्रतिभासते । प्रादुरस्ति, प्रादुरभूत् । प्रादुर्भवति, प्रादुरभवत् । ( १ ) भाति । स्फुरति ।

प्रतिज्ञा करता है ८५ ।

( १ ) अभ्युपैति । ( १ ) प्रतिजानीते, प्रत्यज्ञास्त । ( १ ) प्रतिशृणोति, प्रत्यश्रणोत् । संगिरते । ( १ ) संशृणुते ( २ ) ।

प्रहार करता है ८६ ।

( ४ ) प्रहरति, प्राहार्षीत् । ( १ ) विध्यति, अविद्ध्यत, अव्यात्सीत् । शरव्यति ।

प्राप्त करता है ८७ ।

( ४ ) अधिगच्छति, अध्यगच्छत् । ( ३ ) अश्नुते । आटीकते, आटीकिष्ट, आसादयति, आसीषदत्—आसात्सीत् ( णिजभावेऽनिट् ) ( १ ) आसी-

( १ ) अनिट् । ( २ ) अकर्मकः । ( ३ ) सेट् । ( ४ ) क्वचित् सेट्, अन्यत्राऽनिट् ।

इत्थं हि भारतीयसंस्कृतिसमेधकानि चत्वारि राष्ट्रियमहापर्वाणि सन्ति । तत्रेयं दीपमालिका विशेषतो वैश्यजातिप्रिया लक्ष्मी-सञ्चयसूचिका निगद्यते । यच्च एषु चतुर्ष्वपि महोत्सवेषु सर्वेऽपि भारतीया-ब्राह्मण-क्षत्रिय-वैश्य-शूद्राः सम्मिलिता भवन्तीति तत् परस्परप्रेमदार्ढ्यसम्वर्द्धकमेकराष्ट्रमिदमिति प्रत्यक्षत एव द्योतयति । भारतीयवर्णाश्रम-व्यवस्थाविज्ञानमजानन्तः पाश्चात्यसभ्यतागर्त्त-पतिताः निभालयन्तु एषां महोत्सवानां महत्त्वम्, परिशीलयन्तु महर्षीणां समाज-रचनारहस्यं, विदाङ्कुर्वन्तु भारतीयानां वर्णाश्रमभेदविज्ञानमिति ।

उक्तञ्च भगवता श्रीकृष्णेन—

सर्वभूतेषु येनैकं भावमव्ययमीक्षते

अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम् ।

एवं अधिकारभेदभिन्नेषु चतुर्ष्वपि वर्णेषु परस्परमैक्यसम्पादकमिदं महोत्सव-चतुष्टयं विभक्तेष्वपि परस्परं दृढप्रेमशाली तेषु अविभक्तमेकं ज्ञानं जनयति । इत्थमेव भारतीयानां समाजरचनारहस्यं विद्यते । तदनुकूलमेव महोत्सव-विज्ञानविदो महर्षयो राष्ट्रियाणामेषां चतुर्णां महापर्वणां व्यूहनं कृतवन्त इति विरम्यते विस्तरात् ।

× × × × ×

## गोपाष्टमी ।

सौरभेय्यः सर्वहिताः पवित्रा लोकमातरः

प्रतिगृह्णन्तु मे ग्रासं गावस्त्रैलोक्यमातरः ।

गोपाष्टमी व्रतं हि कार्तिकशुक्लाष्टम्यामायाति । अस्मिन् व्रते गवां पूजनं क्रियते । गवां पूजनं कया रीत्या विधेयमिति साम्प्रतं भारतीयै विस्मृतम् । पश्यन्तु, पूर्वस्मिन् काले वशिष्ठादिमहर्षीणां सन्निधाने कामधेनव स्तिष्ठन्ति स्म । ते हि गवां प्रसादेन जगति सर्वमपि व्यावहारिकं कृत्यं राजतुल्यं सम्पाद-यन्ति स्म । स्वाश्रमस्य सर्वथा पूर्णतया रक्षणेन सहैव लोकाभ्युदयादिकं सांसा-रिकं व्यवहारम् एकया गवैव ते समनुतिष्ठन्ति स्म इति नास्ति अपरिचितं पुरातत्त्वविदां विदुषाम् ।

वशिष्ठ-विश्वामित्र-युद्धे गौरेव निमित्तमासीत् । विश्वामित्रः स्वपूर्वा-वस्थायां यदा स राजा आसीत्तदा मृगयार्थं वनं गतवान् । तत्रातिथिरूपेण सायङ्काले वशिष्ठाश्रममुपेतः ससैन्यः सर्वथा राजयोग्यमातिथ्यमाप्तवान् । तेन सन्तुष्टो भूत्वा आतिथेयं वशिष्ठं पप्रच्छ यदेतावतां सैन्यानां राजयोग्यः सत्कारः कुतोऽकिञ्च

नेनापि सता श्रीमताऽकारीति । तन्निमित्तं गावमुपाकर्ण्य आश्चर्यनिमग्नो जातः । यदहो ! ईदृशी गौर्वशिष्ठस्य पार्श्वे विद्यते । इमामहं राजसदने नेष्यामीति तन्निमित्तमेव तयोर्युद्धमभूदिति सर्वेषामेव विदितमस्ति ।

दुर्योधनस्य विराटराजेन युद्धं गोनिमित्तकमेवेहाजनीति नास्ति महाभारताध्यायिनामपरिचितम् । राज्ञा दिलीपेन गोसेवया सुतोपलब्धिः समासादितेति संस्कृतज्ञानां प्रत्यक्षवदभ्यस्तवृत्तान्तम् वर्तते । प्राक्तने काले गोधनं हि सर्वधनश्रेष्ठं गण्यते स्म । राजत आरभ्याकिञ्चनावधि गोधनसमादरणमासीत् । एकया गवैव ते सर्वमपि गार्हस्थ्यं कृत्यमावश्यकं सम्पादयन्ति स्म । यत्र हि गृहे गावस्तिष्ठन्ति तत्र कोऽपि रोगो नैव प्रवेशं लब्धुमर्हति । गवां मूत्रपानेन कुष्ठरोगस्यापि निवृत्तिर्भवतीति बहुभिः प्रत्यक्षदृष्टमिति श्रुतमस्माभिः । गोदुग्धदधिघृतप्रभृतिभिर्मानवानां शारीरिकं स्वास्थ्यं कीदृक् समेधते इति तदनुभव कर्तार एव जानन्ति। किं बहुना गोधनविषये सर्वथा प्रकाशं दातुं तु एकस्य महतो ग्रन्थस्यैव प्रयोजनं विद्यते । पश्यन्तु, एतादृशीमत्युपयोगिनीमपि गोजातिमनादृत्य सम्प्रति राजकुमाराः कुक्कुरसेवां कुर्वन्ति !

सर्वथा भारतीयानां बुद्धौ विकारो दृश्यते । भगवान् भूतनाथ एव परिष्करोतु भारतीयानां बुद्धिमिदानीम् । यस्या गोजातेः रक्षार्थमिहैका गोपजातिरेवास्ति । तस्या गोजातेरिदानीं कीदृशी दुरवस्था विद्यते । दैनन्दिनं गोजातेर्वंशविच्छेदो भवति । गवामुत्तमकुलस्य सर्वथा ह्रासः सम्पद्यते । यत्र घटोध्न्यः गाव आसन्, तत्रैव भारते प्रस्थदुग्धास्ता जाताः । यत्रासंख्याता गाव आसन्, तत्रैव सम्प्रति संख्येया जाताः । किं कथयामि धर्मबुद्धया वा आर्थिक-दृष्ट्या वा सर्वथाऽपि गोरक्षणं प्रथमं कर्तव्यमित्येवाधुनेत्यभिधाय विरम्यते ।

---

## राष्ट्रीयमहासभायाः ४८ अधिवेशनम् ।

मुम्बापुर्यां सर्वथा निर्विघ्नं सम्पन्नमिदमधिवेशनं राष्ट्रे नूतनयुगारम्भमातनोति । अद्यारभ्य श्रीगान्धिनिर्देशमनाश्रित्यैव राष्ट्रियमहासभाकार्यं प्रचलिष्यतीति बहवः शङ्किताः पश्यन्ति । किं सर्वथेयमीश्वरादि धर्म-सत्तां विलोप्य पाश्चात्यानीश्वरवादगर्भमुच्छेदमार्गमालम्बिष्यते ? आहो भारतीय संस्कृतिसमेधकं धर्ममार्गानस्पृशन्ती केवलं पारतन्त्र्यपाशविमोकमाचरिष्यतीति । सर्वथा भव्यं विदध्यात्कालात्मा परमेश्वरः । श्रीगान्धिमहाशयस्य ग्राम्य-संघयोजनायान्तु बहव आशान्विताः सन्ति । पश्यामः सा कीदृशं फलं परिणमयति । अधुना तु सा योजना प्रागभावप्रतियोगिनी एवास्ति ।

---

# स्तुतिरत्नमालिका । *

( ले०—केशवशर्म्मा हेब्बालकरः सुरपुरम् ( दक्षिणहैदराबाद )

वेणीधृतप्रसूनश्रेणीं वीणागुणक्वणननिपुणाम् ॥
वाणीं प्रशस्त पुस्तकपाणिं वंदे सरोजभवरमणीम् ॥ १ ॥
निजपद पंकज विरचित-नतिशत-संकल्पनैककल्पतरुम् ॥
कुत्सित-कलिकलुषावलि-जलधितारणमवं शिवं कलये ॥ २ ॥
निगमाऽऽगमनुतकीर्तिं स्वाऽऽख्यास्मृति-दत्त-नतजनस्फूर्तिम् ॥
नाशित-भक्तभवार्तिं नित्यं ध्यायामि दक्षिणामूर्तिम् ॥ ३ ॥

दनुजकुलविदारी चण्डकोदण्डधारी,
प्रणत-दुरितहारी चारुसीताविहारी ॥
अगणितगुणसीमा सज्जनप्रेमधामा,
गलधृतमणिदामा पातु मां पूतनामा ॥ ४ ॥
गंगातुंगतरंगसंघ-विगलद्बिन्दुच्छटास्पर्शतः,
श्वेतस्मेरजटाकलाप-विलसत्किंजल्कजालांकितम् ॥
आलंबे गिरिजेश्वरं रिपुजनोन्मत्तद्विपध्वंसकं,
कैलासाख्यगिरौ चरंतमपरं श्रीकंठकंठीरवम् ॥ ५ ॥
जयतु सुजनबंधुः स्निग्धकारुण्यसिंधुः,
जयतु जगदनार्यध्वांत-विध्वंस-सूर्यः ॥
जयतु दुरितहर्ता सिंधुजाऽऽनन्दकर्ता,
जयतु विशदहासः शेषशैलाधिवासः ॥ ६ ॥
कश्चित्धुनोतु दुरितं त्वरितं समग्रं,
मद्विग्रहांतरितमम्बुद-नीलभासः ॥
यस्याऽनिशं चरण-सारस-धूलिजालं,
ब्रह्मादि-मौलिमणिभूषणतां तनोति ॥ ७ ॥
अर्धाऽब्जांकित मौलिरम्यशिरसं स्वर्धामसंसेविनं,
शुद्धान्तःकरणाऽऽलयं श्रुतिशिरःसिद्धान्तसारं परम् ॥
श्रद्धालुप्रकरप्रियं प्रणमतामुद्धारबद्धाऽऽदरं,
सिद्धाऽऽधीश्वरमाश्रये गिरिसुताविद्धार्धदेहं मृडम् ॥ ८ ॥

---

* अयं लेखकः शैशवादेव नेत्रविहीनः, अनधीतसंस्कृत-साहित्यदर्शनश्च । भगवतः कृपाप्रसादात् बाल्ये वयस्येव सरसरुचिराः कविताः रचयति ॥

संग्राहकः—राजगोपालाचार्यः कनकगिरिः सुरपुरम् ।

# अनधिकारेऽधिकारत्वसुधारः



ले०—पं० रामानन्दजी व्या० आ० सा० न्या० वि० ज्यौ० भू० प्र० अ०
पीपली बाज़ार, जैनविद्यालय, ब्यावर

प्रियबन्धवः! पश्यन्तु खलु कालचेष्टितं दुर्निवारं यदिदानीन्तनाः सुधारकपदमपि मलिनयन्तः कुसुधारकुठाराघातेनैवानादिपुरुषेण भगवता विराजा प्रचालितां वर्णव्यवस्थामुल्लङ्घ्य स्वस्वसहजं कर्म परिच्छेत्तुं सर्वतः सर्वभावेन प्रयतन्ते। करिष्यमाणैः कर्मभिः सद्यः कृतैर्वा, विद्याध्ययनादिगुणै-रात्मनैवात्मानमपि ब्राह्मणादिं समर्थयन्तः, अन्त्यजानामपि शुद्धिरस्माकमायत्तैवेति तैः सह व्यवहरन्ति भोजनादिभिः। भगवतःकलेः प्रभावादनुत्कृष्टजातय एवेदानीं विचक्षणाः सन्तीति केचन तु महतः लोभादेवेत्थमाचरन्ति। अन्ये तु स्वकीयां पूर्वजन्मकृतगर्हितकर्मवशाल्लब्धामनुत्तमकुलोत्पत्त्यनुसारेणोत्तरोत्तरा-मुत्कृष्टजातिं स्वत उत्कृष्टां ब्राह्मणक्षत्रियादिजातिं दृष्ट्वा चान्तः परिज्वलन्ते द्वेषं च समाचरन्तस्त्रिशंकुरिव स्वर्गं निन्द्येन स्ववपुषा शास्त्र-विधिमुत्सृज्य ब्राह्मण-पदमारोढुमिच्छन्ति। केचन तु सुधारकाधमा इहैव जन्मनि पूर्ववयसि पुरीषोत्सर्गालयमार्जनादिकं विधायेदानीं सर्वे वर्णाः यदि विच्छिन्नाः सन्त एकमेव मनुष्यमात्रं भविष्यन्ति तदा सुखेन स्वराज्य-लाभः स्यादिति व्याजेन, अन्त्य-जानामपि ब्राह्मणादिवदध्ययनाध्यापनदेवदर्शनयज्ञाग्निहोत्रादि कर्मशास्त्रसम्मत-मिति तदर्थं धनग्रन्थ्युपार्जने एव महात्मत्वं परिदर्शयन्ति, देशांश्चाकिञ्चना-न्कुर्वन्ति। यदि केचन शास्त्रमर्मज्ञा उत्तमा, हितोपदेशं वितरन्तः—

"सहजं कर्म कौन्तेय सदोषमपि न त्यजेत्—
सर्वारम्भा हि दोषेण धूमेनाग्निरिवावृताः"

इति भगवदुक्तिं स्मारयन्ति तदा तैः सहातुलं विरोधमाचरन्ति। विनाशकाले विपरीतबुद्धिरितीहापि न स्मरन्ति। यतो ब्राह्मणादयस्तु बहव इतस्ततोऽध्ययना-ध्यापने साहाय्यमलभमाना अटन्ति, खिद्यन्ते च। परन्तु नाद्यावधि कुत्रापि श्रूयते यत्तेषां कृते धनग्रन्थ्युपार्जका महात्मनामभाजोऽध्ययनमध्यापनशालां निर्मातुमुप-देशमपि दत्तवन्तो यथाऽन्त्यजानां हरिजनाख्यानामिति।

"अपूज्या यत्र पूज्यन्ते पूज्यानाञ्च व्यतिक्रमः।
त्रीणि तत्र पतन्त्याशु दुर्भिक्षं मरणं भयः॥"

इत्यभ्यासेन स्फुरति मनुवाक्यार्थो [illegible] गीत "चातुर्वर्ण्यं मया सृष्टं गुण-कर्मविभागशः" इत्यत्रैव तेषामाग्रहः [illegible] तत्सुधार इत्युच्यते तैस्तदा विचारयन्तु भगवद्वाक्यार्थम्। पूर्वजन्मकृत [illegible] कर्मभिरेव मयोचिता तत्तज्जातिः व्यवस्थापिता, न तु रागद्वेषादिना [illegible]दुत्तमा, मध्यमा, वा जातिः कृतेत्येव तात्त्विकार्थः। न तु क्रियमाणगुणकर्मभिः करिष्यमाणगुणकर्मभिर्वा। अत एव—

अविद्यो वा सविद्यो वा ब्राह्मणो मामिकीतनुः" ।

इत्यादि भगवदुक्तिः संगच्छते। जातिमुत्पत्तितोऽस्वीकर्तॄणां मते तु अविद्यानां ब्राह्मणत्वमेव न स्याद्गुणकर्मविहीनत्वात्तदा भगवत उक्तिर्विरुध्येत। उत्पत्तितो वर्णव्यवस्थां जातिव्यवस्थां च स्वीकृत्यैवाग्रे भगवता योगभ्रष्टानां जन्म पुण्यवतां गेहे भवतीत्युक्तम्। तस्मात् पूर्वजन्मकृत-शुभाऽशुभकर्मणा उत्तमाधमजातिव्यवस्था शास्त्रसम्मता नान्यथेति सिद्धान्तः। बहवो जैना अपि सुधारकैः प्रचालितां विधवाविवाहादिव्यवस्थां निन्दन्तोऽप्यस्मिन् जाति-वर्णव्यवस्थादूषके प्रचलिते झंझावाते निमज्जन्ति, भ्रमन्ति। यतो हि सत्येऽपि विषये प्रचुरैरान्दोलिते विदुषामपि मतिरान्दोलिता भवति। तानहं वच्मि यद्भो भगवान् महावीर एवान्तिमो जैनधर्मप्रसारकस्तीर्थंकरो भवतामजनि। तेन यद्यपि साम्यभावो उदारतापूर्वकः समर्थितः, परन्तु न क्वापि वर्णव्यवस्था-भङ्गे यत्नः कृतः। साम्यभावस्य तु यथा मम शरीरे पीड़ा तथैवान्यस्यापीति न कमपि हन्यात्, किन्तु सर्वे दयनीयाः सन्तीत्येव तात्पर्योऽस्ति। अन्यथा को ह्याचार्य्यपदमर्हतीत्यत्र "जाति–सम्पन्नः, गुण–सम्पन्नः" इत्युक्तेरनौचित्यं यतो गुणेनैव जातेरपि संग्रहात्। यदि स्वशास्त्रे—

"कम्मुणा बम्हणो होइ कम्मुणा होइ खत्तियो" ।

अर्थात् कर्मणैव ब्राह्मणो भवति कर्मणैव क्षत्रियो भवति इत्येवमर्थमस्याः गाथायाः करिष्यन्ति भवन्तस्तदा "भगवान् महावीरः क्षत्रिय आसीत् हरिकेशी चाण्डाल आसीदित्यादि कथनञ्चोल्लेखोऽपि न संगच्छेत्। तस्मात्पूर्वजन्म-सञ्चितगर्ह्यागर्ह्यकर्मभिरेवोच्चकुले जन्म भवति। तेनैव च जातिव्यवस्था वर्णव्यवस्था चेत्यवगन्तव्यम्। अत एव कर्मविचारावसरे भवच्छास्त्रेऽनेन कर्मणोत्तमोत्तमगोत्रबन्ध इत्यादि व्यवस्था जैनदर्शनेऽस्तीति विरमामि।

## "माधवः" ।

( ले०—साहित्याचार्य्य-पाण्डेयः श्रीकुसुमाकर शर्मा )

—:**:—

ग० स० संस्कृत महाविद्यालयस्थः, ( मुजफ्फरपुरम् ) ।

"अज्ञान प्रतिवारको वलिवसुध्याज्ञातमसात्कारको,
दीनानामनुपालकः स भगवान् भक्तापदुद्धारकः ।
दैवेन्द्रस्मयहारकोऽसुरचमू-संहारकः सन्ततं ।
वृन्दारण्य-विहारकः सकरुणः पायाज्जगन्माधवः ॥

## बृहद्भारतभ्रातृमण्डलस्य छात्रालयबन्धुसमाजस्य च स्नेह-सम्मेलनं ज्ञानयज्ञश्च ।

—:o:—

बृहद्भारत-भ्रातृमण्डलस्य छात्रालयबन्धु-समाजस्य च स्नेहसम्मेलनं ज्ञानयज्ञश्च महता समारोहेण श्रीकाशीनरेश महाशालायां (Hall) समजनि ।

प्रथमदिने श्रीमन्महाभागाः केलकरमहोदयाः ( डी० ए० आङ्ग्ल पाठशालामहाध्यापकाः ) सभापतिस्थानं समलङ्कृतवन्तः । शुभेऽस्मिन्प्रसङ्गे काशीस्थप्रतिष्ठितविद्वद्वर्गः, अध्यापकवर्गः, छात्रवर्गः, नागरिकसमुदायः एवं प्रायः परश्शतसमाजानां प्रतिनिधय उपस्थाय स्वस्वसभाया विशेषकार्यं प्रादिशन् ।

प्रथमं वादित्रगणेन (Band) स्वागतमकारि, मंगलाचरणञ्च वेदोक्तमन्त्रैस्संगिरितम् । श्लोकैस्स्तवनं, हिन्दीभाषायां गुर्जरभाषायां च गानमगायि । सभापतिमहोदयै राजकीयसंस्कृतमहाविद्यालयस्याऽ (Govt. Queen's College) ध्यक्षमहाशय-श्रीगोपीनाथकविराजस्य शुभसंदेशोऽश्रावि । संदेशोऽयमन्यत्र प्रकाशितः । श्रीमद्गोविन्दमालवीयमहोदयः किञ्चिदाकस्मिककार्यवशात्सम्मेलन उपस्थातुन्नाशक्नोत्तस्याप्यागतसमाचारं सभाध्यक्षमहोदयाः

परान्हे काशीस्थाऽऽङ्गलमहाशालाऽ( Government Queen's College ) ध्यक्षश्रीसंजीवरावमहोदयाः सभापतिस्थानं सुशोभितवन्तः । मङ्गलाचरणस्तवनानन्तरं श्रीमत्पण्डितरामचन्द्रतिवारीमहोदयाः सेवाधर्मं, श्रीमत्पण्डित यज्ञनारायणमहाशयाः हिन्दुविश्वविद्यालय-मंत्रिमहोदयाः समयानुकूलकर्तव्यञ्च सुललितवाण्या व्याख्यातवन्तः । सभापतिमहोदया अत्यावश्यककार्यवशात्स्वस्थाने श्रीमत्केलकरमहोदयान्प्रस्थाप्य "अद्यावधिपर्यन्तं येऽवताराः प्रादुर्बभूवुस्तेषां सर्वेषां समस्तविश्वस्यैक्यप्रख्यापने लक्ष्यम् आसीत् । प्राणिजातमीश्वरस्यैवांशो विद्यतेऽत एव सर्वैरपि मनुष्यैः परस्परं भ्रातृत्वव्यवहारेण व्यवहर्तव्यमिति" संक्षेपेण संभाष्य समगच्छन् । तत्पश्चाद्गुरुस्तवप्रार्थना, उड्डियानप्रयोगः, संगीतम्, पद्यपाठः, पादावुपरिकृत्य हस्ताभ्यां चलनम्, व्यायामः, आसनानि, मल्लक्रीडाः, इत्याद्यनेकप्रकाराणि सुंदरकार्याणि सम्पादितानि सभाविविध प्रतिनिधिभिः । अन्ते श्रीमद्ब्रह्मानन्दसंन्यासिमहोदयेभ्यो धन्यवादं प्रदत्तवन्तः, तदनन्तरं, महोत्सवस्य सानन्दं विसर्जनं समभवत् ।

सूर्यदासः । ( काठियावाड़ राजकोटस्थः )

---

## "संगरियायामपूर्व उत्सवः" ।

### ले०—सत्यनारायणशर्मा, उपमन्त्री सनातनधर्मसभायाः ।

अस्यां गतायामेव 'जन्माष्टम्यां' बीकानेर प्रान्तान्तर्गतसंगरियामण्डया विशाले सनातनधर्मसभाभवने श्रीकृष्णजन्मदिनमभिनन्दितुं सनातनधर्मसभाधिकारिवर्गप्रबन्धेन सभाया विशेषाधिवेशनमभूत् ।

अधिवेशने समवेतानां सहस्राधिकसंख्यकजनानां समवाय एतत्प्रान्तप्रसिद्धधर्मप्रचारकाणां विद्वद्वराणां श्रद्धेयानां श्रीमतां आर० सी० शास्त्रिणां पण्डित-दीनाराम-गौरीशङ्कर-दौलतराम--गोकुलचन्द्रशर्मणाञ्चाऽभूवन्मनोरमाणि व्याख्यानानि ।

अधिवेशनप्रबन्धकर्तृषु धूम्रशकटीस्थितिस्थानामध्यक्षाणां (स्टेशनमास्टर) श्रीमतां श्यामदासमहोदयानां, राजकीय-मिडिलस्कूल-प्रधानाध्यापकानां, श्रीरमाशङ्करपाण्डेय—'विशारद'—महोदयानां, कुँवरमुरलीसिंहमहोदयानां, पण्डितदीनाराम महोदयानाञ्चोद्योगः प्रशंसनीय आसीत् ।

विज्ञानमिदं विस्पष्टयति—

तद्दैवापेक्ष्यं जडत्वात् ॥ ६३ ॥

तद्धि कर्म जड़स्य भावो जडत्वम् तस्माद् चेतनत्वात् दैवापेक्ष्यं देवानां समूहा दैवास्तैरापेक्ष्यं तेषामाधीनमिति सूत्रार्थः।

प्रथमतः कर्म्मणस्त्रयो विभागाः, ततश्च जैवस्य कर्मणः श्रेणिद्वयम्, तत्रापि दैव्याः सहायतायाः प्राधान्यगौणताविचारः, इत्यादि-विचारणया जिज्ञासोः कस्यचित्स्यादाकाङ्क्षोद्गमः। तत्रोत्तरणक्रमेणेदं सूत्रयामास सूत्रकारो यद् दैव्याः सहायतायाः प्राधान्य गौणत्व-सत्त्वेऽपि सिद्धान्ततः सर्वत्रैव कर्मराज्यमूले दैवी सहायताऽपेक्षितैव। यतो हि कर्मणो जडत्वात्तन्मूले चेतनसत्तापेक्षा नितरामावश्यकैवास्ति। ये हि दार्शनिका विनापि चेतनसत्तां कर्मणः कार्य्यकर्तृत्वं युक्तिभिः प्रमाणयन्तः समर्थयन्ति ते भ्रान्ताः। जडाः पदार्था जडात्मिका शक्ति र्वा विना चेतनसाहाय्यं नियमतः कार्य्यं कर्तुं नैव प्रभवन्ति। यतो हि जडश्रृंखला चेतनं विना कदापि संसाध्या भवत्येव नहि। उदाहरणतो यथा कियती जडशक्तिर्विनापि चेतनं स्वयमेव कार्य्यं सम्पादयन्ती दृश्यते। यथा अयस्कान्तमणेः (आकर्षकलौहस्य) आकर्षणशक्तिः, सूर्य्यकान्तमणेः, (दाहक काचस्य) अग्निदानशक्तिः, मेघस्य वज्रनिपातिनी शक्तिरित्यादि। परन्तु सूक्ष्मेक्षिकया निभालने तु तत्रापि तेषां मूले काऽपि चेतनशक्ति रस्त्येव या हि तासु शक्तिषु तिष्ठन्ती ता अन्तर्यमयति। यस्याः श्रुतिषु बहुधोल्लेखो दृश्यते।

इत्थञ्चेदम् अकामेनापि जडाद्वैतिना स्वीकर्तव्यमेव यत् चेतनशक्तिं विना श्रृंखलाबद्धं कार्य्यं नैव प्रचलतीति। व्यवस्थां श्रृंखलाञ्च विना तासां शक्तानामुपयोगस्य किमपि मूल्यमेव नास्तीति। अतश्च लौकिकी जडशक्ति र्यदा बुद्धिजीविभि र्मानवैः सञ्चालिता स्यादलौकिकी समष्टिरूपा जडशक्तिश्चालौकिकैर्देवैः सञ्चालिता स्यात्तदैव तासां शक्तीनां सदुपयोगः कर्तुं पार्य्यते। एतदुदाहरणानुरूपमेवेदं स्वीकरणीयं यद् जड-शक्ति-सम्पन्नं कर्म यदा चेतनशक्ति-सम्पन्नैर्देवगणैर्वा सर्वशक्तिसम्पन्नैः सगुण-ब्रह्मरूपैस्तत्तत्कर्म-सञ्चालकनियामकैस्त्रिदेवैर्वाऽधिष्ठितञ्च परिचाल्येत चेत्तदुपयोगः सम्यगसम्भव एव। अतश्च जडं कर्म चेतन-साहाय्यमपेक्षत एवेति निर्विरोधं सिध्यति ॥ ६३ ॥

सहज-कर्मसम्बन्धादाह—

सहजमायत्तं प्रकृतेः ॥ ६४ ॥

सहजं प्राकृतिकं कर्म प्रकृतेः स्वनियामिकायाः शक्ते रायत्तमधीनमित्यर्थः। सहजस्य कर्मणः विस्तरशः स्वरूपं प्रागेवोक्तम्। प्रकृते र्गुणत्रयतरङ्गसहोदर-

तया तस्य सहजमिति नाम। सर्वं हि सहजं कर्म प्रकृत्या स्वैव जायमानतया तदधीनमेव। उदाहरणतो यथा सहजकर्मवशात् त्रिजडग्रन्थितः समुत्पन्नो जीवः स्वयमेवोद्भिज्जादियोनितः संसरन्मनुष्ययोनिं यावदुपैति। सहजस्यास्य कर्मणोऽस्या गतेः किमपि जीवेच्छितं विशिष्टं कारणन्नास्ति। केवलं प्रकृतेः स्वाभाविकगतित एवेदमीदृक् स्वयमेव भवति। यदा हि प्रकृतिस्तरङ्गायिता सती तमसः सकाशात् सत्त्वाभिमुखी सञ्जायते तदैवेयं क्रिया स्वत एव प्रादुर्भवतीति किमगम्ये तर्कप्रवेशप्रयासेनेति दिक् ॥ ६४ ॥

पूर्वप्रसङ्गत एतत्फलम्ब्रूते—

तस्माद्दैवसाहाय्यमपेक्ष्यम् ॥ ६५ ॥

तस्माद्धेतोः (सहजेन कर्मणा) देवस्येदं दैवं तच्चेदं साहाय्यं दैवसाहाय्यमपेक्ष्यमाश्रयणीयम् इति सूत्रार्थः।

सहजं कर्म यदा सर्वथा प्रकृत्यधीनं तद्व्यापारेण सह जैववासनाया अपि न कोऽपि सम्बन्धस्तिष्ठति तदा सुतरामिदं मन्तव्यम् यद् तेन सम्पूर्णतया दैवसाहाय्यमपेक्षणीयमिति। कर्ममात्रस्यैव जडतया कस्याश्चन चेतन-शक्तेरपेक्षायाः सिद्धत्वात्, सहजेन कर्मणा जैववासनाया अपि सम्बन्धाभावस्य निश्चितत्वात् देवानां साहाय्यस्यावश्यकत्वं सहजकर्मणः फलोत्पत्तौ स्वीकर्तव्यमेव।

अन्यच्च कर्मणः सञ्चालने पूर्णावयवस्य जीवरूपिणो मानवस्येच्छाक्रियाशक्त्योरपेक्षावश्यकी, आहोस्वित् देवानामेवेच्छाक्रियाशक्त्योरपेक्षणमावश्यकमिति सिद्धान्ते सहजकर्मणि मानवेच्छाक्रियाशक्त्योरभावसिद्धौ दैवसाहाय्यं तत्रापेक्षितमिति स्वीकरणीयमेव ॥ ६५ ॥

सम्प्रति जैवसम्बन्धादाह—

जैवं जीवनिघ्नम् ॥ ६६ ॥

जीवस्येदं जैवं कर्म जीवस्य निघ्नमाधीनमिति सूत्रार्थः।

जैवस्य कर्मणो मूले पूर्णावयवस्य जीवस्यैवेच्छाशक्तिः कार्य्यसम्पादिकेति तत्कर्म जीवायत्तमेवेति मन्तव्यमेव। मनुष्यस्य प्रारब्धसञ्चितक्रियमाणस्वरूपाः सर्वेऽपि संस्काराः तदीयवासनासम्भूता एव तेषां संस्कारात्मकबीजानाञ्च द्रुमायितं जैवकर्मापि मनुष्यवासनासम्भूतमेवेति स्वीकृतौ जैवं कर्म जीवेच्छाधीनमिति सुतरां सिद्धम् ॥ ६६ ॥

प्रसङ्गादस्यापि देवसम्बन्धं दर्शयति—

अतस्तदर्द्धम् ॥ ६७ ॥

अतो जैवकर्मणो जीवाधीनतया तेषां देवानामर्द्धं साहाय्यमपेक्षितमिति सूत्रार्थः।

सहजकर्मणि देवानामिच्छाशक्तिः क्रियाशक्तिश्चेत्युभे अपि सर्वथापेक्षिते भवतः। जीवं कर्म तु नेदृशं विद्यते तत्र तु केवलं दैवी क्रियाशक्तिरेवापेक्षितास्ति। अतश्च तत्र देवानामर्द्धमेव साहाय्यमपेक्ष्यत इति स्वीकर्तव्यम्। जैवानां कर्मणां संस्कारास्तु जीववासनात एव संगृह्यन्त इति तत्र जीवानामिच्छाशक्ति-सम्बन्धतस्तदीय-सम्बन्धोऽर्द्धं इति संसिद्धमेव। अपरतश्च कर्मफलदातारो यदि देवा मन्यन्ते तर्हि तेषां क्रियाशक्तिस्तत्रापेक्षितैवेति देवानामपि अर्धः सम्बन्धः सिद्ध एवेति दिक्॥ ६७॥

अधुना स्थूलप्रपञ्चे कर्म सबन्धं ब्रूते—

कर्मणाऽऽकर्षणविकर्षणे स्थूलसम्बद्धे॥ ६८॥

कर्मणा कर्मद्वारैव स्थूलसम्बद्धे स्थूलप्रपञ्चयुक्ते आकर्षण-विकर्षण-नाम्नी द्वे शक्ती प्रादुर्भवत इति सूत्रार्थः।

कर्मणः प्रभावेणैव स्थूलप्रपञ्चेऽस्मिन् आकर्षणविकर्षणात्मिकयोः शक्त्योराविर्भावो भवति। सूक्ष्मातिसूक्ष्मपरमाणुत आरभ्य महतोऽपि महतां ग्रहोपग्रहाणां समूहावधि ये हि आकर्षण-विकर्षणात्मिके शक्ती विद्येते ते उभे अपि कर्मजन्ये स्तः। स्थूलप्रपञ्चस्य सर्वेष्वपि स्थानेषु शक्तिद्वयं प्रत्यक्षत एवोपलभ्यते। ततश्चावस्थात्रयं परिणमति। आकर्षणावस्था प्रथमा, विकर्षणावस्था द्वितीया, उभयोः समन्वयावस्था च तृतीया चरमावस्थोच्यते।

उदाहरणतो यथा सिकता-परमाणवः परस्परं मिलिताः शर्करां प्रस्तरं वा निर्मान्ति। इयं हि शर्कराप्रस्तरनिर्मित्यवस्था आकर्षणावस्थोच्यते। यदा च तस्मिन् पदार्थे क्षार-(लवण) संयोगाद्विगलनावस्था समुदेति सैव विकर्षण-दशा निगद्यते। यस्यामाकर्षण-विकर्षणयोः समन्वयो भवति, सैव मध्यमावस्था समन्वयावस्था तृतीयोच्यते। इमे उभे अपि शक्ती इमास्तिस्रोऽवस्थाश्च सर्वा अपि समष्टिव्यष्टिकर्मजन्या निगद्यन्ते॥ ६८॥

प्रसङ्गप्राप्तं शक्तिद्वयस्य गुणसम्बन्धं निरूपयति।

रजस्तमोमूलकमुभयम्॥ ६९॥

रजश्च तमश्च ते तथोक्ते मूलं यस्य तत्तथोक्तमुभयं शक्तिद्वयमपि वर्तत इति सूत्रार्थः।

अस्य त्रिगुणात्मकस्य प्रपञ्चस्य सर्वाण्यङ्गोपाङ्गानि त्रिगुणविरहितानि नैव सन्ति। यतो हि जगत्प्रपञ्चस्य मूलकारणं प्रकृतिरेव त्रिगुणात्मिका विद्यते तदा तद्विकारस्य त्रयोविंशतितत्त्वात्मकस्य जगतः त्रिगुणात्मकत्वे सन्देह एव

नास्ति । तस्यैव प्राकृतिकस्य नियमस्यानुरूपेण आकर्षणविकर्षणात्मकशक्ति-द्वयेऽपि आकर्षणं हि रजोगुणपरिणामो विकर्षणन्तु तमोगुणसमुद्रेक इति परमाणु-द्वयस्याकर्षणेन प्रपञ्चस्यावस्थात्रयदर्शनेनेद्दृशमेव प्रतीयते । यो हि परस्परं संयोगो भवति तदेव ब्रह्मणः परमात्मनः सृष्टिकार्य्यमुच्यते । तद्धि रजोगुण जन्यमिति निश्चितं ज्ञेयम् । यदा हि शक्तिद्वयं सममेव तिष्ठति तदा हि भगवतो विष्णोः स्थितिकार्य्यं भवति । इयं हि स्थितेरवस्थावश्यं सत्त्वगुणात्मिका ज्ञेया । तृतीयावस्था सैव निगद्यते यस्यामवस्थायां परमाणुषु विकर्षणशक्ति-रारभ्यते यतश्च परमाणवः पृथगेवावतिष्ठन्ति । इयं हि भगवतो रुद्रस्य कार्य्यं विद्यते, तद्धि तमो गुणात्मकं विज्ञेयम् । अतश्चाकर्षणशक्तिर्हि राजसिकी विकर्षण-शक्तिस्तामसिकीति नितरामवसेयम् ॥ ९९ ॥

सम्प्रति सूक्ष्मप्रपञ्चे तदीय-सम्बन्धं ब्रूते—

सूक्ष्मसम्बद्धौ रागद्वेषौ ॥ १०० ॥

रागश्च द्वेषश्च तौ तथोक्तौ सूक्ष्मेण प्रपञ्चेन सम्बद्धौ सम्पृक्तौ स्त इति सूत्रार्थः ।

यथा हि स्थूलेन प्रपञ्चेन आकर्षणविकर्षणयोः सम्बन्धः तथैव सूक्ष्मेण प्रपञ्चेन रागद्वेषौ सम्पृक्तौ ज्ञेयौ । वृत्तिसाम्राज्ये रागात्मिकाः सर्वा अपि वृत्तयो रजोगुणजन्या ज्ञेयाः । द्वेषवृत्तयश्च सर्वास्तामसिक्योऽवसेयाः । बाह्ये जगति यथाकर्षणविकर्षणशक्तयः सन्ति, तथैवान्तर्जगति रागद्वेषा-त्मिका अपि वृत्तयो निगद्यन्ते ।

इत्थं हि दृष्टिगोचरी भवति यद्रागे परस्परमाकर्षणं भवति । द्वेषे च परस्परं विकर्षणमिति । मित्रेषु परस्परं रागस्थित्याऽन्योन्यस्य सर्वमपि कृत्य-माकर्षकं भवति, उपादेयञ्च प्रतीयते । शत्रुषु परस्परं द्वेषस्थित्याऽन्योन्यस्य सर्व-मपि कृत्योद्वेगकरं भवति, हेयञ्चावगम्यते ॥ १०० ॥

अनयोः प्रधान-फलमाह—

सर्ग-विसर्ग-निमित्तम् ॥ १०१ ॥

तद्धि शक्तिद्वयं सर्गश्च विसर्गश्च तौ तथोक्तौ तयोर्निमित्तम् कारणमस्तीति सूत्रार्थः ।

अन्तर्जगति बाह्यजगति वा स्यादुभयत्रापि अनयोर्द्वयोः शक्त्योर्मध्ये एकाकर्षणशक्तिः सृष्ट्यै भवति । द्वितीया विकर्षणशक्तिश्च विलयाय भवति । तत्र बाह्ये जगति आकर्षणं सृष्ट्यै प्रभवति । अन्तर्जगति च रागः सृष्ट्यै प्रक-

रूपते। अन्यतश्च बाह्ये जगति विकर्षणं विलयाय भवति। अन्तर्जगति च द्वेषः प्रलयाय जायते। सर्गविसर्गयोरुभयोरपि मूले सर्वेषु स्थानेषु सर्वासु चावस्थासु इदमेव मूलतत्त्वं व्याप्तं विद्यते। स्थूले जगति परमाणुत आरभ्य-ग्रहोपग्रहं यावद् यदाऽऽकर्षणक्रिया समुद्भवति तदैव सृष्टेरुद्गमो भवति। यदा च विकर्षणक्रियोद्गमो भवति तदैव प्रलयोपक्रमो भवति।

सृष्टि-प्रस्तारवेलायां परमाणुनाऽऽकृष्टाः परमाणवः पञ्चतत्त्वात्मकं नानाविधं स्थूलसृष्टिप्रपञ्चं निर्मान्ति। ग्रहोपग्रहादयोऽपि इत्थमेव निर्मीयन्ते। ब्रह्माण्डस्य प्रलयवेलायामाहोस्वित् प्रस्तरलौहादिस्थूलपदार्थानां विलयवेलायां परस्परं संसक्ताः परमाणवो विकर्षणशक्त्या पार्थक्येन परस्परं भेदमुपगच्छन्ति। इतश्चेदं सिध्यति यत् स्थूलप्रपञ्चे आकर्षणं सृष्टेर्निदानम्। विकर्षणञ्च प्रलयकारणमिति। इत्थं हि अन्तर्जगति रागः सर्गस्य हेतु र्द्वेषश्च प्रलयस्य निदानमिति विचारणया समुदेति। रागेणैव प्रवृत्तिरेधते रागेणैव पितापुत्रयो र्दम्पत्योश्च परस्परं सम्बन्धस्तिष्ठति। रागेणैव जायापतिभ्यां सन्तानोद्गमो भवति। अन्ततश्च रागेण प्रवृत्तिः प्रवृत्त्या च सृष्टिरिति सिद्धान्तः।

एवमेव द्वेषेण प्रवृत्तेररुचि र्जायते। द्वेषेणैव साधकस्य विषयेभ्यो विरक्ति र्जायते विरक्त्या च मुक्तिद्वारमुद्घाट्यते सर्वेभ्योऽपि विषयेभ्यो द्वेषोद्गमेन प्रवृत्तेर्नाशेन निवृत्तेरुदयो भवति, ततश्च निवृत्त्या विषयत्यागेन लयक्रिया सार्थिका भवति। अतश्चेदमेवावसीयते यदनयोः शक्त्योर्मध्ये एका सृष्टिहेतुर्द्वितीया प्रलयनिदानमिति ॥ १०१ ॥

प्रसङ्गसङ्गतिसङ्गतं सृष्टि प्रलययो र्नैसर्गिकत्वं संसाधयति—

**तावतो नैसर्गिकौ ॥ १०२ ॥**

तौ सृष्टि-प्रलयौ अतोऽस्मात्कारणात् प्रकृतेस्त्रिगुणात्मकत्वादिति यावत् नैसर्गिकौ स्वाभाविकाविति सूत्रार्थः।

यदा ब्रह्मप्रकृतिस्त्रिगुणात्मिका गीयते। तस्या रजस्तमोभ्यामेव पूर्वोक्तयोरुभयोः शक्त्योरुद्गमेन सृष्टे र्लयस्य च सिद्धिर्भवति। ततश्चेदं स्वत एव सिध्यति यद् सृष्टिप्रलयौ नैसर्गिकाविति। यदा च ब्रह्मनित्यं तत्प्रकृतिरपि नित्या। तस्याश्च नित्यत्वात्तद्गुणा अपि नित्या एव। यदा च ते गुणा नित्याः स्वाभाविकाश्च तदा तन्मध्ये विद्यमानयो रजस्तमसोरपि क्रिया स्वाभाविकी एव। ततश्च रजसः सृष्टिक्रिया तमसश्च प्रलयक्रियाऽपि स्वाभाविक्यावेव भवत इत्यसन्दिग्धम् ॥ १०२ ॥

सम्प्रति सत्त्वगुणोदयविज्ञानमाह—

उभयसाम्ये सत्त्वम् ॥ १०३ ॥

उभययोः रजस्तमसोः साम्ये समतायां सत्त्वम् सत्त्वगुणः समुद्भवतीति सूत्रार्थः ।

यदा हि रजोगुणस्य तमोगुणस्य च समन्वयस्तिष्ठति तदैव सत्त्वगुणस्योदयो भवति । उदाहरणतो यथा—यदा हि बहिर्जगति उभयोराकर्षणशक्त्योः समान एवाधिकारस्तिष्ठति । फलतो न आकर्षणशक्तिरधिकं वर्द्धते नापिविकर्षणशक्तिरेवातिवृद्धिं गता भवति । तदैव सत्त्वगुणस्योदयो भवति । साहि स्थित्यवस्था जगतः प्रख्यायते ।

स्थूले जगति आकर्षणविकर्षणशक्ती परस्परं पदार्थेष्वाकृष्टि-विकृष्टि-क्रियां निरन्तरमेव चालतः । यतो हि इमे उभे अपि शक्ती स्वाभाविक्यैस्तः । यावद्धि आकर्षणविकर्षणशक्त्योरेकाऽधिकं न वर्द्धते, किन्तु समाने एव तिष्ठतः, तावद्धि ग्रहोपग्रहादयः स्वस्वकक्षायां विद्यमानाः पदात्पदमपि अनियमितं न व्रजन्ति । इयं स्थितेरवस्थोच्यते । एवं हि अन्तर्जगति यदा रागद्वेषयोः समन्वयो भवति तदैव सत्त्वगुणस्य स्थितिर्भवति तदानीमेव विश्वधारकस्य धर्मस्य पूर्णोऽधिकारो ज्ञेयः ॥ १०३ ॥

तत्फलमभिधत्ते—

स्थितिमूलकमतः ॥ १०४ ॥

अतोऽस्माद्धेतोः ( उभयोः साम्ये हि सत्त्वोद्रेको भवतीत्यस्मादित्यर्थः ) (सत्त्वं हि) स्थितिमूलकं स्थितिः मूलं यस्य तत्तथोक्तमिति । यदा हि जगतः स्थितिर्भवति तदा सत्त्वावस्थेति । यथा सत्त्वमूलिका स्थितिस्तथा स्थिति मूलकंसत्त्वमपि ज्ञेयमिति सूत्रार्थः ।

रजोगुणात्सृष्टिः, तमोगुणाल्लयः, सत्त्वगुणाच्च स्थितिरिति शाश्वतिकः सिद्धान्तः । अतश्चोभयोः शक्त्योः समन्वये हि यदा सत्त्वगुणोदय इति नियमस्तदोभयोः शक्त्योः साम्यावस्थात एव स्थितिर्भवतीत्येतदपि सिद्धमेव । रजस्तमसोर्द्वयोः शक्त्योः समन्वयादेव सात्त्विकशक्तिरुद्भवति । सैव शक्तिर्हि बहिर्जगतोऽन्तर्जगतश्च स्थूलजगतः सूक्ष्मजगतश्च ब्रह्माण्डस्य पिण्डस्य च सर्वस्यैव पदार्थस्य स्थितिं नियामयति । इह हि शास्त्रान्तरमपि समुपलभ्यते—

बहलरजसे विश्वोत्पत्तौ भवाय नमोनमः ।
प्रबलतमसे तत्संहारे हराय नमोनमः ॥

जनसुखकृते सत्त्वोत्पत्तौ मृडायनमोनमः।
प्रमहसि पदे निस्त्रैगुण्ये शिवाय नमोनमः॥ इति ॥१०४॥

प्रसङ्गतस्तस्य धर्मसम्बन्धं प्रदर्शयति—

**प्रतिष्ठास्थानं धर्मस्य ॥ १०५ ॥**

तद्धि सत्त्वम् धर्मस्य सुकृतस्य प्रतिष्ठास्थानम् आश्रय इत्यर्थः। पूर्वमेवेदं प्रमाणितं विद्यते, यत् सत्त्वगुणवर्द्धिका सर्वा अपि क्रिया धर्मशब्दवाच्या भवतीति। सत्त्वस्य क्रमाभिवृद्धिरेव धर्मस्य मूलमिति। अतश्च यदोभयशक्तिसमन्वयेनैव सत्त्वगुणोदयो भवति तदाऽवस्थेयं धर्मप्रतिष्ठानस्येत्यपि मन्तव्यमेव। यत्र यत्र रजस्तमोमूलकयोराकर्षणविकर्षणयोरुभयोः शक्त्योः समन्वयस्तिष्ठति तत्र धर्मोदयोऽपि विराजत एवेति निर्विवादं सिध्यति। यद्यपि राजसिक-तामसिक-धर्मावपि मुख्यगौणभेदेन व्याख्यातौ तथापि धर्माधिकारस्त्रिगुणविचारणयैव निर्णीतः। अर्थतः सत्त्वमूलकस्य धर्मस्यैव ते त्रयोऽपि अवान्तर भेदा विज्ञेयाः। वस्तुतस्तु धर्मप्रतिष्ठास्थानम् पूर्वोक्तयोरुभयोः शक्त्योः समन्वयेनोत्पन्नः सत्त्वगुण एवास्तीति ॥ १०५ ॥

द्वितीयं सम्बन्धं दर्शयति—

**विद्या-क्षेत्रम् ॥ १०६ ॥**

तत् सत्त्वम् विद्यायाः क्षेत्रम् आश्रयो विद्यत इति सूत्रार्थः।

विद्यायाः स्वरूपं पूर्वमेवोक्तं विस्तरेण। विद्या हि ज्ञानजननी विद्यते सत्त्वगुणमयी चेति। इत्थञ्चास्यामवस्थायां तस्याः क्षेत्रं रजस्तमःशक्त्योः समन्वयादुत्पन्नं शुद्धं सत्त्वमेव भविष्यतीति निःसन्दिग्धम्। साधको यावद्धि सत्त्वगुणाधिकारं वर्द्धयिष्यति, तावदेव स्वस्मिन् विद्याया ज्योतिर्विकासं सम्पादयिष्यति। सत्त्वगुणवर्द्धनमेव विद्याकृपोपलब्धिर्विद्यते। सत्त्वगुणाभिवृद्ध्या सहैव मल-विक्षेपावरणविनाशेन साधकक्षेत्रं विद्याधिष्ठानोपयोगि जायते ॥ १०६ ॥

अन्यमपि सम्बन्धं परिचाययति।

**कैवल्य-कारणञ्च ॥ १०७ ॥**

तद्धि सत्त्वं कैवल्यस्य मोक्षस्य कारणं हेतुरपि भवतीति सूत्रार्थः। रजस्तमसोः समन्वयेन तयोरेवाभिभवने या हि सत्त्वगुणस्य प्रतिष्ठा भवति सा हि सत्त्वगुणस्य प्रतिष्ठावस्था। यथा धर्म-प्रकाशिका भवति, विद्याक्षेत्रञ्च विद्यते तथैव कैवल्यप्राप्तिकारणमपि विद्यते। रजस्तमसी अभिभूय यावान् हि सत्त्वगुणो

मुमुक्षौ यद्वर्धते । स तावन्मात्रयैवाधिक्येन धार्मिको भवन्नात्मज्ञानाभिवृद्धिं कुर्वन् ज्ञानजनन्या विद्यायाः कृपापात्रीभवति । इत्थं क्रमेण तत्त्वज्ञानोन्नतिं कुर्वन् कैवल्यपदस्याधिकारी भवति । अतश्च पूर्वोक्ता सत्त्वस्थितिः कैवल्यकारणमप्यस्तीति विज्ञेयम् ॥ १०७ ॥

प्रकृतमेव विषयं पुनरनुसरति —

कर्मणैव सृष्टिस्थित्यन्ताः ॥ १०८ ॥

सृष्टिश्च स्थितिश्च अन्तश्च ते तथोक्ताः कर्मणा एव जायन्त इति सूत्रार्थः ।

यद्यपि रजोगुणेन सृष्टिस्सत्त्वगुणेन स्थितिस्तमसा च प्रलयः प्रजायते । एषां त्रयाणामपि गुणानां ब्रह्मविष्णुमहेशाः सन्तीति प्रसिद्धस्तथापि कर्मैवासां तिसृणामपि क्रियाणां मूलं विद्यते । इदमपि च पूर्वमेव प्रमाणितम् यत् प्रकृतिस्पन्दनेन कर्मोत्पत्तिः प्रकृतिस्पन्दनञ्च प्रकृतेस्त्रिगुणात्मिकतया स्वत एव प्रादुर्भवति । अपरतश्च सृष्टिस्थितिलयात्मिकास्तिस्रोऽपि इमाः क्रियाः सन्तीति सृष्टिस्थितिलयात्मकफलतायाः कर्मभिरेव सम्बन्धं कुर्वन्ति । सर्वतोऽपि प्रथमं विचारणीयमिदमस्ति यत् सृष्टिस्थितिलयात्मकानि फलानि पूर्वसंस्कारानुसारेणैव भवन्ति ।

यथा हि पिण्डस्योत्पत्तिस्थितिलयमूले प्रारब्धसंस्कारात्मकं कर्मबीजं तिष्ठति तथैव ब्रह्माण्डस्योत्पत्तिस्थितिलया अपि ब्रह्माण्डसमष्टिप्रारब्धानुकूला एव भवन्ति । अतश्च कर्मैव सृष्टिस्थितिलयकारणतां भजते इति सुतरां सिध्यति ॥ १०८ ॥

प्रसङ्गतः स्वसिद्धान्तं ब्रूते—

तदतो ब्रह्म ॥ १०९ ॥

तत् कर्म अतोऽस्माद्धेतोः सृष्टिस्थितिप्रलयसाधकत्वादिति यावत् ब्रह्म ब्रह्मसादृश्यं भजत इति सूत्रार्थः ।

यदा हि कार्यब्रह्मात्मकस्य सृष्टिप्रपञ्चस्य कारणं कर्मैव सिध्यति तदा तदेव ब्रह्मेति कथने को दोषः ? उक्तञ्च भगवता श्रीगीतोपनिषदि—

कर्म ब्रह्मोद्भवं विद्धि ब्रह्माक्षरसमुद्भवम् ।
तस्मात् सर्वगतं ब्रह्म नित्यं यज्ञे प्रतिष्ठितम् ॥

वस्तुतो हि यदा ब्रह्मतत्प्रकृत्योश्चाभेदः ब्रह्मप्रकृतिकर्मणो श्चाभेदस्तदा

# सूर्योदयः ।

दशमे वर्षे } मार्गशीर्षस्य पूर्णिमा सं० १६६१, { षष्ठ-संख्या

## सम्पादकीया अभिप्रायाः ।

——:o:——

### दर्शनशास्त्राणि ।

——:o:——

दृश्यते संसारस्योद्गमादि सूक्ष्मातिसूक्ष्मं तत्त्वं यैस्तानि दर्शनानि । शिष्यते एभिरिति शास्त्राणि दर्शनानि च तानि शास्त्राणि दर्शनशास्त्राणीति व्युत्पत्त्या दर्शनशास्त्रशब्दसिद्धिः । तानि च दर्शनानि सम्प्रति बहूनि सन्ति । पाश्चात्यविद्वद्भिरपि स्वविचारधारया बहूनि दर्शनानि प्रकाशितानि । इह तेषामभिधानस्य नास्त्यवसरः । प्राच्यैर्विद्वद्भिश्चापि बहूनि दर्शनानि स्व-स्व-तर्क-कर्कशधिया प्रकाशितानि सन्ति । तत्रास्तिक-नास्तिकभेदेन द्विविधोऽस्ति विभागः ।

नास्ति वेदोदितो लोक इति येषां मतिः स्थिरा ।
नास्तिकास्ते तथास्तीति मतिर्येषां त आस्तिका इति ॥

तत्र वेदसम्मतं स्वमतं ये प्रकाशयन्ति ते आस्तिकाः कथ्यन्ते । ये च तद्विरुद्धमपि स्वबुद्धिकल्पित-तर्कजालोपष्टम्भकमात्रं तत्त्वमुपनिबध्नन्ति ते नास्तिकाः । मनुनाऽप्युक्तम् ।

नास्तिको वेद निन्दकः । इति ।

इदानीन्तु ये ईश्वरतत्त्वं स्वीकुर्वन्ति ते आस्तिकाः । ये नेदृशास्तेऽपि नास्तिकाः परिभाष्यन्ते । अस्तु, तत्र नास्तिका त्रिविधाः चार्वकाः, बौद्धाः जैनाश्चेति । चार्वाकेष्वपि बहवो भेदाः सम्प्रति दृश्यन्ते । पुत्रात्मवादिनो देहात्मवादिन इन्द्रियात्मवादिन इत्यादि प्रपञ्चितं वेदान्तसारे सदानन्देन यतिना । संक्षेपतः चार्वाकाणामिदमेव दर्शनं विद्यते—यत् प्रत्यक्षमेवैकं प्रमाणम् । क्षित्यप्तेजोवाय्वाकाशात्मकान्येव पञ्चतत्त्वानि, तेभ्य एव चैतन्यमपि किण्वेभ्यो मद-

शक्तिवन्निःसृत्य विराजते। यावद्देहावस्थायि च, देहविनाशे एव विनश्यति। अर्थकामौ एव पुरुषार्थौ, नीतिरेव तत्साधनम् इत्यादि। मतमिदं सर्वसाधारणजनप्रियत्वाल्लोकैः साधारणजनैरायतं विस्तृतं लोकायतमित्यप्युच्यते। बृहस्पतिरेवास्य दर्शनस्यादितः प्रवक्तेति पुराणादिषूपलभ्यते।

बौद्धा अपि चतुर्विधाः पारम्परिकभेदान्निगद्यन्ते। ते च यथा सौत्रान्तिका वैभाषिका माध्यमिका योगाचारा इति चत्वारोऽभिधीयन्ते। तत्र वैभाषिका बाह्यार्थप्रत्यक्षत्ववादिनः सौत्रान्तिका बाह्यार्थानुमेयत्ववादिनः, योगाचारा विज्ञानवादिनः, माध्यमिकाः सर्वशून्यत्ववादिन इत्येवं चतुर्विधा उच्यन्ते।

इमे सर्वेऽपि प्रत्यक्षानुमानोभयप्रमाणवादिनः। सर्वं शून्यं, शून्यं क्षणिकं, क्षणिकं दुःखं दुःखं; स्वलक्षणं, स्वलक्षणमिति भावनया निर्वाणमुपदिशन्ति। सर्वस्यापि प्रपञ्चस्य चित्तचैत्यात्मकत्वमेव स्वीकुर्वन्ति। तस्य च रूपविज्ञानवेदनासंज्ञासंस्काराभिधानान् पञ्चस्कन्धान् अङ्गीकृत्य तद्वर्णनं कुर्वन्तः तत्त्वज्ञानेन निर्वाणमुपदिशन्ति। बुद्धदेवोपदेशमेवेमे स्वमत्युनुसारं चतुर्धा विभज्य गृहीतवन्त इति बुद्धस्य इमे शिष्या बौद्धा उच्यन्ते। उक्तञ्च माधवाचार्य्यैः सर्वदर्शनसंग्रहे—

देशना लोकनाथानां सत्त्वाशयवशानुगाः
भिद्यन्ते बहुधा लोक उपायैर्बहुभिः पुनः।
प्रत्यक्षमनुमानञ्च प्रमाणद्वितयं मतम्
चतुःप्रस्थानिका बौद्धाः ख्याता वैभाषिकादयः।
अर्थो ज्ञानान्वितो वैभाषिकेण बहु मन्यते
सौत्रान्तिकेन प्रत्यक्षग्राह्योऽर्थो न बहिर्मतः।
आकारसहिता बुद्धिर्योगाचारस्य सम्मता
केवलां संविदं स्वस्थां मन्यन्ते मध्यमाः पुनः
रागादि-ज्ञान-सन्तानवासनोच्छेदसम्भवा
चतुर्णामपि बौद्धानां मुक्तिरेषा प्रकीर्तिता।

जैनाः पुनर्जीवाजीवाख्यं तत्त्वद्वयं स्वीकुर्वन्ति, प्रत्यक्षानुमाने द्वे एव प्रमाणे आमनन्ति। तत्र केचन नवतत्त्वात्मकं प्रपञ्चमाचक्षते। जीवाजीवधर्माधर्मास्रवसंवरबन्धनिर्जरमुक्तिभेदात्। केचन जीवास्रवबन्धसम्वर-निर्जरमोक्षाःतत्त्वानि सप्तामनन्ति। सम्यग्दर्शनज्ञानचारित्राणि मोक्षमार्गः, इति तेषां मोक्षसाधनसूत्रं गीयते। तेषां सप्तभङ्गीनयस्तु प्रसिद्ध एव। स्याद्वादिनो जैनाइति वैशिष्ट्य तेषाम्। संक्षेपतोऽयमेव तत्सिद्धान्तस्तथाहि—

जिनो देवो गुरुः सम्यक्तत्त्वज्ञानोपदेशकः।
ज्ञानदर्शनचारित्राण्यपवर्गस्य वर्तनी
स्याद्वादस्य प्रमाणे द्वे प्रत्यक्षमनुमापि च
नित्यानित्यात्मिका सप्त नव वा तत्त्वसंस्थितिः।
जीवाजीवौ पुण्यपापे चास्रवः संवरोऽपि च।
बन्धो निर्जरणं मुक्तिरेषां व्याख्या विधीयते
चेतनालक्षणो जीवः स्यादजीवस्तदन्यकः।
सत्कर्म पुद्गला धर्मोऽप्यधर्मस्तद्विपर्ययः।
आस्रवः स्रोतसां द्वारं सम्वृणोतीति सम्वरः।
प्रवेशः कर्मणां बन्धो निरर्जस्तद्वियोजनम्।
अष्टकर्मक्षयान्मोक्षो विज्ञेयार्हतपद्धतिः।

इत्येवं श्रुतिपथमनादृत्य स्वमतमात्रैकजीवना इमे नास्तिका दर्शनकारा अभिधीयन्ते। एतेषां मतं महामहोपाध्यायैः श्रीमद्भिः स्वर्गीय गङ्गाधरशास्त्रिभिः सी० आई० ई० महोदयैः स्वीये 'अलिविलासिसंलापनामके' सुमनोहरे काव्ये साधु प्रश्नोत्तरमुखेन समुट्टङ्कितं विद्यते। तज्जिज्ञासुभिस्तत एव काव्यामृतरसास्वादेन सहैव दार्शनिकतर्ककर्कशोऽपि विषयो वैदुष्यविमर्दितः साधुसम्पादितो नारिकेलमोदक इवास्वादनीयः। अस्माभिरप्यत्र नास्तिकवादान्तं कृत्वैव विरम्यतेऽग्रे सर्वेषामेवास्तिकानां संक्षेपतो दार्शनिकाः सिद्धान्ताः क्रमशोऽभिधायिष्यन्ते।

× × × × ×

## भारतीय व्यवस्थापरिषदो निर्वाचनम्।

—:०ॐ०:—

सम्प्रति प्रधान व्यवस्था-परिषदः सदस्यनिर्वाचनावसरे सर्वत्रैव प्रायशो राष्ट्रियमहासभा ( कांग्रेस ) सदस्या एव विजयिनो जाताः। एतेनानुमीयते सर्वतो निराशामापन्नापि जनता राजनीतिपथस्य परिष्कारमधुनाप्यपेक्षते। अतोऽस्मिन्नवसरे राष्ट्रप्रतिनिधिस्वरूपैरेभिर्महाभागैः पारस्परिकं वैमत्यं विहायैकमत्यं जुषमाणैः किमपि राष्ट्रियमेव सुकृत्यं विधेयम्। येन शिक्षाप्रचारकार्ये अन्यान्येष्वपि विभागेषु समुचिता समुन्नतिः स्यात्। नहि शारदाविधानमन्दिर-प्रवेशधारानिर्माणप्रभृति-विफलप्रयासकार्य्यवत् धार्मिकप्रश्नोत्थापनादिस्तत्र भारतीयसंस्कृति-विलोपको व्यापारो विधेय इत्यस्माकं सर्वप्रथमं वक्तव्यम्। धार्मिकं सामाजिकं विषयं विहाय राजनीतिविषयस्य तत्र चर्चायां सर्वेऽपि प्रतिनिधयः सम्मतं दद्युश्चेत्कल्याणमपि स्याद्देशस्य। धार्मिकविषयस्तु स्वयमेव परिष्करणीयस्तत्र शासकानां हस्तप्रक्षेपः सर्वथैवानुचित इति न विस्मरणीयम् मन्येऽस्माकं प्रतिनिधयोऽवश्यमिहावधास्यन्तीति विरमामो विस्तरात्।

## धर्मप्रयोजनम् ।

अद्यत्वे धार्मिकस्य भावस्य जनतायां कियान् ह्रासो जात इति नास्ति समाचारपाठकानां महोदयानामविदितम् । साम्यवादसदस्यैस्तु प्रत्यक्षत एवाक्रमणं धार्मिके जगति विधीयते । इह वाराणस्यां सञ्जायमाने बौद्धधार्मिकसम्मेलने साम्यदलीयभावः तत्सदस्यैः श्रीसम्पूर्णानन्दमहाशयैः प्रकाशित एवास्ति । यस्योपरि टिप्पणीं कुर्वद्भिः 'आज'—पत्रसम्पादकैरपि परिदर्शित एवास्ति साम्प्रतिकजनानां धार्मिको भावः, यत् 'प्रत्यक्षदृष्ट्या धर्मस्य को हि उपयोगो विद्यते? वर्तमानसमयेऽकिञ्चनानां किमुपकरोति धार्मिकः संसारः?' इत्यादि जनमतप्रतीकं परिदर्शयद्भिरेभिर्महोदयै बंहूपकृतं सनातनधर्मस्येति इमे अस्माकं साधुवादभाजनानि ।

इतोऽप्यधिकतयाऽस्माकं ते महोदया धन्यवादभाजनानि ये हि अ० भा० संस्कृतधार्मिकविश्वविद्यालयतः प्रवर्तितां धार्मिकीं पत्रिकां वर्द्धयितुं यतमानाः सन्ति, यतो हि सर्वत्र प्रसृमरस्यास्य भावस्यावसरप्रदानमात्रस्यैव कृते न हि, किन्तु सर्वथैवाकिञ्चनजनशोषिकां धनप्रधानां पाश्चात्यसभ्यतामिह भारते वर्द्धमानामुन्मूल्याध्यात्मिकविचारबहुलां प्राचीनां सर्वजनकल्याणकरीं वर्णाश्रमव्यवस्थामेव पुनः परिष्कर्तुं ।

> "ब्राह्मणः समदृक् शान्तो दीनानां समुपेक्षकः
> स्रवते ब्रह्म तस्यापि भिन्नभाण्डात् पयो यथा ।
> सर्वेषां यः सुहृन्नित्यं सर्वेषां च हिते रतः
> कर्मणा मनसा वाचा स धर्मं वेद जाजले" ।

इत्यादि निगूढं धार्मिकस्वभावम् सर्वेषां पुरतः प्रस्थापयितुमेवास्याः प्रथममुद्देश्यं विद्यते। धर्मेणैव सत्यो भारतीयः साम्यवादो जगति पुनः समेधितो भवितुमर्हति । सनातनधर्मज्ञानेनैव वर्णाश्रमविभागद्वारैव सर्वेषामेवाकिञ्चनानां समाजे स्थानं परिष्कृतं भवितुमर्हति । धर्म एव—

> कुसूलकुम्भीधान्यो वा त्र्याहिको श्वाहिकोऽथवा ।
> जीवेद्वापि शिलोञ्छेन श्रेयानेषां परः परः ।

इति सर्वश्रेष्ठं राज्यशासननियमनिर्मातारं ब्राह्मणं शास्ति ।

> "प्रजापीडन-सन्तापात्समुद्भूतो हुताशनः
> राज्ञो यशः श्रियः प्राणानदग्ध्वा न निवर्तते"

इति शासकान् शास्ति ।

धर्मः सर्वानेव शास्ति । इत्थं हि धर्मज्ञानसत्त्वेऽकिञ्चनानां स्थितिः सर्वथा परिष्कृता स्यात् । सर्वेऽपि स्वोचितभागग्राहिणो भवेयुः । वर्णाश्रमव्यवस्था भारतीयः साम्यवादो विद्यते । तस्यैव सम्यज्ज्ञानाभावादियं दुर्दशा भारतीयानां सञ्जातेति पुनर्वर्णव्यवस्थापरिष्कारेणैव सर्वं सामञ्जस्यं सम्पादितं स्यादिति-विरम्यते विस्तराद् ।

× × × × ×

## ग्राहकमहोदयेभ्यो निवेदनम् ।

श्रीमन्तः पाठकमहोदयाः घोरेऽस्मिन् धर्मविप्लवसमये सर्वाभ्युदय-प्रदस्य सनातनधर्मस्य प्रचाराय प्रयतमानोऽयं 'सूर्योदय': भवतां सकरुणमवलो-कनमाकाङ्क्षति । श्रीमतां व्यतीताब्दस्य वार्षिकं साहाय्यं यदासीत् तत्तु गत-भाद्राश्विनकार्तिकेषु समाप्तिमगात् । अतः शीघ्रं धनादेश-(मनिआर्डर) द्वारा स्वकीयं वार्षिकं साहाय्यं प्रेषयन्तु । आशास्महे भवन्तोऽस्य वार्षिकं साहाय्यं नूनं प्रेषयिष्यन्तीति । येषां मूल्यं न आगमिष्यति तेषां सविधे पञ्चदशदिनानन्तरं बी० पी० द्वारा सूर्योदयो गमिष्यति । येषां खलु महोदयानां 'सूर्योदय'-ग्रहणेच्छा न वर्तते, तैः कृपया एतद् विज्ञप्तिपठनानन्तरमेव वयं विज्ञापनीयाः, अन्यथा निरर्थकं वयं क्षतिग्रस्ता भविष्याम इति सबहुमानं सानुरोधं च निवेदयामः ।

३३१८ श्रीनारायणशर्म्मा विद्यार्थी हैदराबाद ।
३३२१ मन्त्री-छात्र सभासनातन संस्कृतपाठशाला गङ्गाधरी ।
३३२५ श्रीधर्मवीर विद्यार्थी, खुर्जा ।
३३३२ मैनेजर श्रीकेदारनाथ विद्याधरवाचनालय गुप्तकाशी,
३३३४ श्रीपुष्पानन्द चमोली विद्यार्थी, श्रीकेदार संस्कृतविद्यालय शोणितपुर ।
३३३५ श्रीनारायणशर्मा कुरुदवाड़कर, धारवाड़।
३३३७ प० राजकुमार शास्त्री नवाई ।
३३३६ श्रीलाल विद्यार्थी देवप्रयाग ।
३३४० श्रीसत्यनारायण उपाध्याय, मुंगेर ।
३३४१ श्रीप्रफुल चन्द्रशर्मा गंजाम,
३३४२ श्री पं० जगदीशचन्द्र प्रसाद आचार्य जोधपुर ।
३३४३ हेडमास्टर प० बी० म्युनिसिपल हाई स्कूल कानपुर ।
३३४५ श्रीराम प्रसाद हटवाल-गढवाल ।

३३४६ पं० रामविलासचतुर्वेदी काव्यतीर्थ वर्द्धवान ।
३३४७ श्रीवासु मिश्र विद्यार्थी विजयगढ़ ।
३३४८ हेडमास्टर म्युनिसिपल हाईस्कूल चिन्तामणि ।
३३५० श्रीमक्खनलालमिश्र विद्यार्थी राजकीयविद्यालयखेतड़ी ।
३३५१ मन्त्री-छात्र समिति-धर्मसमाजसंस्कृतपाठशाला, सारन ।
३३५२ स्वामीदयालगिरि सन्यासी जम्मूस्टेट ।
३३५३ श्रीमहेन्द्र प्रसाद शर्मा-मटिहानी ।
३३५४ श्रीराजारामपाण्डेय एम्प्रेस संस्कृतपाठशाला, बहराइच ।
३३५८ शास्त्री विट्ठलनाथ दीक्षित-उदयपुर ।
३३५९ छात्र श्रीरामनारायण चतुर्वेदी-चोंदानी ।
३३६० श्रीहरगोपाल शास्त्री लाहौर ।
३३६१ श्रीनिवास चतुर्वेदी विद्यार्थी, भागलपुर ।
३३६२ श्रीपुरेन्द्रसा विद्यार्थी, भागलपुर ।
३३६३ श्रीसुदामा राम जूनियर, अम्बालासिटी ।
३३६४ हेडमास्टर हिन्दूहाई स्कूल, मुंगराबादशाहपुर ।
३३६५ श्रीमधुसूदन शर्मा भट्टराचोपाध्याय नेपाल ।
३३६६ गम्भा सुन्दरैया गन्टूर ।
३३६७ पं० श्रीचन्द्रशर्मा ग्वालियर स्टेट ।
३३६८ श्री दुर्गादास विद्यार्थी पटियाला स्टेट ।
३३६९ श्री दिनेश मिश्र मुजफ्फरपुर ।
३३७० पं० लक्ष्मण मिश्र सरस्वती सदनपुस्तकालय, गया ।
३३७१ विद्यार्थीप्रेमनाथ, श्रीनगर ।
३३७२ श्रीचन्द्रिकाप्रसाद छात्र-संस्कृत पाठशाला धनकुटवां चम्पारन ।
३३७३ श्रीशंकरराव पलसीकर उज्जैन ।
३३७४ श्रीविश्वेश्वरलाल शर्मा जोशी, सूरजगढ़ ।
३३७५ श्री मदन लालशर्मा शास्त्री मुलतानसिटी ।
३३७६ श्रीदेवशंकर चौधरी विद्यार्थी दरभंगा ।
३३७७ श्रीयुक्त उमेशचन्द्र शर्मा विद्यार्थी, बुलन्द शहर ।
३३७८ स्वामी देशराजसिंह निर्मलसंस्कृतविद्यालय, काशी ।
३३७९ श्रीओंराजभण्डारी, जोधपुर ।
३३८० मन्त्री सनातनधर्म संस्कृत पाठशाला कुल्लू ।
३३८१ श्रीरामदासद्विवेदी सरयूपारीण संस्कृत पाठशाला प्रयाग ।
३३८२ श्रीकाशीनाथ त्रिपाठी विद्यार्थी कावर ।
३३८३ हेडमास्टर ए० वी० एम० स्कूल, बड़नगर ।
३३८४ श्रीमनोहर लाल विद्यार्थी राजगढ़ ।

## देवभाषापरिषद् ।

देवभाषापरिषदो वार्षिकमधिवेशनमेषमः 'सिवान' नगरे महता समारोहेणागामि बृहद्दिनावकाशे सम्पत्स्यते । माननीयानां विदुषां समीपे सभापतिपदमलङ्कर्त्तुं प्रार्थना विहिताऽस्ति । स्वागतकारिणी समितिःसङ्गठिताऽनवरतं सम्मेलनस्य साफल्याय प्रयतते । सति सभापति-दिनयो निर्णये तदपि वृत्तं पत्रेषु प्रकाशयिष्यते— स्वागतमन्त्री, रामलग्नपाण्डेयः ।

---

## संगृहीतसमाचाराः ।

गताक्टूबरमासस्यावसाने ( १९३४ ) मोहमय्यां ( बम्बई ) सम्पन्नस्य राष्ट्रियमहासभायो ( कांग्रेस ) गताधिवेशनस्य साफल्ये महान् मतभेदो दृश्यते । राजनीतिक-दृष्ट्या सम्मेलनमिदं सफलं न जातम् इति बहूनां तत् सदस्यानां मतम् ।

अस्मिन् महाधिवेशने सम्मिलितानां प्रतिनिधिगणानां सार्द्धसहस्रद्वयात्मिका संख्या आसीत् । दर्शकाः षट्सहस्रसंख्यकाः, स्वयंसेवकानां सहस्रद्वयं, एवं स्वयंसेविकानां महिलानां शतत्रयम्, स्वागतसमितिसदस्यानां द्विसहस्रमिताः, कार्यकर्तॄणां सहस्रैकमिता समाचारपत्रप्रतिनिधीनां अष्टशतमिताः, संख्या आसन् । कांग्रेसनगरनिर्माणे सार्द्धद्विलक्षस्य व्ययो जातः । विविधभागीय आयोऽपि त्रिलक्षमितोऽभवत् । सर्वविधं व्ययं विधाय त्रिंशत् सहस्रमित आयो विद्यते ।

× × × + ×

श्रूयते श्रीमान् गान्धिमहोदयः साम्प्रतं राष्ट्रसभाकार्यं न विधास्यति । अत एव महात्मना तेन वर्तमानराष्ट्रपतेः बाबूराजेन्द्रप्रसादमहोदयस्य सविधे राष्ट्रसभातः ( कांग्रेस ) स्वीयं त्यागपत्रं प्रेषितम् । राष्ट्रमहासभां परित्यज्य केवलं ग्रामसंघटनकार्यं करिष्यतीति ।

× × × × ×

नवम्बरमासस्य त्रयोदश्यां तिथौ प्रयागविश्वविद्यालयस्य पदवीदानमहोत्सवो जातः । अस्य चान्सलर सर मलकमहेली-( युक्तप्रान्तीयप्रधानशासकः ) महोदयः सभापतिपदं समलङ्कृतवान् आसीत् । अत्रावसरे आन्ध्रविश्वविद्यालयस्य वाइसचान्सलर डाक्टर सर राधाकृष्णन्महोदयस्य विद्यार्थिनां कृते परमोपयोगि शिक्षाविषयकं सामाजिकं च भाषणमभूत् । तस्मिन् दिवसे सभापतिमहोदयेन भूतपूर्वोपाध्यक्षस्य ( वाइसचांसलर ) महामहोपाध्याय डाक्टर गंगानाथ झा महोदयस्य तैलचित्रोद्घाटनं कृतम् ।

× × × × ×

भारतीय व्यवस्थापरिषदः सदस्यानां नवीनं निर्वाचनं सम्पन्नम् । निर्वाचितेषु सदस्येषु राष्ट्रियसभायाः (कांग्रेस) सदस्य संख्याधिक्यमस्ति । नेशनलिस्ट नामधेया माननीय मालवीयमहोदयमतावलम्बिनो वंगपञ्जाबप्रान्तयोः विशेषतो विजयिनो जाताः । तत्र चोभयदलसदस्येषु-सप्तदशसंख्याकाः सदस्याः सनातनधर्म-विरुद्ध-विधानस्य विरोधं करिष्यन्ति । बहवः कांग्रेसमतानुयायिनः सेठ गोविन्ददासः, एस० सत्यमूर्तिप्रभृतयः धार्मिके सामाजिके च विषये नवीनविधाननिर्माणस्य विरोधं विधास्यन्ति । अजमेरनिवासी श्रीहरबिलास शारडा पराजयं लेभे । अयमेव 'शारदाविवाह एक्ट' इत्याख्यस्य विवाह-विधानस्य जनकः ।

× × × × ×

काश्यां नवम्बरमासस्य २८ तिथितः सप्तदिन पर्यन्तं संगीतसम्मेलनस्य षष्ठाधिवेशनं संजातम् । अत्र बहवः संगीत कला-विज्ञा विविधवाद्य-वादका नृत्यकला नीपुणाः, इन्दोर, ग्वालियर, कलकत्ता, लखनऊ, मुम्बई प्रभृतिनगरेभ्यः समागता आसन् ।

+ × × × ×

अखिलभारतवर्षीय-संस्कृतविश्वविद्यालयस्य धार्मिकी परीक्षा, अमांवा आरा, जबलपुर काशी, कानपुर, बलिया, मैनपुरी आदि विविध स्थानेषु परीक्षा-केन्द्राध्यक्षाणां सुप्रबन्धेन, सम्पन्ना । तत्फलमपि—मासद्वयाभ्यन्तरे प्रकाशितं भविष्यति ।

× × × × ×

## "तैलचित्रोद्घाटनमहोत्सवः"

काशीस्थ राजकीय-विद्यालयेऽग्रहायणमासस्य कृष्णषष्ठ्यां तत्क्रमेण नवम्बरमासस्य सप्तविंशतितारिकायां पराह्णे सार्धद्विवादनवेलायां आगतैर्नानोपाधिविभूषितैः सभ्यैः, उपस्थितैरांग्लभाषाप्रोफेसरैः संस्कृत प्रोफेसरैश्च तथा आंग्लभाषाछात्रैः संस्कृतभाषाछात्रैस्तथान्यैरुपस्थितैः सज्जनवृन्दैः सुपरिपूर्णे नानावाद्यवादनैः सुगीतैश्चालंकृते सभामण्डपे काशीराज के० सी० आई० श्री १०५ आदित्यनारायणसिंहमहोदयेन स्वकरकमलेनैव श्रीमद्वेदमार्गप्रतिष्ठापकाचार्याणां श्रीमन्मध्वाचार्यस्वामिनां तैलचित्रोद्घाटनं कृतम्—

कमलाकान्तपाण्डेयः ( व्याकरणाचार्यः )

# उपयुक्तक्रिया-क्रमिकसङ्कलनम् ।

सङ्कलयिता—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री ।
( 'मुलतान'-स्थ-श्रीसनातनधर्मसंस्कृतकालेजाऽध्यापकः )

———:❀:———

( क्रमागतम् )

बदला निकालता है १०५ ।

( ४ ) प्रतिकरोति । निर्य्यातयति । ( ४ ) निष्क्रयीकरोति ।

बन्द करता है १०६ ।

( १ ) अपिदधाति । निमीलयति, न्यमीमिलत् । ( १ ) पिधत्ते । मुकुलयति । मुद्रयति, अमुमुद्रत् । सङ्कोचयति समचूकुचत् । संवृणोति ।

( २ ) बन्द होता है १०७ ।

निमिषति । निमीलति । ( ३ ) पिधीयते । मुकुलीभवति । मुद्र्यते, सङ्कुचति ।

बान्धता है १०८ ।

कीलयति । ( १ ) नह्यति । पाशयति, अपीपशत् । ( १ ) बध्नाति, अबध्नात्, अभान्त्सीत् । सन्दानयति । ( १ ) संयच्छति ( ते ), समयंसीत्, समयंस्त ।

बुलाता है १०९ ।

आकारयति, आचीकरत् । आह्वयति, आह्वयत् । ( १ )

बेइज्ज़ती करता है ११० ।

अवगणयति । ( १ ) अवजानाति, अवाजानात् । अवधीरयति । अवमनुते ( १ ) अवमन्यते, अवामंस्त । अवमानयति । अवहेलयति । असत्कुरुते (४) । (४) निकरोति । परिभवति । विमानयति ।

बेपर्वाही करता है १११ ।

उपेक्षते । प्रमाद्यति । विमनायते । ( २ ) ।

( २ ) बेहोश होता है । ११२ ।

मूर्च्छति । विचेतीभवति । विमुह्यति ( ३ ) ।

( २ ) बैठता है ११३ ।

आस्ते, आसिष्ट । उपविशति ( १ ) उपाविक्षत् । (१) निविशते, न्यविक्षत । ( १ ) निषीदति, न्यषदत् ।

---

( १ ) अनिट् । ( २ ) अकर्मकः । ( ३ ) वेट् । ( ४ ) लटि सेट्, अन्यत्राऽनिट् ।

( २ ) भागता है ११४ ।

अपक्रामति । ( १ ) अपैति । धावति । पलायते । प्रणश्यति ( ३ ) ।

भूखा है ११५ ।

अशनायति । ( १ ) क्षुध्यति । जिघत्सति । बुभुक्षते ।

भेजता है ११६ ।

प्रस्थापयति, प्रातिष्ठिपत् । ( १ ) प्रहिणोति, प्राहिणोत् प्राहैषीत् । प्रेषयति, प्रैषिषत् । विसर्जयति, व्यसीसृजत् व्यससर्ज्जत् ।

( २ ) मरता है ११७ ।

( १ ) उपरमति, ते । ( १ ) परैति । ( १ ) पर्य्यवस्यति । ( १ ) प्रमीयते ( १ ) प्रैति । ( ४ ) म्रियते, + अम्रियत । ( १ ) सन्तिष्ठते । ( १ ) समाप्नोति ।

मांगता है ११८ त्रिकर्म्मकः ।

अभ्यर्थयते, अभ्यार्तथत । नाथति । प्रार्थयते, प्रार्थयत । भिक्षते । याचति, ते,अयाचीत्-अयाचिष्ट । वरयति । वृणीते, अवृणीत । वृणाति, अवृणोत् ।

मारता है ११९ ।

( १ ) आलभते । उच्छिनत्ति ( १ ) उज्जासयति ( एतद्योगे षष्ठी भवति, तस्योज्जासयति ) । उन्मूलयति । ( १ ) क्षिणोति । तृणेढि । नाशयति, अनीनशत् । निबर्हयति । निर्मूलयति । प्रमापयति । मारयति, अमीमरत् । विशसति । व्यापादयति, व्यापीपदत् । शृणाति । सञ्ज्ञपयति । ( ४ ) संहरति, समहार्षीत् । सूदयति । ( ४ ) हन्ति, अहन , अवधीत् हिनस्ति । ( लकड़ी आदि से मारता है—) आहन्ति ( स्वाङ्गकर्म्मकत्वेऽकर्म्मकत्वेचाऽऽत्मनेपदम्—आहते ) । ताडयति, अतीतडत् ।

मिलता है १२०

आसजति, आसाङ्क्षीत् । मिलति, * अमेलीत् । युज्यते ( १ ) अयुज्यत । श्लिष्यति, अश्लिषत् । सङ्गच्छते ( २ ) समगंस्त । सम्पृणक्ति । ( १ ) सम्बध्नाति । ( १ ) संयुज्यते । संयुज्यते ।

मिलाता है १२१

छुरयति । मिश्रयति । योजयति, अयूयुजत् । सङ्घटयति । संमेलयति । संयुनक्ति ( १ ) संयोजयति ।

---

\+ मृङ् धातुर्लिट् लुट् लृट्-लृङ्क्षु परस्मैपदी भवति ।

( १ ) अनिट् । ( २ ) अकर्मकः । ( ३ ) वेट् । ( ४ ) लृटिसेट् , अन्यत्राऽनिट् ।

* मिलधातोर्लृटि मेलिष्यतीतिभवति, मिलिष्यतीति त्वपाणिनीयम् ।

(२) मुकाबला करता है १२२

तुलामधिरोहति (१) प्रतिगर्जति । सङ्घर्षति । स्पर्द्धते, अस्पर्धिष्ट । साम्मुख्यं करोति (४) । प्रतियोगितां विधत्ते (१) ।

मुख़्तसर करता है १२३

संक्षिपति । सङ्गृह्णाति । समस्यति । (४) समाहरति ।

(२) मेहनत करता है १२४

आयस्यति । प्रयस्यति, प्रायस्यत् । श्राम्यति । यतते ।

याद करता है १२५

अध्येति । (१) अभिजानाति । चिन्तयति, अचिचिन्तत् (१) ध्यायति, अध्यायत् । (४) स्मरति, अस्मार्षीत् (एतद्योगे षष्ठ्यपि भवति) ।

रक्षा करता है १२६

अवति । (३) गोपायति, अगोप्सीत्, अगोपीत्, अगोपायीत् । (१) त्रायते † अत्रायत । (१) पाति, अपासीत् । पालयति, अपीपलत् । पिपर्त्ति, अपिपः । भुनक्ति (१) अभुनक् । रक्षति, अरक्षीत् ।

रखता है । १२७

(१) आदधाति । आरोपयति । निदधाति । (निधत्ते । विन्यस्यति, विन्यास्यत । स्थापयति, अतिष्ठिपत् ।

रहता है । १२८

(१) अधितिष्ठति, अध्यष्ठात् (एतद्योगे आधारस्य कर्म्मता भवति, न तु सप्तमी, यथा—वैकुण्ठमधितिष्ठति) । (१) अधिवसति, अध्यवात्सीत् (एतद्योगेऽपि कर्म्मत्वम्) । अधिशेते, अध्यशेत (एतद्योगेऽपि द्वितीयैव) । अध्यास्ते (एतद्योगेऽपि द्वितीयैव) । (१) अवतिष्ठते । आस्ते । (१) तिष्ठति । (४) ध्रियते । । (१) निवसति, न्यवात्सीत् । वर्त्तते । (१) वसति, अवसत् ।

(२) रोता है १२९ ।

क्रन्दति । परिदेवते, पर्य्यदेविष्ट । बास्पायते । रोदिति, अरोदीत्—अरोदत्, अरुदत्, अरोदीत् । विलपति, व्यलपत् ।

(२) लड़ता है १३० ।

कलहायते । (१) द्वेष्टि, अद्वेट् । (१) युद्ध्यते, अयुद्ध । विगृह्णाति व्यगृह्णात् । विगृहणीते । विराध्नोति (१) । (१) विरुणद्धि, व्यरुणत् व्यरौत्सीत् । (१) विप्रतिपद्यते । विवदते । वैरायते । (४) संप्रहरते । सङ्ग्रामयते ।

लाता है १३१ ।

(१) आनयति, आनैषीत् । (४) आहरति, आहार्षीत् । (१) उपनयति ।

† त्रैङ्धातोर्लोटि मध्यमपुरुषैकवचने 'त्रायस्व' इति भवति । त्राहीति त्वपाणिनीयम् ।

(१) अनिट् । (२) अकर्मकः । (३) वेट् । (४) लिटि सेट्, अन्यत्राऽनिट् ।

लांघता है। १३२।

अतिक्राम (म्य) ति। (४) अतिगच्छति। अतिशेते, अत्यशयिष्ट। (१) अत्येति। उल्लङ्घयति। विलङ्घते, अलङ्घिष्ट।

लिखता है १३३।

अङ्कते, आङ्किष्ट। अङ्कयति, आञ्चकत्। * लिखति, अलेखीत्।

लेजाता है १३४ (द्विकर्मकः)।

गमयति, अजीगमत्। (१) नयति, अनैषीत्। प्रापयति, प्रापिपत्। लम्भयति, अललम्भत्। (१) वहति।

लेता है १३५।

(१) आदत्ते, आदित। (१) उपादत्ते। गृह्यते। गृह्णाति, अग्रहीत्, अग्रहीत्। गृह्णीते। प्रतीच्छति। (१) लाति। (४) स्वीकरोति।

(२) लोभकरता है १३६।

गृध्यति। धनायति। लुभ्यति।

विघ्न करता है १३७।

अन्तरयति। (१) प्रतिबध्नाति। प्रत्यर्थयति। प्रत्यूहति-ते। विघ्नयति। विहन्ति (४)।

विचारता है १३८।

(१) अनुमाति, अन्वमात्। (१) अनुसन्धत्ते, अनुसमधात्। अन्वीक्षते। आलोचते, आलोचिष्ट। आलोचयति, आलुलोचत्। (१) उन्नयति। ऊहते औहिष्ट। चिन्तयति। (१) ध्यायति। (१) परामृशति, परामार्क्षीत्। मीमांसते, अमीमांसिष्ट। विचारयति, व्यचीचरत्। वितर्कयति, व्यतर्कयत्। (१) विन्ते। (१) विमृशति, व्यमृक्षत्। (१) विविनक्ति। विवेचयति। (१) वेवेक्ति।

विवाह करता है १३९।

(१) उद्वहति, उदवाक्षीत्। (१) उपयच्छते, उपायत-उपायंस्त। (१) परिणयति, पर्य्यणैषीत्। पाणौ करोति (४)। (१) विवहति। (४) हस्ते करोति।

विश्वास करता है १४०।

(१) प्रत्येति। मानयति। विश्वसिति, व्यश्वसीत्। विस्रम्भते। (१) श्रद्धाति, श्रद्धात्। (१) श्रद्धत्ते। सम्भावयति। (क्रमशः)

* लिखधातोलुटि लेखिष्यतीति। लिखिष्यतीति स्वपाणिनीयम्।

(१) अनिट्। (२) अकर्म्मकः। (३) वेट्। (४) लुटि सेट् अन्यत्राऽनिट्।

# सन्देशः।

ले०—साहित्यधुरीणो महावीरप्रसादजोशी, काव्यतीर्थः (डूण्डलोदाभिजनः)

अशनि-निपातःकामं भवतु सुखेन ॥
क्षणमपि वा स्नेहोऽस्तु मदीयमुखेन ॥ १ ॥
किन्त्वभागिनी स्मरणं कथं जहातु ॥
किमिव कुमुदिनी शशिं विहाय विभातु ॥ २ ॥

रसिकमणे! सत्यं गुणानुरक्तोऽसि ॥
व्रज-बाला विमुच्य कुब्जासक्तोऽसि ॥ ३ ॥
पुरा जितो यः कामं त्वद्वदनेन ॥
दासी दन्दह्यते तेन मदनेन ॥ ४ ॥

विरह-वेदनामहं सहिष्ये नाम ॥
यावत्त्वं नायासि विनिर्जित-काम! ॥ ५ ॥
द्रुतं माधवो दृष्टः प्रतीक्षणेन ॥
किं न युनक्ति कोकिलां प्रियां क्षणेन ॥ ६ ॥

कुटिलो लोकः कुलटां मां जानातु ॥
मम गात्राण्यपि वज्रा सपदि लुनातु ॥ ७ ॥
मनसि मुदस्तव विरहान्मे नोदेति ॥
विना मधुं किं पिकी मधुरतामेति ॥ ८ ॥

विरहविभावसुरधिकं तथा बिभाति
यथा शीतलः सूर्योऽपि प्रतिभाति ॥ ९ ॥
दाहो वर्षति हिमकर-कर-निचयेन ॥
भवति वेदना कुलानुसरणनयेन ॥ १० ॥

मयि न दया चेन्न भवतु करुणाधाम!
कपिला किन्त्वपराध्यति ते किं नाम ॥ ११ ॥
विरहे या तृणजीवनमपि विजहाति ॥
किमिव न सा ते स्मृति-गोचरतां याति ॥ १२ ॥

कृष्ण! कामय काम न किमपि वस्तु ॥
किन्तु मदीया मथुरायां जनिरस्तु ॥ १३ ॥
त्वद्दर्शन-लालसा तु सततमुदेति ॥
किन्तु न हृदयं क्षणमपि ते प्रत्येति ॥ १४ ॥

स्वागताय सुकुसुम-मालां रचयामि ॥
हृदय-देवमपि किन्तु न हन्त! प्रयामि ॥ १५ ॥
मुदा कुब्जया सह सुखभोगं यातु ॥
किन्तु मम दशां काऽपि न नेया जातु ॥ १६ ॥

यदनुचितं कथितं ते दुःखभरेण ॥
शान्त्या सहेरिमं तन्मनोहरेण ॥ १७ ॥

# न्यायशास्त्रस्य धुरन्धरलेखकाः ।

( ले० — पं० छज्जूरामशास्त्री कविरत्नं विद्यासागरः )

न्यायशास्त्रस्य प्रवर्तको महर्षिगौतमो मन्यते । अयं हि ऋग्वेदादिसंहितासूपनिषत्सु महाभारते च स्मर्यते । महर्षे रङ्गिरसः प्रपौत्रो दीर्घतमसः पुत्रोऽहल्यापतिश्चायमेव महात्मासीत। स्थितिकालश्चास्य त्रेतायुगे मन्यते सर्वैरपि । अनेन महात्मना "न्यायदर्शन" नामकं ग्रन्थं निर्माय तर्कवादस्य सूत्रपातः कृतः । सर्वैरपि दर्शनकारैः स्वतर्कवादोऽस्मादेव गृहीतः । न्यायदर्शने पञ्चाध्यायाः, प्रत्यध्यायमाह्निकद्वयम् । अत्रोक्तषोडशपदार्थज्ञानाज्जीवस्य मोक्षो भवति । न पुनरावृत्तिः संसारे । अत्रोक्तानां वाद जल्प-वितण्डा-छलजाति-निग्रहस्थानानां ज्ञान तत्त्वनिर्णयाय प्रतिवादि-पराजयाय चात्यन्तमुपयोगि । महर्षिकणादकृतवैशेषिकदर्शनस्य भाष्यमप्यनेनैव गौतमेन प्रशस्तपादनाम्ना लिखितम् । यतोऽस्यैव महर्षे स्त्रीणि नामानि सन्ति । गौतमोऽक्षपादः प्रशस्तपादश्चेति । न्यायवैशेषिकयो विषयः प्राय एक एव । न्यायोक्तानां षोडशपदार्थानां वैशेषिकोक्त-सप्तपदार्थेष्वन्तर्भावात् । वस्तुतस्तु न्यायो वैशेषिकस्य विस्तृतं परिमार्जितं च व्याख्यानमेव । एतस्य दर्शनस्योपरि चन्द्रगुप्तसमकालीनवात्स्यायनमुनिना भाष्यं निर्मितम् । कौटिल्यपूर्वक-नन्दराज्योच्छेत्त्वा "स्कौटिल्य" इति ।

चणकनाम्नो मुनेः पुत्रत्वात् "चाणक्य" इत्यस्यैव नामद्वयमन्यत् । कामशास्त्रस्य कौटिलेयार्थ-शास्त्रस्य च निर्माता अयमेव महात्मा । एतत्कृतग्रन्थत्रयस्य बहवः श्लोकाः परस्परं मिलन्ति । येनैककर्तृत्वं स्पष्टं सिध्यति । एतस्य स्थितिकालो विक्रमाब्दारम्भात् शतत्रयवर्षपूर्वं निश्चितः । एतन्निर्मित-भाष्यानन्तरं न्याये शतद्वयासन्ना ग्रन्था अद्य यावन्निर्मिता आसन् । एतद्भाष्यस्य वार्तिकं विद्वद्वरेणोद्योतकर-मिश्रेण निर्मितं यदुक्तं तेनारम्भे—

"यदक्षपादप्रतिभो भाष्यं वात्स्यायनो जगौ,
अकारि महतस्तस्य भारद्वाजेन वार्तिकम्" ।

उद्योतकरमिश्रो विक्रमीयषष्ठशतके वर्तमान आसीत् । महाकविसुबन्धुना वासवदत्तायामुद्योतकरः स्मृतः । अस्य वार्तिकस्योपरि मैथिलपण्डित-वाचस्पतिमिश्रेण तात्पर्यटीका विरचिता । शांकरभाष्य-भामती-सांख्यतत्त्वकौमुदी-योगवाचस्पत्यादिकर्ताऽप्ययमेव महात्मा । एतस्य स्थितिकालः स्वयमनेन लिखितः ।

"न्यायसूची निबन्धोऽयमकारि सुधियां मुदे,
श्रीवाचस्पतिमिश्रेण "वस्वङ्कवसु" ( ८९८ ) वत्सरे" ।

तस्या अपि टीका मैथिलविदुषा उदयनाचार्येण "तात्पर्यपरिशुद्धि" रकारि । किरणावली कुसुमाञ्जल्योरप्ययमेव प्रणेता । अनेन स्थितिकालः स्वयमेकत्र लिखितः ।

"तर्काम्बराङ्क ( ९०६ ) प्रमितेष्वतीतेषु शकान्ततः ।
वर्षेषूदयनश्चक्रे सुबोधां लक्षणावलीम्"

एतदनुसारं ( १०३१ ) विक्रमसंवत् भवति। एतदनन्तरं न्याय-वैशेषिक-स्तद्दर्शनयो स्तट्टीकानां च सारं गृहीत्वा नूतनया रित्या गङ्गेशोपाध्यायेन "तत्त्व-चिन्तामणि ग्रन्थः" स्वजग्रन्थे। अयं महात्मा मीमांसकोऽप्यासीत्। यदुक्तमस्य तनयेन वर्धमानोपाध्यायेन।

"न्यायाम्भोजपतङ्गाय मीमांसापारदर्शिने,

गंगेश्वराय गुरवे पित्रेऽत्रभवते नमः"।

कवितार्किक-मूर्धन्य-श्रीहर्षमिश्रेण खाद्यखण्डने तत्त्वचिन्तामणे र्नाम गृहीतम्। श्रीहर्षश्च विक्रमीयद्वादशशतक-पूर्वार्धे कन्नौजराजस्य जयचन्द्रस्य सभायां वर्तमान आसीत्। गंगेशोपाध्यायस्य स्थितिकालो विक्रमीय-द्वादशशत-कारम्भ एव, अस्य पुत्रेण वर्धमानपण्डितेनापि किरणावलीप्रकाशादयः कति-पयटीकाग्रन्थाः निर्मिताः। तत्त्वचिन्तामणेरुपरि जयदेवपण्डितेन पक्षधरापर-नाम्ना "आलोक" टीका रचिता। स च हरिमिश्रशिष्यः। यदुक्तं तेनारम्भे।

"अधीत्य जयदेवेन हरिमिश्रात्पितृव्यतः,

तत्त्वचिन्तामणेरित्थमालोकोऽयं प्रकाशितः"।

प्रसन्नराघवचन्द्रालोकयोरयमेव निर्माता। अस्य स्थितिकालो विक्रमीय चतुर्दशशतकपूर्वभागो निश्चितः। एतस्य विषये तस्मिन्समये।

"पक्षधरप्रतिपक्षी ह लक्षीभूतो न दृश्यते"

इयं प्रसिद्धिरासीत्। मणेर्द्वितीया टीका वासुदेवसार्वभौमशिष्येण रघुनाथतार्किकशिरोमणिना दीधिति निरमायि। यस्या विद्वत्समाजे महती प्रतिष्ठा। रघुनाथो नवद्वीपे विक्रमीय-पञ्चदशशतके वर्तते स्म। अनेन स्वटीकाविषये इदं लिखितम्।

"सर्वःशास्त्रमधीते कुरुते कुतुकान्निबन्धमप्यत्र,

अस्य तु किमपि रहस्यं केचिद्विज्ञातुमीशते सुधियः"।

दीधिति-टीकोपरि पञ्चदशासन्नाष्टीकाःसन्ति। रघुनाथशिष्य—मथुरा-नाथतर्कवागीशेन तत्त्वचिन्तामणे रहस्यटीका लिखिता। या सम्प्रति "माथुरी" ति नाम्ना प्रसिध्यति। अयं महात्मा वंगदेशवास्तव्य आसीत्। एत-मतिवृद्धमपि सन्तं तर्कशास्त्रस्य पठनपाठनयोर्लग्नं दृष्ट्वा कश्चित्सन्यासी प्रोवाच-

"तर्ककर्कशविचारचातुरी का तुरीयवयसा विभाव्यते,

आतुरी भवति यत्र मानसम्"। मथुरानाथ उत्तरयति स्म।

"आतुरीप्सितमपाकरोति कः॥

विक्रमीयषोडशशतके वंगदेशीयजगदीशतर्कालंकारेण तत्त्वचिन्तामणेः "जागदीशी" टीका विहिता। अनेन महात्मना शब्दशक्ति-प्रकाशिकातर्का-मृतभाष्यसूक्तिप्रभृतयोऽन्येऽपि ग्रन्था रचिताः। जगदीशशिष्येण तर्कसाम्रा-ज्यधुरन्धरेण भट्टाचार्य-चक्रवर्ति-गदाधरेण दीधितिटीका "गदाधरी" व्युत्पत्ति-वादशक्तिवादौ च निरमायिषत।

"यो गौतमीयं भुवि षोडशात्मकं वादं चतुःषष्टिमितं चतुर्गुणम् ।
चकार तं तार्किकचक्रवर्तिनं गदाधरं गणगुणं न वेत्ति कः ।"

अस्य च व्युत्पत्तिवादशक्तिवादयोरुपरि कृष्णंभट्ट, बच्चाझा, सुदर्शनाचार्य, जयदेवमिश्र, हरिनाथ, दामोदरशास्त्रिप्रभृतिभिर्विद्वद्भी रचिता बह्व्यष्टीकाः सन्ति। विक्रमीयसप्तदशशतके वंगदेशीय-विश्वनाथपञ्चाननेन तत्त्वचिन्तामणेः सारं गृहीत्वा न्यायसिद्धान्तमुक्तावली प्रणीता। या सम्प्रति न्यायशास्त्रे मूर्धाभिषिक्ता मन्यते। अत्र—

'न्यायग्रन्थसहस्राणां सर्वेषां न्यायशास्त्रिणां,
तात्पर्यं यत्र सोऽर्थोऽत्र विश्वनाथेन भाषितः।"

अनेनैव च महात्मना—

"रसबाणतिथौ शकेन्द्रकाले बहुले कामतिथौ शुचौ सिताहे,
अकरोन्मुनिसूत्रवृत्तिमेतां ननु वृन्दाविपिने स विश्वनाथः।"

इति स्वोक्तपद्यानुसारेण विक्रमीयसप्तदशशतके न्यायसूत्रवृत्तिरपि विहिता। सिद्धान्तमुक्तावल्याः टीका ,दिवाकरापरनाम्ना दिनकरभट्टेन दिनकरी प्रकाशिता। अनेन महात्मना।

"पूर्णाब्धिसप्तैकमिते (१७४०) प्रवर्षे सत्कार्तिके मासि विशुद्धपक्षे।"

इति स्वोक्तपद्यानुसारेणैका वृत्तरत्नाकरटीकाऽपि लिखिता। साम्प्रतिकछात्राणां मूलार्थमात्रजिज्ञासूनां कृते मुक्तावल्या दिनकरी टीकातिकठिनास्तीति मत्वा मया नातिविस्तृता "यथा नाम तथा गुणवती "मूलचन्द्रिका टीका विरचिता।" या सर्वत्र प्रान्तेषु शनैःशनैः प्रचरति। एवं न्यायदर्शनस्योपरि अपि मयैका सुगमा वृत्तिर्व्यरचि, या न्यायसूत्रमूलार्थज्ञापनेऽतिरोचेति सर्वत्र [illegible]ता।

"ब्रह्मापि लघुतां याति स्वयं प्रख्यापितैर्गुणैः"

इतिन्यायेन ममेदं धाष्ट्यं क्षन्तव्यम्। प्रथममेव न्यायशास्त्रे विविक्षूणां प्रकृते मुक्तावली कठिनेति मत्वा आन्ध्रदेशवास्तव्येनान्नम्भट्टपण्डितेन "तर्कसंग्रह नामा" ग्रन्थो लिखितः। अस्योपयोगिता सर्वत्र प्रचारेणैव ज्ञायते। टीकाश्चास्य "न्यायबोधिनी, पदकृत्य, सिद्धान्तचन्द्रोदय, बालबोधिनी, प्रभृतयो विंशत्यासन्नाः सन्ति। अन्नम्भट्टविषये श्लोकार्धमिदमतीव प्रसिद्धम्।

"काशीगमनमात्रेण नान्नम्भट्टायते द्विजः।"

अर्थात् काश्यां पठित्वा सर्वे एवान्नं भट्टसदृशा विद्वांसो न भवन्ति। अस्य स्थितिकालो विक्रमीयसप्तदशशतकस्य पूर्वभागो निश्चितः।

# दिव्या गीर्वाणभारती ।

निबन्धा-पण्डितगङ्गाविष्णुशर्म्मा सारस्वतशास्त्री, ओ० टी०,

——:*※*:——

( 'अलीपुर' स्थ-राजकीय'विद्यालय-संस्कृताध्यापकः । )

( क्रमगता )

अपरञ्च—

भासा विनिर्जितसमस्तकविः स भासः,

दासीकृताखिलबुधः स च कालिदासः ।

यामाश्रयञ्जगति जीवति विश्वनाथः,

सा-किन्न नेत्रविषयी क्रियतेऽमरागीः " ॥

अखिल-भारतवर्षीय-संस्कृत-साहित्य-सप्तमाधिवेशन-सभापति-विविधवि-रुदावली-विराजमान-मानोन्नत-सुगृहीतनामधेय-महामहोपाध्याय श्रीहरनारा-यण शास्त्रिविद्यासागर-महाभाग-मुखाब्जनिर्गलिता सूक्ति-सूत्रग्रथिता मुक्तालतेव भणितिः सहृदय हृदय सहचरीयति ।

"चित्रं चित्रं महच्चित्रं कीदृङ् मोह-विजृम्भितम् ।

अमृतस्यन्दिनी भाषा मृतेति प्रोच्यते जनैः " ॥

पञ्जाबदेशीयो लालो हरदयालुः एम्० ए० महोदयोऽपि व्याहरति 'ये भाषन्ते यत्संस्कृतभाषा मृतेति ते स्वयमेव मृतास्सन्ति, संस्कृतभाषा मृतभाषा नास्ति । महाशयवरस्याऽविकलो लेखोऽष्टम-वर्षीय-तुरीय-संख्यायां सुप्रभातस्य, भावैर्महानुभावै र्निभालनीयः ।

पाठकमहाभागानां पूर्व-परिचितः ' कविरत्नम् ' श्री 'सनातनधर्म-विजय' महाकाव्यस्यैकोनविंशे सर्गे संस्कृतसाहित्ये मीमांसमाने विशदाशय-लेख लेखिकां रसखनीं लेखनीं चटुलयैंल्लिखतितमाम्—

वदन्ति ये देवगिरं सदाऽमरां-मृतामिति प्राकृतवादिनो जनाः ।

स्वयं मृतास्ते भुवि मन्दबुद्धयो मृतात्मनां कः कथनं समाचरेत् ॥

अपि च—भुवस्तले यामवलम्ब्य भारतीं महर्षयो व्यासमुखाः पदे पदे ।

दिवङ्गता अप्यमरत्वमागताः कथं मृता सा सुरभारती भवेत् ॥

श्रीमान् प्रकाण्ड-साहित्य-पण्डितो मोक्षमूलरो यत्र संस्कृतभाषा मृत-भाषा जीवितभाषा वा इति आलोचयति तत्र कथयति यत्कथं संस्कृतभाषा मृत-भाषा भवितुमर्हति ? मृतस्य लक्षणन्तु एतदस्ति, यस्य गति र्न भवति, परन्तु संस्कृत भाषायाम् एतत् क्वचिदपि न लक्ष्यते । संस्कृतभाषायामेव हिन्दूनां

सर्वेऽपि संस्काराः सन्ध्यादिकं नित्य कर्म भवति । पण्डितानां शास्त्रार्थः, वार्तालापः, अनेकानि समाचारपत्राणि प्रकाशितानि भवन्ति, इत्यादीनि जीवितलक्षणानि दृष्ट्वाऽपि संस्कृतभाषा मृतभाषेति कथनं मिथ्या प्रलाप एवेति" ।

दुःखेनेदमङ्गीक्रियते यदस्माकं प्राच्यैः प्रतीच्यैः प्रतीच्यैः पण्डितैरादृता धर्मस्योपदेष्ट्री, विनयस्य दात्री, धार्मिकजनता संवर्धयित्री प्रणयिनी प्रसवित्री चास्ते, तामद्य विहाय गतानुगतिकतामापन्नास्त्रैवर्णिका नैजान् शिशून्, आङ्गलभाषापाठशालासु स्वापतेयस्तोमं ( धनराशिम् ) व्ययीकृत्याऽपि प्रवेशयन्ति । सञ्चितमपि वित्तं स्वाहा कुर्वन्ति । एतेषां धी-रङ्कानां कृतेसरस्वतीसेवनैकशर्मशर्मणः श्रीविश्वनाथशर्मणो निम्नाक्तयः सन्ति विज्ञजनास्ता वारमेकं मनोयोगेन पठन्तु—

"वैदेशिका अपि नरोऽखिल वाक् प्रसूतिं,
यां मानयन्ति, प्रथयन्ति, पठन्ति, पान्ति ।
तां भारतीं भरतखण्ड भुवो द्विजाग्र्याः
जिह्रीथ नो नु किमु हन्त ! समुज्जिहानाः ॥
"अमर्त्यवाणीममृतां मृतां मृतां
मुधा ब्रुवाणान् मुखरायितान् खरान् ।
न खण्डयध्वे न च मण्डयध्वे,
स्वनाम सारस्वत इत्यपार्थम् ॥
'सन्मङ्गलौघकरणीं हरणीं विपत्तेः
संसार-सिन्धुतरणिं तरणिं तमोऽन्धे ।
अद्वैततत्त्वजननीं जननीं पुराणीं ।
पुत्राः कृतघ्नचरिता वत नाद्रियध्वे ॥

हन्त ! कृतघ्नानां भारतपुत्राणां कार्यजातमेतन्निभाल्य विरल-प्रचारा, निरुद्ध-प्रसरा, क्षीण-क्षीणा, दीन-दीना जरती ( लोक दृष्ट्या, वस्तुगत्याऽजराऽमरा ) संस्कृतभारती प्रसवित्री सर्वासां भाषाणाम्, अद्यत्वे पाश्चात्यशिक्षाशिक्षितानां पण्डित-महोदयानान्तन्द्रापरवशतया मुमूर्षदशाश्रिता मृतशय्यामधिशय्य प्रियान् प्राणान् विसर्जयति । यानियं जागतिक-भाषाजात-जननी जननीव कृतघ्नसुतान् निजावद्यामृतं पयः पाययित्वाऽपोषयत्, अपालयत्, अवीवृधत्, विदुषश्चाकार्षीत्, ते निस्त्रपा मातृसेवा-पराङ्मुखा अवाङ्मुखा एकस्या अपरस्या गौराङ्ग्या विदेशजायाः प्रेमपाश-पाशिता नैजीं पतितावस्थां परिचाययन्ति ।

वेश्चितभवद्ब्यानन-कातरदृष्टिरास्ते । भवन्तश्चिन्ता-सन्तानहीना उदासीनवदासीनाः कर्णेषु तैलं निदधानास्तत्राण्यपि ध्यानं न विदधानास्तिष्ठन्ति ।

शिव ! शिव ! दुर्दृश्यं करुणादृश्यमकरुणास्पृशा दृशा विलोक्याऽपि भवन्तो न वेपन्ते, न दयन्ते, न च त्रपन्ते । शोक-क्रोधलज्जाभ्यो दत्ततिलाञ्जलय इव सन्ति सन्तः । स्मरन्तु पूर्वजान् ।

भवदीयेन राजन्यान्ववायावतंसेन वीरवारवरेण, धीरेण, अभिरूप-सुरूप-दिलीप-भूपेनैकदा गामेकां गोपायितुमेकाकिना वने वसता सता स्वप्रिय-प्राणानपि मोक्तुं यशश्शरीरं रक्षितुं तत्परेणाऽभावि । परमधुना विना मधुना मत्तः विद्यापयसाऽऽप्यायिता अपि, मत्ता जाता मत्तः पराङ्मुखा जाता यथा जाताः । बत !

साम्प्रतमार्यजातेर्जीवनस्य, भारतावनेरवनस्य च कथमाशाऽनुष्ठीयेत । पार्थिव-लौकिक गवां ह्रासेन तु अन्न-दुग्ध घृत महर्घतया दुष्प्राप्यतया च भारतीय-चातुर्वर्ण्यस्य ( सर्वेषां मानवानां वा ) नश्वरं शरीरं नीतं निष्प्राणताम्,* परमस्या गोमातुर्देववाचाया नाशः समूलमुन्मूल्य तत्कथाशेषतां नेष्यतीति-निश्चप्रचम् ।

गोरक्षण-सक्षण,–विचक्षण-महानुभावाः । भावाः ! परित्रायन्तामेतां गोमातरं गोमातृसेवका भावुका भवन्तः ! पुराणेषु समुट्टङ्कितमस्त्येतत्—

एकदैकः शंखाऽसुरो वेदान् पातालमनैषीत्, तान् वेदानवितुं भगवान् जिष्णुः ( जयशीलः ) विष्णुः कोमलतलवेशे नागविशेषे शेषे शयानोऽपि विमल-कमलोदर–सोदरसौन्दर्याभ्यां कमलकोमल-कमलाकर-कमलतलाभ्यां पाद-पद्मयोः पीड्यमानोऽपि सुखशय्यान्तां तृणाय मत्वा धरायामवतीर्य च वन्दारुजन मन्दारो वेदानगोप्सीत् असुरञ्चाद्ध्वंसत ।

सम्प्रति संख्यातीता वाग्मिनः, अविश्वासिनः, पिण्डी-शूराः, निगमागम-निगमाङ्गेषु, परलोकाऽस्तित्वे च बद्धाऽश्रद्धाः, विपरीत कार्यकलापविधान-सन्नद्धाः सर्वत्र सन्देहिनो देहिनः वेदानुच्छेत्तुम्, धर्मं ध्वंसयितुम्, वर्णभेदं भेत्तुम्,

---

* पुरा भारतेऽत्राणकेनैकेन सेरकपरिमितमाज्यं
पणेनैकेन सेरकपरिमितं पयः प्राप्यतेस्म ॥
साम्प्रतं नगरेषु शुद्ध-गव्याऽऽज्यस्य पयसो वा नितान्तमभावः ।
अतो भारतीयानां स्वास्थ्यं सौष्ठवं नोपसीदति ॥

जातिभेदं शकलयितुं बद्ध-परिकरा लोकलोचनविषये परा पतन्ति । किन्तद्दुष्ट-दलं दलयितुं विष्णोरनेकावताराणामावश्यकता नास्ति ? यस्तूर्णमेव नानारूप-धरः धराभारहरः सन् शङ्काऽसुरान् दानवानिव मानवाग्रामशेषतान्नयेत् । स्वकीयं सना-तनं सनातनं धर्मं च रक्षेत् ?

साम्प्रतं लोके केचन लोका नव्याऽभव्य-सभ्यता-लालितमतयः विकृत-मस्तिष्काः स्वयं सरस्वतीं मातरमसेवमाना अपरान् संस्कृतेऽधीतिनः कृतिन उपहसन्ति, यत्संस्कृत-साहित्याध्येतारः पुस्तक-कीटा नितान्तं 'बुद्धू' पदव्यपदेश्यास्सन्ति । सूतम्भरेयमुक्तिः यत्पाण्डुरोगग्रस्तेन पीतचक्षुषा मनुतनुजनुषा सकला संसृतिः पीतैव प्रतीयते । स्वयन्तु ते पाश्चात्य भाषामधीत्य, वित्तराशिं विनाश्य, गृहं बन्धकीकृत्य रजक-सारमेयवत् 'इतो नष्टास्ततो भ्रष्टाः' बोभूयन्ते, परं विज्ञेय-मध्यात्मविषयमविज्ञाय स्वयं 'बुद्धूपद' वाच्या वचनीयतां विन्दन्ते ।

कश्चिद्विपश्चिद् रविरिव कविरेतद्विषयेऽभिधत्ते—

'अधीत्य डार्विन थ्योरीं पठित्वाह मिल्सले मतम् ।
अहो ! श्रमस्य वैयर्थ्यमात्माऽपि कलितो नहि ॥'

संस्कृताध्येतॄणां कृते संसृतौ कार्य-कलापसम्पादने विस्तृत-क्षेत्रमस्ति । मुनिर्मनुर्मनु-तनु-जनुषां कृते स्पष्टमाचष्टे ।

'सेनापत्यञ्च राज्यञ्च दण्ड नेतृत्वमेव च ।
सर्वलोकाधिपत्यञ्च वेदशास्त्रविदर्हति ॥

प्रकारान्तरेणाऽपि संस्कृतज्ञा वैद्य वृत्त्या, उपदेशकवृत्त्या, अध्यापकवृत्त्या वा उदरदरीपूरणे समर्था भविष्यन्ति । परमेतेषां महानुभावानां ललाट-पटले विधात्रा केवलं कैङ्कर्यवृत्तिं रलेखि । साऽपीदानीं दुर्दशामावहति ।

'एतद्विषयमवलम्ब्य श्रीमत्पण्डितसदो भूषणगत-दूषण वित्त-विद्यावित्त-संस्कृतकविसम्मेलन-सभापति-पद-भूषिनाऽर्हन्तीच्चण श्रीशालग्राम शास्त्रिणो वाचोयुक्तिश्चस्य विशस्याऽनुत्तमोक्ति रेषा भवत्समक्षमेव वर्तते । मनाक् दीयता मवधानम् ।

'चातुर्यं चाकरीमात्रे कौशलं बूटपालिशे ।
भाले लिखति चैतावत् शिक्षा पाश्चात्यचालिता ॥
बी० ए० पर्यन्तशिक्षायां सहस्राणान्तु विंशतिः ।
व्ययी भवति, वित्तन्तु, केवलं दासवृत्तये ॥
यदि बार्धुषिकावेतत् धनमादाय पठ्यते ।
अष्टाणक्यैव वृद्धिः स्यात् प्रतिमासं शतं शतम् ॥
एम० ए० पर्यन्तमुत्तीर्णो इतिहासे प्रतिष्ठितः ।
छात्रो वक्तुं न शक्नोति भीष्मः कस्य सुतोऽभवत् ॥
आङ्गलानान्तु को राजा कियद्वारं व्यमूत्रयत् ।
इति सर्वं विजानाति न जानाति स्वकं गृहम् ॥'

(क्रमशः)

# श्रीरवीन्द्रनाथ-कवीन्द्राभिनन्दनम्।

दिक्कान्ताकमनीयकर्णललितालंकारकल्पद्रुम—
व्याकोशस्तवकायितोत्तमयशस्सन्दोह ! वन्द्याकृते !।
नानासत्कविचक्रवर्तिविदुषीसाध्वीसमभ्यर्चित—
श्रीपादाब्ज ! रवीन्द्रनाथ ! सुकवे ! श्रीमन् ! तव स्वागतम् ॥ १ ॥
यद्गीताञ्जलिमालतीपरिमलस्तोत्वाञ्जसा सागरान्
नानाद्वीपजनद्विरेफनिकरानुन्मादयत्यन्वहम्।
यच्चित्रादिविचित्रकोशकमलप्रोद्यन्मरन्दद्रवो
लेखानाकुलयत्यहो ! स भगवान् जीयाद्रवीन्द्रः कविः ॥ २ ॥
आकाशे रविरेक एव महतां नाथो ग्रहाणामभूत्
स्वर्लोकेऽमरमण्डलस्य भगवानिन्द्रोऽधिपः केवलम्।
भूलोके त्वधुना रवीन्द्रसुकविर्नाथः कवीनां सतां
श्रीँल्लोकान् सुखयन्ति संततमिमे गोविभ्रमैरभ्रमैः ॥ ३ ॥
ब्रह्मज्ञानमहाब्धिसर्वरसयुक्सत्सूक्तिरत्नाकरौ
यौ लोके प्रथितौ गभीरहृदयौ विद्याधरेड्यौ तयोः।
राधाकृष्णरवीन्द्रनाथविदुषोः संमेलनं पश्यतां
केषां चेतसि रामसेतुमहितक्षेत्रस्मृतिर्नो भवेत् ! ॥ ४ ॥
वागिस्वान्तसरोजरञ्जिततनुः शर्वः किमु वीधरः
सौवर्णः किमुडुग्रहैर्वलयितः ! किं कल्पकः पुष्पितः !।
किं पुष्पप्रचुरो वसन्त ! इति हे विद्यावतीदत्तस—
त्पुष्पच्छन्नतनो ! रवीन्द्रसुकवे ! त्वां शङ्कतेऽयं जनः ॥ ५ ॥

—घण्डिकोट सुब्रह्मण्यशास्त्री।

# कीर्तिर्यस्य स जीवति।

लें०—हरिराममिश्रः [ पन्ना सी० आई० ]।

असारेऽस्मिन् संसारे किञ्चिदपि वस्तु स्थायि न विद्यते। यदि मृत्योः पश्चात् किञ्चिदपि वर्तते तर्हि तद्यशः एव। ये पुरुषा स्वनामानि मरणानन्तरं जगति समुज्ज्वलन्ति वाञ्छन्ति ते पूर्वमेव ईदृशानि कर्माणि कुर्वते यानि तेषां नामधेयानि जगतः प्रत्येक-भागे प्रसारयन्ति। तेषां पुरुषाणां कीर्तिप्रकाशः सर्वत्र

विद्यते देशस्य च मुखं शुभ्रं करोति। ते पुरुषाः संपूर्णस्य विश्वस्य रत्नानि मन्यन्ते न तु एकस्य देशस्य। श्रीमान्तः अधोलिखितं कथनं जानन्त्येव—

"सेक्सपिअर ऍण्ड कालिदास डु नॉट् बिलॉङ्ग् टु इग्लेण्ड ऍण्ड इण्डिया ओन्ली, बट् टु ऑल पार्ट्स ऑफ दि वर्ल्ड !"

मनुष्या एवं विधेषु पुरुषेषु अति स्निह्यन्ति, तान् रत्नानि गणयन्ति वसूनि च मन्यन्ते। यूरोपीयाः कथयन्त्येव यत्।

येषां जनानां यशः सर्वत्र विद्यते ते भूरि भूरि प्रशस्यन्ते, यत्र यत्र ते गच्छन्ति तत्र तत्र पुरुषाः तान् समादरन्ति च सबहुमानं तेभ्यो 'स्वागतं' ब्रुवति।

कीर्तिप्राप्तेः बहुसाधनानि सन्ति। केचन पुरुषाः दानवितरणेन, केचन धर्मानुष्ठानेन, केचन युद्धेन अन्ये इतरोपायैः यशः उपार्जयन्ति। दानवीरः सदा स्ववस्तूनि दाने दातुं सज्जोभवति। याचकाः भिक्षुकाश्च तस्य द्वारारिक्तहस्ता नापसरन्ति। ते तस्माद्यद्वस्तु याचन्ते सः तेभ्यो तद्ददाति। पुरुषाः अंगराजस्य कर्णस्य नाम जानन्त्येव। सः दानेन 'दानवीर' इत्युपाधिं प्राप्तवान्। कोऽपि भिक्षुकः तत्तोरणादिष्टवस्तु अनवाप्य न प्रत्यावर्तत। यः यद्वस्तु अयाचत सः तत्प्राप्नोत्। मृत्युपर्य्यन्तं स दानात् पराङ्मुखो न बभूव। अत एव तस्य-नाम दानवीराणामग्रसरं वर्तते। युधिष्ठिरोऽपि स्वधर्मानुष्ठानेन धर्मवीरस्योपाधिमधिगतवान्। तस्यापि यशः संसारेऽद्यापि विद्यमानं तिष्ठति स्थास्यति च यावत् जगदिदं नष्टं न भविष्यति। कवीश्वराणां प्रति कस्यचित्कवेः कथनं "जयन्ति ते सुकृतिनो रससिद्धाः कवीश्वराः। नास्ति येषां यशःकाये जरामरणजं भयम्" सत्यमेव प्रतिभाति।

कीर्तिमन्तः पंचभूतनिर्मितदेहैः नष्टाः किन्तु यशः शरीरैः सदा जीवन्ति। ते सांसारिकशरीरे कांचिदपि आस्थां न निवेशयन्ति। किन्तु यशःशरीरे तेषां परमः विश्वासः। उक्तमेव रघुवंशे दिलीपेन नन्दिनीमायाप्रकटितं सिंहं प्रति

किमप्यहिंस्यस्तव चेन्मतोऽहं
यशःशरीरे भव मे दयालुः।
एकान्तविध्वंसिषु मद्विधानां
पिण्डेष्वनास्था खलु भौतिकेषु ॥ २ ॥ ५७ ॥

संसारे यानि यानि वस्तूनि मनुष्या नानाकष्टोपभोगानन्तरं प्राप्नुवन्ति तानि सर्वाणि नाशशीलानि, किन्तु यशः एव एवंविधं यत्तत् कालोऽपि नाशयितुं न शक्तः। कालः सर्वेषामुपरि प्रभवति, किन्तु यशसः उपरि न। अत एव यशः संसारे मनुष्याणां मरणानन्तरं तिष्ठति। तस्मादेव कारणात्कथ्यते यत् यस्य पुरुषस्य कीर्तिरस्ति सः मृतोऽपि जीवति। इतरः जीवन्नपि मृततुल्योऽस्ति।

## बुधवर जटाधरशर्म्मणां स्वर्गतानां शोकप्रकाशः।

धात स्त्वया साधु चकारनैतत् प्रत्यक्षशम्भुं यदिमञ्जहार।
हा हन्त! जातं भुवनन्त्वसारं धीरा गदन्तीति रुदन्ति सर्वे ॥१॥
चिर न्तस्थौ भुव्यामटतु शिवकैलासनगरम्।
सुविद्यैवन्धीमानथ कलियुगोऽप्यागमदिति
प्रचारं विद्यायाः सुरनगर एवाथ कुरुतात्।
न युक्तो वासस्ते भुवि किमिति विज्ञाय हृतवान् ॥ २ ॥
नाके श्रीलरमेश्वरेण महता विद्यालयोऽकारि किम्?
सौजन्यं भवतां किमत्र सकलं संवीक्षितेनाहुतः ॥
किम्वा कोऽप्यविकल्पतामपि मनस्तेषामियायाथवा-
मन्त्रि-स्थान-समर्पणाय भवते धीमानितो व्याहुतः ॥ ३ ॥
गतवति त्वयि सम्प्रति रोदिति, नगरवासिजनः सुजनः सुहृत्।
जलधरः सहजः सततं पुनः, सुतनयो भवतामपि रोदिति ॥ ४ ॥
विद्वद्वराणां विदितम्भवेद्यत् चैत्रे सिते स्वर्गमवाप्तवान्सः।
श्रीमन्महीनाथपुरस्थितस्य श्रीमद्गणेशस्य विनिर्मितेन ॥ ५ ॥

श्रीगुणेश्वरशर्मणः।

---

## संस्कृताध्यायिनां हिन्दीभाषाध्ययनस्यावश्यकता।

### लेखकः—रामावधि ओझा "विद्यार्थी"।

[ विश्वविद्यालय लखनऊ ]

पुरा किल भारतवर्षे संस्कृतसाहित्य-ज्ञातारो बहवः विद्वांसो बभूवुः। येषां साहित्य-तलस्पर्शिनी प्रज्ञा संस्कृतसाहित्ये सुस्वादु रसामृतप्रवाहेण साहित्यामृतमिति अमृतनाम समपादयत्।

संस्कृत-साहित्ये आदिकाव्यनिर्माता कविकुलगुरुमहर्षि वाल्मीकिर्भूत्। येषां महानुभावानां गिरा एतत्पद्यमुदपद्यत्। यत्—

"मा निषाद प्रतिष्ठां त्वमगमः शाश्वतीः समाः।
यत्क्रौञ्चमिथुनादेकमवधीः काममोहितम्।

एतदारभ्य भगवतो रामचन्द्रस्य चरितं रामायणम् इति नाम्ना रचितवान्। विदुषां समाजे यस्य प्रचारः अहरहः समवर्धत।

एवं काल-क्रमात् समागते कलियुगे कविकुलगुरुः महर्षिवाल्मीकिरेव तुलसीदास इति नाम्ना जातः । "वाल्मीकि तुलसी भयो तुलसी रामप्रसाद ।" इति अयोध्यास्थभक्तप्रवराणां विदुषां सम्मतिः ।

अनेनैव हिन्दी कविशिरोमणिना प्रमुक्त-कण्ठेन जानतापि संस्कृतसाहित्य-गौरवम् हिन्दीभाषायां "रामचरितमानस" इति नाम्ना रामायणं गीतम् ।

अस्य महाकवेः समये संस्कृतज्ञः कश्चिन् घनश्यामशुक्लः कविः बहुधा हिन्दीभाषायामेव धर्मसम्बन्धिनीं कवितां कुर्वन्नासीत् । एकदा एकेन पण्डितेन स महात्मा उक्तः यत्–हिन्दीभाषायां कविताकरणे न कथं व्यर्थ-प्रयासः क्रियते भवता, संस्कृते कविताकरणेन ईश्वरोऽपि प्रसीदति । कविरुवाच यदहम् तुलसीदासं प्रति पृच्छामि । स महात्मा यत् कथयिष्यति तदेव करिष्यामि । यदा तुलसीदासः एतद्वृत्तान्तं ज्ञातवान् तदेत्थमुत्तरमदात् ।

"का भाषा का संस्कृत, प्रेम चाहिये सांच ।
काम जो आवै कामरी, का लै करै कमांच ॥"

भवन्तः पाठकाः, विदाङ्कुर्वन्तु, यत् खलु अस्मिन् युगे संस्कृताध्यायिनो बहवः शास्त्रिणः आचार्याश्च सन्ति, परन्तु परीक्षावधिसमुत्तरणमेव सार-मिति मन्तारो न कुत्रापि धार्मिक-ऐतिहासिक-राजनैतिकादि-विषयेषु व्याख्यानं दातुं शक्नुवन्ति । नापि राजकीय-पाठशालायां सत्यां नियुक्तौ हिन्दीपाठे सम्यग् व्याख्यान्ति ।

तत्र एतदेव कारणं वर्तते यत् धार्मिकपुराणानां हिन्दीभाषायामध्ययन-नाभावान्न तत्र तेषां मतिः स्फुरति ।

अत एव प्रार्थ्यते मया यत्–सम्प्रत्यपि संस्कृतसाहित्ये महत्यायासे सत्यपि यथा समयलाभात् हिन्दीभाषाध्ययनेऽप्यायासो विधेयः ।

इदानीं खलु महत्प्रयोजनं हिन्दीभाषाया इति विचार्य "श्री० भारतीय-संस्कृतविश्वविद्यालये तत्संचालकानां महानुभावानां कृपया सत्यपि संस्कृत-प्राधान्ये हिन्दीभाषायाः कृतः समावेशः । अपि च तस्यां भाषायां ज्ञानगौरवाय हिन्दी ग्रन्थानां पाठ्यबुध्या परीक्षापि प्रचालिता । अत एव संस्कृतज्ञानां हिन्दी-ज्ञानलाभाय महत्सौकर्यम् । इत्थं शनैः शनैः हिन्दीग्रन्थानधीत्य हिन्दीप्रधानां कामपि परीक्षां दातुं शक्नुवन्ति, इति तेषां संस्कृते हिन्दीभाषायां च ज्ञानगौरवो भविष्यति । किमधिकं विस्तरेण । यदि गीर्वाणभाषाभिज्ञैरित्थं मन्यते चेत्तदा सत्यं "स्वर्णसौरभं" स्यादिति शम् ।

सम्प्रति कर्मविशेषं वर्णयति—

**यज्ञः कर्म सुकौशलम् ॥ ११० ॥**

शोभनं कौशलं यत्र तत् तथोक्तं कर्म क्रियाव्यापार इति यावत् यज्ञो यागः कथ्यत इति सूत्रार्थः। यज्ञलक्षणं चोक्तं स्मृतिकृन्महर्षिभिः।

एवं यज्ञस्तथा धर्म उभौ पर्य्यायवाचकौ ॥
कथितौ वेदनिष्णातैः शास्त्रज्ञैः शास्त्रविस्तरे।

ग्रन्थिबन्धनमपि कर्म ग्रन्थिविमोकोऽपि कर्मैव परन्तु बन्धने रज्जुः कुटिला भवति, विमोके तु सरला ऋजुश्च जायते। उभयत्रापि हस्तकम्पनात्मको व्यापारस्तु समान एव। व्यापारद्वयमपीदं कर्मैव कथ्यते। अनयोरियानेव भेदोऽस्ति यद् बन्धनं कौशलपूर्णं नास्ति। उन्मोकस्तु सुकौशलं विना भविष्यत्येव नहि। इत्थं हि जीवानां निरङ्कुशतया सम्पादितं कर्म सुकौशलाभावादधर्मोऽभिधीयते। तेन तेषां गतागतचक्रात्मकं वन्धनं दैनन्दिनं दृढीभवति। यच्च वेद-शास्त्र-गुर्वाज्ञया स्वीयविवेकेन च सम्पाद्यते तद्धि सुकौशलं कर्म गीयते। तेन च गतागतचक्रात्मकं वन्धनं शिथिलीभवति। तदेव कर्म धर्मशब्द-वाच्यं भवति। तदेव च सुकौशलपूर्णतया 'यज्ञ' इत्युच्यते। केवलं शक्ति-विचारेण तस्य 'धर्म' इति संज्ञा भवति। क्रिया-विचारेण च 'यज्ञ' इत्याख्या जायते। शास्त्रीया यज्ञाश्च विविधा गीयन्ते। यथा दानयज्ञः, तपोयज्ञः, श्रौतयज्ञः, स्मार्तयज्ञः, उपासनायज्ञः, योगयज्ञः, ज्ञानयज्ञ इत्यादयो यज्ञा गीयन्ते ॥ ११० ॥

प्रसङ्गसङ्गतिसम्प्राप्तं सम्प्रति महायज्ञस्वरूपमाह—

**समष्टिसम्बन्धान्महायज्ञः ॥ १११ ॥**

( स एव यज्ञः ) समष्टीनां समस्तानां ( प्राणिनामिति यावत् ) सम्बन्धः सम्पर्कः तस्मात् हेतो र्महायज्ञ इति कथ्यते तत्त्वज्ञैरिति शेषः।

यज्ञलक्षणं श्रुत्वा यदि कश्चिज्जिज्ञासुराशङ्केत यत् यज्ञ-महायज्ञयोर्मध्ये को भेद इति। तत्रैव समाधानसूत्रमाह महर्षि र्यत् यज्ञशब्देन सह महाशब्दप्रयोगो न केवलं यज्ञ-महिम्नो बोधको नापि निरर्थकः।

यतो हि जीवानां व्यष्टिगताभ्युदयनिःश्रेयसयो र्दातृ यत् सुकौशलमयं कर्म विद्यते तद्धि यज्ञशब्दवाच्यं भवति। यद्धि समष्टिजीवानामभ्युदयनिःश्रेयसयोः साधकमाहोस्वित् ब्रह्माण्डमात्रस्यैव कल्याणाधायकं सुकौशलमयं धर्मात्मकं कर्म क्रियते तद्धि महायज्ञ-शब्दभाग्भवति। साधारणे प्राणिनि यावद्धि स्वार्थमात्राभिकर्ष विराजते तावद्धि तदीयान्तःकरणे महायज्ञमहत्त्वं न स्वस्थानं लभते।

यावती हि स्वार्थमात्रा ह्रसन्ती साधकान्तःकरणे परार्थघटकतामासञ्जयति तावानेव स महायज्ञाधिकारी भवतीति शास्त्राण्यपि समर्थयन्ति ।

अयं निजः परो वेति गणना लघुचेतसाम् ।
उदारचरितानान्तु वसुधैव कुटुम्बकम् ॥

एवम्भूता महात्मान एव महायज्ञमहिमानमवगच्छन्तो महापुरुषतां व्रजन्ति तदधिकारिणश्च भवन्ति । जैवस्वार्थराहित्यात्समष्टिसमभ्युदयसहायकत्वात् परमात्मकार्य्यरूपतया चेदृशान्येव धर्म-कर्माणि महायज्ञतयाऽभिधीयन्ते ॥ १११ ॥

तदधिकारं निरूपयति—

उदारमनुष्ठेयस्तुरीयेऽप्येषः ॥ ११२ ॥

एष महायज्ञस्तुरीये चतुर्थाश्रमे संन्यासेऽपि उदारं स्फारं यथा स्यात्तथा अनुष्ठेयोऽनुष्ठातव्य आचरणीय इति सूत्रार्थः ।

उदारान्तःकरणा महापुरुषा एव महायज्ञाधिकारिणो भवन्ति, इति पूर्वमेवोक्तम् । गृहस्थाद्याश्रमेषु स्वान्तःकरणवृत्तेरौदार्य्याभ्यासशिक्षार्थं महायज्ञानुष्ठानं साधनं विहितं विद्यते । चतुर्थाश्रमाणां सन्यासिनां कृतेऽपि महायज्ञानुष्ठानं विहितं विद्यते । यतो हि, महायज्ञानुष्ठानमौदार्य्यसम्भूतम् । चतुर्थाश्रमे कर्मत्यागो विधीयते, तत्र यज्ञादिसाधनस्यावश्यकत्वमेव नास्ति । अत एव चतुर्थाश्रमे सर्व-विधानामपि यज्ञानां संन्यासो विहितः । परन्तु महायज्ञात्मकसाधनानामौन्नत्यादेव तेषां सर्वकल्याण-प्रदत्वाज्जगद्धितकरत्वेन चतुर्थाश्रमेऽपि विधानं विद्यते । अतश्च तेषामनुष्ठानं सन्यासिनां जगद्धितकरबुद्ध्याऽनुष्ठानं समुचितमेव चतुर्थाश्रमे निवृत्ति-चारित्रार्थ्यं सिध्यति । चतुर्थाश्रमिणामन्तःकरणं भगवद्भावापन्नं भवति । अस्यामप्यवस्थायामौदार्य्यस्य पराकाष्ठा-प्राप्तये महायज्ञानुष्ठानं सर्वथा विहितं विद्यते । इत्यत एव चतुर्थाश्रमिणस्तत्त्वज्ञानिनो महापुरुषा लोकहितकरे कर्मणि व्यापृता दृश्यन्ते । तदीयं जगत्कल्याणकरं व्रतं जगदाध्यात्मिकोन्नतिचिन्ता, कर्मयोगानुष्ठानम्, जिज्ञासुभ्य उपदेशप्रदानमित्यादीनि कर्माण्येव तेषां महायज्ञानुष्ठानस्थानीयं विद्यते ॥ ११२ ॥

अन्यदप्याह—

महीयांस्ततोऽसौ ॥ ११३ ॥

ततः तस्माद्धेतोः ( चतुर्थाश्रमेऽपि विहितत्वादिति यावत् ) असौ महायज्ञो महीयान् सर्वश्रेष्ठ इत्यर्थः ।

केवलमुदारचरिता महापुरुषा एव महायज्ञाधिकारिणो गीयन्ते ।

सर्वकर्मत्यागपरेऽप्यस्मिन् तुरीयाश्रमे महायज्ञानुष्ठानस्याज्ञाऽस्ति । तद्धि महायज्ञ-महिम्न एव प्रामाण्यं ज्ञेयम् । गृहस्थाश्रमेऽपि पञ्चमहायज्ञरूपेणास्यैव महायज्ञस्यानुष्ठानशिक्षा प्रारभ्यते । तस्यैतावान् महिमा विद्यते यद्, यदि गृहस्थो महायज्ञानां पञ्चानामनुष्ठानं न करोति, चेत्तदा स महाप्रत्यवायभाग्भवति । सर्वमपीदं महायज्ञमहत्त्वद्योतकमेवास्ति । ते च महायज्ञाः क्रमशो यथा—ज्ञानाधिदैवानामृषीणां सम्वर्द्धनाय वेदशास्त्रमननम् ब्रह्मयज्ञः, कर्मचालकानां देवानां सम्वर्द्धनाय हवनात्मकं कर्मैव देवयज्ञः, आधिभौतिकीनां सृष्टीनां संरक्षकाणां पितॄणां सम्वर्द्धनाय श्राद्धतर्पणादयः पितृयज्ञः, सर्वेषां प्राणिनां संरक्षकाणां नानानैमित्तिकदेवानां सम्वर्द्धनाय तद्द्वारयैव तेषां सर्वेषामपि मङ्गलकामनायै भूतवलिप्रभृतयो भूतयज्ञः, सकलानां मानवानां पुरतः कृतज्ञता प्रकाशार्थं स्वाश्रमोपस्थितानामाचाण्डालान्तं सर्वमानवानां नारायणबुद्ध्या भोजनसमर्पणं, नृयज्ञः कथ्यते । अस्मिन् विषये शास्त्रेषु बहुशः प्रमाणान्युपलभ्यन्ते ।—तथाहि—

पाठो होमश्चातिथीनां सपर्य्या तर्पणं बलिः
एते पञ्च महायज्ञा ब्रह्मयज्ञादिनामकाः
दिव्यो भौमस्तथा पैत्रो मानुषो ब्राह्म एव च
एते पञ्च महायज्ञा ब्रह्मणा निर्मिताः पुरा
अध्यापनं ब्रह्मयज्ञः पितृयज्ञस्तु तर्पणं
होमो दैवो बलिर्भौतो नृयज्ञोऽतिथिपूजनम् ॥ ११३ ॥

उभयोः साक्षादुदर्कं ब्रूते—

**ताभ्यामभ्युदयनिःश्रेयसे ॥ ११४ ॥**

ताभ्यां यज्ञमहायज्ञाभ्याम् अभ्युदयश्च निःश्रेयसञ्च ते तथोक्ते भवत इति सूत्रार्थः ।

सामान्यतोऽपि विचारे यज्ञादभ्युदयो महायज्ञान्निःश्रेयसावाप्तिरिति संक्षेपतः सूच्यते । यदा हि व्यष्टिधर्मसाधको यज्ञः समाम्नायते तदा ततोऽभ्युदयावाप्तिः सुलभैव । अन्यत्र महायज्ञेषु यदा जीवानां व्यक्तिस्वार्थाभावेन जगत्कल्याणबुद्ध्यैवानुष्ठानं तेषां भवतीति तादृशैः साधनैर्निःश्रेयसाधिगमोऽपि सुलभ एव ।

जीवानामहङ्कार-जन्या स्वार्थबुद्धिरेव बन्धननिदानम् । महायज्ञेषु च सर्वथैव तस्या अभावो भवतीति सुतरां तेभ्यो निःश्रेयसावाप्तिरेव सुलभेति निःसन्दिग्धम् । यदीह जिज्ञासवः शङ्केरन् यद् यज्ञैरभ्युदय एवासाद्यते तेभ्यो निःश्रेयसावाप्तिर्दुर्लभैवेति सिद्धान्ते कथं तर्हि धर्ममात्रस्यैवाभ्युदयनिःश्रेयसाधायकता सिध्येदित्याक्षेपे समाधानतया गीतोपनिषद्वचनान्युपहरति—

यज्ञार्थात्कर्मणोऽन्यत्र लोकोऽयं कर्मबन्धनः ।
तदर्थं कर्म कौन्तेय मुक्तसङ्गः समाचर ।
तस्मादसक्तः सततं कार्य्यं कर्म समाचर ।
असक्तो ह्याचरन् कर्म परमाप्नोति पूरुषः ।

तात्पर्य्यतो यथा महायज्ञैर्निःश्रेयसाधिगतिर्भवति तथैव यज्ञैरपि तदधिगमो भवति । परन्तु नैव साधारणतया किन्तु निष्कामनया यदा यज्ञार्थमेव तेषामनुष्ठानं स्यात्तत्र फलाभिसन्धेर्लेशोऽपि न स्यात्तदैव ते यज्ञा महायज्ञा फलात्मकं मोक्षं वितरन्ति । नो चेदभ्युदयफलन्तु तेषां स्वभावसिद्धम् ॥ ११४ ॥

यज्ञानां विशेषतो महिमानं ब्रूते ।

**सहयज्ञा प्रजासृष्टिः ॥ ११५ ॥**

यज्ञैःसह विद्यते इति सहयज्ञा यज्ञैःसार्द्धमेवेत्यर्थः प्रजानां प्राणिनां सृष्टिः सर्गो भवतीत्यर्थः ।

यदा हि धर्मयज्ञशब्दौ परस्परं पर्य्यायवाचकौ स्तस्तदा यज्ञैः साकं प्रजानां सृष्टिर्भवतीति स्वाभाविको धर्मः ।

धर्मद्वारा जगतः सुरक्षा भवति । धर्म एव स्थितेरपि मूलं विद्यते । धर्ममार्गेणैव जीवाः क्रमशो निःश्रेयसोपलब्ध्यै अग्रसरा भवन्ति । धर्मात्मकेन यज्ञेन सहैव प्रजाया अपि सृष्टिर्भवति । यद्येवं न स्यात्तदा प्रजाया रक्षणं क्रमोन्नतिश्च नैव भवितुमर्हति । यो हि धर्मः प्रजायाः स्थितेर्मूलं विद्यते यतश्च सृष्टिरक्षा भवति यद्द्वारा च प्रजा अभ्युदयनिःश्रेयसाभिमुखी भवति, स हि प्राकृतिक-नियमस्वरूपो भगवच्छक्तिरूपो धर्मः सृष्ट्या सहैव जायते, इति सर्वैरेवाङ्गीकृतम्, स्मृतयोऽपि अमुमर्थं प्रमाणयन्ति । तथाहि—

सह यज्ञाः प्रजाः सृष्ट्वा पुरो वाच प्रजापतिः—
अनेन प्रसविष्यध्वमेष वोऽस्त्विष्टकामधुक् इति ॥ ११५ ॥

अन्यच्च—

**प्रजादेवयोरन्योन्यं सम्बर्द्धनम् ॥ ११६ ॥**

प्रजाश्च देवाश्चेति तौ तथोक्तौ तयोः संवर्द्धनम् परस्परमन्योन्यं भवतीति सूत्रार्थः ।

गीतोपनिषदपि विषयमिमं व्याकरोति । तथा हि—

देवान् भावयताऽनेन ते देवा भावयन्तु वः ।
परस्परं भावयन्तः श्रेयःपरमवाप्स्यथ ॥
इष्टान् भोगान् हि वो देवा दास्यन्ते यज्ञभाविताः ।
तैर्दत्तानप्रदायैभ्यो यो भुङ्क्ते स्तेन एव सः ॥ इत्यादि

यज्ञस्यापरमपि महत्त्वमिदमस्ति यद् यदाहि धर्मात्मको यज्ञः सृष्टिरक्षामातनुते, तदा तस्याश्च क्रमाभ्युदयस्यापि निमित्तं भवति। तयोश्च सृष्टिरक्षाभ्युदययोः सम्पादका देवाः सन्ति। यतश्च कर्मणो जडत्वाच्चेतनस्य तच्चालकस्याभावात्ततः कर्मफलोत्पत्तिरसम्भवैवेति यज्ञदेवयोः परस्परं सम्बन्धः स्वीकरणीय एव।

अन्यतश्च देवा एव धर्मोत्पन्नस्य कर्मणो यथावद् व्यवस्थापकाः सन्ति। ततश्च तत्फलदा अपि त एव विद्यन्ते। यज्ञात्मकस्य धर्मस्य विश्वधारकतया तेभ्यश्च तेषामस्मिन् व्यापारे पूर्णतः साहाय्यम्भवति। अतश्च यज्ञैर्देवा आप्यायिता भवन्तीत्येतदपि स्वीकरणीयमेव।

विना यज्ञैर्यथा सृष्टिरक्षा नैव भवितुमर्हति, जीवगणाश्च यज्ञैर्विना यथाभ्युदयनिःश्रेयसे नैव प्राप्तुमर्हन्ति। तथैव यज्ञादृते देवाः स्वजीवनकर्तव्यं पालयितुं नैव समर्था भवन्ति। यदा च देवानां जीवनस्य जीविकायाश्च सम्बन्धो यज्ञैः सह वर्तते, तदैतदपि सिध्यति यद् यज्ञैर्देवाः सम्वर्द्धिता भवन्ति। इत्थञ्च यदा देवा यज्ञैः सम्वर्द्धिताः सन्तः पुष्टितुष्टिभाजो भवन्ति, तदा तत्प्रत्युपकारतया तेऽवश्यं प्रजाः पुष्टास्तुष्टाश्च कुर्वन्तीति निःसन्दिग्धम्। यतो हि तेषां स्वाभाविकोऽयं धर्मः॥ ११६॥

विज्ञानमिदं पोषयति—

**साम्राज्यवत्॥ ११७॥**

सूत्रकृन्महर्षिर्विज्ञानमिदं द्रढयितुमुदाहरति साम्राज्येन तुल्यं साम्राज्यवत् साम्राज्यसदृशमित्यर्थः, यथा हि एकस्मिन् साम्राज्ये साम्राज्यप्रजयोः सम्बन्धस्तथैव मनुष्यदेवयोः सम्बन्धो ज्ञेयः।

यथा राज्ञा प्रजाः सुरक्षिता भवन्ति तथैव देवैः मानवादिसृष्टिः सुरक्षिता भवति। अन्यतश्च यथा प्रजा राजानं धनबलेन जनबलेन पोषयति, समर्थञ्च करोति। तथैव मानवा अपि धर्मसाधनद्वारा दैवराज्यं पुष्टं तुष्टं समृद्धञ्च कुर्वन्ति। यथा विना प्रजायोग्यतां राज्ञः कल्याणं न भवति, राजयोग्यतां विना प्रजाया अपि कल्याणं नैव भवति, तथैव विना धार्मिकं मनुष्यसमाजं दैवराज्यं नैव पुष्टं भवितुमर्हति दैवराज्यतुष्टिपुष्टिं विना च मृत्युलोकस्याभ्युदय एवासम्भवः।

यदा प्रजा निरङ्कुशा राजविरोधिनी असन्तुष्टा जायते, तदा कथमपि राज्ञः श्रेयो न भवति। तथैव राजापि यत्र स्वार्थपरः प्रजाहितविमुखोऽसंयतो प्रजावात्सल्यविरहितः स्यात्तदा कथमपि तस्य प्रजा श्रेयोऽभ्युदयभाग् नैव भवि-

तुमर्हति । तथैव यदि मानवलोके धर्मानुष्ठानं विनष्टं स्यात्तदा, देवलोकः कर्तव्य-शिथिलो निर्बलश्च जायते । आसुरं बलमेव तदानीं प्रवर्द्धते । अन्यतश्च देव-गणानां दौर्बल्येन कर्तव्यविमुखतया च मृत्युलोके तापस्य अशान्त्याश्च वर्द्धनेन प्रजानां क्लेशो जायते । एतेन पूर्वोक्तोदाहरणस्यैव पुष्टिर्भवति ॥ ११७ ॥

सम्प्रति कर्मणां फलानुसन्धान-कारिणो भेदानाह—

द्विविधं कर्म शुभमशुभञ्च । ११८ ॥

शुभं शुभकरं अशुभम् अशुभकरं चेति द्विविधं द्विधा कर्मास्तीति सूत्रार्थः । यत्र क्रियास्ति तत्रैव प्रतिक्रियाऽपि सुतरां भवति । यथा हि हस्तोत्तमन-क्रियायां सत्यां हस्तनिपातनात्मिकाऽपि क्रियाऽवश्यं भवति । सैव प्रति-क्रिया कर्मणां फलमुत्पादयति । एको मानवो यदि मानवान्तरं हन्ति ; तदा जन्मान्तरे तत्कर्मपरिपाकावस्थायां या हि प्रतिक्रिया भवति, तया हि हन्तुः पुरुषस्य जन्मान्तरीयः कायो हतस्य मानवस्य जन्मान्तरीयेण कायेन प्रतिहन्यते । कर्मणो रूपान्तरावस्थायां परिणामान्यत्वे इति यावत्, स हि हन्ता पुमान् अल्पायुर्भवति । इत्यनेनैवोदाहरणेनेदमवश्यमवगन्तव्यं यत् प्रतिक्रियं या हि प्रतिक्रियावस्था भवति, तस्यामेव फलोत्पत्तिर्जायते । अत एव स्मृतिशास्त्रेष्वपि प्रतिपादितम्—

अवश्यमेव भोक्तव्यं कृतं कर्म शुभाशुभम् ।
नाभुक्तं क्षीयते कर्म कल्पकोटिशतैरपि । इति ॥

इत्थञ्च कर्म द्विविधं विद्यते । एकं शुभमपरम् अशुभञ्चेति । यद्धि कर्म सत्वगुणवर्द्धकं मङ्गलवासनोपेतं तच्छुभफलोत्पादकं । अपरं यद् तमोगुणवर्द्धकम-मङ्गलवासनोपेतञ्च तदेवाशुभमित्युच्यते । शुभेन कर्मणोर्ध्वगतिः सुखाधिगतिश्च भवति । अशुभेन कर्मणाऽधोगति दुःखाधिगतिश्च भवति ॥ ११८ ॥

प्रसङ्गतः तत्कारणं निर्णयति—

सर्गद्वन्द्वनिमित्तं तत् ॥ ११९ ॥

तत् कर्म सर्गस्य सृष्टेर्द्वन्द्वं निमित्तं यस्य तत् तथोक्तं सृष्टि-द्वन्द्व-निमित्तकं भवतीति सूत्रार्थः ।

सृष्टेर्द्वन्द्वं प्रथममेव वर्णितम् । यथा हि कालिकं भेदद्वयमस्ति दिनं रात्रिश्च रूपस्य च ज्योतिः छायेति भेदद्वयम् । यथा चेदं सृष्टेः स्वभाविकं भेदद्वयमस्ति । तद्वदेव फलोन्मुखस्य कर्मणोऽपि भेदद्वयमेव स्वीक्रियते । तात्पर्य्यतः स्वाभावि-कोऽयं भेदो ज्ञेयो न तु काल्पनिक इति यावत् ॥ ११८ ॥

प्रसङ्गतो गतिं वर्णयति—

गतिद्वयनिबन्धनं च ॥ १२० ॥

तद्धि सृष्टिद्वन्द्वं कर्तृ, गत्योर्द्वयं गतिद्वयं तद् कर्मतया निबध्नाति जनयतीति गतिद्वयनिबन्धनं गतिद्वयजनकमिति सूत्रार्थः।

तेनैव स्वाभाविकनियमानुसारेण पूर्वोक्तस्य कर्मणो भेदद्वयमवलम्ब्य जीवानामपि गतिर्द्विधा जायते। एका तु जीवान् उर्ध्वं नयति। द्वितीया च तान् अधः सारयति। ऊर्ध्वमार्गे पितृलोकः स्वर्गलोकस्तत्रापि उन्नतानि भोगलोकान्तराणि, सह जगति फलतो जीवन्मुक्तावस्था, शुक्लगतिश्चेत्युदाहरणतो ज्ञेयानि। अधोगत्युदाहरणानि, यथा प्रेतलोकावाप्ति नरकलोकप्राप्ति मृत्युलोके वा पुनरेव दुःखयोन्युपलब्धिश्चेत्यादि ज्ञेयानि।

ऊर्ध्वगतेर्यथा उन्नततरा महान्तोऽधिकाराः सन्ति। मृत्युलोके राज्यपदोपलब्धिः ब्राह्मणत्वाधिगतिः संन्यासमार्गाश्रयणमित्यादि। देवलोके च यमत्वेन्द्रत्वप्रभृतिपदेभ्य आरभ्य ऋषित्वप्रभृतिब्रह्मत्वविष्णुत्वशिवत्वान्तोर्ध्वगतिरेव गीयते। तथैवाधोगतौ राक्षसत्व-पिशाचत्वादितः स्तीर्यग्योनिप्राप्तिं यावज्ज्ञातुं शक्यते। गतागतचक्रेणैवेमे उभे अपि गती प्रसार्य्येते ॥ १२० ॥

तेषां स्वरूपं निर्वक्ति—

ते सुकृतदुष्कृते ॥ १२१ ॥

ऊर्ध्वगत्यधोगतिशीलौ यौ द्वौ प्रवाहौ स्तस्तावेव यथाक्रमं पुण्यपापौ निगद्येते। वेदस्मृति-पुराणादिशास्त्रेषु यौ हि पुण्यपापकर्मतया वर्ण्येते। यानि च तेषु पुण्यात्मनां पापिनाञ्च जीवनचरितानि प्रकाशितानि सन्ति। तानि सर्वाण्यपि अनयोरेव गत्योर्विचारेण निर्धारितानि सन्ति। तात्पर्य्यतस्तु सत्वगुण-वर्द्धकं मङ्गलकरञ्च कर्मजातं पुण्यमित्युच्यते, यच्चोर्ध्वगतिशीलं भवति। तमोगुणवर्द्धकममङ्गलकरं च कर्मजातं पापमित्युच्यते, यच्चाधोगतिशीलं भवति। एतदेव सर्वेष्वपि शास्त्रेषु वर्णितं सकलेष्वपि सम्प्रदायेषु प्रचलितं पुण्यपापरहस्यं निगद्यते ॥ १२१ ॥

सम्प्रति फलमभिधत्ते—

सुखदुःखोपलब्धिस्ताभ्याम् ॥ १२२ ॥

ताभ्यां पुण्यपापाभ्यां सुखञ्च दुःखं चेति ते तथोक्ते तयोरुपलब्धिः प्राप्तिर्भवतीति सूत्रार्थः।

आभ्यामेव पूर्वोक्ताभ्यां कर्मश्रेणिभ्यां यथाक्रमं सुखदुःखोपलब्धिर्भवति । सत्त्वगुणेन सुखस्य तमोगुणेन च दुःखस्योत्पत्तिर्भवति । यदा हि अन्तःकरणं सत्त्वगुणप्रभावेणात्मोन्मुखं भवति तदैव तत्रात्मानन्दसत्ता प्रतिफलिता जायते, यया च सुखोत्पत्तिराजायते । अन्यच्च यदा रजस्तमःप्रभावेणान्तःकरणमात्मवैमुख्यमाश्रयति, तदैव तेन सह परमानन्दमयस्य परमात्मनः कोऽपि सम्बन्धो न तिष्ठति। यतश्चान्तःकरणस्य क्लेशःसमुत्पद्यते तदेव दुखःमित्युच्यते। वैषयिकसुखदुःख-भोक्ता प्राणी दार्शनिकमिदं रहस्यम् नावगच्छेन्नाम, एतादृशस्य सुखदुःखस्वरूपस्यानुभवमपि न कुर्य्यान्नाम, यतो हि योगिराजगम्य एवायमनुभवस्तथापि सुखदुःखानुभवेऽन्तःकरणस्यैतादृश एव परिणामः स्वतः सम्पद्यते, इति योगिनां स्वानुभववेद्यो विषयः ।

अज्ञानी प्राणी अपि यदा विषयसुखमास्वादयति, तदा तन्मात्रायत्तेन तदीयमन्तःकरणं शान्तं स्थिरञ्च सञ्जायते । यतो हीदानीं तन्मात्रासु सत्त्वगुणस्यैव प्राधान्यं जागर्ति । इत्थञ्च यदा हि अन्तःकरणं शान्तं स्थिरञ्च तिष्ठति तदैवात्मन आनन्दसत्तापि तत्र प्रतिफलिता भवति । अस्यामवस्थायामानन्दसत्ताप्रतिफलनमेव वैषयिक-सुखस्य मूलम् कारणमुच्यते । यतो हि तदानीमन्तःकरणस्य स्वाभाविकी गतिरात्माभिमुखी एव प्रवहति । वैषयिकदुःखानुभवे तु सत्यमितो विरुद्धैव गतिर्भवति । यतो हि तदानीं रजस्तमोगुणप्रभावेण स चाञ्चल्यप्रमादपरिपूर्ण स्तन्मात्रान्तःकरणं शान्तं सुस्थिरञ्च कर्तुमसमर्थो भवति । अतश्च चञ्चलमन्तः करणमात्मन आनन्दसत्ताप्रतिबिम्बं ग्रहीतुमसमर्थमेव तिष्ठति । तस्य गतिः केवलमधोगैव तदा प्रवहति । इदमेव दुःखानुभवे कारणमूलम् । पुण्यपापात्मकौ यौ द्वौ भागौ विद्येते तयोरिदमेव दार्शनिकं रहस्यं विज्ञेयम् ॥ १२२ ॥

प्रसङ्गतो मानवानां विशेषाधिकारं वर्णयति ।

**मानवस्तद्भाक् स्वातन्त्र्यात् ॥ १२३ ॥**

मानवो मनुष्यावस्थामधिगतो हि जीवः तौ पुण्यपापौ भजतीति तद्भाक् सुखदुःखभोक्तेति यावत् भवति स्वातन्त्र्यात् स्वाधीनत्वात्तयोरित्यर्थः ।

मनुष्येभ्योऽधःस्थितानां योनीनामसम्पूर्णत्वसूचकं वर्णनन्तु पूर्वमेव कृतं विद्यते । मनुष्ययोनिस्तु सर्वाभ्योऽपि योनिभ्यः श्रेष्ठा अस्यामेव जीवः पूर्णावयवतामाप्नोति । अस्या एव योन्याः सकाशात् जीवा देवादियोनीर्गच्छन्ति इहैव सर्वयोनिभ्यः परां काष्ठामासादयन्ति जीवाः । अस्यामेव योनौ मानवाः पुण्यपापाधिकारिणो भवन्ति । गतागतचक्रस्य केन्द्रीभावमासाद्य पुण्यपापयोः फलं भोक्तुं नानालोकेषु यातायातं कुर्वन्ति । इत्यत एव स्मृतिशास्त्रेषूक्तम्—

मानुषेषु महाराज ! धर्माधर्मौ व्यवस्थितौ ।

सम्पूर्णावयवा जीवा मर्त्यपिण्डं गतास्ततः । इत्यादि ॥ १२३ ॥

# सूर्योदयः ।

दशमे वर्षे } पौषस्य पूर्णिमा सं० १९९१, { सप्तम-संख्या

## सम्पादकीया अभिप्रायाः ।

——:०:——

### आस्तिक–दर्शनशास्त्राणि ।

——:०:——

तत्र पूर्वाङ्के नास्तिकदर्शनानि संक्षेपतो निरूपितानि । सम्प्रति आस्तिकदर्शनानि संक्षिप्यन्ते । तत्र त्रिविधानि प्रथमतो विज्ञेयानि दर्शनान्यास्तिकानि (१) तर्कदर्शनम् ( आरम्भवादः ) ( २ ) सांख्यदर्शनम् ( परिणामवादः (३) मीमांसा-दर्शनम् ( विवर्तवादः )। तत्रापि (१) तर्कदर्शनस्य न्याय वैशेषिकभेदेन द्वैविध्यम्। ( २ ) सांख्यदर्शनञ्चेहानीश्वर-सेश्वर-भेदेन द्वैविध्यमवगाहते । तत्रानीश्वर-वादकं सांख्यदर्शनम् सेश्वरवादविशिष्टञ्च योगदर्शनम् । ( ३ ) मीमांसा च त्रिविधा कर्ममीमांसा, उपासनामीमांसा ज्ञानमीमांसा चेति तत्र कर्ममीमांसापि पूर्वार्द्धोत्तरार्द्ध भेदेन द्विविधा । इत्थं हि संक्षेपन आस्तिकदर्शन-विभागो विज्ञेयः । विस्तरशो विमर्शे तु रामानुज-रसेश्वर-पूर्णप्रज्ञ-पाशुपत-प्रत्यभिज्ञा-पाणिनीयादि दर्शनभेदतोऽनेकत्वमवगाहेरन् दर्शनसंख्याः ।

### तर्कदर्शनम् ।

तत्र प्रथमं तर्कदर्शनस्य न्यायो वैशेषिकमिति द्वौ भेदौ स्तः । तत्र न्यायदर्शनस्य सूत्रकारो गौतमः । तत्र भाष्यं वात्स्यायनमुनेः, वार्तिकम् उद्योतकरस्य न्याय-वार्तिकमिति नाम्ना प्रसिद्धम् , षोडश तत्त्वानि ।

"प्रमाण-प्रमेय-संशय-प्रयोजनदृष्टान्त-सिद्धान्तावयव-तर्क-निर्णय-वाद-जल्प-वितण्डा-हेत्वाभास-च्छल-जाति-निग्रहस्थानानां तत्त्व-ज्ञानान्निःश्रेयसाधिगमः,"

इति प्राथमिकं सूत्रम् । चत्वारि प्रमाणानि । प्रत्यक्षानुमानोपमानशब्दा इति ।

"दुःख जन्म-प्रवृत्तिदोषमिथ्याज्ञानानामुत्तरोत्तरापाये तदनन्तरापायादपवर्गः"

इति सूत्रबलेन एकविंशतिदुःख–ध्वंसो मोक्षः । अस्मिन् दर्शने त्रिधा प्रवृत्तिर्निबद्धा उद्देशो लक्षणं परीक्षेति । उक्तञ्च वात्स्यायनेन मुनिना भाष्यकृता "त्रिधा खलु शास्त्रस्य प्रवृत्तिरुद्देशो लक्षणं परीक्षा चेति ।

अस्मिन् दर्शने शास्त्रार्थ-निरूपणं साधु विद्यते। पञ्चाध्याया दशाह्निकानि सन्ति। अस्यैव नव्यनैयायिकैरनुमाननिरूपणे महान् विस्तारो विहितो विद्यते, येन नव्यन्यायः प्राचीनन्याय इति भेदद्वयं सम्प्रति संजायते। वैशेषिक-दर्शनञ्च कणाद-मुनिनिर्मितसूत्रैः प्रशस्तपादकृतभाष्येण सहात्मलाभमातनुते। तत्राभावेन सह द्रव्यगुण-कर्मसामान्य विशेष-समवायाः सप्तपदार्था निरूपिताः। प्रमाणे प्रत्यक्षानुमाने इति द्वे एव कणाद-सम्मते। परमाणुवादोऽस्यैव दर्शनस्य सम्मतः। परमाणूनां सजातीयानां परस्परभेदको विशेष इति विशेष पदार्थाङ्गीकृतिरस्य दर्शनस्यावश्यकी भवति। साधर्म्यवैधर्म्याभ्यां सप्तानां पदार्थानां तत्त्वज्ञानान्निःश्रेयसोपलब्धिरस्मिन्दर्शने दर्शिता। "धर्मविशेषप्रसूताद् द्रव्यगुणकर्मसामान्यविशेषसमवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्" इति सूत्रम्। दशाध्यायास्तत्र प्रत्यध्यायमाह्निकद्वयमिति विंशतिराह्निकानि। ईश्वरेच्छया परमाणूनां परस्परसंयोगात् द्व्यणुकादि क्रमेण प्रथमं महान् वायुरुत्पद्यते। ततस्तेनैव क्रमेण तेजःप्रभृतिपदार्थोत्पत्तिराम्नायते। अनयोरेव दर्शनयोरारम्भवादः सम्मतः। यतो हि असतः सज्जायत इत्यनयोरभ्युपगमः। कार्य-पदार्थः स्वोत्पत्तेः पूर्वमसन् समवाय्यसमवायिनिमित्तकारणैः स्वात्मलाभमासादयति इति अविद्यमानं कार्यं कारणैरवयविरूपेणात्मानमारभत इत्यारम्भवादशब्दार्थः। अनयोरुभयोरेव दर्शनयो जीवात्मपरमात्मभेदेनात्म-द्वैविध्यं विद्यते। तत्र जीवात्मा नाना परमात्मा त्वेक एव। तत्र जीवात्मनि चतुर्दशगुणाः सन्ति। महेश्वरेऽष्टौ गुणाः सन्ति।

नित्यज्ञानेच्छाप्रयत्नादयः परमात्मनि। अनित्यज्ञानेच्छाप्रयत्न-सुखदुःखादयो जीवात्मनि। इहापि दर्शने दुःखात्यन्तविमोक्ष एवापवर्गः।

"आत्मकर्मसु मोक्षो व्याख्यातः" इति हि वैशेषिकं सूत्रम् शरीरमनोविभागे सति आत्म-कर्मसु स्वनुष्ठितेषु श्रवण मनन निदिध्यासनेषु रागद्वेषाद्युपरमाद्धर्मयोर्धर्माधर्मयोरनुत्पादात् प्रवृत्त्यपायादिक्रमेणैव मोक्षाधिगमो ज्ञेयः। दर्शनद्वयमपीदमानुमानिकं दर्शनमुच्यते। परन्तु स्वात्मनः श्रोतव्यं प्रतिपादयितुं श्रुतेः शरणमाश्रयतीति वैदिकदर्शनेष्वेवान्तर्भावोऽनयोरपि दर्शनयोः। ईश्वरसिद्धिरुभयत्रापि दर्शने अनुमानेनैवाभीष्टा। तथा हि "तद्वचनादाम्नायस्य प्रामाण्यम्" इति "संज्ञा कर्म त्वस्मद्विशिष्टानां लिङ्गम्" इति च वैशेषिकम् "ईश्वरः कारणं पुरुषकर्माफल्यदर्शनात्" इति गौतमीयं सूत्रम्।

## सांख्यदर्शनम्—

अस्य दर्शनस्य प्रवर्तकः कपिलो महर्षिः। अत्र पञ्चविंशतिः तत्त्वानि। मूलप्रकृतिरेका, महान्, (बुद्धिः) अहङ्कारः, पञ्चतन्मात्राणि, (गन्ध-रस-रूप-स्पर्श-शब्दाः) इति प्रकृति-विकृतयः सप्त पदार्थाः। पञ्च ज्ञानेन्द्रियाणि, पञ्च कर्मेन्द्रियाणि, उभयात्मकं मनः, पृथिव्यादीनि पञ्च महाभूतानि

इति षोडश विकाराः। प्रकृति-विकृत्युभयभिन्नः पुरुष इति पञ्चविंशति स्तत्त्वानि सांख्यानाम्। प्रत्यक्षानुमानागमास्त्रीण्येव प्रमाणानि। अत्र सांख्य तत्त्व समासाभिधं कापिलं सूत्रं सम्पूर्णं नोपलभ्यते। सांख्य-सूत्रन्तु समुपलभ्यमानमर्वाचीनमिति कृत्वा न तत्रास्था सर्वेषां, सांख्यकारिका हि ईश्वर-कृष्ण-निर्मिता प्राचीनेति तामेवाध्ययनाध्यापने विद्वांसः साम्प्रतिका वयं समाद्रियामहे। अस्य दर्शनस्य नये सत्त्वरजस्तमोमयी प्रकृतिरेव सर्वं प्रपञ्च-जालं विस्तारयति। पुरुषस्तु केवलं भोक्ता न तु कर्ता। नापीह दर्शने न्याय-दर्शनवदीश्वरो निमित्तकारणं स्रष्टा। किन्तु वैषम्यमुपेता साम्यावस्थातो विच्युता प्रकृतिरेव पुरुष-संयोगात् स्वभावेनैव महदादिरूपेण विकारमासादयन्ती परिणमति, इति परिणामवादोऽस्य दर्शनस्य सम्मतः। ईश्वरानङ्गीकारेणापि केवलं प्रकृतिस्वभावेनैव सृष्टिं प्रतिपादयतोऽस्य दर्शनस्य वैदिकत्वं व्यापयच्छ्रुति। यतो हि—

"अजामेकां लोहित-शुक्ल-कृष्णां बह्वीः प्रजाः सृजमानां सरूपाः
अजो ह्येको जुषमाणोऽनुशेते जहात्येनां भुक्तभोगामजोऽन्यः"

इति श्वेताश्वतरोपनिषच्छ्रुतिं स्वसिद्धान्त-प्रामाण्येनाङ्गीकरोत्ययं दर्शनकारः। मुक्तिरप्येतस्य दर्शनस्य मते प्रकृतितः स्वात्मनो भेदज्ञानेनैवोदेति कैवल्यरूपा। यावद्धि पुरुषः प्रकृतिविचेष्टितान्येवात्मविचेष्टितत्वेन सम्मनुते तावदेव बन्धनं तस्य। यदा च स प्रकृतेरेव सत्त्वपरिणामेन ज्ञानेन प्रकृति-पुरुषान्यताख्यातिमासादयति तदा सा प्रकृतिः विहितपुरुषार्था स्वयमेव ततः स्वात्मानं संवृणुते। यतो हि पुरुषस्य भोगार्थमपवर्गार्थमित्युभयार्थमेवास्याः प्रकृतेः प्रवृत्तिराम्नाता विद्यते सांख्य-वृद्धैः दार्शनिकै रिदानीं कृतोभयकृत्याया विरामे एव विश्रामः। किं प्रयोजनमस्या अग्रे। सर्वोऽप्ययं भावः सांख्यकारिकायां निबद्धो दृश्यते। तथाहि—ईश्वरकृष्णनिर्मिताः सप्ततिः कारिकाः सम्प्रति समुपलभ्यन्ते। यत्र वाचस्पतिमिश्रस्य दिव्यम् व्याख्यानमुपलभ्यते। सांख्यदर्शन ज्ञानायेदमेव ग्रन्थरत्नमिदानीं सर्वोपयोगि दृश्यते। तत एव मनाङ्निर्दिश्यते—

वत्सविवृद्धिनिमित्तं क्षीरस्य यथा प्रवृत्तिरज्ञस्य।
पुरुषविमोक्षनिमित्तं तथा प्रवृत्तिः प्रधानस्य॥
पुरुषस्य दर्शनार्थं कैवल्यार्थं तथा प्रधानस्य।
पङ्ग्वन्धवदुभयोरपि संबन्धस्तत्कृतः सर्गः॥
प्रकृतेर्महांस्ततोऽहङ्कारस्तस्माद्गणश्च षोडशकः
तस्मादपि षोडशकात् पञ्चभ्यः पञ्चभूतानि,
रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः॥

सांख्यस्य द्वितीयो हि भेदो योगदर्शनमाम्नायते। पतञ्जलि-महर्षि-प्रणीतं तदीयं सूत्रं व्यासभाष्योपेतमिदानीमध्यापने विद्वद्भिः समुपयुज्यते। इह दर्शने सर्वोऽपि सांख्यसिद्धान्तोऽङ्गीकृतो विद्यते। केवलं सांख्ये प्रसङ्गाभावादनुल्लिखित ईश्वर इह लक्षणकरणादिना निरूप्यते। तथा हि—

"क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेष ईश्वरः"

"तपः स्वाध्यायेश्वरप्रणिधानानि क्रियायोगः" इत्यादिना।

दर्शनमिदं चित्तवृत्तिनिरोधोपायमुपदिशद् प्रकृतिपुरुषान्यथाख्यातिमेव मोक्षमार्गमाश्रयतीति कैवल्येऽपि सांख्यसिद्धान्ते एव विश्राम्यति! तथाहि

"योगश्चित्तवृत्तिनिरोधः„

"तदा द्रष्टुः स्वरूपेऽवस्थानम्„

"पुरुषार्थशून्यानां गुणानां प्रतिप्रसवः कैवल्यं स्वरूपप्रतिष्ठा वा चितिशक्तिः"

इति प्रतिपाद्य स्वीयं वक्तव्यमवशेषयति। इह दर्शने चत्वार एव पादाः समाधि-साधन-विभूति-कैवल्यनामका अभिहिताः। केवलं योगानामेव साङ्गोपाङ्गानामिह निरूपणं विद्यते। सृष्टिप्रलयादिनिरूपणन्तु सांख्यशिरस्येवानेन निपातितं दृश्यते। अनयोरुभयोरेव दर्शनयोः सतः सञ्जायत इति परिणामवादः सम्मतः। जीवस्य विभुत्वं नित्यत्वं नानात्वं प्रकृतिसम्बन्धेनैव प्रातिभासिकं कर्तृत्वं नैमित्तिकञ्च भोक्तृत्वं निर्गुणत्वादिकमाम्नायते। इदमपि दर्शनद्वयमानुमानिकमेवेति स्वात्मानं श्रौतमुद्घोषयतो वेदान्तदर्शनस्य डिण्डिमनादः ब्रह्मसूत्रस्य शाङ्करभाष्यपरिशीलनेनाकर्णनीयः।

## मीमांसादर्शनम्—

अस्य सम्प्रति वेदस्य काण्डत्रयानुसारं त्रयो भेदाः समुपलभ्यन्ते। कर्ममीमांसादर्शनम्, उपासनामीमांसादर्शनम् (दैवीमीमांसा) ज्ञानमीमांसादर्शनम् (वेदान्तदर्शनम्) इति। तत्र कर्ममीमांसा दर्शनस्य उत्तरार्द्धो भागः जैमिनिप्रणीतं जैमिनीयमीमांसादर्शनं विद्यते। बादरायण-मुनि-प्रणीतम् ब्रह्मसूत्रञ्च ज्ञानकाण्डीयमीमांसादर्शनं विद्यते। कर्ममीमांसायाः पूर्वार्द्धो भागः भारद्वाजमुनिप्रणीतः कर्ममीमांसादर्शनमिति नाम्ना समुपलभ्यते। उपासना काण्डीयं दैवीमीमांसादर्शनञ्च श्रीमदङ्गिरोमुनिप्रणीतम् महामण्डलीयैरेवाविर्भावितमुपलभ्यते।

तत्रोभयत्रापि वेदान्तप्रक्रियैव सृष्टिप्रलययोरासाद्यते। प्रमाणान्यपि तान्येव प्रत्यक्षानुमानोपमानागमार्थापत्यभावाख्यानि षडभिमतानि। तत्त्वमपि तदेव ब्रह्मैकमुपलभ्यते। किन्तु मायाविलासरूपेण सृष्टेः प्रतिपादनं साधुसरलतयोपलभ्यते। सृष्टौ प्रकृतेः परिणामवाद एवानयोर्दर्शनयोरभिमतो दृश्यते। तथाहि कर्म-

मीमांसादर्शनस्य "पुरुषसम्बन्धोऽव्यक्तेन" संस्कारपादीयं सूत्रमस्ति। इत्यादि-सूत्रैः सृष्टिरहस्यप्रतिपादनप्रकारेण ज्ञायते यदस्य दर्शनस्य सांख्यप्रकृतिवत् अघटनघटनापटीयसी मायैव सृष्टेः सर्वं प्रपञ्चं विस्तारयति। परन्तु न हि सा सांख्यप्रकृतिवत् स्वतन्त्रा, किन्तु ब्रह्माभिन्ना तदीया शक्तिरेवेयं सृष्टिकाले ततो भिन्नेव दृश्यते "ब्रह्मशक्तिरचिन्त्या दाहशक्तिवदनलस्य" इत्यादिसूत्रम्। सम्प्रति कर्ममीमांसादर्शनं धर्मसंस्कारपादात्मकमेव संस्कृते मुद्रितमुपलभ्यते दैवीमीमांसादर्शनञ्च नाधुनापि संस्कृते मुद्रितम् सर्वमुपलभ्यत इति पुनः कदाचित्सत्यवसरेऽनयो विस्तरेण विवेचनं करिष्यामः। सम्प्रति संक्षेपेण किञ्चिदभिधीयते —

चिज्जडग्रन्थिर्जीवः। स चानादिरनन्तश्च, तस्य विभुत्वं कर्तृत्वंभोक्तृत्वञ्चोभयमपि वास्तविकं तावदवस्थम्। ग्रन्थिविमोको विमुक्तिः, ग्रन्थिवन्ध एव संसारः। मुक्तिश्च संस्कारविलोपनाज्जडसम्बन्धहानादेव सम्पाद्यते। तत्सम्बन्धहानौ सत्यां चित्ते स्वावस्थापलब्धिस्वरूपैव मुक्तिर्निगद्यते। ईश्वरो मायिकः मायासम्बन्धतः कर्तृत्वं तस्य। सा च तस्य शक्तिस्वरूपा। ततोऽभिन्ना सृष्टौ भेदमासादयन्ती जगद्विरचयति सा ह्यघटनघटनापटीयसी सर्वमपि जगद्वैचित्र्यं निर्माति। अत्र विषये भेदाभेदवादित्वमस्य दर्शनस्य प्रतीयते। सृष्टिकाले मायेश्वरयोर्भेदः। तदभावेऽभेदः, जीवोऽपि संसारावस्थायामीश्वराद्भिन्नोऽपि वस्तुतोऽभिन्न एवेति। मायात्रैविध्यात्तस्येश्वरस्यापि ब्रह्मविष्णुशिवभेदेन त्रैविध्यम्। मायासम्बन्धत एव कर्तृत्वं तस्मात्तयो र्द्वयोरपि मीमांसयोरभिन्ननिमित्तोपादानकारणतावाद एव प्रतीयते। जीवेश्वरयोः काल्पनिको भेदः, जीवानां नानात्वम्। मायिकेश्वरस्य तस्य सृष्टिपालनसंहारक्रियाभेदाद्भेदः। सालोक्य-सामीप्य-सायुज्य-सारूप्य-भेदेन मुक्तेरपि चातुर्विध्यमेव।

अहं नारद! स्वां मायां त्रिविधामाश्रयन्निह।
सृजन् रक्षन् संहरंश्च दध्रे संज्ञां क्रियोचिताम्।

संक्षेपत स्तदीयपदार्थविवरणमित्थं ज्ञेयम्। वर्णाश्रम-धर्मावलम्बिनां सिद्धान्तानां सुगुप्तिः। वेदशास्त्रीय-वर्णाश्रमाचाराणामुपरि सम्भाव्यमानानां शङ्कानां निरासः, ईश्वराज्ञास्वरूपाणां धर्माणां तत्त्वतः स्वरूपनिरूपणम्। वर्णाश्रमधर्माणां सर्वाङ्गीणा पुष्टिः।

कर्मराज्यस्य गभीररहस्योद्घाटनम्, जीवतत्त्वविकाशे कर्मरहस्यज्ञानस्यावश्यकत्वमित्यादयो बहवो विषया निरूपिताः। सर्वथा दर्शनीयोऽयं ग्रन्थः। श्रीभारतधर्म–महामण्डलसञ्चालकानामध्यवसायबलेनाऽपूर्वोऽयं ग्रन्थमणि र्विलुप्तः प्रकाश्यतां नीतः। जैमिनीयमीमांसायाः खण्डितांशपूरकतया सम्प्रति महानुपकारको दार्शनिकानां कृते भविष्यतीत्यस्माकं विश्वासः।

जैमिनीय-बादरायण-मीमांसयो निरूपणन्तु अग्रिमाङ्के भविष्यति। यतो हि तद्धि दर्शनद्वयं वेदार्थकुसुमग्रन्थतया भारतीयसंस्कृतेः परमोपयोगि निगद्यते। तत्र च बहूनां विदुषां मतान्यपि संक्षेपेण दर्शयिष्यामः। सम्प्रति अद्यावधि निरूपितस्य दर्शनजातस्योपसंहारे प्रमाण-प्रमेययोः संक्षिप्तं स्वरूपं प्राक्तनैरुट्टङ्कितं पद्यरूपेणेह वितन्यते—

प्रत्यक्षमेकं चार्वाकाः कणाद-सुगतौ पुनः।
अनुमानञ्च तच्चापि सांख्याः शब्दञ्च ते उभे॥
न्यायैकदेशिनोऽप्येवमुपमानञ्च केचन।
अर्थापत्त्या सहैतानि चत्वार्य्याहुः प्रभाकराः।
अभावषष्ठान्येतानि भट्टा वेदान्तिनस्तथा॥
सम्भवैतिह्ययुक्तानि तानि पौराणिका जगुः।
प्रत्यक्षादिगतश्चैवञ्चैष्टिकं तान्त्रिका विदुः॥

इति सर्वेषामेव प्रमाणप्रकारः। प्रमेयवादप्रकारो यथा—

आरम्भवादः कणभक्षपक्षः संघातवादस्तु भदन्तपक्षः।
सांख्यादिपक्षः परिणामवादो वेदान्तपक्षस्तु विवर्तवादः

[ सं० शा० २।६३। ]

इत्यादि वादबहुत्वं विद्वद्भिः सर्वज्ञात्ममुनेः संक्षेप-शारीरकमेव द्रष्टव्यम्।

---

## समाचार-संग्रहः।

### जयन्तीमहोत्सवः।

इन्दौरनगरे—कार्तिकशुक्ल १५ बुधे पीलियाखाल श्रीहंसमठ इत्यत्र भगवतां श्रीनिम्बार्काचार्यचरणानां—आचार्यपादानां जयन्तीमहोत्सवो महता समारोहेण सम्वृत्तः। उत्सवेऽस्मिन् चतुःसम्प्रदायि वैष्णव-सन्तमहान्त-सन्यासिनश्च प्रतिष्ठिता विद्वांसस्तथा नागरिक-छात्रसंघ एवं माननीय-रावराजा श्रीछत्र-करणजी महोदयाः, श्रेष्ठिवर्गश्च, प्रायेण योग्यपुरुषाणां समुदाय आसीत्। अत्र आवश्यकीय विषयस्य अर्चाविततोऽनन्तरं धार्मिक-महत्त्वपूर्ण-भाषणानि चाभवन्। यथा पं० व्रजवल्लभशरणदेवस्य आचार्यचरणानां तत्प्रतिपादित-द्वैताद्वैतसिद्धान्तस्य च महत्त्वविषयकं भाषणं प्रशंसनीयमभूत्। ततो होल्करसंस्कृत-कालेजाध्यापक-आयुर्वेदमहामहोपाध्याय पं० श्रीनारायणदत्तत्रिपाठिभिद्वैताद्वैतसिद्धान्तस्य सर्वसिद्धान्तेषु च व्यापकत्वं, आचार्यपादानाञ्च प्राचीनत्वं शास्त्रैः प्रतिपादितम्।

पुनः, वि० वि० पीठाधीश पण्डित श्रीकृष्णाचार्यैः श्रीनिम्बार्क-सम्प्रदायोन्नत्यर्थं प्रस्तावात्मकं प्रभावशालि-भाषणं प्रदत्तम् । अत्र पं० श्रीमज्जयवल्लभशरणदेवाचार्या अतीवधन्यवादार्हाः यैः, आत्मप्रयासेनमहोत्सवमिमं सम्पाद्य इन्दौरस्था अपि श्रीनिम्बार्कचरणानुयायिनः प्रबोधिताः सिद्धान्तविज्ञाश्च कृताः ।

निवेदकः—श्रीरामनारायणवैद्यशास्त्री ।

+ × × × ×

विदितमस्तु तत्र भवतां यल्लखीमपुरीय-सनातनधर्म्मसभाया अतुश्चत्वारिंशत्तमो वार्षिकोत्सवः कार्त्तिक-शुक्लानवमीतः, त्रयोदशीं यावत् श्रीमतां पं० श्रीमोहनलाल बी० ए० एडवोकेटमहोदयानां सभापतित्वे महता समारोहेण सुसम्पन्न इति । प्रथमदिवसे प्रातःकाले गणपत्यादिपूजनं हवनं ब्राह्मणभोजनञ्चाभूत् । ततः सायङ्काले ५ वादनतः ९ वादनं यावत् नगरकीर्तनं तत्र श्रीमतो रामचन्द्रस्य एवं भगवतो वेदस्य रथोत्सवोऽप्यासीत् । मध्ये कीर्तनं पं० वासुदेवकथावाचकमहोदयानां धार्मिक गायनानि नागरिकजनताया मनोविनोदं विवर्धयन्त्येव ।

द्वितीयदिवसतः पूर्तिं यावत् प्रत्यहं सायं ६ वादनतः १० वादनपर्यन्तं भारतप्रसिद्धानां श्रीमतां पं० श्रीकालूरामशास्त्रिमहोदयानां "प्राचीनभारतीय-सभ्यताविषयकं तथा गोस्वामिवर्य्याणां पं० श्रीजीवनदासमहोदयानां "साम्प्रतं सनातनधर्म्मिणां किं कर्त्तव्य"मिति विषयकञ्च व्याख्यानमभूत् । मध्येव्याख्यानम्—पं० वासुदेवशर्मणां सुललितधार्मिकं गायनान्यपि भवन्तिरम । अन्तिमदिवसे धन्यवादपूर्वकं सभाविसृष्टिरभूदिति शम् ।

विनीतः—शम्भुदत्तशास्त्री, लक्ष्मीपुरवास्तव्यः ।

---

## निवेदनम् ।

अयि गीर्वाग् वाणीपीयूष-पानरसिका दृष्टिपातमत्र विदधतु भवन्तः । यदिह करालेऽस्मिन् काले बहवो जनास्स्वकीयं परमपूतं सनातनधर्मं विजहति । कुहचन प्रान्ते आधुनिकाः द्विजा अभक्ष्यतरं पलाण्डुलशुनगृञ्जनादिकं भक्षमाणाः दरीदृश्यन्ते । हन्त ! तैः नो क्रियते समुचितमिदम् । यतो ह्यस्माकं महर्षिणा श्रीमता भगवता मनुनाऽभिहितम्—

छत्राकं विड् वराहं च लशुनं ग्राम्यकुक्कटम् ॥
पलाण्डुं गृञ्जनं चैव जग्ध्वा चान्द्रायणं चरेत् ।

वचनमिदञ्चरितार्थयन्तो विजहतु भवन्तो द्विजाः लशुनादिप्राशनम् । अत्र विषये भगवान् याज्ञवल्क्यः—

पलाण्डुं विड् वराहं च । छत्राकं ग्राम्यकुक्कुटम् ।
लशुनं गृञ्जनञ्चैव । भुक्त्वा चान्द्रायणं चरेत् । प्रायश्चित्तान्ते पुनरुपनयनं कार्य्यमित्यत्र विष्णुः -लशुन तद् गन्धि विड्वराह ग्राम्यकुक्कुटगोमांस भक्षणे च सर्वेष्वेतेषु प्रायश्चितान्ते पुनरुपनयनं कुर्य्यात् । अज्ञानाल्लशुनादि प्राशने प्रतिपादितं भगवता यमेन यथा ।

पलाण्डुं कवकं चैव गृञ्जनं लशुनं तथा ॥
चत्वार्य्यज्ञानतो जग्ध्वा तप्तकृच्छ्रं चरेद् द्विजः ॥

तप्तकृच्छ्रे पादोन धेनु चतुष्टयं प्रायश्चितं । अपि तु पलाण्ड्वादि सदृशं किमपि वस्तु भक्षितं देवलः—

पलाण्डु-सदृशं यत् स्यात् गन्धवर्ण-रसादिभिः ।
अभोज्यं तद्भवेत्सर्वं भुक्त्वा चान्द्रायणं चरेत् ।
लिशुनादिषु ये तुल्याः गन्धवर्णरसादिभिः ।
अभक्ष्यास्ते द्विजातीनां कृच्छ्रं सान्तपनं चरेत् ।

सर्वे धर्मप्रामाण्यमयलम्बयन्तो धीमन्तो भवन्तो द्विजाः विजहतु लशुनादिं प्राशनं विघटूर्धयन्तु स्वकुल-वर्णाश्रम-धर्म-गौरवम् । रक्षयन्तु च परमपूतं सनातन सुकृत मित्यलं पल्लवितेन ।

श्रीभोलानाथ मिश्रश्छात्रः ।

## श्रीधन्वन्तरिमहोत्सवः ।

कार्तिककृष्णत्रयोदश्यां रवौ जौनपुरमण्डलान्तर्गत ( मुंगरा ) बादशाहपुर हाटत उदीच्यां दिशि ( बहोरिकपुरे ) श्रीरामचन्द्रधन्वन्तरि औषधालये महता समारोहेण हवनपूजनादिकं समजनि । एवं तदुपलक्ष्ये श्रीरामचन्द्रधन्वन्तरिविद्यालये, पुरस्कारप्रतियोगितया महता कुतूहलेन अनेक सम्मेलनानि सम्भूतानि । तत्र शास्त्रार्थसम्मेलने श्रीमन्तः पण्डितप्रवराः श्रीजयदेवमणिशास्त्रिणः श्रीमन्तः श्रीरामप्रतापशर्मत्रिपाठिनः, सभापतयः, सङ्गीतसम्मेलने श्रीमन्तो सङ्गीतविज्ञाः श्रीरामसुमिरनशुक्लाः सभापतयः, आयुर्वेदसम्मेलने पण्डित रामचन्द्रत्रिपाठी राजवैद्यः सभापतिः ( कविसम्मेलने ) श्रीमान् बाबू देवनारायणसिंह ( लला ) कविः सभापतिः ( व्याख्यानसम्मेलने ) पण्डित आत्माराम शर्मा इन्सपेक्टरः सभापतिरासीत् । पुरस्कारवितरणे श्रीमन्तः काशीस्थाः गुरवः पण्डितरमापति शर्मत्रिपाठिनः संगृहीतपुरस्कारप्रदायकाश्चासन् । इतरे सहस्रपरिमितास्तत्तद्गुणविशिष्टाः धन्यवादार्हाः प्रतापगढ़तः प्रयागराजतः तत्प्रान्ततो ऽन्येऽपि सभ्यमहोदयाश्चागतवन्त आसन् । प्रशंसनीयमेतत्संस्कृत-समाजकृत्यम् ।

निवेदकः

**आद्याप्रसादत्रिपाठी केशरीन्द्रः**

# उपयुक्तक्रिया-क्रमिकसङ्कलनम्।

सङ्कलयिता—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री।
('मुलतान'-स्थ-श्रीसनातनधर्मसंस्कृतकालेजाऽध्यापकः)

(क्रमागतम्)

विस्तार करता है १४१।

आतनोति। प्रपञ्चयति। विशकलयति। विशदयति। विस्तृणाति। (४) विस्तृणोति। व्यस्यति। व्याचष्टे (१)।

बेचता है १४२।

(१) अवक्रीणीते। विक्रीणीते (१)।

वेष्टित करता है १४३.

परिवृणोति, पर्यवृणोत्। वलयति, अवलयत्। वेष्टयति, अ(व) विवेष्टत्।

(२) वैरागी होता है १४४।

(१) उपरमति, ते। उपशाम्यति। निर्विण्णीभवति। निर्विद्यते (१)। विरक्तीभवति। विरजति (१) विरज्यति।

व्याख्या करता है १४५।

अर्थापयति, आर्त्तीथपत् (कैयटमते)। आर्त्तथपत् (माधवमते)। विवृणोति, व्यवृणोत्। विवृणुते। विशकलयति। विशदयति। (४) व्यक्तीकरोति। (४) व्याकरोति, व्याकरोत्। (४) व्याकुरुते, व्याकृत। व्याख्याति, व्याख्यात् (अस्येत्यनास्ति)। (१) व्याचष्टे, व्याचष्ट, व्याख्यत,। स्फुटयति, अपुस्फुटत् स्फोटयति।

(२) शर्मिन्दा होता है १४६।

(१) जिह्रेति, अजिह्रेत्। अह्रैषीत्। (३) त्रपते, अत्रपिष्ट। मन्दाक्षयति। लज्जते, अलज्जिष्ट। व्रीड्यति। हृणीयते।

शुरू करता है १४७।

(१) आरभते, आरभत, आरब्ध। उपक्रमते, उपाक्रमत। उपाक्रंस्त। प्रक्रमते। (१) प्रस्तौति, प्रास्तावीत्।

(२) शोभित होता है १४८

उल्लसति, उदलसत्। चकास्ति, अचकात्। ज्वलति। दीप्यते, अदीपि—अदीपिष्ट। दीव्यति। द्योतते, अद्युतत्— अद्योतिष्ट। प्रकाशते, प्राकाशिष्ट। (१) भाति, अभात्, अभासीत्। भासते, अभासिष्ट। भ्राजते, अभ्राजिष्ट। राजति,ते, अराजत। रोचते, अरुचत्— अरोचिष्ट। लसति, अलसत्। विराजते, व्यराजिष्ट। विलसति। शोभते, अशोभिष्ट, अशुभत् (द्युतादिः)।

(२) सङ्कुचित होता है। १४९।

निमिषति। निमीलति। मुकुलीभवति। मुद्रितो भवति। सङ्कुचति, समकुचत्।

---

(१) अनिट्। (२) अकर्मकः। (३) वेट्। (४) लृट्लृङोः सेट् अन्यत्रानिट्।

सजाता है । १५० ।

( ४ ) अलङ्करोति, अलमकार्षीत् । ( ४ ) परिष्करोति, पर्य्यस्कार्षीत् पर्य्यस्कार्षीत् । प्रसाधयति । भूषयति, अबूभुषत् । मण्डयति, अममण्डत् ।

( २ ) समर्थ होता है ( सकता है ) ( एतद्योगे तुमुन् भवति । ) १५१

( १ ) अध्यवस्यति ( लुटि-अध्यवसास्यति ) इष्टे, पेष्ट । उत्सहते । ( ३ ) कल्पते, अकल्पत, अक्लृपत् ) अकल्पिष्ट, अक्लृप्त । ( ३ ) क्षमते, अक्षंस्त-अक्षमिष्ट । ( १ ) पर्य्याप्नोति । पारयति । प्रगल्भते, प्रागल्भिष्ट । प्रभवति, प्राभूत् । ( १ ) शक्नोति, अशक्नोत् , अशकत् ।

समाप्त करता है १५२ ।

अवसाययति । ( ४ ) उपसंहरति, उपसमहार्षीत् । निश्शेषयति । समापयति, समापिपत् ।

सम्मति देता है १५३ ।

( १ ) अनुजानाति, अन्वज्ञासीत् । अनुमनुते । ( १ ) अनुमन्यते, अन्वमंस्त । ( १ ) परामर्शं ददाति । ( १ ) सम्मतिं प्रयच्छति, ( लुटि-प्रदास्यति ) सम्मतिं प्रादात् ।

( २ ) संशय करता है । १५४ ।

दोलायते, अदोलायत । विचिकित्सति । ( ३ ) विमुह्यति, व्यमुहत्, व्यमुहत । ( १ ) विप्रतिपद्यते । भ्रमति भ्रम्यति, अभ्रमीत् । भ्राम्यति, अभ्राम्यत्, अभ्रमत् । ( १ ) सन्धिग्धे । सन्देग्धि ( १ ) । संशेते, समशयिष्ट ।

सहता है १५५ ।

( ३ ) क्षमते, अक्षमिष्ट-अक्षंस्त । ( ३ ) क्षाम्यति, अक्षाम्यत् । तितिक्षते, अतितिक्षत । मर्षति, अमर्षीत् । मृष्यति-ते, अमृष्यत् । सहति । सहते, असहिष्ट ।

साफ़ करता है १५६ ।

( ४ ) उपस्करोति । मार्ज्जयति, अमीमृजत्—अममार्ज्जत् । ( ३ ) मार्ष्टि, अमार्ट् ।

( २ ) सिद्ध होता है १५७ ।

निर्वर्त्तते निरवर्त्तिष्ट । निष्पद्यते ( १ ) । फलति । ( १ ) सिध्यति, असिद्ध्यत्, असिधत् । असैत्सीदिति तु भ्वादेः ।

सुनता है १५८ ।

आकर्णयति, आचकर्णत् । निशमयति, न्यशीशमत् । ( १ ) शृणोति, अशृणोत, अश्रौषीत् ।

सेवन करता है १५९ ।

आराधयति, आरीरधत् । ( १ ) आराध्नोति, आराध्नोत् । ( १ ) आराध्यति, आराध्यत् । उपचरति, उपाचारीत् । उपास्ते, उपासिष्ट । जुषते, अजुषत । निषेवते, न्यषेविष्ट । परिचरति । भजति, ( १ ) अभजत् । वरिवस्यति, अवरिवस्यीत् । शुश्रूषते, अशुश्रूषत । श्रयति, अशिश्रियत् ।

( १ ) अनिट् । ( २ ) अकर्मकः । ( ३ ) वेट् । ( ४ ) लुङ्लृटोरसेडन्यत्राऽनिट् ।

( २ ) सोता है १६० ।

( १ ) निद्राति। ( १ ) निद्रायति। शेते, अशयिष्ट। ( १ ) स्वपिति, अस्वपीत्, अस्वाप्सीत्। ( १ ) संविशति।

स्तुति करता है १६१ ।

अभिनन्दति, अभ्यनन्दीत्। ईट्टे, ऐट्ट। ईडयति। नौनि। पणायति। प्रशंसति, प्राशंसीत्। वर्णयति, अववर्णत्। श्लाघते, अश्लाघिष्ट। ( १ ) स्तवीति, स्तौति, अस्तौत्, अस्तावीत्।

स्पर्श करता है १६२ ।

( १ ) आमृशति। ( १ ) आलभते। ( १ ) परामृशति। सम्पृणक्ति। ( १ स्पृशति, अस्पार्क्षीत् अस्प्राक्षीत्-अस्पृक्षत्। अस्य लुटि-स्प्रष्टयति, स्पर्ष्यति।

स्वीकार करता है १६३ ।

( ४ ) अङ्गीकरोति। ( ४ ) अभ्युपगच्छति, अभ्युपागमत्। ( १ ) अभ्युपैति, अभ्युपैत्। ( ४ ) आद्रियते, आद्रियत, आदृत। ( ४ ) उररीकरोति उरीकरोति। ( ४ ) उरीकुरुते। ( १ ) प्रतिजानीते, प्रत्यज्ञास्त। ( १ ) प्रतिशृणोति, प्रत्यशृणोत्। सङ्गिरते। ( १ ) संशृणुते। ( ४ ) स्वीकरोति।

( २ ) हटता है १६४ ( रुकता है )।

( १ ) अपैति, अपैत्। ( १ ) उपरमति, ते, उपारंसीत्, उपारंस्त। निवर्त्तते, न्यवर्त्तिष्ट। ( १ ) विरमति, व्यरंसीत्।

हटाता है ( दूर करता है ) १६५ ( एतद्योगे पञ्चमी।

अपगमयति, अपाजीगमत्। ( १ ) अपनयति, अपानैषीत्। अपसारयति, अपासीसरत्। अस्यति, आस्थत्। द्रवयति। दूरयति। नाशयति, अनीनशत्। निवर्त्तयति, न्यवीवृतत्। न्यववर्त्तत। निषेधति। नुदति ( १ )। वारयति। विप्रकर्षयति। व्यपोहति, व्यपौहीत्।

( २ ) हठ करता है १६६।

( १ ) अभिनिविशते, अभिन्यविक्षत। आगृह्णाति। आगृह्णीते, आग्रहीष्ट। निर्बध्नाति ( १ )।

( २ ) है १६७।

अस्ति, आसीत्, अभूत्। आस्ते, आस्त, आसिष्ट। जागर्ति अजागः, अजागरीत्। वर्त्तते, अवर्त्तत, अवर्त्तिष्ट। ( १ ) विद्यते, अविद्यत, अवित्त।

हैरान करता है १६८।

विस्मापयते, व्यसिष्मपत ( करणाद् ) विस्माययति, व्यसिष्ययत् )। विस्मेरयति। विस्मेरीकरोति ( ४ )।

---

( १ ) अनिट्। ( २ ) अकर्मकः। ( ३ ) वेट्। ( ४ ) लृटिसेट्, अन्यत्राऽनिट्।

(२) हैरान होता है १६६।

चित्रीयते, अचित्रीयिष्ट। (१) विस्मयते। व्यस्मेष्ट। विस्मेरीभवति।

(२) होता है १७०।

(१) उदेति, उदगात्। जायते, अजनि-अजनिष्ट। निर्व्वर्त्तते। (१) निष्पद्यते, निरपद्यत, निरपादि। प्रवर्त्तते, प्रावृतत्—प्रावर्त्तिष्ट। फलति, अफलत्। भवति, अभूत्। (१) सम्पद्यते, समपद्यत, समपादि। सम्पन्नीपद्यते। (१) सिद्ध्यति, असिध्यत्।

(२) होसकता है १७१

(१) उपपद्यते। घटते। (२) युज्यते। सम्भवति। इमं लेखमत्रैवो-पसंहरन्तो वयमेकां विशिष्टसूचनां प्रदद्मः,—

(१३) (३४) (६०) (१०२) सङ्ख्याकाः क्रियास्समानार्थका अपि भवितुमर्हाः। एवं (६७) (१८५) सङ्ख्याकाः, (३६) (३७) (४८) सङ्ख्यकाः, (७०) (६७) (१३५) (१५६) सङ्ख्याः, (५०) (६७) सङ्ख्याकाः, (७८) (१३८) सङ्ख्यकाः (६१) (८७) (११६) सङ्ख्याकाः, (२१) (१६५) सङ्ख्याकाः, (६५) (१६२) सङ्ख्यकाश्च क्रिया अन्यो-न्यस्थानेऽपि यथायोग्यतं प्रयोक्तुं शक्यन्ते। अस्तु। अन्ते एतदेव निवेद्यते, मुद्रकादीनाम् प्रमादादास्माकीनमतिमान्द्याद्वा यत्र कुत्रचन क्रियाणां परस्मैपदत्वा-दिकस्य, चिन्हाङ्कनस्य वाऽन्यथायितत्वं दृश्येत; तत्र सूचनीयोऽहमिति॥

(१) अनिट्। (२) अकर्मकः। (३) वेट्। (लुङ्लृटोरसेट्, अन्यत्राऽनिट्। यस्याः क्रियाया अन्ते 'ति' 'त्' इति दृश्येत, स परस्मैपदी ज्ञेयः, यदन्ते च 'ते' 'त' इति स्यात्, स आत्मनेपदी ज्ञेयः। त' 'त्' अन्तप्रयोगे यत्र लङ्वत् शप्-शब्लुक्-द्वित्व-श्यन्-श्नु-श-श्नम्-उ-णिच्-शप् प्रभृतयः स्युस्तत्र लङ्लकारो ज्ञेयः; यत्र च एतद्विकरणानि न दृश्येरन्, किन्तु 'ईत्' 'सीत्' 'इष्ट' 'स्त' इत्येवाऽन्ते दृश्येत, तत्र लुङ्लकारो ज्ञेयः। णिज्युक्तस्य प्रायो लुङ् दर्शितः, तत्र धातोर्द्वित्वमूह्यम्। यस्मिन् धातौ (मध्यभागे) अकारो दृश्येत, धातोश्च गुणादिर्दृश्येत, स भौवादिको ज्ञेयः। मध्यभागेऽकारेऽपि लटि धातोर्गुणो न दृश्येत, सम्प्रसारणादिकं वा दृश्येत, स तौदादिको ज्ञेयः। यत्र च लटि मध्यभागे शून्यता स्यात्, स आदादिको ज्ञेयः। मध्यभागे शून्येऽपि लटि धातोर्द्वित्वं दृश्येत, स जौहोत्यादिक ऊह्यः। यत्र अन्ते 'अयति, अयते' इति दृश्येत, स चौरादिको हेतुमण्णिजन्तो वा तर्क्यः। मध्ये 'यः' दृश्येत; तत्र दैवादिकता ज्ञेया, आत्मनेपदत्वे दैवादिकता भावकर्म्मवाच्यता वा यथायोग्य-तमवसेया। धात्वक्षरमध्ये लटि 'न' 'न्' इति वा दृश्येत, तत्र मध्यभागे 'नु' 'नो' दर्शने सौवादिकता; मध्यभागे 'ओ' उ' दर्शने तानादिकता; 'ना' 'नी' इति दर्शने क्रैयादिकताऽ-नुसन्धेया।

# सौन्दर्य्य-जिज्ञासा।

( ले०—श्रीमान् विनायकराव भट्टः )

—:०॥०:—

देशः सचाद्यापि मया न दृष्टो
यत्राऽधिवासो नु तवास्ति मित्र!
अतो हि पृच्छामि स कौतुकोऽहम्
नित्यस्थितिस्ते कथयस्व कुत्र ॥१॥

रसातले व्योम्न्यथवा च महा-
मनन्त-शीर्षोज्ज्वल-रत्नजाले।
सूर्ये शशाङ्के शुचि-तारिकासु
प्रोच्चेषु शृङ्गेषु महीधराणाम् ॥२॥

सरिज्जले निर्मल-निर्झरेषु
हरित्तृणोपवन-द्रुमेषु।
जल प्रपाते सघने घने वा
सुपुष्प पुञ्जे कदली-दलेषु ॥ ३ ॥

रम्ये रसाले वकुले कदम्बे
सौगन्धिका-चम्पक मल्लिकासु।
लतासु वा कोमल-पल्लवेषु
मनोज्ञवर्णेषु विहङ्गमेषु ॥ ४ ॥

कलापिनाञ्चारु विचित्र-नृत्ये
किं वा कलापे कलकोकिलानाम्।
गुञ्ज त्प्रमत्तालयवलीष्वथो वा
पराग-पूर्णाब्ज-कदम्बकेषु ॥ ५ ॥

उद्यन्नवार्कद्युतिमत्प्रदेशे
सांध्याभ्रवृन्दे शशि-चन्द्रिकायाम्।
पीतारुणश्यामसुरेशचापे
मन्दाकिनी-मञ्जुलरेणु-राशौ ॥ ६ ॥

हंसे हिरण्ये हरि-विक्रमे वा
सिन्दूर-रागाञ्चित-सिन्धुरेषु
तरङ्गिताम्भोधितटे प्रशस्ते
विद्युल्लसत्सान्द्र-पयोधरेषु ॥ ७ ॥

रसात्मके गायककण्ठदेशे
काव्ये रसे चित्रकलासु शिल्पे।
प्रायः शिशूनां रमणीय-जल्पे
कारुण्यमूर्तौ ह्यथवा जनन्याः ॥ ८ ॥

कल्पद्रुमे देवधुनौ सुधायाम्,
रंभोर्वशीकाम्य-कलेवरेषु।
शरन्मधुप्रावृषि सर्वदेशे,
रूपे गुणे भाव-विभावनासु ॥ ९ ॥

रतौ रमायाम् मदनस्य चाङ्गे।
द्रव्येषु सर्वेषु नवोदये वै
साक्षान्निवासो मम कृष्णचन्द्रे
तथैव रासेश्वरि राधिकायाम् ॥ १० ॥

---

## शोकोच्छ्वासः

रात्रिर्गमिष्यति भविष्यति सुप्रभातम्
भास्वानुदेष्यति हसिष्यति पङ्कज-श्रीः।
इत्थं विचिन्तयति कोशगते द्विरेफे
हा हन्त! हन्त! नलिनीं गज उज्जहार॥

महत्खेदावहं वृत्तमेतद् यदखिल-भारत-वर्षीय-वैद्य-सम्मेलनस्य द्रव्य-गुण संभाषणपरिषत्सभापतिमहोदयाः संस्कृत-हिन्दी-भाषयोः प्रौढ़-कवि-शिरोमणयोऽनेकग्रन्थ-सम्पादका, विभिन्न-संस्थापरीक्षकाः परमविख्यातदार्शनिकाः सफल-चिकित्सकाश्च खुर्जास्थ श्रीलक्ष्मणदासायुर्वेदविद्यालयस्य प्रधानाध्यापकाः श्रीमन्तः पं० नारायणदत्त शर्माण आयुर्वेदाचार्या आश्विनकृष्ण पक्षे पञ्चम्यां गुरु वासरे कैलाशवासमकुर्वन्। एतेषां स्वर्गतमात्मानं सान्त्वयितुं खुर्जास्थ विदुषां नागरिकाणाञ्च महती शोक सभा शनिवासरे समभूत्। एषां सुपुत्राः श्रीवाचस्पति-शर्माण आयुर्वेदाचार्या इदानीं स्वपितुः स्थाने लक्ष्मणदासायुर्वेद विद्यालयेऽध्यापयन्ति संजीवनाख्यौषधालये च चिकित्सन्ति। आशास्महे यदिमे स्वर्गतवैद्यवर्य्याणां क्षतिं पूरयिष्यन्ति।

सोमदेवशर्मा शास्त्री आयुर्वेदाचार्यः।
संजीवन औषधालय खुरजा, बुलन्दशहर।

---

## ईशाह्वानम् ( गानम् )

( ले०—साहित्याचार्य्यः, पाण्डेयः श्रीकुसुमाकरशर्मा, )

( गवर्नमेण्ट सं० कालेज मुजफ्फरपुरम् )

अयि देव! रङ्क-बन्धो! करुणा-प्रसार-सिन्धो!
प्रणमामि मञ्जुभक्त्या, त्वलमस्तु ते सुयुक्त्या॥ १॥
प्रतिकूल-वर्त्म-लग्नाः, विपदम्बुधौ सुमग्नाः।
अधुना क? कैटभारे! दयतां विभो! मुरारे!॥ २॥
द्विज-धर्म-कर्महानिः, वणिगस्ति विप्रजानिः।
पृथ्वी विलोक्य पापं, सरणेन वक्ति तापम्॥ ३॥
भगवन्! प्रभो! रमेश!, क्षितिताम्समुद्धरेश!
भवदीयक्रूर-लीला, तनुतेऽशिवं कुशीला॥ ४॥
चयनं यथा वृषस्य, पतनं हरे! परस्य।
विमलां ददस्व बुद्धिं, द्विजधर्मकर्म-शुद्धिम्॥ ५॥

# कालिदास लखिमाविदुषी-विनोदः ।

( ले०-ज्यो० आ० श्रीतुरन्तलालझा-मल्लिनाथपुरीयः । )
शारदाभवनविद्यालयप्रधानाध्यापकः ।

अथ कदाचिदितस्ततो भ्रममाणो विद्याचुञ्चुः कविकुलशिरोमणिः कालिदासमिश्रः कस्मिंश्चिन्नगरे कस्याश्चन पुष्करिण्याः सान्निध्यवसुन्धरायां कोमलकम्बलासने समासीनः सुरार्चनं विदधानः कालमतिवाहयतिस्म । तन्नगर एव काचन परमविदुषी लखिमाभिधाना धरासुरधर्मपत्नी प्रतिवसतिस्म । सा च कालिदासागमनं कर्णाकर्णिकया समाकर्ण्य मलिनवसनन्दधाना स्त्रीमण्डली मध्यवर्तिनी जलानयनव्याजेन तस्यामेव पुष्करिण्यामुपस्थिता बभूव । तत्र च जलपूरितघटं कटौ निधाय प्रथमन्देवार्चनं विदधानन्तं कालिदासमिश्रं पप्रच्छ को भवान् विद्वानिव चकास्ति, तेन कालिदासमिश्रोऽहमित्यवाचि । पुनर्लखिमा किमपि काव्यं कुरुताम्भवान् ? पुनः कालिदासः किमवलंब्य ? ततस्तया पुरोवर्ति पुष्करिणीस्थितचक्रवाकवर्णनमेव कुरुतामित्यवादि, निशम्यैतद्वर्णयति कालिदासः

आयाति याति पुनरैति जलं प्रयाति पद्माङ्कुराणि विधुनोति धुनोति पक्षौ,
उन्मत्तवद् भ्रमति कूजति मन्दमन्दं कान्तावियोगविधुरो निशि चक्रवाकः ।

इतिनिशम्य विहस्य च लखिमा केवलं लटूलकारमेव वेत्ति भवान्, दिने निशीति पदघटितं वर्णनमपि नोचितमिति प्रोक्तवती । श्रुत्वैतत्क्रुद्धः कालिदासो लखिमेयमेवेति विज्ञाय जगाद-यदि मदुक्तमसमीचीनन्तर्हि त्वमेव वर्णयेति ततो लखिमा

भंक्त्वा भोक्तुं न भुक्ते कुटिलविशलताकोटिमिन्दोर्वितर्का-
त्ताराकारास्तृषार्तः पिबति न पयसां विप्लुषःपत्रसंस्थाः ॥
छायामम्भोरुहाणामलिकुलशबलां वीक्ष्य सन्ध्यामसन्ध्यां,
कान्ताविश्लेषभीरुर्दिनमपि रजनीं मन्यते चक्रवाकः ॥ १ ।

इत्यवर्णयत् । अनवद्यमेतत्पद्यमाकर्ण्य परमाकुलितचेताः कालिदास इदमुवाच ।

"किं मां निरीक्षसि घटेन कटिस्थितेन वक्त्रेण चारुपरिमीलितलोचनेन ।
अन्यं निरीक्ष पुरुषं तव कामयोग्यं नाहं घटाङ्कितकटिं प्रमदां स्पृशामि ॥,,

इति निशम्य किञ्चिद्विहस्य क्रुद्धा च लखिमा समुत्तरति

"सत्यं ब्रवीमि मकरध्वजवाणपीड ! नाहन्त्वदर्थमनसा परिचिन्तयामि,
दासोऽद्य मे विघटितस्तव तुल्यरूपः सोऽयं भवेन्नहि भवेदिति मे वितर्कः,,

इत्युक्त्वा ततश्चलिताऽभवल्लखिमा कालिदासमिश्रोऽपि लज्जितोऽन्यत्र क्वचिदचिरञ्जगाम । अयि युवावस्थामनुभवितारः शास्त्राध्ययनश्रमनिरताः सुहृदः प्राचीनसमयेऽप्येवमासीत् स्त्रीशिक्षणाली बुधगणप्रमोदकारिणीति प्रायोनाविदितं भवेत्प्रियतमानाम्-तदपि भवन्तोऽधुनापि नोत्सहन्त इति भृशं खेदास्पदम् ।

# भारतभारतीगीतम् ।

——:o: ——

लेo—पुरोहित तुलसीरामशास्त्री ( मयकोटी गढ़वाल )

—o:*:o—

गरीयसी महीयसी सतां कृते वलीयसी,
अबोधजं तमः समं व्यपोहितुं पटीयसी ।
पुरातनै महर्षिभिः सुसेविता सुशोभिता,
प्रभातु भारते सदा प्रभावती सुभारती ॥ १ ॥

नवीनयावनीकुभा-पयालकाशया कृतम्,
विधूय नैजतेजसा प्रकाशकल्पमल्पकम् ।
स्वभावजा दिनेशजा प्रभा यथा प्रकाशते,
प्रकाशतां स्वभारते तथा शुभा सुभारती ॥ २ ॥

दिनेशभा निशेशभा धरेशरन्ध्रजं तमः,
विहन्तुमीशते न ता धुनोति भारतीप्रभा ।
हृदि स्थितं सुनिश्चितं कुबोधकं तमः सदा,
विचित्र-चातुरीवती विभातु भारतीप्रभा ॥ ३ ॥

पदे पदे विचित्रतां दधाति भारतीगतिः,
उपास्य यां महर्निशं प्रकाशते कवेर्मतिः ।
सुसेव्य यां परां गतिं प्रयाति सत्वरं यतिः,
भवेत् स्वदेश-वासिनां स्वकीय-भारतीरतिः ॥ ४ ॥

गृहे गृहे पुरे पुरे जने जने दिने दिने,
मुखे मुखे स्वभारती-सुगीतमस्तु भारते ।
भजन्तु भावभावुकाः नमन्तु नम्रमस्तकाः !,
सनातनीं शुभाननां सुभावनीं सुभारतीम् ॥ ५ ॥

प्रचार्य भारतीं वयं समुन्नतिं लभामहे,
उपास्य मातरं स्वकां शुभास्पदं भजामहे ।
अपास्य यावनीं प्रथां प्रथां सतीमथामहे,
निरस्य नीरसां गिरं रसैर्भरामुपास्महे ॥ ६ ॥

# दिव्या गीर्वाणभारती।

निबन्धा-पण्डितगङ्गाविष्णुशर्म्मा सारस्वतशास्त्री, ओ० टी०,

——:*※*:——

( 'अलीपुर' स्थ-राजकीय'विद्यालय-संस्कृताध्यापकः। )

( क्रमगता )

चित्रीयते सचेतसां चेत एतेषामेतां दुर्दशां वीक्ष्येति, संस्कृतज्ञानुपहसन्तः स्वयं हास्यास्पदं जाता महाभागाः। साम्प्रतमसाम्प्रतमधिकव्याहरणं भव्याऽभव्य-सभ्यता-लालितमतीनां विषये।

इदानीमहमनुनयविनयपुरस्सरं विद्वत्प्रकाण्डानां पुरः भोजभूपालसमयं स्थापयितुमभिलषामि, पण्डितमतल्लिका अपि शुभमयं भोजभूपालसमयं स्मृतिपथादपेतं न कुर्वीरन्, तदात्वेऽस्माकं सुरभारत्या उन्नामः परां काष्ठामुपनत आसीदेव। तदानीं वसनानि वयन् वायकः ( तन्तुवायः कुविन्दः ) अपि राजभवनमासाद्य गृहान्निर्गन्तुमादिष्टः सुदिष्टः ( भाग्यशाली ) दिष्टे तस्मिन् ( समये तस्मिन् )

'काव्यं करोमि नहि चारुतरं करोमि, यत्नात्करोमि यदि चारु तरं करोमि।
भूपालमौलिमणिमण्डितपादपीठ! हे साहसाङ्क! कवयामि, वयामि, यामि॥

इति कवनं कृत्वा स्वकीय-भवनमध्ययां चकार स्वालापकलापेन भूपमपि आह्लादयाञ्चकार। एतद्वचनं वाग्गुम्फनापटुरूपोऽभिरूपः श्रीविश्वनाथशर्मा समर्पयति।

'स्मरत भारतभूपतिभोजकं, ननु नृपाः! कवयः! निजवंशजम्।
यदनुशास्तरि देवगिरा स्फुटं कवयतिस्म वयन्नपि वायकः॥

अपि च यदीय-राष्ट्रशासने कुविन्द-तैलकारादयः। स्वया कवित्वधारया धारेश्वरं ह्यतूतुषन्। अहो वनौकसोऽपि यत्र बाधति-प्रबाधिता अविव्यथन् जीहरंश्च मूर्ध्नि भारतं श्रमम्। अत्रैषा संक्षिप्ता कथा—

एकदैको मदनपुरवास्तव्यो गुण-निधि गुणनिधिसंज्ञो विज्ञो धारा ( नगरी ) धरास्थ-धर्मशालामध्यमध्युवास। रूढं ( प्रसिद्धं ) कालिदासं जेतुमनाः प्रमनाः ( उग्रः कस्मिन् पार्श्वे उपवेदयति ) अर्थात् जयः स्यात्पराजयो वेत्युन्मनास्सन् संशयदोलामधिरूढोऽपि दोलामधिरूढः प्रौढोत्साह-समन्वितः दोलावाहकानब्रवीदवदत्।

'अयमान्दोलिकादण्डः स्कन्धे किं तव बाधति ? इत्याकृतिरीत्यनुसार-मशुद्धिसंवलितं तत्कलितं वाक्यविन्यासं निशम्य तदानीन्तदागमारर्वाक्भूत-दोलावाहकरूपः कालिदासस्तूर्णमेवाऽवादीत्—

'न बाधते तथा मां हि—यथा 'बाधति' बाधते ॥

पुरा पुरुषाणान्तु का कथा–भारतीयाः प्रतिभावत्यः, तत्रभवत्यो भारती ( मण्डनमिश्रपत्नी ) समानास्म-माना विदुष्यो योषितः समभूवन्, याः शास्त्रार्थे वादिप्रतिवादिसम्मत्या माध्यस्थ्यं मञ्जूरी कृतवत्यः । स समयः शुभमयः सुवर्णमय आसीत्—

'शङ्करदिग्विजय'–नामके काव्ये समुट्टङ्कितमस्ति मण्डनमिश्रः पूर्वमी-मांसानुयायी मीमांसकः मीमांसाशास्त्रस्य पण्डितो य आसीत्तस्य च पाण्डित्य-सौरभं दिगन्तव्याप्यविद्यत ।

प्रत्युत्पन्नमतिर्दृढयुक्तिविचारचञ्चत्पाण्डित्यमण्डितमतिस्तर्केऽतर्कितगतिः पण्डितपतिः लोकशङ्करः आचार्यवरो भगवान् शङ्करः ( शङ्कराचार्यः ) तं दिग्गजं विद्वांसञ्जेतुं 'माहिष्मतीं, नगरीम्प्रति प्रतस्थे । तथाहि—

'ततः प्रतस्थे भगवान् प्रयागामात्तं पण्डितं मण्डनमाशु जेतुम् ।
गच्छन् खसृत्या पुरमालुलोके, माहिष्मतीं मण्डनमण्डितां सः ॥

तत्र माहिष्मत्या नगर्या बहिः सदाचारमूर्त्तिर्मूर्त्त इव धर्मस्तत्र भवान् प्रातःस्मरणीयः सुगृहीतनामधेयः भगवान् शङ्करो विशालमुद्यानमेकमध्युष्य कृतप्राभातिकक्रियाकलापस्ततो मण्डनमिश्रनिशान्तं ( गृहं ) गवेषयितुं टिटीके ( अढौकिष्ट ) । मध्येमार्गं मण्डनमिश्रस्य दासीद्वयीं "सज्जनचित्तवत्स्वच्छम्, दीनार्तिवल्लघुतरम्, पुत्रपरिष्वङ्गवच्छीतलम् बाल्यजल्पवन्मधुरम्, पानीय मानेतुं पन्थयन्तीं ( गच्छन्तीम् ) मण्डनमिश्रभवनमप्राक्षीत् ।

तद्वचः श्रवणसमकालमेव मुदमुद्वहता दासीयुग्मेन स प्रणयं सप्रश्रय मित्थमुदतीर्यत—

"स्वतः प्रमाणं परतः प्रमाणं–कीराङ्गना यत्र गिरो गिरन्ति ।
द्वारस्थ-नीडान्तरसन्निरुद्धा जानीहि तत्पण्डितमण्डनौकः ॥
फलप्रदं कर्मफलप्रदोऽजः कीराङ्गना यत्र गिरो गिरन्ति ।
द्वारस्थनीडान्तरसन्निरुद्धा जानीहि तत्पण्डितमण्डनौकः ॥
जगद् ध्रुवं स्याज्जगदध्रुवं स्यात्कीराङ्गना यत्र गिरो गिरन्ति ।
द्वारस्थ-नीडान्तर-सन्निरुद्धा जानीहि तत्पण्डित-मण्डनौकः ॥

अस्तु, भगवान् मण्डनमिश्रधामाऽऽसाद्य तेन सत्रा शास्त्रार्थमकार्षीत्, शास्त्रार्थे तं दिग्गजपण्डितमजैषीच्च । तटस्था तत्प्रेयसी श्रेयसी परमविदुषी भारतप्रख्याता भारती स्वस्वामिविरुद्धं निर्णयमशुश्रुवत् ।

आख्याताऽऽख्यानस्यैतदाकूतम्–यत्पुरा भारते–एतादृश्यो विदुष्योऽप्यभूवन्, याः पण्डितमतल्लिकयोः शास्त्रार्थमध्ये माध्यस्थ्यमकुर्वत ।

'संस्कृतपरिचयतः परिवर्तितमेकमनुत्तममाख्येयमाख्यानमाख्यायकनिष्णातानां संख्यावतां पुरः प्राभृतीक्रियते, सानुकम्पं विद्वन्मचर्चिका एकस्या अपरस्याः परमविदुष्या वैदुष्यमपि वीक्ष्यताम्—

पुरा चोलदेशे निरक्षरभट्टाचार्योऽनन्तभट्टः साक्षरधराऽमरान्ववाये जनिं लेभे । एकदाऽसौ शास्त्रविद्भिर्विद्वद्भिः सुरभारतीभाषणलब्धलक्षणैः सुरगवीविचक्षणैः भोजनाऽभ्यवहारव्यग्रैरग्रजैः सहोदरैस्सहोदरदरीपूरणदत्तमनाः प्रमनाः 'दध्यानये' तिप्रयोक्तव्ये 'दधिमानय' इतिशब्दं प्रायुङ्क्त ( प्रायौक्षीत् ) ।

श्रवणपुटाभ्यां तन्मुखनिर्गलितं वच आपीय ( श्रवणविषयीकृत्य ) सपरिवारा निर्वर्णितविद्याऽकूपारपाराऽवारास्तेऽस्मेषत ( मन्दमन्दमहसन् ) साकूतं धी-धराणां देवराणां हासं प्रासमिव ( भाला ) मत्वा मतिमती विद्यावती, अनन्तभट्टभामिनी हृदयवल्लभपरिभवं सोढुन्नापपारत्, तत्क्षणमेव धीरधिषणा बधीरितधिषणा स्वधिषणाप्रागल्भ्यं प्राचीकटत्, अथाऽचकथत् ( स्पष्टमाचष्ट वा ) । कृतिना मत्स्वामिना कृतः प्रयोगः व्याकृतिरीत्यनुसारं नितान्तमुदात्तः ( अवदातः ) 'दधि' मा आनय, इत्यत्रास्ति साधीयान् पदच्छेदः । मत्प्राणेश्वरस्तक्रमेव वष्टि न तु दधि, इति सर्वसमक्षमुदैरित्, पत्युश्च सम्मानमरक्षीत् ।

वयमिदानीमेतादृक्षं गृहस्थमवलोकितुकामाः स्म । सत्यम्, यदीदृश्यो भारतीया भारतीभाषणपरा विदुष्यो भारते जायेरन्, तर्हि पुनरेव भारतं प्रतिभारतं भारत स्यात्राऽत्राणीयस्यपि संशीतिः । अस्तु तदाऽऽस्माकीना संस्कृत्रिमा वाचा सत्यं मातृभाषेति व्यपदेशभाग् भवेद् भवे—

साम्प्रतं संस्कृत-वाङ्मयकृते दुरदृष्टमयः समयः समायात्, समबाबासौ सुवर्णमयः समयः । यन्मातरोऽपि संस्कृतभाषां परित्यज्य हिन्दीभाषादत्तमनस्का जाताः । अहं हिन्दीभाषां न विरुन्धे, परमिदं भाषे, यस्स शुभमयः समयः कन्दः कदा पुनरेष्यति यदा—

'किं करोमि क्व गच्छामि को वेदानुद्धरिष्यति' ।

इति व्याहृत्याऽश्रुप्रवाहं प्रवाहयन्ति स्म भारतीयदारिकाः, का कथैतरेषामाम्नाताम्नायानां विश्वविश्रुतश्रुतिचतुष्टयाऽभ्यसनविकसितहृत्सरोजकोषाणां योषाणामिति ।

इदानीमकम्पानुकम्पार्णवस्य भगवतोऽनुकम्पया हिन्दीभाषायाः प्रचुरः प्रचारोऽजनि। तत्साहित्योपचितिश्च सौष्ठवमुपासदत्, प्रतिवर्षं पर्याप्तामेव नव-मलङ्कुरुते हिन्दीग्रन्थादिपर्याप्तां दिव्सुर्ल्ललनासमवायः। हिन्दीसाहित्यसम्मेलनान्यपि प्राचुर्येणाऽभवन्, भवन्ति, भविष्यति भविष्यन्ति च।

हिन्दीसाहित्यलालित्ये हिन्दुविश्वविद्यालयीय-हिन्दीभाषाया महाध्यापक-पण्डितवराऽयोध्यासिंहोपाध्यायसम्मतं मतं मतिमतामपि सम्मतं भवेदिति तदधः, अङ्क्यते। येन मनस्विनां यशस्विनां मनोविनोदोऽपि स्यात्, भारतीय-प्रसिद्धविदुषां परिचयोऽपि स्यादिति।

भवन्तस्तत्र भवन्तः ईसवीये (१६२४) हायने, इन्द्रप्रस्थेऽखिलभारत-वर्षीय-हिन्दीसाहित्यसम्मेलन-सभापतिपदमलङ्कुर्वन्तत्र स्ववक्तव्यमित्थं प्राचीकटन्, तदविकलं संस्कृत भारत्यामनूद्य भवतां मनो विनोद्यते।

"साम्प्रतिक-कविगणस्य लालित्य-सौन्दर्यसम्पृक्तासु कवितासु मर्मेतद्धि निवेदनम्—

(क) किं श्रुतिधरस्य श्रीमतः पण्डितश्रीधरपाठकस्य 'भारतगीते' भारतीयताया रागो नास्ति?

(ख) किं शुभङ्करस्य श्रीनाथूरामशङ्करशर्मणः रचनासु रचनाचातुरी चाहित्यमयीभवति,? किं चित्रकरस्य श्रीमतो महावीरप्रसादद्विवेदिनः 'वाग्विलासे' चित्रत्ता न विलसति?

(ग) किं ललितकण्ठः श्रीमान् लाला भगवानदीन गुल्लेलालः (गुल्लेलाला) तत्र निजं गुल्लालकं (गुल्लाला इतितत्रपाठः) न विकासयति? किं काव्यविनोदस्य श्रीमतः पण्डितलोचनप्रसादपाण्डेयस्य वरवचनावली विविध-विनोदमयी न भवति? किं 'रामचरित चिन्तामणि' कारस्य श्रीमतः पण्डित रामचरितोपाध्यायस्य कृतौ चारु चरित्रचित्रणं न भवति? (क्रमशः)

# शोकाश्रुबिन्दवः।

लेo—शोकाकुलः-चन्द्रमणिःशास्त्री 'मधुरः' (मुलतान)

(श्री मान्ये भूतपूर्वे ओरियण्टलाऽध्यापके "कवितार्किक-जैनन्यायाचार्य" इत्यादिनाना-पदवी मण्डिते 'उद्योत' सम्पादके नृसिंहदेवे दिवं व्रजति)

हा कष्टं निजदेशमन्धतमसेनायोजयन् मृत्युना,
नाना पण्डितमण्डलीं विधुरयन् छात्रान् प्रियान् रोदयन्।

---

(क) भवन्तः प्रयागनिवासिनः सारस्वतब्राह्मणा आसन् सं० १९८५, भाद्रपदमासे सप्तति वर्षवयसि मसूरीपर्वते नश्वरं शरीरमत्यजन् 'ले०'

(ख) एते महानुभावा अपि नन्दवसुग्रहभू वर्षे (सं०१९८९) असारसंसार

(ग) साम्प्रतं भवन्तोऽपि भवेऽस्मिन् न सन्ति 'ले०'

सौख्याशान् सुहृदः सदा मलिनयन् भार्यै च हा! क्रन्दयन्,
छित्वादित्यसु-मण्डलं द्विजवरो देवो नृसिंहो गतः॥ १॥
श्रद्धेयो विबुधै स्तथा गुणयुतैः ध्येयश्च शिष्यै रयम्,
आधेयो परिषत्सु भाषणपरैः गेयस्सुमित्रैः सदा।
वन्द्यश्छात्रगणैः सुनम्रहृदयैः स्तुत्यश्च विज्ञै रहो-
सोऽयं याति दिवं क्षणे च भविता शून्या दिशा सर्वतः॥ २॥
सद्यः श्री शिवदत्त-पण्डितमणिः स्वर्गं गतो लोकतः,
तस्यैवाद्य हृदि व्रणो न मिलितः, स्फोटोऽपरः प्रस्फुटः।
किं किं भावि कथं? विचारयति भोः! चेतो विषण्णावृतम्।
सत्यं देवनृसिंह-मृत्युजनितं चित्ते सदा संशयः॥ ३॥
‡ वेदानां स्मरणात् पुराणकथनादाचार-रक्षायुत-
श्चालस्यादिविकारदोषरहितः शुद्धान्नपूर्णोदरः
मन्वाचार्यकृताऽऽर्यविप्रगुणिलोऽद्य ग्रस्यते मृत्युना
हा कष्टं वत! मृत्युराट् कटुतमाऽभुङ्क्था इमान् कष्टदः॥ ४॥
भवतु भवतु नामः, देव! 'चन्द्रस्य' नम्रः,
ददतु ददतु शूली शूलशान्तिं सदा ते।
भणतु भणतु वज्री स्वागत मग्रभावः,
मिलतु मिलतु सौम्यः गीर्पति र्हृष्टचित्तः॥ ५॥

---

# शिक्षा-समीक्षा।

[ ले०—महावीर-प्रसादजोशी, काव्यतीर्थः, डूण्डलोदाभिजनः ]

प्राचीनैर्वाचीनैश्च प्रायः सर्वैरेव शिक्षैव समुन्नति-साधनं स्वीक्रियते। किन्तु साम्प्रतं शिक्षितसमाज-दशा-विवेचनेन सा शिक्षाऽपि समुन्नति-प्रतीपैव प्रतीयते।

तथाहि-पुरा प्राक्कालिक-पवित्रता-प चिता शिशुक्षिता अति-सदयाश्शुचि हृदया श्शुभ समुदया धृतिनिलया धृत-सः ारहित-यम-नियम-नीतय स्स्वीकृत-निगमागम-रीतय॒ परिधौत-वासना-भीतय कृत-साधु-समाज प्रीतय॒ कैलाश-कमनीय-कीर्तयस्तेजस्वितास्फूर्ति-मय मूर्तयो भगवद्भक्ता॒ कल्याणानुरक्ता-

‡ अनभ्यासेन वेदानाम् आचारस्य च वर्जनात्, आलस्यादन्नदोषाच्च मृत्युर्विप्रा-ञ्जिघांसति। मनुः। कटुतमेति सम्बोधनम्।

शिवसंसक्ताः विषम-विषय-विरक्ताः प्रसिद्धाः सिद्धास्सुकृत-सन्नद्धा स्सात्त्विक-प्रकृतयो विस्मृतविकृतय स्संस्मरणीय-सुकृतय श्शान्ताकृतयोऽङ्गीकृत-सौजन्या मनीषि मूर्धन्या-धन्या-मान्या अविवेकान्ध-शून्या श्शास्त्रेष्वप्रतिहत-गतयो रचनारतय स्संशयेष्वविकल्पमतयो विश्व विख्याता यशोऽवदाता स्सकलकला-कलिता स्वधर्माद्वारेऽस्खलिता योगयुक्ता स्सम्मोह-मुक्ता-स्संसार सुव्यक्ताः पाण्डित्यप्रशस्ता विद्याभ्यस्ताः सगुणगरिमाग्रस्ताः पाठनेऽभ्यस्ता स्सुकृत-वृतिषु सिद्ध-हस्ता अबोभूयिषत।

तैनैव च भारतं पुरा सर्वथा भारती-विभारतं वाचस्पति-विभूषित-सुर-पुर-विभा-समानं वि-भासमान मासीत्।

तेषामेव शिक्षित-सार्थानां बुद्धि-विवेक-विमुग्धाः स्निग्धा वैदेशिका अपि शिष्यतामापद्येरन्।

साम्प्रतिका स्सभ्यतासंस्तुता-श्शिक्षिता नव-नय विन्यास-विलास-विमोहितान्तःकरणा, श्शास्त्रीयविषयेषु विशय (१) शरणाः पाश्चात्य-सभ्यता-शृंखला—निगडितचरणा लोचन-भूत-विवेकावरणा स्सर्पा इव पवन-सेवन-निरता म्लेच्छा इव वर्णाश्रमधर्म-विरताः किंशुका इव नीरसताश्रिताः अस्पृश्या इव अनधिकृत-देवप्रतिमा दर्शकताः काका इव कटु-रटन-पटवः कौशिका इव दोषैकप्रिय-दृश्याः कोकिला इव परभृता, मद्य-मत्ता इवानर्गलवचनै स्तिरस्कृत-शास्त्र-मताः शुका इव परवचोऽनुसारिणो बका इव कौटिल्य-परायणा स्स्वधर्मविन्मर्मविस्कर्म कुशला एव विभाल्यन्ते।

अहो! अल्पीयस्येव काले कियान् परीवर्तः प्रावर्तिष्ट! सत्यं क्षण-क्षण विलक्षणोऽयं समयः!!

यद्यपि परायत्तेऽस्मिन् भारतवर्षे साम्प्रतं बहवो विश्वविद्यालयामहा-विद्यालयाश्च संस्कृताङ्ल-हिन्दी-भाषा प्रसाराय-बद्धपरिकरा अक्षिलक्ष्यी भवन्ति। किन्त्वदसीय शिक्षादीक्षितेषु कियन्तो वस्तुतस्समुचितोच्चशिक्षां समासाद्य मानव जीवन-निर्वाहे प्रभवः प्रभवन्ति?

एवंविधां पूर्णता-वियुक्तां तत्त्व-सत्त्व-विमुक्तां-निस्सारताप्रयुक्तामपि शिक्षां जीविकार्थमश्नुवाना विद्यार्थि-सार्थाविहाय केवलां भूतेरनुसृतिं न हि कुह्चनाऽपि विषयेऽधिकारमेप्सा-क्षमा बोभूयन्ते!।

वस्तुतो हि परीक्षा-प्रवाह-दीक्षित शिक्षा-पद्धति-प्रसार-समुद्यता विश्व-विद्यालयादय स्सेवक-सृष्टि-समर्थानि यन्त्राण्येव सन्ति । यानि वास्तविक-शिक्षां ( यामवलम्ब्यमनुष्याः साक्षान्मनुष्यतामयुः ) प्रदातुं नितान्तमप-र्याप्तान्यपि शासन-सेवक-सृष्टौ परं पाटवं चञ्चुरति । येन तथा पम्फुल्यते सेवक-संख्या-भूयिष्ठता, यथा किलाधिक्य-सीमा बहिष्कृतान् लोचन-गोचरीचरीकरी-त्यधिकारिवर्गः ।

जीवन-निर्वाह-समस्या तु शनै श्शनै र्जटिलत्वमेव वावहन्ती चतुराणा-मपि चेतश्चिरं चाकचक्य-चमत्कृतं चर्कर्ति ? । का गणना भृति-मात्रमेव जीवन-साधनं मन्यमानानामाधुनिक शिक्षादीक्षितानाम् ?

तत्त्व-पर्यालोचनेन लोचनेन विवेचने तु पाश्चात्यशिक्षा-प्रसार एवैक-मात्रं कारणमभिमुखमररीति एवं विध-दुर्दशा-प्रासप्रसने । तथा हि पाश्चात्य-संस्कृति-सेवितास्ते भारतीयरीति-नीती विस्मर्यमाणाः सांसारिककार्य-क्षेत्रेऽविवेकिनो निरुत्साहाश्च वोभुवति तेन च परकीयभाषावलम्बिनां तेषां चेतसि न जाग्रति स्वावलम्बभावाः प्रत्युत भृति-शृङ्खला-निगडित मानसास्ते पराश्रयणमेव स्वसमुन्नतिं मन्यते । हन्त ! पराकाष्ठा पापानाम् । भारतीया निज-संस्कृतौ न क्षणमप्यक्षि निक्षिपन्ति । पाश्चात्य शिक्षा-पाश-ग्रस्ताः कण्ठस्थी कृत शेक्सपीअर- वर्ड्सवर्थ-ग्रन्थाः कालिदास भवभूति-भारवि-श्रीहर्ष बाण-दण्डि-त्रिविक्रमादीन् नाम्नापि न परिचिन्वन्ति । उच्यते च भारतीयभाषासु समुन्नतोच्च-शिक्षा-समुचिता न काऽपि वर्वर्ति । किमतः परं दौर्भाग्यम् ? किन्तु तथाऽपि क्षते क्षारनिक्षेपणमिवेदम्, यत् स्वाहाकृतसर्वस्वा मातुः श्रियो-ऽप्यलङ्कारान् बन्धकीकृत्य प्राप्तपदवीका अपि जीवन-जीवातु-भूतांभृति-विभू-तिमप्राप्य इतस्ततः आहिण्डमानाः परामशान्तिमधिगच्छन्ति । पाश्चात्य शिक्षाप्रणाली-पाथ-पतिना संस्कृतशिक्षाऽपि परीक्षा-परवशा तामेव दुर्दशां प्रापत् । तद्विज्ञा अपि शनै श्शनै स्तदेव दुःखं प्राप्नुवन्ति ।

यतो हि न साम्प्रतं विद्या-शिक्षणं संस्कृतविद्यालयेषु दरीदृश्यते, अपि शब्दशिक्षणमेव । तेन च न वास्तविकविवेकाधिगमः एवं च विद्यार्थिनः कथमिव कृतविद्यतां जाहर्येतु ?, इति निश्चप्रचं मतं सुमनसां सुमनसाम् । यथा हि मम सूक्तिशतके—

साम्प्रतिकी शिक्षेयं जनयतु किमिव जनेषु सद्विबोधम्
नाम्नाऽर्कोऽपि तरुः किं भुवनं किञ्चित प्रकाशितुमर्हः ॥
आचार्याणामधुना अनिरपि सफला भवेद्भृतिप्राप्तौ ।

चातक-न्प चतुरक्य मां तन निपान जलेऽपि लालसा हन्त ॥
अतिशय वेतन लाभो जनयति तेषां हि गौरवं चरमम् ॥
हन्त! कनक-पञ्जरकं सिंहः संमान-कारणं मनुते ॥"

भृति—प्रेप्सां परीक्षाफलोद्दिश्यैवाध्ययनेन क्व सर्वतन्त्र—स्वतन्त्रताध्यापकानां दरीदृश्यताम्। साम्प्रतमेकस्मिन्नेव विषये यदा न पारदृश्वानो भवन्ति अध्येतारस्तदा क्व चर्चा सर्वशास्त्रज्ञानस्य? हेतुरत्र शिक्षण-पद्धतिरेवादिलक्ष्यी भवति। पुरैकस्मिन्नेव गुरुकुले सर्वतन्त्र-स्वतन्त्रतां समधिगम्य यथेच्छं जीविका निर्वाहे प्रभुत्वं प्रपेदिरे।

विद्याशब्दविवेचने विद्धातुप्रसङ्गात् प्रथमं विद्सत्तायामित्येव अरी गृह्यते, अतश्च यस्यां अस्तित्व-मीमांसा 'सैव विद्या। इति विमर्शस्तेन 'ब्रह्म सत्यं जगन्मिथ्या' इत्यादि—शास्त्र प्रतीतौ ब्रह्मजगतोरस्तित्व विचारो विद्यापदेन संस्मर्यते। एतामेव विद्वांस आन्वीक्षिकीमुदीरयां चक्रिरे। यथा हि—

'आन्वीक्षिक्यात्मविद्या स्यात्'

किन्त्वेषां महता परिश्रम-क्लेशेनाप्यलौकिकं साक्षाद्द्वित्वं विवेचकत्वं च व्यावहर्तृभिर्महापुरुषैरेवाधिगम्यते।

पुनश्च—विद्वल्लाभे इत्यस्य समुपस्थितौ प्रेम्णा सज्जनान् दुर्जनांश्च वशीकृत्योपार्जनं स्वीक्रियते। दण्डनीतिनाम्नेयमुररी कृता बुधैः। एवमेव चतुष्टयेन मूर्खानपि विद्यावयन्तिस्म भारतीया विद्वांसः। तथाहि चतुर्विधां विद्यां प्रपद्य गुरुकुल एव सकलकलाकुशलतां कुन्दलयन्त स्ततो व्यधीवृतन प्राचकटंश्च लोके निज-विद्या-बुद्धि-वैभवम्।

किन्तु न जाने सा प्राचीना प्रगतिरेव क्व गता? सम्प्रति तु विद्यालयेषु न कतमोऽपि भेदोऽधिक्रियते विद्यार्थिभि र्विद्यायाः प्रत्यत दुर्व्यसनादिरेव।

एवं नाम-शेषतामुपसेदिवांसः शिक्षिताः सुधियां शान्तेऽपि स्वान्ते महत् खेदं मेदुरयन्त कस्य न शिक्षामर्मज्ञस्य मनसि व्यथामुत्पादयेयुः? कस्य न वा सहृदयस्य हृदये वेपथुं प्रथयेयुः?

अतो नात्रेदमसाम्प्रतं यत् परीक्षापिशाचिनी दूरी करणीया। पुनश्च प्राकालिकी पद्धतिरनुसरणीया, इति व्यवसितविनिवेदनीयो नाटकीयस्य वस्तुनः सूत्रधार इव पूर्वरङ्गप्रसङ्गं विधाय निवर्तये।

तस्य कारणतां निर्वक्ति।

चतुर्दशलोकप्राप्तिनिमित्तं तत् ॥ १२४ ॥

तत् पुण्य-पापात्मकं-द्वन्द्वं चतुर्दश च ते लोकाः चतुर्दशलोकाः तेषां प्राप्ति-रधिगतिः तस्या निमित्तं कारणमिति सूत्रार्थः।

चतुर्दशानां भुवनानां चतुर्दशलोकास्तदवान्तर्लोकाश्च सुखदुःखभोगमया एव सन्ति। भूलोकान्तर्गतपितृलोक प्रभृतयो य उपरितनाः षड्लोकाः सन्ति ते हि दैवसुखमयाः कथ्यन्ते। अधःस्थिताश्च सप्तलोका आसुरसुखमया अभिधीयन्ते। वस्तुत इमे लोकाः सर्वेऽपि सुखभोगायैव विद्यन्ते। केवलं तेषु सुखभोगस्य तारतम्यमेव गण्यते। मृत्युलोक एवैकः सुखदुःखोभयपरिपूर्णोऽस्ति। अतोहि कर्मभूमिशब्देनायमेव लोको गीयते गतागतचक्रस्य केन्द्रत्वेनापि अयमेव लोको महर्षिभिर्निरूपितोऽस्ति।

प्रेतलोको नरकलोकस्तदन्तर्गताश्चान्ये लोकाः सर्वेऽपि दुःखभोगस्थानतयो-च्यन्ते। इत्थञ्च पुण्यपापयोरेव चतुर्दशानामपि लोकानां प्राप्तिकारणत्वमाम-नन्ति। ये हि दैवसुखभोगिनो जीवाः पुण्यात्मानः सन्ति ते देवलोकं व्रजन्ति। ये चासुरसुखभोगिनो जीवास्तेऽधोगेषु असुरलोकेषु गच्छन्ति, ये च केवलं पापपरि-णाम-दुःखभोगिनः सन्ति ते च नरकादि-तिर्य्यग्-लोकेषु परिभ्रमन्ति। ये च कर्म-सञ्चयार्थमधिकमवसरं लभन्ते, पुण्यं पापञ्चोभयमपि भोक्तुमधिकारिणो भवन्ति ते हि मृत्युलोके जन्मासादयन्ति ॥ १२४ ॥

अन्यदप्याह—

जात्यायुर्भोगहेतुः ॥ १२५ ॥

तद्धि पुण्यपापात्मकं कर्म जातिश्चायुश्च भोगश्चेति ते त्रयस्तथोक्तास्तेषां हेतुः कारणं भवतीति सूत्रार्थः।

यथा चतुर्दश-भुवनप्राप्तिकारणं पुण्यपापात्मक-श्रेणिद्वयविभक्तं कर्म विद्यते तथैव जात्यायुर्भोगहेतुतयापि तदेवोच्यते। प्राक्तने हि प्रकरणे साधु निरूपितमस्ति यत् प्रारब्धसंस्कारेणैव जात्यायुर्भोगोपलब्धिर्भवतीति। जात्या-युर्भोगाधिकारेणैव पिण्डस्योत्पत्तिस्थितिप्रलया भवन्ति। अतश्च शुभाशुभभोग-मूलकं पुण्यपापात्मकं कर्म पिण्डकारणरूपस्य जात्यायुर्भोगस्यापि कारणतामा-व्रजति ॥ १२५ ॥

अन्यच्च—

चित्ताकाशकारणञ्च ॥ १२६ ॥

तदेव पुण्यपापात्मकं कर्म चित्ताकाशस्य जीवान्तःकरणावच्छिन्नाकाशस्य च पुनः कारणं हेतुरुच्यते इति सूत्रार्थः ।

त्रयो हि भेदा आकाशस्य निर्दिष्टाः, चित्ताकाशश्चिदाकाशो महाकाशश्चेति । जीवानां शरीरावच्छिन्नाकाशो हि चित्ताकाश उच्यते । समष्टिब्रह्माण्डाकाशश्चिदाकाशः कथ्यते । अनन्तकोटि-ब्रह्माण्ड-व्यापकाकाश एव महाकाशोऽभिधीयते । इह हि आकाश-शब्देन प्रथमतत्त्वरूपिण आकाशस्य न काऽपि सम्बन्धो ज्ञेयः । अयं हि देशात्मकोऽन्य एवाकाशो ज्ञेयः । यो हि संस्कारधारकेण कर्माशयेन सम्बध्नाति । चित्ताकाशचिदाकाशयोः पार्थक्यं वेत्तुमिदमिह ज्ञातव्यं विद्यते यत्, यदा हि एको मनुष्यः स्वीयां मननशक्तिं स्वशरीरावधिमेव नियमयति तदा तस्या मननशक्तेर्गतिः केवलं चित्ताकाशं यावदेव नियमिता तिष्ठति । यदा हि स मानवः साधको भूत्वा मनुष्यान्तरपिण्डान्तःकरणं संयमविषयीकृत्य किमपि कार्य्यमारभते । आहोस्वित् भक्तो भूत्वा स्वहृदयेशस्येष्टदेवस्य लोकावधिं स्वभावनाशक्तिं प्रापय्य तत्रैव स्वेष्टदेव-चरणकमलयोः किञ्चिन्निवेदयितुमिच्छति, अथवा योगी भूत्वा चतुर्दशभुवनान्यन्वेष्टुमिच्छति चेत्तदैव तस्य मानसिकी क्रिया चिदाकाशं कार्य्यं सम्पादयतीति विभावनीयम् । इदमेव चित्ताकाशचिदाकाशयोः रहस्यं विद्यते ।

महाकाशस्तु महाकालवदनादिरनन्तो विभुश्चोच्यते । एषामेवाकाशानां त्रयाणां पार्थक्यरहस्यमजानानाः केचन मतावलम्बिनो बह्वीषु भ्रमधारणासु पतन्ति । तथा हि—तेषां भ्रमविलासा एवं विशेयाः—स्थूलशरीरवत् सूक्ष्मशरीरमपि नश्वरमस्तीति । मनुष्यो हि पुनरण्डजादि-निम्नयोनिषु नैव गन्तुमर्हतीति । इत्येवंभूतानां भ्रमधारणानां समाहित्यै चित्ताकाशचिदाकाशयो रहस्यं सुस्पष्टतया विज्ञेयमस्ति । तथा हि—एकं पिण्डं यावत्तिष्ठति तावत्तस्य चित्ताकाशोऽपि स्थिरतयैव तिष्ठति । एकं ब्रह्माण्डं च यावत्तिष्ठति तावत् चिदाकाशोऽपि स्थिरतयैव विराजते । ब्रह्माण्डप्रलये सति केवलं महाकाश एव एकाकी तिष्ठति । यथा महाकालात्मकः शिवः सर्वमपि तत्त्वं स्वस्मिन्नेव प्रविलापयति । तथैव महाकाशात्मिका शिवापि सर्वमपि तत्त्वं स्वस्मिन्नेव प्रविलापयति ।

पिण्डं देवपिण्डं वा प्रापयन्ति । अतश्च नवीनाकृष्यमाणसंस्कारानुरूपं सूक्ष्मशरीरेऽवश्यं किमपि परिवर्तनं भवति । किन्तु यथा हि स्थूलशरीररूपिणः पिण्डस्य विनाशो भवति, न तथा सूक्ष्मशरीरस्येति नितरां स्मरणीयम् ।

सत्येवं कर्मसंस्कारवैचित्र्ये सूक्ष्मशरीरस्यापि विनाशो भवतीति मतं प्रमादमूलकमेव नात्र तथ्यगन्धोऽप्यस्ति । अन्यतश्च जात्यायुर्भोगोपयोगिनो नवीनाः संस्कारराशयो यदा चिदाकाशतश्चित्ताकाशे समाकृष्यन्ते । तेषां तत्र समाकर्षणमपि जीवानां केनापि प्रबलसंस्कारेणैव क्रियते । तत्र चिदाकाशे च सर्वश्रेणिगा अपि संस्कारा निवसन्ति । तदा पूर्णावयवस्य प्रबलस्य च संस्कारस्योत्पादने दक्षो मानवो महात्मना भरतेन तुल्यं मृगरूपं धृत्वा जन्मैकस्य कृते मृगपिण्डं धर्तुमवश्यं समर्थो भवितुमर्हतीत्यत्र कः सन्देहावसरः । ईदृशी हि अवनतिः क्षणिकैव भवति न स्थिरेत्यपि न विस्मरणीयम् । अस्य सूत्रस्येदमेव संक्षिप्तं तात्पर्यं विद्यते यत् पुण्यपापपरिणामदाः शुभाशुभसंस्काराः चित्ताकाशस्य नवीनत्वं सर्वदैव कुर्वन्तः सन्तीति ॥ १२६ ॥

प्रसङ्गतो मनुष्येतरयोनौ तदभावं दर्शयति—

नान्ये तदभावात् ॥ १२७ ॥

तस्य स्वातन्त्र्यस्य अभावात् अन्ये मनुष्येतरयोनिगा जीवा न पुण्यपापात्मककर्मसञ्चयनशक्तिमन्तो भवन्तीति सूत्रार्थः ।

मनुष्यतोऽधोगास्वुद्भिज्जस्वेदजादियोनिषु जीवानां कथं पारतन्त्र्यम्, कथञ्च तत्र पञ्चानां कोषाणां पूर्णताया अभावात् शक्तेरभाव इत्यादि वर्णितं पूर्वमेव । यदा हि मनुष्याधःस्थितयोनयोऽपूर्णावयवाः सन्ति, तासु च पूर्णावयवताया अभावात् शक्तेरप्यपूर्णता विद्यते । अतश्च पूर्णशक्तिशालिन्या मनुष्ययोन्या अधिकारस्तत्र योनिषु लब्धसत्ताक एव न भवितुमर्हति ।

यस्मै पदाधिकारार्पणं भवति तस्मै तत्पदोत्तरदायित्वमपि समर्प्यत एव । यत्र पदाधिकारो नास्ति तत्र पदोत्तरदायित्वमपि नास्ति । पूर्णावयेषु मानवेषु देवताप्रभृतिषु च धर्मेणोर्ध्वगतिरधर्मेणाधोगतिश्च भवति । अर्थतः पुण्येन सुखोपलब्धेः पापेन दुःखप्राप्तेश्च दायित्वं तिष्ठति । परन्तु उद्भिज्जादिचतुर्विधभूतसंघेषु पराधीनताया असम्पूर्णतायाश्च सत्त्वात् तत्र तद्विधोत्तरदायित्वशक्तेरभावात् तत्र पुण्यपापसम्बन्धोऽपि न तिष्ठति । तद्योनिगा जीवाः स्वकर्मणां नोत्तरदायिनो भवन्ति । यतो हि ते कर्मकरणेऽस्वतन्त्राः सन्ति ।

यदि कश्चन जिज्ञासुरेवमाशङ्केत यत् चतुर्विधेष्वपि भूतसंघेषु चित्ताकाशस्य कोऽपि सम्बन्धोऽस्ति न वा ? अस्ति चेत्कथञ्च तत्र सदसत्संस्कारसंग्रहः ?

यदि च तेषु न संस्कारसंग्रहस्तदा कथं तेषां जीवत्वसिद्धिः सम्भवति ? यदि च तेषु जीवत्वन्नास्ति तदा कथं योगिगणाः संयमद्वारया तेषु स्वेच्छासञ्चालनं कुर्वन्ति ? कथं वा पशूनां महात्मगणसान्निध्ये स्वसहज-वैरत्याग-सम्भवः ? इत्यादिशङ्कोद्रेके समाधानमाह—चतुर्विधेषु भूतसंघेषु चित्ताकाशविकाशस्त्ववश्यमस्ति । यतो हि यत्र चिज्जडग्रन्थिबन्धो जायते तत्राकाशविच्छेदस्तु भवत्येव । चिज्जडग्रन्थिबन्धादेव तु चित्ताकाश-विकाशो जायते । परन्तु तेषां जीवानामपूर्णतया तत्र चित्ताकाशशक्तेरप्यपूर्णतैव तिष्ठति । अत एव ते स्मृत्यादिक्षणिक-संस्कारानेव केवलं धारयितुं समर्था भवन्ति । पुण्यपापात्मककर्मसंग्राहकान् अदृष्टफलोत्पादकांश्च संस्कारान् संग्रहीतुं ते जीवाः सर्वथा असमर्था एव भवन्ति । ते केवलं सहजकर्मणां स्वाभाविक संस्काराणाञ्चाधीनाः सन्तः क्रमाभ्युदयमेवासादयन्ति । अत एव तेषां पिण्डमपि सहजापिण्डशब्देनैवाख्यायते ॥ १२७ ॥

प्रसङ्गसङ्गतिसङ्गतान् कोषाञ्चिर्वक्ति—

**कोषाः पञ्च ॥ १२८ ॥**

कोषा आवरणानि जीवानामिति शेषः पञ्च पञ्चसंख्यका भवन्तीति सूत्रार्थः ।

पञ्चानां कोषाणामवलम्बनेनैव जीवाः कर्म कुर्वन्ति । पञ्चानां कोषाणां सम्बन्धेनैव जीवानां जीवत्वम्, पञ्चानांकोषाणां पूर्णतयैव जीवानां पूर्णत्वमप्युच्यते । अतश्च पञ्चानां कोषाणामुल्लेखः क्रियते । स्मृतिशास्त्रेष्वपि पञ्चकोषविषये वर्णनमुपलभ्यते ।

एतदेवास्ति वेदेषु वर्णितञ्च क्वचित् क्वचित् ।
पञ्चकोषाभिधानेन देवा ! आवरणं ननु ॥
पञ्चभ्यः स्थूलभूतेभ्यः कोषो ह्यन्नमयो भवेत् ।
कोषादन्नमयादेव स्थूलमुत्पद्यते वपुः ॥
केवलाऽन्नमयः कोषः पतेन्मृत्युक्षणे सुराः ! ।
कोषस्यान्नमयस्यैव निगद्य परिवर्त्तनम् ॥
अज्ञास्तं जीववर्गस्य मृत्युमाहुर्विनाशकम् ।
मिलिताः पञ्चप्राणा ये सूक्ष्मशक्तिस्वरूपिणः ॥
पञ्चकर्मेन्द्रियैः सार्द्धं कोषः प्राणमयो भवेत् ।
असावेव सुपर्वाणः कोषः प्राणमयो महान् ॥
युष्माकं खलु लोकस्य सम्बन्धं मृत्युलोकतः ।
अवस्थापयते नूनं द्वयोर्हि स्थूलसूक्ष्मयोः ॥

मिलित्वा मनसा सार्धं पञ्चज्ञानेन्द्रियाण्यहो।
नाम्ना मनोमयं कोषं जनयन्तेतरां सुराः॥
स्याद्विज्ञानमयः कोषो बुद्धिर्ज्ञानेन्द्रियैः समम्।
देवाः! मनोमयः कोषः कोषः प्राणमयस्तथा॥
विज्ञानमयकोषोऽपि सम्भूयैतत्त्रयं सह।
शरीरं प्राणिनां सूक्ष्मं समुत्पादयतेतराम्॥
शरीरं सूक्ष्ममेवाहो दशामेत्यातिवाहिकीम्।
अखिलोकान्तरं सर्वं शक्नुयाद्भ्रमितुं सुराः॥
कारणाख्यवपुर्भूताऽविद्यायां तन्ववस्थितः।
प्रियमोदप्रमोदैर्हि भावैरेभिः समन्वितः॥
आत्मस्वरूपावरको देवाः! मलिनसत्त्वकः।
नाम्नाऽऽनन्दमयः कोषः कथ्यते वेदपारगैः॥ १२८॥

---

चतुर्विधभूतसंघेषु परस्परसम्बन्धं परिचाययति—

**अन्नमयप्राणमयौ स्वेदजे तस्मादुद्भिज्जननार्हत्वम्॥ १२९॥**

अन्नानां प्राचुर्यम् अन्नमयः प्राणानां प्राचुर्यम् प्राणमयः। अन्नमयश्च प्राणमयश्चेति तौ तथोक्तौ कोषौ स्वेदाज्जायत इति स्वेदजो जीवः, तस्मिन् विकशिताविति शेषः। तस्माद्धेतोः उद्भिदो जननमुत्पादनम् तस्य अर्हत्वम् योग्यता स्वेदजेऽस्तीति सूत्रार्थः।

उद्भिज्जश्रेणिगजीवेषु यद्यपि पञ्चापि कोषाः सन्ति। यतो हि विना पञ्चकोशसत्ताम् जीवत्वमेव न सिध्यति। किन्तु तत्र केवलमन्नमयकोषस्यैव स्फुटं विकाशो विद्यतेऽन्ये च कोशास्तत्र गौणतया विलीना एव तिष्ठन्ति। तथैव स्वेदजेऽपि जीवे अन्नमयप्राणमययोः कोशयोर्विकाशस्तिष्ठति। अवशिष्टास्तु त्रयः कोषा अनुद्बुद्धा एव तिष्ठन्ति। पूर्वमेव वर्णनमस्य विस्तराद्विहितं विद्यते।

स्वेदजेऽन्नमयकोषस्यापि पूर्णतया विकाशादेव तत्रोद्भिज्जत्वस्यापि कुत्रचिल्लक्षणं दृष्टिगोचरीभवति। कदाचित् कश्चित्स्वेदजो जीव एवमवलोक्यते यस्यार्धाङ्गे उद्भिज्जत्वमर्धाङ्गे स्वेदजत्वं विराजत इति। वस्तुतस्तु तत्र जीवद्वयमेव तिष्ठति। उद्भिज्जेऽपि जीवे उद्भिज्जीवस्योत्पत्तिः क्वचन दृश्यते परद्रुमप्रभृतिषु। तत्कथमिति प्रश्ने समाधत्ते—परद्रुमो हि एकोऽपरः स्वतन्त्र उद्भिज्जीवो विद्यते। यश्च पक्षिभ्रमरादिभिर्बीजात्मना समानीतो कोटरादिषु पतितो मृज्जलसम्पर्कमासाद्याङ्कुरतो वर्द्धते। न तु स तत एव वृक्षादुत्पद्यते। तस्य तु बीजान्तरादेवोत्पत्तिर्भवति। स्वेदजेऽपि यल्लक्षणद्वयमुपलभ्यते तत्र

स्वातन्त्र्येण जीवद्वयमेवास्तीति योगदृष्टिद्रष्टृयोऽयं विषयः । कुत्रचन सूक्ष्मयन्त्र-साहाय्येनापि द्रष्टुम्पार्य्येत एव ॥ १२६ ॥

अन्यच्च

त्रयोऽण्डजे तस्मात्ततः स्वेदजोद्भिज्जौ ॥ १३० ॥

अण्डाज्जात इति अण्डजः पक्ष्यादिस्तत्र त्रयोऽन्नमयप्राणमयमनोमयाः प्रस्फुटा भवन्ति । तस्मादेव कारणात् ततोऽण्डजात् स्वेदाज्जायत इति स्वेदजः । उद् ऊर्ध्वं भेदनं भिद् ततो जायत इति उद्भिज्जः स्वेदजश्चोद्भिज्जश्चेति तौ तथोक्तौ उत्पत्तिमर्हत इति सूत्रार्थः ।

अण्डजश्रेणिगेषु जीवेषु अन्नमय-प्राणमय-मनोमयानां त्रयाणामपि कोषाणां विकाशस्तिष्ठति । अवशिष्टौ द्वौ तु गौणतया तिरोहितौ तिष्ठत इति विस्तरेण निरूपितमन्यत्र । इत्यत एवाण्डजजीव-शरीरेषु कचनोद्भिज्जस्वेदजौ जीवौ कदाचित्समुत्पन्नौ दृष्टिगोचरौ भवतः । यदा हि उत्तरोत्तरमुन्नतिप्रदानां त्रयाणामपि कोषाणां यस्मिन्देहे पूर्णत्वं विद्यते तत्र प्राक्तनयोरुभयोः कोशयो विकाश-शालिनो जीवयोरुत्पत्ति र्युक्तिसङ्गतैव विद्यते ।

यदि कश्चिच्छङ्केत यत् स्वेदजा जीवाः प्रायो दर्शनेन्द्रियागोचरा एव भवन्तीति तेषां तत्र विद्यमानतायां सत्यामपि अप्रत्यक्षत्वं सम्भाव्यते । परन्तु उद्भिज्जश्रेणिगा जीवास्तु दृष्टिगोचरा अपि भवन्ति । अतस्तेषां तत्राल्पकाये क्षुद्रेऽण्डजे जीवे कथमुत्पत्तिसम्भव इति ? तत्रोत्तरयति—उद्भिज्जा अपि बहवो जीवा ईदृशाः सन्ति ये आपाततो नैव दृष्टिगोचरी भवन्ति । यथा हि यत्र प्रदेशे मलोद्गमो भवति तत्र प्रथमं किमपि नैव दृश्यते, परन्तु तत्र निम्नश्रेणिग उद्भिज्जो जीवः समुत्पन्नस्तिष्ठत्येवेति निर्विवादसिद्धम् । यतो हि कियता कालेनैव तत्रो-द्भिज्जीवाः प्रत्यक्षीभवन्ति । तद्वदेव बहवो निम्नश्रेणिगा उद्भिज्जा जीवा अति-सूक्ष्मा भवन्ति । येऽन्यदेहेऽपि समुत्पत्तुमर्हन्ति । अतश्चाण्डजे काये उद्भिज्ज-स्वेदजयोर्जीवयोः समुत्पत्तौ न कोऽपि युक्तिविरोधः शङ्कनीयः ॥ १३० ॥

अन्यदप्याह—

चत्वारो जरायुजे ततोऽण्डजस्वेदजोद्भिज्जाः ॥ १३१ ॥

जरायुजे जीवे चत्वारोऽपि अन्नमय-प्राणमय-मनोमय-विज्ञानमयाः कोशा विकशितास्तिष्ठन्ति । ततस्तस्माद्धेतोस्तत्राण्डजश्च स्वेदजश्चोद्भिज्जश्चेति तथो-क्तास्त्रयोऽपि जीवाः समुत्पादमासादयन्तीति सूत्रार्थः ।

जरायुजश्रेणिगेषु जीवेषु अन्नमय-प्राणमय-मनोमय-विज्ञानमयानां चतु-र्णामपि कोशानां पूर्णो विकाशस्तिष्ठति । आनन्दमयकोशस्तु गौणतया तिरोहित

एव तिष्ठतीति वर्णितं प्रागेव। इह चान्येषामुत्तरोत्तरमुन्नतानां चतुर्णां कोषाणां विकाशादूर्ध्वतो जरायुजश्रेणिगे जीवदेहे स्वेदजोद्भिज्जाण्डजानां त्रिविधानां जीवानामाश्रयो न युक्तिविरुद्धो विभाति॥ १३१॥

सम्प्रति मानवशरीरमधिकृत्य ब्रूते—

सर्वप्राणिप्रसवो मानवः पूर्णत्वात्॥ १३२॥

मानवो मनुष्यकायः पूर्णत्वात् सर्वकोशविकाशपूर्णतया प्रसूते इति प्रसवः (कर्तरि अच् बाहुलकात्) सर्वेषां प्राणिनां प्रसव उत्पादक इति सूत्रार्थः।

मनुष्यपिण्डं पूर्णं विद्यते सर्वशरीरश्रेष्ठमप्यस्ति। अतश्च तद्वैशिष्ट्यं वर्णयितुं प्रक्रमते। मनुष्यकायेऽन्ये सर्वेऽपि जीवाः स्वाश्रयमधिगन्तुमर्हन्ति। मनुष्यशरीरे बहिर्भागे दद्रुप्रभृति-रोगरूपेणोद्भिज्जानां जीवानामुत्पत्तिः। उपरि चर्मणि अन्तश्च रक्तप्रभृति-धातुषु बहूनां रोगप्रदानां रोगिणाञ्च स्वेदज-जीवानां समुत्पत्ति र्भवति। बहिर्लोमकूपेषु अन्तरपि मूत्रादिमलेषु चाण्ड-जादिजीवानां सृष्टिर्भवति। जरायुजानान्तु पूर्णापूर्णायाः सर्वस्या अपि सृष्टे र्मानवपिण्डन्तु निधानमेवास्तीत्यत्र किं वक्तव्यम्।

दूषितेन मनसा मानवपिण्डाश्रयेण मलिनेभ्योऽपि मलिनतराणां सर्गाणां सम्भवः। संयतेन मनसा तु उन्नतेभ्योऽप्युन्नततराणां सृष्टिवर्गाणां सम्भवो विद्यते। पञ्चकोषपूर्णतया च ज्ञानानन्दयोः पूर्णोपलब्धिर्मानवपिण्डेष्वेव सम्भाव्यते। स्व-धारणायाः पूर्णतया मानवः पशुरपि भवितुमर्हति देवत्वमपि लब्धुं शक्नोतीत्यादय एव मानवपूर्णताया विशेषा विज्ञयाः॥ १३२॥

कोषपञ्चकपूर्णस्य मानवस्य वैशिष्ट्यान्तरमाह—

पिण्डेश्वरोऽसौ॥ १३३॥

असौ मानवपिण्डाश्रितो जीवः पिण्डस्य ईश्वरः स्वामी कथ्यते।

उद्भिज्जादि-सहजपिण्डाश्रिता जीवाः कदापि पिण्डेश्वरपदभाजो नैव भवितुमर्हन्ति। यतोहि तेऽसम्पूर्णा भवन्ति। तेषु क्रमशः एकैकशः कोषाणां विकाशो भवति। एतच्च पूर्वप्रकरणतः साधु प्रपञ्चितम्। यद्यपि तेषु पञ्चापि कोषा विद्यन्ते, जीवमात्रे कोषपञ्चकस्य सर्वेन्द्रियाणाञ्च सत्तायाः स्वीकृतेः। परन्तु पूर्वोक्तदिशा तेषु कोषतारतम्यस्य विकाशक्रमाङ्गीकारेणाऽसम्पूर्णताया अवश्यसत्त्वात् तेऽसम्पूर्णपिण्डाधिकारित्वेन स्व-स्वपिण्डेश्वरत्वं लब्धुं नैव शक्नुवन्ति। मानवपिण्डस्य सर्वथा पूर्णतया तदाश्रितो जीवोऽवश्यं स्वपिण्डे-श्वरो भवितुमर्हति। विशेषतो मनुष्यत्वादेव देवत्वादिकमाश्रयन्ति। मनुष्य-

जैमिनीयन्यायमालाविस्तरो माधवापराभिधैः श्रीविद्यारण्यमहोदयैः कृतः सम्प्रति विद्वत्सु समादृतोऽध्ययनाध्यापने विद्यते ।

अत्र दर्शने जीवो नित्यः कर्ता च । कर्मैव जीवस्य भोगमोक्षयोः प्रदातृ । तदेव ब्रह्मस्थानीयमस्मिन् दर्शने । ईश्वरस्यापि प्रयोजनं नाङ्गीक्रियते पूर्वमीमांसकैः कर्मणैव फलदात्रा सर्वमपि स्वकृत्यं निरुह्यते । नैयायिकपदार्थेभ्योऽतिरिक्ता विशेषविरहिताः शक्तिसादृश्यादयोऽपि पदार्था एभिः स्वीक्रियन्ते । एतेषां प्रामाण्यन्तु पूर्वमेवोक्तम् । प्रत्यक्षानुमानोपमानागमार्थापत्तय इति पञ्चप्राभाकराणां मते । अभावेनैकेनाधिकेन सह षट् भाट्टानां मते प्रमाणानि । प्रमेयाणि नाम्नेमानि ज्ञेयानि—

द्रव्यम्, गुणः, कर्म, सामान्यम्, शक्तिः, सादृश्यम्, समवायः, संख्येत्यष्टौ पदार्थाः । वैशेषिकवन्नव द्रव्याणि । संख्यासादृश्यरहिताः सर्वेऽपि गुणास्तथैव । कर्म सूक्ष्ममतीन्द्रियम् संयोगविभागाभ्यामनुमेयम् अनित्यं सर्वम् तद्वदेव । सामान्यमपि तद्वदेव । शक्तिः सर्वगाऽनेका, सादृश्यमनेकं सर्वगं, समवायोऽप्येकोऽमित्यश्च प्रत्यक्षगोचर इति वैशिष्ट्यमस्य वैशेषिकाज्ज्ञेयम् । प्राभाकरमतमेतत् । भट्टमते तु किञ्चिद्वैशिष्ट्यमितोऽपि विद्यत इति विस्तरभयान्नोच्यते ।

वेदार्थानां धर्मशास्त्रार्थज्ञाने महोपयोगिनोऽपि सर्वथैवेदानीमस्य शास्त्रस्याध्ययनाध्यापनं शिथिलं दृश्यते । परन्तु भारतीयसंस्कृतिसमेधनाभिलाषिणामत्र विषयेऽवश्यमवधानीयं विद्यते । दर्शनमिदं कर्मप्रधानमुद्योगमेव सर्वाभ्युदयनिःश्रेयसप्रदमामनुते । मुक्तिरप्येतस्य मते नित्यसुखाप्तिरेव । वेदवाक्यार्थज्ञानमप्येतदध्ययनत एव स्फुटीभवति—

"आत्मख्यातिरसत्ख्यातिरख्यातिः ख्यातिरन्यथा ।
तथाऽनिर्वचनख्यातिरित्येतत्ख्यातिपञ्चकम्" ।

स्युक्तमेवेति विरमामो विस्तरात् । वेदान्तार्थजिज्ञासुभिस्तु मीमांसायाः प्राथमिकमपि पुस्तकमवश्यमध्येयन्नो चेन्नैव भविष्यति तदर्थावगतिरिति हितमभिदध्मः ।

## उत्तरमीमांसा ( वेदान्तशास्त्रम् )

पूर्वमेवोक्तम् यत् वेदस्य कर्मोपासनाज्ञानभेदेन काण्डत्रयम् विद्यते । तत्र ज्ञानकाण्डीय-श्रुतीनामर्थमीमांसया सृष्टिप्रलयादिप्रतिपादनद्वारा जीवानां सर्वथाऽभ्युदयकमप्रदर्शनेनात्यन्तिकमोक्षप्रतिपादनमस्य दर्शनस्य प्रधानं कर्तव्यम् ।

वेदान्त-शब्दार्थस्तु वेदानामन्तः सिद्धान्तो यत्र स वेदान्तः । यद्वा वेदानां ज्ञानानामन्तश्चरमोऽवधिर्ब्रह्मविद्या उपनिषदुच्यते । तत्प्रतिपादकत्वादुपनिषद्ग्रन्थो बादरायणसूत्रं गीता चापि वेदान्त-शब्देनैवाभिधीयते । उक्तञ्च सदानन्देन यतिना 'वेदान्तो नामोपनिषत्प्रमाणं तदुपकारीणि शारीरक-सूत्रादीनि चेति' । अत एवोपनिषद्-गीता-वेदान्तसूत्राणां त्रयाणामपि प्रस्थानत्रयशब्देनाभिधानम् प्रसिद्धम् ।

अस्य दर्शनस्य संस्कृतवाङ्मये महानादरो विद्यते । सर्वाण्यपि दर्शनानि अत्रैव परिसमाप्यन्ते । अन्यानि तु दर्शनानि आनुमानिकान्येव कथ्यन्ते । श्रौतदर्शनन्तु इदमेवात्मानमुद्घोषयितुमर्हति । वस्तुतोऽत्र श्रुतिकुसुमान्येव बादरायणेन मुनिना स्वसूत्रे निबद्धानीत्यन्वर्थं नामैवास्य श्रौतदर्शनमिति ।

भगवान् वेदव्यासो वेदान् चतुर्द्धा विभज्य पैलप्रभृतीन् चतुरः स्वशिष्यान् ग्राहयामासेति प्रसिद्धिः ।

> तत्रर्ग्वेदधरः पैलः सामगो जैमिनिर्मुनिः ।
> वैशम्पायन एवैको निष्णातो यजुषामुत ॥
> अथर्वाङ्गिरसामासीत्सुमन्तु र्दारुणो मुनिः ।
> इतिहासपुराणानां पिता मे रोमहर्षणः ॥ ( इति सूतोक्तिः )

एवं सर्ववेदार्थ-तत्त्वज्ञः श्रीमहर्षि वेदव्यासः वेदार्थं निर्मथ्य तदीयसारभूतं ज्ञानं ब्रह्मसूत्रापराभिधे वेदान्तशास्त्रे जग्रन्थ । यस्यादिम सूत्रं "अथातो ब्रह्मजिज्ञासा" इति अन्तिमञ्च "अनावृत्तिः शब्दात्" इति । अत्र चत्वारोऽध्यायाः प्रत्यध्यायं चत्वारः पादाः सन्ति । जीवब्रह्मैकत्वहेतुमननोपयोगिनो न्यायान् विवृण्वता वेदव्यासेन इहैव वेदस्य भगवतोऽन्तः सिद्धान्तः साररूपो निहितो विद्यते । यत्र तर्कपादे सर्वेषामपि तर्कशास्त्राणामवसानमेव भवति ।

अस्यैव ब्रह्मसूत्रस्य व्याख्याने पदवाक्यप्रमाणज्ञ स्तार्किकशिरोमणि र्जगद्गुरुः श्रीमदादि-शङ्कराचार्य्योऽद्वैतपरं शारीरकभाष्यं प्रणिनाय, यस्य च व्याख्यानोपव्याख्यान-रूपेण शतशो ग्रन्थान् पद्मपादाचार्य्य-सुरेश्वराचार्य्य-सर्वज्ञात्ममुनि-प्रकाशात्माचार्य्याद्वैतानन्द-चित्सुखाचार्य्य-भारतीतीर्थ-विद्यारण्यानन्दज्ञान-गोविन्दानन्दामलानन्द-प्रकाशानन्द-नृसिंहसरस्वती-रामतीर्थाखण्डानन्द-मधुसूदन-ब्रह्मानन्दप्रभृतयः संन्यासिनोऽमला स्तत्शिष्यपरम्परानुगता जग्रन्थुः। येनाद्वैतसम्प्रदायवटवृक्षोऽधुना शाखाप्रशाखाप्ररोहमण्डलेन व्याप्तभुवनाण्डमण्डलः सर्वमेव मनीषिमण्डलं स्वच्छायायां विश्रामयति। ब्रह्मसूत्रस्य व्याख्यातारोऽन्येऽपि सम्प्रदायान्तरप्रवर्तका बहव आचार्य्याः सन्ति। तथाहि रामानुजाचार्य्याः, माध्वाचार्य्याः, श्रीकण्ठाचार्य्याः, भास्कराचार्य्याः, निम्बार्काचार्य्याः, वल्लभाचार्य्याः, गौड़ीयवैष्णवेषु बलदेवविद्याभूषणप्रभृतयो येषां संक्षेपेणैव मतमवसाने वक्ष्यामः।

सम्प्रति अद्वैतसम्प्रदायमतं संक्षिप्यते। तत्र व्यवहारेऽस्माकं भाट्टसिद्धान्त इति नियमात् पूर्वमीमांसासाम्यमेव प्रमाणादिपदार्थे। परन्तु तत्र विषयेभेदस्स एवाधुनोच्यते। अद्वैतमेकं ब्रह्मैव तत्त्वम् तस्यैवेदं जगत् विवर्तो विद्यते, इति विवर्तवादोऽस्य दर्शनस्याभिप्रेतः।

"इन्द्रो मायाभिः पुरुरूप ईयते"

इति मायायाः सत्त्वासत्त्वाभ्यामनिर्वचनीयाया विलासेन।

"आसित् अवातम् स्वधया तदेकम्, तस्माद्ध अन्यन्न परः किञ्चनास।

"एकं सद्विप्रा बहुधा वदन्ति।"

"एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन"।

इत्यादि श्रुति प्रगीतमेकमेव तत्त्वं बहुधा विवर्तते॥

"एकोऽहं बहु स्याम्" "तदैक्षत बहुस्यां प्रजायेय"

इत्यादयो बहवः श्रुतयोऽत्र प्रमाणत्वेनोपन्यस्ता अद्वैततत्त्वप्रतिपादकैराचार्यैः।

अनिर्वाच्याऽविद्याद्वितयसचिवस्य प्रभवतो।
विवर्ता यस्यैवं वियदनिल-तेजोऽबवनयः॥
यतश्चाभूद्विश्वं चरमचरमुच्चावचमिदं।
नमामस्तद्ब्रह्मापरिमितसुखज्ञानममृतम्॥

इति मनाक् सर्वमेवाद्वैतसम्प्रदायसिद्धान्तं भामत्यां श्रीवाचस्पतिमिश्राः

"तस्मादात्मन आकाशः सम्भूत आकाशाद्वायुर्वायोरग्निरग्नेरापोऽद्भ्यः पृथिवी पृथिव्या ओषधय ओषधिभ्योऽन्नम् ततः प्रजाः।" इति संक्षिप्तं क्रममप्युज्जगौ।

अत्र संक्षिप्त-कलेवरे लेखेऽद्वैत-तत्त्वानां संक्षेपतोऽपि प्रतिपादनं नैव सम्भवतीति तद्द् दिदृक्षुभिः 'पञ्चदशी' नाम्नि ग्रन्थे प्रमेयाणां, वेदान्तपरिभाषायाञ्च प्रमाणानां विशदं व्याख्यानं द्रष्टव्यम्। मनागिहान्य-दर्शन-विलक्षण-ब्रह्मेश्वर-जीवजगदादि-स्वरूपमेव प्रतिपाद्य विरमामः। इहाद्वैतनये निर्गुणं निर्विशेषं सर्वोपाधि-विरहितं नित्यशुद्ध-बुद्धमुक्त-स्वरूपम् अद्वितीयमेव ब्रह्म गीयते।

"यतो वाचो निवर्तन्तेऽप्राप्य मनसा सह" इति अवाङ्मनसगोचरं तदुच्यते। नेति नेति जगद् व्यावृत्त्यैव तत् सिद्धिमामनन्ति।

मायोपाधिना सम्बलितं तदेव ब्रह्मेश्वर-शब्दभाग् भवति। ततश्च तां मायां निजां शक्तिं वशीकृत्य जगन्निर्माति, इति निमित्त-कारणमुपादानकारणञ्चोभयमपि तदेवोच्यते। इत्यभिन्ननिमित्तोपादान-कारण-वादोऽद्वैतिनाम्। स हि तयोपहितः सर्वज्ञः सर्वशक्तिमानीश्वर उच्यते। ब्रह्मेश्वरयोर्भेदस्तु औपाधिक एव वस्तुतस्तूभावप्यभिन्नौ। तथैव जीवोऽपि विभुः शुद्धश्चेतनश्चाविद्योपाधिको भवति। वस्तुतस्तु सोऽपि ब्रह्माभिन्न एव। अविद्याव्यपगमे 'निरञ्जनः परमं साम्यमुपैतीत्यादि श्रुत्या प्रतिपादितं स्वीयं रूपमेव शुद्धबुद्ध-स्वरूपात्मकं विन्दति। इच्छा-धी-ह्री प्रभृतयो वृत्तयो मनसो धर्माः। जगदपि व्यावहारिक-तयैव सत्तात्मकं विद्यते। परमार्थसत्ता तु तस्यापि नास्त्येव। एकं ब्रह्मैव परमार्थसद्विद्यते। अपरेषां सर्वेषामेव घटपटादीनां व्यावहारिकी सत्ता। शुक्तौ रजतप्रभृतीनां प्रातिभासिकी सत्ता। आकाश पुष्पादीनां तुच्छसत्तेति सत्ताचतुष्टयमेषां नये विद्यते। इह नये प्रधानस्य सांख्यवत् स्वातन्त्र्यं नास्ति। ईश्वराधीनमेव तदुच्यते। जीवस्य बन्धोऽपि काल्पनिक एवेत्यादि साधु समाहितं कैश्चित्—

यथा हि शबरादिभि र्बाल्यात् स्वसुतैः सह वर्द्धितः कश्चिद्राजपुत्रस्तज्जातीयमात्मानमवगच्छन् बन्धुभि र्यं एवम्भूतो राजा स त्वमसि इति बोधिते स्वरूपे लब्धस्वरूप एव भवति। तथैव वेश्यास्थानीययाऽनाद्यविद्यया स्वभावान्तरं नीत आत्मा मातृस्थानीयया तत्त्वमसीत्यादिकया श्रुत्या स्वभावमारोप्यते। एतदेव पद्येनोच्यते—

नीचानां वसतौ तदीयतनयैः सार्धं चिरं वर्धित—
स्तज्जातीयमवैति राजतनयः स्वात्मानमप्यञ्जसा।

संवादे महदादिभिः सह वसंस्तद्वद्भवेत्पूरुषः
स्वात्मानं सुखदुःख-जाल-कलितं मिथ्यैव विद्भ्मन्यते ॥
दाता भोगपरः समग्रविभवो यः शासिता दुष्कृताम्
राजन् स त्वमसीति रक्षितृमुखाच्छ्रुत्वा यथावत्स तु ।
राजीभूय यथार्थमेव यतते तद्वत्पुमान् बोधितः
श्रुत्वा तत्त्वमसीत्यपास्य दुरितं ब्रह्मैव सम्पद्यते ।
स्वाज्ञान-कल्पित-जगत्परमेश्वरत्व—
जीवत्व-भेद-कलुषीकृत-भूमभावा ।
स्वाभाविक-स्वमहिम-स्थितिरस्तदोषा
प्रत्यक्चितिर्विजयते भुवनैकयोनिः ॥ इति ॥

रामानुजाचार्य्याणां वैष्णवो विशिष्टाद्वैतवादः, माध्वाचार्य्याणां द्वैतवादः, श्रीकण्ठस्य शैवो विशिष्टाद्वैतवादः, भास्कराचार्य्यस्य भेदाभेदवादः, निम्बार्काचार्य्यस्य द्वैताद्वैतवादः, वल्लभाचार्य्यस्य शुद्धाद्वैतवादः ( शुद्धाद्वैत-शब्दार्हः ) चैतन्यदेवस्याचिन्त्यभेदाभेदवादः, इत्यादयो वादाः ; सत्यवसरे कदाचिद् विस्तरशोऽपि विवेचिता भविष्यन्तीति विरम्यते विस्तराद् ।

---

## महाव्रतं तपस्विनः ।

सारन् ( छपरा )-मण्डलीयमहाराजगंजनाम्नि नगरे एकः संस्कृत-विद्यालयः सुप्रतिष्ठितो विद्यते। ततः संस्कृताध्यापन-धर्मप्रचारादिना प्रान्तजनानां धर्मसंस्थापनादि परोपकारकार्य्यं सुदृढं क्रियत इति नास्ति विदुषां समाचारपाठकानामविदितम् । अथस्वे तस्य विद्यालयस्य तदन्तर्गतापराणामपि संस्थानां धनाभावाद् दीनां दशां विलोक्य तत्रत्यो महात्मा परोपकारैकजीवनः श्रीकर्मदेव-स्वामी भीष्मप्रतिज्ञामारूढवानस्ति यद् "यावत् रूप्यकाणां पञ्चविंशति-सहस्रं आसां संस्थानां स्थायिकोशे संस्थापितं न भविष्यति तावदहं रात्रौ भोजनं शयनञ्च नैव करिष्यामीति । दिनेऽपि चणकफलाहारैरेव स्वजीवनयात्रां निर्वक्ष्यामीति ।" इत्थं प्रतिज्ञामारूढवतः सन्यासव्रतिनो महात्मनः कृते सर्वस्यैव धनिनः श्रेष्ठिनः सहृदयस्य वदान्यस्य श्रद्धा द्विगुणिता जायते ।

अत्र विषये छपरामण्डलीयानां वदान्यानां यत्कर्तव्यं तत्तु तैः क्रियत एव । तथापि अस्माकमत्र एतावदेव वक्तव्यं विद्यते यत् यः कोऽपि वृत्तमिदं शृणुयात् तेनावश्यमत्र किमपि द्रव्यसाहाय्यं प्रचारसाहाय्यं वा वितरणीयमेव

विशेषतो धनिकैस्तन्मण्डलीयै रन्यमण्डलीयै र्वा प्रचुर-वित्त-साहाय्येन तपस्विनोऽस्य प्रतिज्ञां पूरयद्भिः स्वद्रव्य-सदुपयोगः सम्पादनीय एवेति सानुरोध-मस्माकं प्रार्थना। यतो हि प्रसिद्धोऽयं देशो वदान्यतायाम्—

"कर्णस्त्वचं शिविर्मांस प्राणान् जीमूतवाहनः।
ददौ दधीचि रस्थीनि किमदेयं महात्मनाम्।"

इत्यलम् बहूक्तेन वदान्येषु।

---

## हिन्दु-सूर्य्य-शुभागमनम्।

मार्गशीर्ष शुक्लचतुर्दश्यां तदनुसारेण ( ता० १६ १२।३४ ई० ) तिथौ इह काश्यां हिजहाईनेस श्रीमतां महाराजाधिराजानां हिन्दूसूर्य-महाराणा सर श्रीभूपाल-सिंह बहादुर जी० सी० एस० आई० उदयपुरनरेश महोदयानां शुभागमनमभूद्।

एतेषां पूर्वपुरुषाणां सनातनधर्मरक्षोद्योगो भारतीय-हिन्दुसंस्कृति-समेधकः प्रयासो म्लेच्छसंस्पर्शतो नारीणां सतीत्वगोपनोद्यमः भारतीयराष्ट्रस्वाधीनता कृते अदम्यपुरुषार्थ-करणमित्यादि नास्ति अपरिचितं भारतीयेतिहासविदां विदुषाम्। एतेषामेव वंशे महाराणा।कुम्भसिंह-संग्रामसिंह-प्रतापसिंहराजसिंह-प्रभृतयो महाराजा महाप्रतापशालिनोऽभवन् येषां नामान्यधुनापि सगौरव-मभिधीयन्ते। मीराबाई पद्मिनीप्रभृतयो राजमहिलाः नारीशिरोमणिरत्नस्था-नीया आसन्। यासां नामानि भारतीयार्य्यमहिलानामादर्शस्थानीयानि सन्ति।

एतेषां परमप्रसिद्ध-वंशगौरवं स्मारंस्मारं भारतीयानामिदानीं पराधीनता-कालेऽपि शिरः समुन्नतं भवति। एतेषामिहोपस्थितौ काशीस्था विश्ववर्ण्या विद्वांसो धनिनो मानिनश्च महोदया भूयस्यां संख्यायां समुपस्थाय एतेषां याना-वरोहणस्थाने ( बनारसछावनी नाम्नि स्थले ) महता समारोहेण स्वागतं कृतवन्तः। श्रीभारतधर्ममहामण्डलसम्बन्धभाजः सर्वेऽपि महात्मानो विद्वांसः कर्मचारिणः प्रतिनिधयः सभ्याश्च समुपस्थिताः पुष्पमालानारिकेलफलादिभिः वैदिकघोषेण च स्वागतं सविधि विहितवन्तः। अवरोहणस्थानञ्च पूर्वत एव पुष्पमालादिभिः साधु सुसज्जितमासीत्। तत्र हिन्दुविश्वविद्यालयस्य वाइस चांसलरमहोदया महामनसः श्रीमन्मदनमोहनमालवीयमहोदया रुग्णावस्थायामपि तत्रोपस्थिता आसन्। तैः सह हिन्दुविश्वविद्यालयीयाः कतिपये विद्वांसोऽपि उपस्थिता आसन्। इत्थं हि काशीस्थैः साधु स्वागतीकृता महाराणामहोदया श्रीकाशीविश्वेश्वर-दर्शनं कृत्वा हिन्दुविश्वविद्यालये पराह्णे समुपस्थाय तस्मिन्नेव दिने रात्रौ कलिकात्ता नगर्य्यामावश्यक-कार्य्यवशादितः प्रस्थिताः। महाराणानामुपस्थित्या तेषां दर्शनेन सन्तुष्टा काशीस्था जनता श्रीभारतधर्म-महामण्डलस्था महात्मानः सभ्याश्च अतितरां प्रमोदमातन्वानाः शुभाशीराशीन् वितरन्तो हिन्दूसूर्य-महाराणा महोदयानां दीर्घजीवित्वमारोग्यत्वञ्च श्रीकाशीवि-श्वेश्वराद्भ्यर्थयन्ते। इतिशम्।

---

अखिलभारतीय-संस्कृतविश्वविद्यालयान्तर्गत-काशी आयुर्वेदसम्मिलनी-परीक्षा प्रथमा-मध्यमा शास्त्रिपरीक्षाचार्य्यपरीक्षा आगामिनि चैत्रशुक्लपक्षे भविष्यन्ति। तदर्थम् आवेदनपत्राणाम्भृत्वा कार्य्यालये प्रेषणकालः फाल्गुनशुक्लपूर्णिमावधि विद्यते। आवेदनपत्रग्रहणकालस्तु फाल्गुनामावास्यावधि विद्यते। अतः शीघ्रमेव कार्य्यालयेन आवेदनपत्राणि गृहीत्वा सम्भृतानि कृत्वा शुल्कसहितानि शीघ्रमिह सम्प्रेषणीयानि। समयातिपात पश्चादावेदनपत्राणि नैव प्रेषितानि भविष्यन्ति, नापि सशुल्कानि सम्भृतानि समागतान्यपि गृहीतानि भविष्यन्ति।

निवेदक—सेक्रेटरी,

**"काशी आयुर्वेदसम्मिलनी"**

प्रधानकार्यालय, महामण्डलभवन, जगत्गंज बनारस।

---

## संस्कृतविवादमहोत्सवः ।

विदाङ्कुर्वन्तु तत्रभवन्तो भवन्तः श्रीमन्तः—माघकृष्णप्रतिपदि रवौ तदनुसारेण जनवरीमासस्य विंशतितमे दिवसे भगवत्याःभागीरथ्यास्तीरे, श्रीस्याद्वाद दि० जैनमहाविद्यालये प्रतिसंवत्सरवदस्मिन्नपि सम्वत्सरे सुरभारतीप्रणयिनां विदुषां मनोरञ्जनार्थमन्तेवासिनाञ्च गीर्वाणवाणीभाषणशैलीं सञ्चारयितुं स्याद्वादप्रचारिणीसंस्कृतसमित्या "धर्मस्याऽऽवश्यकताऽस्ति न वेति" विषयमवलम्ब्य पक्षप्रतिपक्षाभ्यां संस्कृतविवादमहोत्सवो महता समारोहेण समपादि।

तत्र काशीस्थाः प्रसिद्धाः विद्वांसः "फ ड क" इत्युपाधिभृतः राजकीयसंस्कृतविद्यालयपुराणाध्यापकाः श्रीमन्तोऽनन्तशास्त्रिणः, हिन्दुविश्वविद्यालयाध्यापकाः श्रीमन्तः केशवप्रसादमिश्राः, भूतपूर्वकाशिकराजकीय-संस्कृतविद्यालयाध्यापकाः श्रीमन्तः केशवदत्तशास्त्रिणश्च निर्णायपदमलञ्चक्रुः। अत्र खलु काशिकराजकीय संस्कृतविद्यालयतः तथान्यदीयविद्यालयेभ्यश्च बहवश्छात्रा समायाताः।

# दिव्या गीर्वाणभारती।

निबन्धा-पण्डितगङ्गाविष्णुशर्म्मा सारस्वतशास्त्री, ओ० टी०,

——:***:——

( 'अलीपुर' स्थ-राजकीय'विद्यालय-संस्कृताध्यापकः। )

( क्रमागता )

किं निरूपणपटोः श्रीमतः पण्डित रूपनारायणपाण्डेयस्य रूपक-पटुताऽनुरूपा न भवति? किं—'भारत-भारती'-कारस्य श्रीमतः बाबूमैथिलीशरणगुप्तस्य भारती विविधभावभरिता न प्राप्यते? किं शङ्करनगरनिवासिनः श्रीमतः जयशङ्कर प्रसादस्य कवितायाः प्रसादमयीभवने सन्देहो वर्तते? किं स्नेहभाजनस्य श्रीमतः गयाप्रसादस्नेहिनः ( सनेही तत्र ) सुलेखनी सरसतया सह न सरसा? ( तत्र सरसतीतिपाठः )। किं पवित्रात्मनः भारतीयात्मनः ( भारतीयात्मना विश्वविश्रुतस्य पण्डित माखनलालचतुर्वेदिनः इति ले० ) अनुत्तमा ( अनूठी ) उक्तिरात्मविस्मृतिकारिणी न भवति?

किं रमणीय-मानसस्य श्रीमतः पण्डितरामनरेशत्रिपाठिनः मानसिकतायां नवरसमयी रसिकता न मिलति? किं हृदयवतः सुकवेः श्रीमतः गोकुलचन्द्रस्य चारु चित्तताऽरोचकताम्प्रत्यर्धचन्द्रं न वितरति? किं परमसहृदयस्य भारतीयहृदयस्य कवित्वं हृदयं विभक्तं कुरुते? एतस्योत्तरं सहृदय-हृदयाः प्रयच्छन्तु '( श्रीवेङ्कटेश्वरसमाचार पत्रतः १९२४ )।

एतदतिरिच्यमाना मानवन्तोऽसंख्याः संख्यावन्तः सन्तः हैन्दवीं भाषां सेवमानाः सन्ति। एतद्विषये 'बालक' साहित्याङ्कं नयनसदनातिथिं कुर्वन्तु, अर्हन्तीक्षणाः। हिन्दी समाचारपत्राण्यपि बाहुल्येन निःसरन्ति नयनयोरयनमागच्छन्ति। विरहय्य कृत्स्नानि पत्रान्तराणि देशकल्याणकरं 'कल्याण' नामकं मासिकपत्रं दिने द्विगुणं रात्रौ चतुर्गुणं समुन्नतिनिःश्रेणीमधिगतं नयनसरणिमधिरोहति। परं संस्कृतसमाचारपत्राणां कृते दुरन्त-दुरदृष्टदिष्टं दृष्टिगोचरतामापद्यते। तेषामुल्लेखविधानेऽपि स्वान्तं नितान्तं तान्तं भवति।

"अष्टमाब्दीय 'सूर्योदय' पत्रस्य द्वितीय-तृतीयसंख्ययोः संख्यावतामपश्चिमेन सुरसरस्वतीसेवकेन मत्प्रशस्य-वयस्येन श्रीमता पण्डित दीनानाथ शर्मशास्त्रिणा "समाचारपत्राणां लाभस्तद्ग्राहक-वृद्ध्युपायश्च' इति शीर्षके स्वसन्दृब्धसन्दर्भे बहूट्टङ्कितम्। लेखाऽवलित्यामक्षरचणेनाऽलेखि स्वात्तरजनम्यात् 'उत्तिष्ठत, जागृत, सुरसरस्वती 'सूर्योदयं' प्रात्यहिकमेव कृत्वा विभाव्यत। 'नहि त्रिंशद्दिनान्तेन भवेत्सूर्योदयः' क्वचित्"

जनोऽयमपि परमानन्दतुन्दिलः सेत्स्यति, यद्येयं युक्तिविशारदस्योक्तिः पूर्णा भवेत् ॥

साम्प्रतमपि भारते परःसहस्राः शास्त्रपारावारकृतावगाहा विपश्चिदुत्तमाः अलौकिकशेमुषीसनाथा विद्यार्थिसत्तमाश्च सन्ति । सत्स्वपि तेषु पञ्चषाणां संस्कृतसमाचारपत्राणां सार्वत्रिकं पूर्णप्रचारमनवलोक्य, कस्य सहृदयहृदयस्यान्तरं विदीर्णतुन्नादरि । यदि केवलं संस्कृतभारतीमभिजिगांसमानानामन्तेवसतामप्यधिमानसं सुमनोभारत्यां प्रचुरतरं पूर्णं प्रेम स्यात् । यदि दिव्याया गीर्वाणभारत्या स्वाधीयसे प्रचाराय महामहिममहीयांसो वरीयांसो विद्वांसः पुमांसः प्राणपणप्रयासमाचरेयुः । यदि सरस्वतीरसपूरप्लावितान्तःकरणाः करुणावरुणालयाः कृतिनः कृतविद्या एतत्साहित्यपरिचितिकृतितति करे कुर्वीयुस्तदाऽनायासं सार्वजनीन एतदुन्नतिलोकलोचनः ( सूर्यः ) समुदितः लोके लोकलोचनगोचरतां ध्रुवमापद्येत । स्मरत'

संस्कृतप्रचाराभावादेव देव-देवीनिकाया निन्द्यन्ते । देवमन्दिरेषु चाण्डालाः सबलात्कारं सन्निवेश्यन्ते । अकार्यमेव कार्यं क्रियते । अवन्द्या वन्द्यन्ते। वन्द्या निन्द्यन्ते । पवित्राणि मन्दिराणि, अपवित्राणि विधीयन्ते । अन्तरेण सुरगवीप्रचारमधार्मिकबिलानां दैनन्दिनी समुपचितिर्नयनसरणिमायास्यति । परं जाते सुरभारतीप्रचुरप्रचारेऽसंख्य-संख्यातिगानां शङ्कासुराणां शङ्कानां समाहितयो नूनं भविष्यति भविष्यन्ति । अतएवेदानीं कर्णगयानामेतदुद्यामे साहसाध्यवसायिनां मानवतां मानवानामावश्यकताऽस्ति न तु वावदूकानाम् ।

अत्र तु सर्वात्मनः परमात्मनः पूर्णानुकम्पया संस्कृतसाहित्यागाधमहोदधि मन्थनमन्दरायमाणाः पारावर्यवदितारः सभास्तार-सभा-समाजनाः संज्जना विराजन्ते । ये सर्वथा सर्वदा समुन्नायं (समुन्नयं) विधातुमलम्भूष्णवः । अत्राऽऽचार्यवरस्य पण्डितमण्डलाखण्डलस्य भूमण्डले प्रख्यातस्य श्रीमतस्तत्रभवत उदायनाचार्यस्य कणगस्तिमनोमूर्जिताश्रयां गरीयसीं गिरमधीत्य कस्य सचेतसश्चेतो नोत्तरङ्गितं जायते । अस्ति तत्सूक्तिरेषा—

'वयमिह पदविद्यां तर्कमान्वीक्षिकीं वा,
यदि पथि विपथे वा वर्तयामः स पन्थाः ।
उदयति दिशि यस्यां भानुमान् सैव पूर्वा,
नहि तरणिरुदीते दिक्पराधीनवृत्तिः ॥

अस्याऽनवद्यपद्यस्याऽर्धपद्यमन्ववादीदित्थमेव 'भारतभारत्यां प्रतिभावान् 'भारतभारती' कृत् ।

'जिस नीति विद्याका हमें रहता यहां तक गर्व था,
हम आप जिस पथसे चलें, सत्पथ वही है सर्वथा।

कथ्यताम्, अत्र कस्या वार्ताया वर्तते नैयून्यम्। अमृतरसनिःस्यन्दिनी, अद्यः प्रदर्शितेयं भणितिः कस्याऽऽत्मजुषो विदुषः कर्णशष्कुलीन्ना स्प्राक्षीत्—'एतद्देशप्रसूतस्य-सकाशादग्रजन्मनः। स्वं स्वं चरित्रं शिक्षेरन् पृथिव्यां सर्वमानवाः'। अद्य सर्वथैतद्विपरीतदशाऽनुभूयते। अद्य वयं 'परप्रत्ययनेयबुद्धयः' जाताः स्म। अद्य वयमन्यदेशीयानां शिष्यतामधिगताः। अद्याऽस्माकं स्वसं कृतोत्तमे, मौलिकग्रन्थ ग्रन्थनायां रुचिर्नोदेति। अतीतासु प्रभूतासु समासु, न केनाऽपि कोविदेन, अद्यावधि, 'शिवराज विजय' वत् मौलिकमुपन्यासपुस्तकं व्यरचि। 'पञ्चतन्त्र' मन्तरेण नीति-रीतिज्ञानप्रदं न किमपि पुस्तकान्तरं दृष्टिपथमेति।

'हितोपदेशः' बहुतिथकालान्तं दशमकक्षाकृते पाठ्यपुस्तकं निरधार्यत। नवीनरचनायास्तु का कथा पुस्तक निर्वाचनकालेऽनुत्तमं निर्वाचनं न विधीयते। किम् उपाख्यानमाला, दशमकक्षास्थ-परीक्षार्थि-विद्यार्थिसार्थकृते योग्योपादेया चाऽस्ति? किं संस्कृतेऽधीतिन एतामधीत्य मोदिष्यन्ते ? मद्विचारणायान्तु,-एतदपेक्षया श्रीमत्पण्डितप्रवर पं० दौलतरामशर्मणा, एम्० ए०, बी० टी० इत्युपाधिविभूषितेन प्रणीतः 'काव्यसंग्रहः उत्तम आसीत्। सनातनधर्मकालेज भूतपूर्वप्रधानाध्यापकेन, साम्प्रतञ्च जयपुरीय-संस्कृतपाठशालाया मुख्याचार्येण, न्यायशास्त्रि—व्याकरणाचार्य-विद्यावारिध्युपाधिविभूषितेन, महामहोपाध्याय पं० गरिधरशर्मचतुर्वेदिना संशोधितः—

'संस्कृतपरिचयः' अनुत्तम एवाऽऽसीत्। पाठ्यपुस्तकानां निर्मितौ बालानां मानसिकीं शक्तिम्, धारणा शक्तिम्, मननशक्तिञ्च विचार्य, प्रसिद्धतत्त्ववेत्तृ 'हर्बर्ट स्पेन्सर' महोदयसङ्कलितं 'एजुकेशन' नामक ग्रन्थानुवादं, हिन्दीसाहित्यमहारथि श्रीलमान्यवर पं० महावीरप्रसादद्विवेदिनाऽनुवादकेन 'शिक्षा'-नाम्नाऽनूदितं पुस्तकरत्नमवलोक्य।करे लेखनीलेखकवरैर्गृहेलिमा।

अत्र श्रीयुक्त श्रीपाद दामोदर सातवलेकर महोदयरीति रनुकरणीयाऽऽस्ते। एतेन दयोदयोद्रेकवता विदुषा 'संस्कृतपाठशाला' याश्चतुर्विंशति भागानामाकलय्य यत्सत्यमध्यापकमहोदयमन्तरेण स्वयं संस्कृताऽध्ययनकर्तारोऽपि विद्यार्थिनो बहूपाकृताः। एतन्निर्मितपुस्तककदम्बकमवलोक्य विद्यार्थिनः संस्कृतप्रौढिमासेदुः। एतादृशान् विद्वत्तल्लजानवलोक्य साहित्यजननीसुरसरस्वती मोदतेतमाम्।

वस्तुतः संस्कृतं प्रारिप्सूनां, तद्रहस्यं बुभुत्सूनां विद्यार्थिनामुपचिकीर्षया पुस्तकानि विरच्येरन्, न तु द्रविणोपार्जन कामनयेति क्षोदीयसो मे विचारः ।

अधुना लेख विस्तृति-साध्वसाद् भीतो विषयमुपसंहरन् तान् महानुभावान्, भावान् कोटिशो धन्यान् वदामि यैर्महानुभावैः पुस्तकविरचनया अध्यापन क्रियासमभिव्याहारेण, लेख-लेखन-कलया च विबुधवाचः, उन्नयने, पुरातन-सना-तन धर्मस्य च रक्षणे प्राणपणेन यत्नो व्यधायि ।

बहूनां दोषज्ञानामभिधानोट्टङ्कनं श्रीसना-तनधर्मविजय, महाकाव्ये कविरत्नेन श्रीमताऽखिलानन्दशर्म महाभागेन चतुर्विंशतितमे सर्गेऽन्वष्ठायि । परं परमविदुषां परेषां ( उत्तमानाम् ) परेषाम् ( अन्येषां ) हि त्राणामनन्या दशा मन्तर्यामीनां( पण्डितानाम्) कार्य्यकलापोल्लेखलोभं संवरीतुमपार्य्यते जनेनानेन।

'साहित्य वैभवम' नाम ग्रन्थरत्नं समुल्लिख्य संस्कृत-गाथा सप्तशत्याद्यनेक-ग्रन्थरचयितृ-,संस्कृत-रत्नाकर, सम्पादक-पण्डितरत्न-साहित्याचार्य भट्टश्री-मथुरानाथ शास्त्रि-विहितं सुरसरस्वतीसेवनमर्हतुकं केन महानुभावेन तिरोहितमास्ते । लवपुरीये—श्रीमद्दयानन्दकालेजे-एम्० ए० एम्० ओ० एल० इत्युपाधि विभूषित- संस्कृताऽध्यापक-श्रीमच्चारुदेवशास्त्रि पाणिनीय-प्रणीतं 'श्रीगान्धि चरितम्, कस्य विदुषामप्रथमस्य मानसं नावर्जयति ।

लवपुरीय ओरियण्टल, कालेजाध्यापक प० रामचन्द्र कुशलशुक्ल शास्त्रि-निर्मिता 'संस्कृताऽनुवादशिक्षा' कस्य शिक्षा-गुरोः शिक्षितस्य च छात्रस्य सन्तोषा यनाऽलम् ।

अध्यापनपरिपाटीपटीयोभिः, वरीयोभि विद्वत्संसद्भिर्द्भि गुरुभिर्गुरुभिः, सुगृहीतनामधेयैः श्री १०८ पण्डितदेवराजशास्त्रिभिः, मूलत्राणस्थ-सनातनधर्मकालेजस्याऽऽचार्यवरैः सौजन्यधन्यजनुर्भिः स्वयशोभिरशोभि भूमण्डले । येषामकम्पानुकम्पया—

भोजन-भाजन-मार्जनकराः किङ्करा अपि गुरुवरप्रेरणया कैङ्कर्यवृत्ति-मुज्झित्वा शास्त्रिपदालङ्कृता अभूवन् । इतरेऽपि संस्कृतभाषामधीत्य लब्धशास्त्रिपदवीका आसन्दीमारुह्य सानन्दं स्वसमयं यापयन्ते । संस्कृतभाषाञ्च प्रचारयन्ति । भवतां गुणगणगणना कथं विधीयेत विधेयेन । केनचनोपपत्ति-मदुक्तमुक्तम् ।

'अहिपतिरहिलोके-शारदा सापि दूरे, ।
वसति विबुधवन्द्यः शक्रगेहे सदैव ।
निवसति शिवपुर्यां षण्मुखोऽसौ कुमारः ।
गुणगणगरिमाणं को वदेद्‌ब देव ॥

लेखलेखनकलाकुशल-'अलीपुर' स्थ सनातनधर्मसत्सङ्गिपाठशालाभूत-पूर्वप्रधानाध्यापकेन, सम्प्रति च मूलत्राण, स्थ-सनातनधर्मकालेजमहाध्यापकान्यतमेन श्रीपण्डितदीनानाथशर्मशास्त्रिमहाभागेन संस्कृतभाषा-जननी जननीव सादरमसेवि। भवल्लेखैः संस्कृतसंसारे ख्यातिप्राचुर्यमविन्दि। यत्सत्यं श्रीमता संस्कृतविद्यार्थिनो बहूपाकृषत। भवतां स्वेष्टदेवं चिरायुष्ट्वं याचे। संस्कृतस्य सर्वेषु पत्रेषु 'पीयूषपत्रिकां' विहाय तत्र भवता भवता लेखा प्राहीयन्त।

'सूर्योदय' 'सुप्रभात' 'संस्कृतरत्नाकर' प्रभृतिसमाचारपत्राणां सम्पादक महानुभावानां प्रकाशकमहानुभावानाञ्च गुणगणवर्णनं भास्वतो भास्करस्य दीपकदर्शनमिव मे प्रतिभाति। विदुषां विद्यार्थिनाञ्चोपचिकीर्षया ते महानुभावा अमूल्यं नैजं समयं सुरसरस्वतीसेवायां यापयन्त्यतस्तान् कोटिशो धन्यान्वदामः।

अन्ते चाहमुपर्युक्तसंस्कृत-पत्राणां गुणगृह्यान्, अनुग्राहकान् अनुनय-विनयपुरस्सरमनुरुन्धे, यत्ते स्वयमप्येतानि गृह्णन्तु, अपरांश्च ग्राहयन्तु। यदि भवन्तःसंस्कृतभाषामुन्निनीषन्ति, 'भाषासु मुख्या मधुरा दिव्या गीर्वाणभारती' इत्यस्मिन् बद्धादराः सन्ति, तर्हि एतत्साहित्यवृद्धौसमाचारपत्राणां प्रचारे दत्तहृदया भवन्तु, इति प्राथ्य विरम्यते।

---

## ताराकटाक्षच्छटा।

——:o:——

लेखकः—श्रीआद्याचरणझा ( छात्रः )

मङ्गरौनी, मधुवनी, दरभङ्गा॥

अश्रान्तिक्षतभक्षपाकरगणच्छेदोच्छलच्छोणिता-
क्षुद्रात् क्षुद्रतरेऽपि भक्तिनिकरे क्षेमप्रदा क्षान्तिदा,
क्षीणाब्धि क्षणद क्षपाकर इव क्षिप्रं क्षयित्री क्षतिम्-
राजन्! त्वामिह पातु तप्तति तडित्तारा कटाक्षच्छटा॥१॥
सद्भक्ताजन वारि वान्धवकुलं प्रोत्फुल्लयित्री सदा,
उद्यन्मोहमदान्धबन्ध-विधुरध्वान्तद्रुतध्वंसिका-
चञ्चच्चित्त-चकोर चन्द्र चरितं चित्तेषु संचारिका
राजन्! त्वामिह पातु चञ्चलतरा ताराकटाक्षच्छटा॥ २॥

---

# युवजनप्रबोधनम् ।

—:※※:—

( ले०—श्रीजटाशङ्करशास्त्री व्याकरणाचार्यः )

( वाराहीसंस्कृतविद्यालयस्थः )

ननु सुरभारती-सेवनचातुरीचुञ्चवो महान्तः ! किमवधि भवन्तो युवजना आलस्यपर्यङ्कमासाद्य निद्रामुद्रितात्मनयना निवत्स्यन्ति ? किमवधि वा निकषा स्वलोचनं वञ्चकप्रसारितालीकवादधूलिजवनिकामेकयैव फूत्कृत्या विदूरतः प्रापयिष्यन्ति ?

अङ्ग हि समुन्मीलयन्तु लोचनं विलोचयन्तु धर्ममर्मानभिज्ञैर्दूरिता धर्मसरणिम् । इयमियं सरणिर्मान्य-श्रुतिमूल-स्मृतिकारैर्मुनिभिरुपकाराय मनुजनुषां बहुभिरप्यङ्कैर्वर्णव्यवस्थादिभिर्निर्मीयते स्म । विज्ञानं हि तत्तन्मुनीनां गतानागताशेषविषयानप्यवागाहतेति यदि वयं विश्वासमासादयामस्तदा किमिति प्रामाण्याय वदामो यत्—“ चिरायुषस्ते स्मृतिकारास्तदानीन्तनं विद्यमानं सकलमपि विषयं चिरेण परीक्ष्य धर्मसरणिं व्यरचयन् । ”

आधारभूतयाऽनया सरण्याऽस्माभिः सुखासीनैरहीनैर्धर्मकर्मणा चिरं सुख-मुखावलोकनमकारि । अकारि च परस्परविरोध-रोधनपुरस्सरं कान्त-मुन्नतिकान्तावलोकनम् । शनकैस्तत्सरणितः स्खलितचरणा वयं विज्ञान-वैभ-वान्धाः समभूताम । यद्यपि एवेदानीं कतिचन महात्मानः—

“ दुरवस्थामुपगतोऽवनतो भारतदेशोऽयमस्ति । साम्प्रतमित्यत्र कारणं भारतवासिजनताया निरभिमानिताऽऽलस्यनिषेविता चेति देशोन्नतये सपदि युवानः साभिमानं परिकरं बध्नन्तु । ” इति बहुशोऽभिधाय विधाय च बहूनपि च्छात्रानध्ययन-विमुखान् समन्तैरन्यानपि राजनीतिसम्बन्धि—सम्परायाजिरेऽवतार्य कियन्तिचन दिनानि यावत् सममेभिरेव खेलनकलाकुशलाः खेलनं कुर्वन्तोऽभिनव-भारत प्रधानशासकस्य कूटनीत्या कृतव्यर्थप्रयत्ना एतद्देशीय-परस्परविरोधि साम्प्रदायिकभावेन वर्द्धितं गृहकलहं निरीक्ष्य भग्नोत्साहाः । “ उपविष्टो वणिक् कुशूलान्तरधान्यं कुशूलान्तरे निःक्षिपती—” ति न्यायेन साम्प्रतमवधूय वर्णव्यवस्थामवरवर्णैः सहाशन-पानादिकर्म कर्तुमुपदिशन्तः परिहित-कपट-पट-पटल-प्रमाद-मैरेयमदमत्ताः कथमिवाद्य निर्दयं निशितकरवालधारया धर्मशिरोधिं कर्तयितुं निःशङ्कमिह कामयन्ते ।

तदत्र भवन्तो युवजना एतमेवं विभृशन्तु यत्—भारतदेशमुज्झितीपन्त-स्ते गगनमण्डले विदूरमुड्डीय तत एव करतलाद्वस्त्रं लयन्ते । तदनुयायिनोऽपि स्वाध्यस्त प्रतिपादितां निम्बे माधुरीबुद्धिमिक्षौ वा तिक्तबुद्धिं यथायथं मन्यमाना-स्ताण्डवपरायणाः करतालिकां वादयन्तो मन्द-जननामपि तथैव प्रवर्तयितु मञ्चितप्रेक्ष-मञ्चाञ्चलाः कुञ्चितस्वान्ता नितान्तमुच्चैश्चीत्कृतिं कुर्वन्त आ संवाह ( सहर ) ग्राम ग्रामटिक-प्रतिवीथिकं कुत्र नहि लोचनगोचरी क्रियन्ते ? तदीयः "वयमेव सनातनधर्माणः" इत्युच्चवादोऽपि कस्याश्चिश्य कर्णकुहरज्ञ-यनयोः पुरस्तान्न खेलति ? अहह !! तत्र भवन्तः संस्कृतज्ञाः ! तेषां मत्थमुच्छृङ्खलतायां खलतायामपि न किमपि प्रतिविधानं विधातुकामा भवन्ति । इति किं भवतामपि श्रुति-स्मृति-स्मृतिशालिनां विश्वासस्तथैव विपरिणतः ? मुनीना-मदूरदर्शितामेव भवन्तोऽपि किं निरचैषुः? अये वीरसभ्ययुवकाः ! यदि किञ्चि-दपि पूर्वगौरवं स्मरन्ति तदा झटिति सावधानतया प्रतिग्राममागम्य वञ्चक-क्षिप्त-धूलि-धूसरितमतिं स्वव्याख्यानवैभवेन परिष्कुर्वन्तु ।

"धर्ममुल्लङ्घ्य सुखजीवनसत्तार्थमभ्यर्थिता भवती जनता कदाचिदपि न विधर्मिवचने विश्वासमावहतु ।" इति समन्ततो जनतां बोधयन्तु ।

"धर्मसेवामात्रमेव मनुष्याणां पशुविहंगमाद्यपेक्षयाऽधिकं विधातव्य-मस्तीति तत्सेवात्यागपूर्वकं किं त्रिलोकीपतित्वलाभेने" त्यवगमय्य कुर्वन्तु सुदृढं जनताहृदयम् । तथापि विधर्मिजनैः करिष्यमाणः क्रियमाणो वा "मदाचरितपथ एव सनातनधर्म पथः" इति प्रवादस्तु "स्वम हेषां स्वयमहं कुठारे-णैव नश्योतयिष्यामि" इति प्रमत्तप्रवाद इव दुर्निवार एवेति न तदर्थमस्माकं चिन्तावसरः ।

इत्थञ्च संस्कृत-हिन्दीसमाचार पत्रादि द्वाराप्युक्तभवाः प्रचुरतयाऽऽ चरन्तु । सम्प्रतिस्खलितलेखकला कौशला अपि पुनः सपरिश्रमं यदि लेख-कलां समेधमानाः स्वमनोगतभावमावेश्य लेखे परितः प्रचारयेयुः कथन्नु तदा सत्यमूलधर्म विजयवैजयन्ती भूयोऽपि समुल्लसन्ती न भवेदिति सकरुणं ध्यान मर्पयन्तु सन्त इति सम्पुटितशयस्य मे सविनयमभ्यर्थनम् ।

[ परीक्षापाशनिबद्धा अज्ञातधर्मग्रन्थगन्धा अविदितदेशकाला अपठिता भूगोलेतिहासा अनालोकितहिन्दीसंस्कृतादिसमाचारपत्राः स्वार्थमात्रपरा वरा-का इमे किं कुर्य्युः, इति संपादकः ] ।

# "किंचिद्विनिवेदनम्,,

अयि ! धर्मशास्त्रज्ञाः ! विद्वांसः

श्रीमत्पादन्यस्तमस्तकोऽहं निवेदयामि किञ्चित् । आशासे स्वीकुर्वन्ना-धीमन्तोऽस्मिन्नेव समाचारपत्रे उत्तरिष्यन्ति, यत्-येषां वंशे केचिन्मृता स्तद्वंशीयाः कुत्रत्या स्तु दीपावल्युत्सवं कुर्वन्ति कुत्रत्याः केचिन्नहि । अतः संदिह्यते मदीयं स्वान्तं नितान्तम्, अतो ये मन्यन्ते।ते कथं ये च न मन्यंते ते कथमिति शम् ।

प्रार्थी श्यामवासिष्ठ महिमादत्त वासिष्ठ

सं० पा० मयकोटी ( गढ़वाल )

# ब्रह्मचर्य्यरक्षा ।

[ ले०—पण्डित श्रीघनश्यामचन्द्रशास्त्री "विद्यामार्तण्डः" लचमणगढ़ ]

ब्रह्मचर्य्यं सर्वसुजनैः पालनीयं यत्नतः ॥ ध्रुवम् ॥

ब्रह्मचर्य्ये वीर्यपुष्टिः, शान्तिदान्तिसुखादयः ।
संभवन्ते तद्विनाशाद्धीविनाशः कृत्स्नतः ॥ १ ॥ ब्रह्म० ।

भीष्ममारुतिलक्ष्मणाद्या ब्रह्मचर्य्यनिषेवणात् ।
दिव्य-शक्तिजयप्रपूर्णा भारतीयविधानतः ॥ २ ॥ ब्रह्म० ।

शङ्कराचार्य्यादिमान्यै विश्वरक्षण-हेतवे ।
वर्णितेषु सत्पथेषु ब्रह्मचर्य्यं मानतः ॥ ३ ॥

राममूर्ति मुखा दृढ़ाङ्गा ब्रह्मचर्य्यसमुज्झिताः ।
चित्र कौशलदर्शितारोऽद्यापि भीमसमानतः ॥ ४ ॥ ब्रह्म० ।

हर्म्यं पुण्यं मूल दृढिमा, यद्वदत्र समीप्सितः ।
आश्रमान्तर सिद्धिहेतो-स्तद्वदेव बुधैर्नतः ॥ ५ ॥ ब्रह्म० ।

हीन सत्वा भारतीयाः साम्प्रतं कलहप्रियाः ।
ब्रह्मचर्य्ये तास्तु विद्या-मण्डिताः स्युर्ज्ञानतः ॥ ६ ॥ ब्रह्म० ।

तर्क त्रिंशद्वार्षिकं रुचिर स्तवर्णं पादिकम् ।
ब्रह्मचर्य्यं सविधि रक्ष्यं, श्रीघनश्यामो नतः ॥ ७ ॥ ब्रह्म ।

# चाण्डालाद्यस्पृश्यतायां प्रमाणसङ्ग्रहः ।

निबन्द्धा—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री ।

( 'मुलतान'-स्थ-श्रीसनातनधर्मसंस्कृतकालेजाऽध्यापकः )

——:o:——

यदा वयं दृश्यमानकिञ्चिज्ज्ञानाऽऽलोके लोके स्वधार्म्मिकसिद्धान्तानुपोद्बलयितुं कृतस्वेच्छामननसन्धाबन्धानां करालकलिकालगोष्ठीगरिष्ठानां सुधारकाणां समक्षम्पुराणानां प्रमाणानि समुपस्थापयामः; तर्हि त आचक्षते—पुराणानि गप्पाऽष्टक-( ? ) वन्ति सन्ति; तेन न तानि प्रमाणानि मन्महे* इति । यदा वयं पुराणानां प्रामाण्यं प्रमाणयितुं तदग्रे प्रमाणानि समुपस्थापयाम; तदा ते जल्पन्ति यदिमानि न तानि पुराणानि; किन्तु तानि त्वन्यान्येव । यदि तेषां तदन्यत्वेऽपि तान् दोषान् प्रदर्शयाम; याँस्ते ऽस्मत्पक्षे प्रदर्शयन्ति; तदा ते स्वकीय-स्वभावसिद्धं प्रह्वाऽस्त्रमित्थं मुञ्चन्ति; यद्—वयमेतद्दुक्तं न मन्महे इति । यदि—तत्पुरः स्मृति-प्रमाणानि निदधीमहि; तर्हि ते तां स्मृतिमर्व्वाचीनकाले निर्म्मितामत एवाऽमान्यामामनन्ति । यदि तदभिप्रेतस्मृतेरेव प्रमाणं स्वसिद्धान्त-पुष्ट्यै प्रदद्याम; तर्हि तेऽभिदधति-यदियं स्मृतिस्तु प्राचीना; परन्तदीयमिदं प्रमाणं 'प्रक्षिप्तम्' । यदि तस्य प्रक्षिप्तता तेषामेव ग्रन्थादपोह्येत; तदाऽपि ते ब्रुवते न वयमीदृंशि वचनानि मन्महे* यतो वेदे नाऽस्तीदृशो राद्धान्तः । यदि स एव सिद्धान्तो वेदे प्रदर्श्येत; तर्हि तेषां व्याजोऽयमुज्जृम्भति यदमुष्य मन्त्रस्याऽर्थान्तरम्भविष्यति; वेदस्त्वस्मिन्न्यां पक्षपातपरीतां वार्त्तां कथं तावदाचक्षीत ? ते तत्प्रकृताऽर्थं यत्र तत्र बलाद् भङ्क्त्वा निर्म्मूलमर्थं कर्तुञ्चेष्टन्ते। यदि प्रबलोपपत्तिभिः स निर्मूलोऽर्थं प्रत्याख्यायेत, वास्तविकोऽर्थश्च प्रस्फोट्येत; तर्हि वैवश्यमापन्नास्तेऽन्तत आलङ्कारिकताव्याजं तत्र पुष्णन्ति ।

*यदि 'न मन्महे' इति कथनेनैव तेऽस्मदुपस्थापिताऽऽर्षवचनानामप्रमाणतां प्रदर्शयितुमभिलषिष्यन्ति, तर्हि 'वयं वेदान्न मन्महे' 'त्रयो वेदस्य कर्त्तारो भण्डधूर्तनिशाचराः' इति नास्तिकवचनेनाऽपि तन्मते वेदानामप्रामाण्यं मन्तव्यम्भविष्यति । अन्यथाऽऽर्षवचनान्यपि प्रमाणभूतानि स्थास्यन्ति । एवं सति 'न मन्महे' 'इयं पोपानां कपोलकल्पना' इति वचनानां कियन्मूल्यम् ?

यदि सुधारकाणामिष्टा वार्त्ता काचित् पुराणेषु लभ्येत, तदा + पुराणानि प्रामाण्यवन्ति भवन्ति; तदा तेषु 'गप्पाऽष्टक' न तिष्ठति । तदेव वचनं कस्याश्चनाऽप्रसिद्धाऽनुपलब्धस्मृतावपि यदि समुपलभ्येत; तदा सा स्मृतिर्प्राचीना श्रद्धाऽर्हा वा भवति; तदाऽर्वाचीनता, प्रक्षिप्तता, 'पोपानां' प्रलापो वा ततऽपलायते स एव स्वकीयः सिद्धान्तस्तैर्वेदमन्त्रीयप्रकृताऽर्थहिंसनं कृत्वा समुद्भाव्येत यदि, तर्हि तस्य मन्त्रस्य प्रकृताऽर्थाऽऽख्याता जनो नास्तिकपदभाक् पक्षपाती च भण्यते । फलतस्ते स्वमतसमर्थनाऽर्थं स्वमतप्रवर्त्तक-निषिद्धस्याऽपि यत्पुस्तकस्य प्रमाणं प्रमाणकोटिमानयन्ति; प्रतिवादिद्वारा तत्पुस्तकस्य-व्यवस्थाऽभिसन्धि-दर्शनद्वारेण स्वमतखण्डनसमये तत्पुस्तकस्य प्रमाणान्तरं प्रमाणत्व मन्यन्ते किन्तु केनचिद्व्याजेन तद्पासयितुं दुश्चेष्टन्ते इयं कलेऽकलेवरं वरं पुष्णाती सुधारकाणां दुश्चेष्टा * कस्य चित्ते न धत्ते खेदम् । त ईदृशाऽकामं स्युः; परन्तु वयन्तु तद्भयात् स्वधार्मिक-पुस्तकानि कूपे न पातयिष्यामः, ते तत्प्रमाणानि स्वेच्छानुसारं मन्येरन्नो वा; वयन्तु यथासम्भवं तत्प्रमाणानामवहेलनं न करिष्यामः ।

अथाद्ये धार्मिक-विशङ्कट-सङ्कटमये समये चाण्डालादि-स्पृश्यता-विषयेऽपि वेदशास्त्रायकनायकायमानैः सुधारकाभासै र्बहु प्रयत्यते; तत्र तै धर्म्मशास्त्रसम्मतिरपि प्रदर्श्यते यद्बहुकारं पुनःकारं कारंकारं तैरीषत्साफल्यमपि लब्धमपठितजनसमाजे । परं यदाऽस्माभिरेतद्विषये धर्म्मशास्त्राणि दृश्यन्ते; तानि तु सुधारकाणां पक्षवृते शम्पासम्पातकानीव प्रतीयन्ते । अथ वयश्चाण्डालाद्यस्पृश्यताविषये धर्म्मशास्त्रवचनानि बहुसङ्ख्यावतां सङ्ख्यावतां श्रुतिस्मृतिमतिमतां मतिमनुसृत्य निबन्धेभ्यो निबन्धेभ्यस्तत्तत्स्मृतिभ्यश्चोद्धृत्य सनातनधर्म्मणां चिरपरिचितानां 'सूर्य्योदय, पाठकानां पुरः समुपस्थापयामः ।

सनातनधर्म्मस्य धर्म्मशास्त्राणि प्राणाः । वेदस्थित-बीजमेवादाय धर्म्मशास्त्राणि प्रवृत्तानि । वेदे धार्मिकविषयाणां बीजमेव भवति, न स्पष्टता। वेदे 'उपवीतिने' यजुः १६।१७, 'उपनयमानः' अ० ११।३।५।२ इत्यादि-पदानि मिलन्ति; परमुपनीतस्य सर्व्वविधा प्रक्रिया, तत्परिधानाऽधिकारः, तद्ग्रहणयश्च धर्म्मशास्त्रादिषु

(ब्राह्मणेषु, सूत्रग्रन्थेषु, स्मृतिषु) एव स्पष्टतया मिलति; एवं शिखादिकृतेऽपि बोध्यम्। वेदे तदनुल्लेखाद्धर्म्मशास्त्रेषु च * तदुल्लेखान्न तादृशविधीनामप्रामाण्यम्भवति; अन्यथा समस्ता एव धार्म्मिक-विषयोऽप्रमाणभूता भविष्यन्ति, वेदे विधीनामभावात्। तेन विधिविषये धर्म्मशास्त्राणामेव व्यवस्था मन्तव्या भविष्यति। अत एवोक्तम्—'वेदं गृहीत्वा यः कश्चिच्छास्त्रञ्चैवाऽवमन्यते। स सद्यः पशुतां याति सम्भवानेकविंशतिम्' अत्रिः ११।

ऋग्वेदे एकस्य मन्त्रस्याऽयमंशः—'यो नो दास आर्य्यो वा, ऋ० १०।३८।३ अत्र दासपदं शूद्रपरम्, अनेन शूद्रस्याऽऽर्य्यातिरिक्तत्वम्मतम्, पृथग्ग्रहणात्। 'शूद्राऽऽर्य्यावसृज्येताम्' यजुः १४।३०। 'उतशूद्रमुताऽऽर्य्यम् ४।४ २०।८ 'उतशूद्रे उताऽऽर्य्ये १६।६२।१, १६।७।६४।१ 'यश्च शूद्र उताऽऽर्य्यः ४।४।२०।३ इमेऽथर्ववेदमन्त्रांशाः। एवमन्येऽपि बहवः सन्ति; यान् वयं पुनः कदाचिदुपस्थापयितास्मः। फलतश्शूद्रा आर्य्यजात्यतिरिक्ता अथवा इदमेव कथयेत, अनार्य्या मताः। अयं भेदः खलु वेदाऽभिहितः। ये चाऽन्त्यजचाण्डालप्रमुखा भेदोपभेदास्ते तु अवर्णा एव मताः, वर्णानाञ्चतुष्ट्वात्। अत एव तैस्सह व्यवहार आर्य्यजातेर्न कथमपि भवितुमर्हति, यावच्च शूद्रेण वर्णेनाऽपि सता व्यवहारः स्मृतिनिषिद्धः। 'हिन्दु' शब्दीयव्यापकपरिभाषायां कामन्ते गणयेरन्, परं तैस्सह व्यवहारस्त्रैवर्णिकानां शास्त्रप्रतिषिद्ध एव। यद्यस्माभिरार्य्यजातिव्यपदेश्यैर्भूयते; तर्हि तु वयमार्य्यशास्त्राणां बन्धने बद्धाः स्मः। य आर्य्यजातीयं नाऽऽत्मानं मन्यते, स धर्म्मशास्त्रबन्धनात् स्वतन्त्र एव; परं स नाऽऽत्मानं वैदिकमाचक्षीत, स तु स्वेच्छाधर्म्मा मन्तव्यो भविष्यति। अस्तु—प्रकृतविषये धर्म्मशास्त्रवचनानि समुपन्यस्यन्ते—

'घ्राणेन सूकरो हन्ति.........स्पर्शेनाऽवरवर्णजः'
मनुः ३।२४१

अवरवर्णजश्चाण्डालादिः।

'एकशय्याऽऽसनं पङ्क्तिर्भाण्डपक्वान्नमिश्रणम्।
याजनाऽध्यापने योनिस्तथा च सहभोजनम्।

* सुधारकाः कथयन्ति, या स्मृत्यादिवार्त्ता वेदे नास्ति; तां न मन्महे, इदमपि वचः किं साधु? यदैषां वार्त्ता वेदेऽपि लिखिताः; तदा स्मृत्यादिमननावश्यकता का? यदर्थं ते स्मृतीर्मन्यते, ता वार्त्तास्तु वेदे लिखिताः; पुनस्तैर्वेदलेखनात्ता मता उत स्मृत्यादिलेखनात्? यदि वेदलेखनात्तर्हि स्मृत्यादीनां प्रामाण्यस्य किं मूल्यम्? तदीयप्रामाण्यन्तु वेदाऽदृष्टविधीनामपि स्मृत्यादिषु दर्शने मननेन भवितुमर्हति। अत एव 'विरोधे त्वनपेक्ष्यं स्यादसति ह्यनुमानम्' १।३।३ इति जैमिनिरुक्तवान्।

नवधा सङ्करः प्रोक्तो न कर्तव्योऽधमैस्सह
समीपे चाऽप्यवस्थानात् पापं सङ्क्रमते * नृणाम् ।'
—कूर्मः १५ बृहस्पतिवचनम् ।
'आसनाच्छयनाद्यानात् संभाषात् सहभोजनात् ।
सङ्क्रामन्तीह पापानि तैलबिन्दुरिवाऽम्भसि ।,
—पराशरः १२।७८ ।
एतन्मूलकमेव व्यासस्मृतौ— १२ ।
'एतेऽन्त्यजाः समाख्याता ये चाऽन्ये च गवाशनाः ।
एषां सम्भाषणात् स्नानं दर्शनादर्कवीक्षणम् । १।१२ ।
'अप्येकपङ्क्तौ नाऽऽश्नीयात् संवृतः स्वजनैरपि ।
को हि जानाति किं कस्य प्रच्छन्नं पातकम्भवेत् ।
भस्मस्तम्भजलद्वारमार्गैः पङ्क्तिश्च भेदयेत्'—
व्यास आह्निकाचारतत्त्वे ।
'आलापाद् गात्रसंस्पर्शान्निःश्वासात् × सहभोजनात् ।
सहशय्यासनाध्यायात् पापं सङ्क्रमते नृणाम्' ( छागलेयमुनिः । )

एभिः प्रमाणैः स्वजनस्पर्शादिकेनाऽपि दोषः सिद्ध्यति; सर्वाऽऽस्पृश्योत्पोतदुर्गन्धितपरमाणुविशिष्टानां चाण्डालादीनां स्पर्शे तु किमु वक्तव्यम् ।

पराशरभाष्य उद्धृतमौशनसमधस्तनं प्रमाणमपि स्पर्शेन परकीयदोषाणां सङ्क्रमणं सम्यक् पुष्णाति । यथा—

'ज्वराऽभिभूता या नारी रजसा च परिप्लुता ।
कथं तस्या भवेच्छौचं शुद्धिः स्यात्केन कर्मणा' ? इति प्रश्ने उत्तरम्—
'चतुर्थेऽहनि सम्प्राप्ते स्पृशेदन्या तु तां स्त्रियम् ।
सा ( अन्या ) सचेलाऽवगाह्याऽपः स्नात्वा चैव पुनः स्पृशेत् ।
दशद्वादश कृत्वो वा आचामेच्च पुनः पुनः ।
अन्ते च वाससां त्यागस्ततः शुद्धा भवेत्तु सा'

इति प्रमाणं वर्त्तते नैमित्तिकाऽस्पृश्यतायां, अपरस्मिन् सङ्क्रमणे, या च जन्म-सिद्धा प्रत्युत वंशपरम्परापराऽस्पृश्यता भवेत्, सा किन्नाऽन्यत्र सङ्क्रमिष्यति ? अत एव तदर्थं प्रायश्चित्तादिवचनानि निर्दिष्टानि, तथा च—

( क्रमशः )

* सङ्क्रमते— तावन ( सङ्क्रमण ) धातावत्र तङ् ।

× निःश्वासात् परकीय-शुद्धाऽशुद्धपरमाणूनामन्यस्मिन् सङ्क्रमणमाशास्यते; अत एव यजमानगृहे जपनादिकार्ये यदा ब्राह्मणानां सम्मेलनम्भवति ; तदाऽन्यदीयनिःश्वासपरमाणव इतरस्मिन् सङ्क्रामेयुर्येन जपेऽशुद्धता स्यादिति धिया पृथग्गुल्फादिकं ज्ञाप्यते ; येन तद्धूमादिकप्रभावेण पारस्परिकपरमाणूनामितरेतरस्मिन् प्रभावो न पतेदिति ध्येयम् ।

# पाणिनीयस्य धुरन्धरलेखकाः ।

( ले० पं० छज्जूरामशास्त्री कविरत्नविद्यासागरः । )

यद्यपि बहु नाधीषे तथापि पठ पुत्र! व्याकरणम् ।
स्वजनः श्वजनो माभूत् सकलं शकलं सकृत् शकृत ॥ १ ॥
येनाक्षरसमाम्नायमधिगम्य महेश्वरात् ।
कृत्स्नं व्याकरणं प्रोक्तं तस्मै पाणिनये नमः ॥ २ ॥

येन मुनिपुङ्गवेन पाणिनिना भगवतः शंकरात् चतुर्दश-सूत्राणि लब्ध्वा सकलं स्वकीयं व्याकरणं प्रणीतम्, तस्मै भूयो भूयः प्रणतिः। पाणिनीय-व्याकरणं सर्वेभ्यः पूर्ववर्तिव्याकरणेभ्यः परमोत्कर्षमावहति । तदेव चानेकसहस्रवर्षेभ्यः संस्कृत-भाषायाः शासनं करोति । भगवत्पाणिनि र्गान्धार-देशमध्यवर्ति-शालातुरग्राम-निवास्यासीत् । यथा चैकत्र लिखितमपि "शालातुरीयमतमेतदनुक्रमेण„ केचिद्-विद्वांसः कलेश्चतुर्थी शताब्दीं पाणिनिमुनिस्थितिसमयं मन्यते, परन्तु प्रमादो-ऽयम्। यतो हि-राजतरङ्गिणी-मतमनुसृत्य कलेः षट्शताब्दीपर्यन्तं तु कौरवपाण्डवा एवाविद्यन्त भूतले। तेषाञ्च पश्चादेव महर्षि वेदव्यासो महाभारतं वेदान्तसूत्रं च प्राणैषीत्। एतस्यैव वेदान्तसूत्रस्य नाम पाणिनिना स्वकीयसूत्रे भिक्षुसूत्रमिति निर्दिष्टम्; अन्यच्च महाभारते पाणिनीय-व्याकरणानुसारं नावलोक्यन्ते साधवः प्रयोगाः। ततः स्पष्टं सिद्ध्यति-यत्किल पाणिनिर्वेदव्यासात्पश्चाद् बभूव । सम्प्रति सर्व-सम्मत्या नन्दराज्यत्वकाले पाणिनिस्थितिकालो मन्यते। मंतव्य-श्चायमेव । नन्दराज्यत्वकालो विक्रमसंवदारम्भाच्छतत्रयवर्षपूर्वं मन्यते । षड्गुरुशिष्येण स्वकीयचरणव्यूहे इदमपि लिखितम्-यदष्टाध्यायीव्याकरणप्रणेतुः पाणिने र्लघुभ्राता छन्दःशास्त्ररचयिता पिङ्गलमुनिरासीत् । एतस्यैव च समये निरुक्तकर्ता यास्कमुनि र्बभूव, यतःपाणिनिमुनेः, "यस्कादिभ्यो गोत्रे" इति सूत्रेण "यास्कः„ इति शब्दःसिद्धिमेति । यास्कमुनिश्च निजीयनिरुक्ते "परःसंनिकर्षः संहिता„ एतत्पाणिनिसूत्रमुद्धृतवान् । एतद्द्वयोः समान-कालिकत्वे सम्भवति नान्यथा । अस्तु । पाणिनेरेव समकालीनो वा किञ्चिदुत्तरकालीनः कात्यायनो मुनिरवर्तत, यस्य द्वितीयं नाम वररुचिरस्ति । यथाष्टाध्याय्यतिरिक्तं "जाम्बवती विजय„ नामकमेकं काव्यमपि पाणिनिना प्रणिन्ये । तथैवायं महात्मा वररुचिरपि पाणिनिव्याकरणस्य वार्तिकानि तु रचितवानेव परं काव्यमप्येकं निर्मितवान् यत्स्मरणं "वाररुचं काव्यम्„ इति निगद्य भाष्यकारेण कृतम् । वार्तिककारेण कात्यायनेन पाणिनिसूत्राणां त्रुटयो द्वेधा पूर्णीकृताः । कुत्रचित्सूत्रप्रत्त-विधीनां

प्रतिषेधो विधीयते,यथा "सुद्ध्युपास्यः„ इत्यत्र "संयोगान्तस्य लोपः" इतिसूत्रेण यलोपःप्राप्तःपरन्तु "यणःप्रतिषेधो वाच्यः„ इतिवार्तिकेन तन्निषेधः । क्वचिद्प्राप्तविधानम् यथा-औडुलोमिशब्दस्य बहुवचने पाणिनीयसूत्राद्प्राप्तस्याकारस्य "लोम्नोऽपत्येषु बहुष्वकारो वक्तव्यः" अनेन विधानं कृत्वा 'उडुलोमाः„ इतिसाधितम् । एवमेव बहुत्र स्थलेषु ज्ञातव्यम्, अस्माभिरिह दिङ्मात्रं प्रदर्शितम् । महर्षिपाणिनिग्रन्थे चेयत्त्रुटीनां विद्यमानता नासम्भवा, यतः 'प्रायेण मुह्यन्ति हि ये लिखन्ति" इति न्यायो मनुष्यमात्रं व्याप्नोति । अत एवैतदभिधीयते "मुनीनां च मतिभ्रमः" । एतस्य पश्चात् विक्रमसंवत्सरस्योपक्रमे वर्तमानस्य पुष्पमित्रस्य समकालीनो महर्षिपतञ्जलिरासीत् । एतेन सूत्राणां वार्तिकानां च यथेष्टप्रचारमदृष्ट्वा स्वकीयं महाभाष्यं वितेने । येन पाणिनीयव्याकरणमतिप्रचलितम् । महाभाष्यं पाणिनिसूत्राणामतिविशदा विस्तृता च व्याख्याऽस्ति । ईदृशी 'गद्यरचना' संस्कृतसाहित्यस्य कस्मिन्नपि ग्रन्थे नोपलभ्यते, इदमेव हि निदानं यत्संस्कृतसाहित्ये महाभाष्यं विपुलप्रतिष्ठाधिष्ठानम् । महाभाष्यकारस्य पाणिनिमुनौ महती श्रद्धास्ति परं तस्य भ्रमसमुत्सारणे तेनापि न विलम्ब्यते । "ऋलृक्" "नाज्झलौ" "नपुंसकादौ"(?) इत्याद्यनेक-सूत्राणि खण्डितान्येव । पश्चादेतस्य विक्रमीयषष्ठशतके भर्तृहरिरभूत् । यः "सेतुनाम्नीं भाष्यव्याख्यां वाक्यपदीयग्रन्थञ्च निर्ममौ, एतेनैकं पद्यं लिखितं येनास्य पूर्णवैयाकरणत्वं प्रतीयते । अहोभाष्यमहो भाष्यमहो वयमहो वयम् । मामदृष्ट्वा गतः स्वर्गमकृतार्थः पतञ्जलिः„ ॥ भर्तृहरेः किञ्चिदेव पश्चाद्र्थाद्विक्रमस्य सप्तमशतके पाणिनीयसूत्राणां "काशीका„ व्याख्यानिर्माता वामनो जयादित्यश्च पण्डितो बभूव । काशीकेयं पाणिनिसूत्राणामत्युत्कृष्टा व्याख्या, अस्या अपि टीकां विक्रमस्य नवमशतके महाप्रौढो हरदत्तपण्डितः "पदमञ्जरी„ तिनाम्ना लिखितवान् । अस्य पश्चाद्विक्रमस्यैकादशशतके काव्यप्रकाशकर्तुं मम्मटस्यानुजेन कैयटपण्डितेन महाभाष्यस्य "प्रदीप' नाम्नी व्याख्या विनिर्मिता । एतद्विषयकमस्माकमस्त्येकं पद्यम्—"नमस्तस्मै कैयटाय पण्डितेन्द्राय कुर्महे । यस्योत्तमप्रदीपेन विदीपे भाष्यमन्दिरम् ॥ एतदनन्तरं विक्रमस्य चतुर्दश-शतके माधवो विद्वान् बभूव, अयञ्च चतुर्वेद-भाष्यकारस्य सायणाचार्यस्याग्रज आसीत् । एतेन बोपदेवविदुषा दूषितं काशिकारचयितु र्वामनस्य मतं निर्दोषं साधितम् । यदेक-पद्येन स्फुटीभवति "बोपदेवमहाग्राहग्रस्तो वामनदिग्गजः । कीर्तेरेव प्रसङ्गेन माधवेन विमोचितः ॥ बोपदेवमनीषिणा विक्रमस्य द्वादशशतके "मुग्धबोध" नामकं व्याकरणं रचितम्, एतद्देशे बहु प्रचलति । ततः पश्चाद्विक्रमस्य षोडशशतके शेषकृष्णो

विपश्चिद्विद्यते स्म । येन पाणिनीयव्याकरणे " प्रक्रियाकौमुदी " सम्पादिता । एतस्यैव महात्मनः शिष्यः पाणिनीयसाम्राज्यधुरन्धरो भट्टोजिदीक्षित-पण्डितो-जातः । एष दाक्षिणात्यो विप्र आसीत् । विक्रमीयषोड़शशतकस्यान्तिमभाग-पर्यन्तं चायं वाराणस्यां पाठयामास । एतद्भ्रातुष्पुत्रकौण्डभट्टप्रणीते वैयाकरण-भूषणे भट्टोजिदीक्षितविषये एवं लिखितम्—"वाग्देवी यस्य जिह्वाग्रे नरीनर्त्ति सदा मुदा । भट्टोजिदीक्षितमहं पितृव्यं नौमि सिद्धये ॥" भट्टोजिदीक्षितविरचितो व्याकरणस्य सर्वोत्कृष्टो ग्रन्थः सिद्धान्तकौमुदी विद्यते । कौमुद्याः पूर्वं यावन्तः पाणिनीयव्याकरणग्रन्था आसन्, ते सर्वे अष्टाध्यायी क्रमेण सूत्राणि व्याचचक्षिरे । भट्टोजिकृतः "शब्दकौस्तुभ" ग्रन्थोऽप्येतादृश एव । एतस्मिन् सूत्राणां वृत्त्युदा-हरणव्याख्यादिकमष्टाध्यायीक्रमेण विरचितम् । परं कौमुद्यामेतेन पाणिनीय-सूत्राणि सारस्वतरीत्या नूतनशृङ्खलायां निबद्धानि । एतस्मात्पूर्वं लक्षणानुसारं लक्ष्याणि स्थाप्यन्तेस्म, परं कौमुद्यां लक्ष्यानुसारं लक्षणस्थिति विहिता । अनेन क्रमेण पाणिनीयव्याकरणस्य बोधः अध्यापकाध्येतृजनानामत्यन्तसाभूत् । इयतीञ्च प्रशंसां कौमुदीयमलभत, यन्महाभाष्यमप्येतस्याः पुरो भाररूपममन्यत । कौमुदीप्रकाशेन महाभाष्यात्सर्वेषां ध्यानमुन्मूलितम्, येन महाभाष्यस्य पठन-पाठन मपसृतम् किमप्यस्तु, परमद्य कौमदी यदि नाभविष्यत् तर्हि पाणिनीयव्याकरणस्य नाममात्रमवाशेक्ष्यत् । इदमस्माकं स्वकीयं मतम् परिवर्त्तनशीलोऽयं कालः, संप्रति-किञ्चित्समयात् मूलकौमुदीतोऽपि जनानां ध्यानमपसरति । कौमुद्याः केचिद्वि-शेषांशा या फक्किकाः सन्ति तासु तेषां ध्यानं याति । एवंविधा बहवो विद्वांसोऽस्माकं दृष्टिपथेऽवतीर्णा ये व्याकरणाचार्या भवन्तोऽपि मूलकौमदीं नाध्यापयितुं प्रभ वन्ति । न च तेषु संस्कृतभाषणस्य लेखनस्य वा योग्यताऽधिगम्यते । अत्र मुख्यो हेतुर्मूलकौमदीबोधराहित्यम्,अस्तु । विद्वद्भिरिह दृष्टिपातो विधेयः "छिन्ने मूले नैव शाखा न पत्रम्" । भट्टोजि-शिष्यस्तैलिङ्गपण्डितो वरदराजः कौमुदीसारमादाय "मध्यकौमुदीं„"लघुकौमुदीं„च विदधौ । भट्टोजि-कृतसिद्धान्त-कौमुद्याः सर्व-प्रथमा टीका । भट्टोजि-रचिता "मनोरमास्ति यस्याः टीकां तत्पौत्रो हरिदीक्षितः "शब्दरत्न„ नाम्नीं निर्मितवान् । द्वितीया टीका स्वामि-ज्ञानेन्द्रसरस्वती-प्रणीता "तत्त्वबोधिनी" वर्तते । याऽतीव हृदयङ्गमा तृतीया "शब्देन्दुशेखर" नाम्नी चास्ति । यस्या विदुषां समाजे साम्प्रतं महत्संमानम् । एतत्संपादकः—"शब्दरत्न" कर्तुर्हरिदीक्षितपण्डितस्यान्तेवासी महाराष्ट्रदेशीयो नागोजिभट्टो बभूव, एष पाणिनिकात्यायनपतञ्जलि-प्रणीतानि सूत्रवार्तिकभाष्याणि विहाय कैयटकृतप्रदीपे, भट्टोजिरचितकौमुद्याञ्चानेकस्थलेषु त्रुटीः प्रदर्शितवान् ।

या अनेन महाभाष्यपठनाज्ज्ञाताः "मञ्जूषायां" "परिभाषेन्दुशेखरे" चाध्ययमेव प्रथिनाय। मञ्जूषायामनेन दार्शनिकरीत्या वैयाकरणानां सिद्धान्ताः प्रतिपादिताः। परिभाषेन्दुशेखरे च तासां परिभाषाणां व्याख्यानं विद्यते या भाष्यवार्तिकयोः पठिताः। महाभाष्यस्यायं प्रकाण्डपण्डित आसीत्। एतच्चानेन स्वयमेव स्वकीये भाष्य-प्रदीपोद्योते लिखितम्। अस्य शेखरद्वयस्य मञ्जूषायाश्चेयान् प्रचारो बभूव। तत्तेषामुपरि विंशत्यासन्नाष्टीकाः समयादस्मात्पूर्वमेव संजाताः। ग्रंथत्रयं चैतद् व्याकरणस्योच्चश्रेणीषु पाठ्यते। चतुर्थी टीका सिद्धान्तकौमुद्याः "बालमनोरमा" विद्यते। यातिसरला सत्यपि(१) विस्तरबाहुल्यात्तत्रात्यनुपयुक्तास्ति। पञ्चमी टीका यथानामतथा गुणवती—"मूलचन्द्रिका" अस्माभिः सम्पादिता। या परीक्षार्थिनां छात्राणां विदुषां च परमोपयोगिन्यस्ति।

---

## श्रीशारदास्तोत्रम्

:०:

लेखक—विनायकरावभट्टः।

हंसासीनां सरोजाक्षीं ज्ञानविज्ञानवर्द्धिनीं
वचसामीश्वरीं वन्दे शारदां सिद्धिदायिनीम्॥ १॥

प्रोद्यत्पूर्णसुधांशुरम्यवदना दिव्याच्छवस्त्रावृता
शश्वच्चारुकिरीटकुण्डलयुता ग्रैवेयिकाभूषिता
वीणापुस्तकदण्डमण्डितकरा पद्मासने संस्थिता
अज्ञानौघघनान्धकारनिचय-प्रध्वंसनार्कोपमा॥ २॥

गीर्वाणासुरसिद्ध-किन्नरनरैः सेव्या जगद्व्यापिनी
भक्ताभीष्टफलप्रदा विधिहरिश्रीकण्ठ-संपूजिता
देवर्षिप्रमुखैः सुगाननिपुणैः नित्यस्तुता मङ्गला
कल्पामोदभरप्रसूनरुचिरस्रग्धारिणी भारती॥ ३॥

कीर्तिः कीर्तिमतां सदैव शरणं निष्किञ्चनानां किल
प्रज्ञाऽसौ विदुषां सतां सुजनता मेधा च मेधाविनां
कैवल्यं परमार्थिनां च परमा सिद्धिस्तु सद्योगिनां
वीता सत्व-रजस्तमोगुणगणैः स्फीताऽस्तु नः श्रेयसे॥ ४॥

या नारायणसंगता जलधिजा लक्ष्मीति सम्बोधिता
सावित्री चतुराननप्रियतमा या च त्रिवेदात्मिका
या कृष्णप्रियवल्लभा निगद्यते राधेति संकीर्तिता
या शक्री रजताद्रिनाथरमणी सा पातु मां नित्यशः॥ ५॥

---

[(१) अनुपयुक्तत्वे 'विस्तरबाहुल्यं' हेतुः चिन्तनीयो भाति। सं०]

# अखिल-भारतवर्षीय-संस्कृतविश्वविद्यालय-परीक्षाफलम्।

श्रीमहामण्डलभवन जगतगंज बनारस।

सं० १९९१ वै० ( सन् १९३४ ई० )।

——:*:——

## आयुर्वेदाचार्यपरीक्षायाम्

रोल नम्बर ( प्रथमविभागे ) [ केन्द्रनामानि ]

१४३—श्रीनागेन्द्रनाथ कौशलशास्त्री ऋग्वेदमहाविद्यालय, सतरञ्जीमुहाल —कानपुर

९०—श्रीरामप्रतापशर्मा गौड़। स० ध० सभा संगरिया—बीकानेर

७—श्री उत्तमराम शुक्लः वैद्य। व्रजमंडल यूनिवर्सिटी—मथुरा

## आयुर्वेदशास्त्रिपरीक्षायाम्

( प्रथमविभागे )

१४६—श्रीविन्ध्येश्वरीप्रसाद अग्निहोत्री ऋग्वेद महाविद्यालय कानपुर

( द्वितीय विभागे )

६१—श्री शुभनारायण पाठक—हिन्दी सं० पुस्तकालय, शिवपुर-दियर, बलिया

१७४—श्रीरामचन्द्रद्विवेदी—बालपरिषद् ऐसोसियेशन, श्रीनिवासगार्डेन, कानपुर सिटी

१—श्रीप्रभुदयालद्विवेदी—सं० पाठशाला—जालौन, कौंच

१३८—श्रीरामनाथशुक्ल—ऋग्वेदमहाविद्यालय,—कानपुर

३२—श्रीश्यामसुन्दर चतुर्वेदी—स० ध० महासभा सं० पाठशाला—इटावा

७६—श्रीचन्द्रदत्त ब्रह्मचारी—स० ध० विद्यालय—नारनौल

१४५—श्रीरामभरोसशुक्ल—ऋग्वेद महाविद्यालय—कानपुर

१७०—श्रीवागीश्वर वाजपेयी—बालपरिषद् ऐसोसियेशन, श्रीनिवासगार्डेन, कानपुर सिटी

३७—श्रीरामनाथपाण्डेय शास्त्री—स० ध० महासभा सं० पाठशाला—इटावा

१४७—श्रीजयनारायण पम्बु सारस्वत—ऋग्वेद महाविद्यालय—कानपुर

१७१—श्रीगुरुचरणलाल द्विवेदी—बालपरिषद् ऐसोसियेशन, श्रीनिवासगार्डेन कानपुर सिटी

१७२—श्रीरामलालशुक्ल

रोल नम्बर

१०६—श्री लज्जाराम दीक्षित—स० ध० महासभा सं० पाठशाला इटावा

१७२—श्री देवनारायण पाण्डेय—बालपरिषद एसोसियेशन श्रीनिवासगार्डेन, कानपुर सिटी

१६४—श्रीसिद्धनाथपाण्डेय—उपदेशक महाविद्यालय लक्ष्मीकुण्ड बनारस

७०—श्रीसनत्कुमार शर्मा स० ध० विद्यालय नारनौल

११२—गणेशझा दिगम्बर जैन सं० विद्यालय कटनी

१५० —गिरिजाशंकर अवस्थी ऋग्वेद महाविद्यालय, कानपुर

## वैद्यभूषणपरीक्षायाम्

( द्वितीय विभागे )

१४१—भगवानदास जैन ऋग्वेदमहाविद्यालय, कानपुर

१६६—गणेशप्रसाद बालपरिषद एसोसियेशन श्रीनिवासगार्डेन, कानपुरसिटी

## आयुर्वेदमध्यमपरीक्षायाम्

( द्वितीय विभागे )

४—नारायणशर्मा गौतम धर्मज्ञान विद्यालय खेतरी, राजपूताना

४४—रामप्यारे उपाध्याय हरिहरनाथ विद्यालय, रसड़ा, बलिया

२—भगवद्दास अग्रवाल सं० पाठशाला जालौन, कोंच

३६—रूपकिशोर शुक्ल स० ध० महासभा सं० पाठशाला, इटावा

( तृतीयविभागे )

५—रामप्रसाद शर्मा धर्मज्ञानविद्यालय, खेतरी, राजपूताना

## आयुर्वेदप्रथमपरीक्षायाम्

( प्रथमविभागे )

१०२—वासुदेव मिश्र हिन्दी संस्कृतपुस्तकालय शिवपुर दियर, बलिया

४१—नेमीचन्द जैन राधामोहनपुस्तकालय, करौली, राजपूताना

७१—जगदीशप्रसाद शर्मा स० ध० विद्यालय, नारनौल, पटियाला

४०—पुरुषोत्तमलाल शर्मा राधामोहन पुस्तकालय, करौली, राजपूताना

१७१—रामशुकाम त्रिवेदी ऋग्वेदमहाविद्यालय, कानपुर

१५६—गणेशशंकर मिश्र " " " "

६—बालकरामशुक्ल ब्रजमण्डल युनिवर्सिटी मथुरा

३६—वासुदेवशर्मा राधामोहनपुस्तकालय, करौली, राजपूताना

१२६—केशवप्रसाद गुप्त दिगम्बर जैन सं० विद्यालय, कटनी

रोल नम्बर

१२३—मोतीलाल जैन " " " "

१०४—जगदीश पाठक हिन्दी सं० पुस्तकालय, शिवपुर दियर, बलिया

१५३—प्रयागनारायण शुक्ल ऋग्वेद महाविद्यालय, कानपुर

७२—बुद्धराम शर्मा स० ध० विद्यालय, नारनौल, पटियाला

१५८—चन्द्रचूड़ दीक्षित ऋग्वेद महाविद्यालय, कानपुर

१२७—श्रीपार्वती देवी दिगम्बर जैन सं० विद्यालय, कटनी

११५—छोटेलाल जैन " " " " "

१५५—देवीप्रसाद पाण्डेय ऋग्वेद महाविद्यालय, कानपुर

१४—अयोध्यानाथ झा हरिहरम्बा राज्य सं. महाविद्यालय, अमावां पटना

१०३—मथुरा पाठक हिन्दी सं० पुस्तकालय, शिवपुर-दियर, बलिया

१०—हरिवल्लभ त्रिपाठी व्रजमण्डल युनिवर्सिटी, मथुरा

(तृतीय विभागे)

१६—श्री उमेशचन्द्र झा हरिहरम्बाराज्य सं० महाविद्यालय अमावां, पटना

२०—श्री आदित्य पाण्डेय " " " " " "

२८—श्री शालिग्राम शर्मा तिलक लाईब्रेरी, चांदपुर—बिजनौर

## व्याख्यान विशारद परीक्षायाम्

(प्रथम विभागे)

६६—श्रीशिवकुमारशास्त्री—उपदेशकमहाविद्यालय, लक्ष्मीकुण्ड, बनारस

(द्वितीय विभागे)

१३८—श्रीचिरञ्जीलाल शर्मा—विश्वविद्याश्रम चन्दौसी, मुरादाबाद

## दर्शनाचार्यपरीक्षायाम्

(द्वितीयविभागे)

१८१—श्री बलवन्तशर्मा माणिक बाई सं० वैदिकपाठशाला पोरबन्दर।

## सीनियर परीक्षायाम्

(द्वितीय विभागे)

११८—श्रीबद्रीप्रसाद गुप्त सनातनधर्मकालेज कानपुर।

१३७—श्रीजयनारायणत्रिपाठी " "

१२१—श्रीक्षितीश चन्द्रचटर्जी " "

११७—श्रीशिवरामदास दुबे "

रोल नम्बर

## जूनियरपरीक्षायाम्

प्रथमविभागे

१५१—श्रीवासुदेव द्विवेदी ऋग्वेदमहाविद्यालय कानपुर।
१५२—श्रीरमेशचन्द्र " " "
६९—श्रीनटवरलाल शर्मा उपदेशक महाविद्यालय, लक्ष्मीकुण्ड, बनारस।

( द्वितीय विभागे )

४२—श्रीमंगुलाल वर्मा तिलक लाईब्रेरी, चांदपुर, बिजनौर
२५—श्रीयशदेव वर्मा " " " "

## साहित्याचार्यपरीक्षायाम्

( प्रथमविभागे )

१८७—श्रीवैजनाथगौड़ शास्त्री

## साहित्यशास्त्रिपरीक्षायाम्

( द्वितीय विभागे )

१७८—श्रीहरिवंशलाल दीक्षित विहारी सं० विद्यालय, चाँदपुर, बिजनौर।
१७९—श्रीलीलापति दिवाकर " " " " "

## साहित्यमध्यमपरीक्षायाम्

( प्रथमविभागे )

६२—श्रीधर्मनाथत्रिपाठी उपदेशक महाविद्यालय, लक्ष्मीकुण्ड, बनारस।
८७—श्रीगौरीशंकर पुरोहित, देवीदास लल्लुभाई सं० पाठशाला
गुलालवाड़ी, बम्बई।

( द्वितीयविभागे )

८६—श्रीभट्ट मूलशंकर शर्मा, देवीदास लल्लुभाई सं० पाठशाला,
गुलालवाड़ी, बम्बई

६६—श्रीहीराधरद्विवेदी उपदेशक महाविद्यालय, लक्ष्मीकुण्ड, बनारस।

( तृतीयविभागे )

८३—श्रीपन्नालाल व्यास देवीदास लल्लुभाई सं० पाठशाला,
गुलालवाडी, बम्बई।

६८—श्रीरामगहन त्रिपाठी उपदेशक महाविद्यालय, लक्ष्मीकुण्ड,
बनारस।

रोल नम्बर

८४—श्रीचुन्नीलाल जोशी देवीदास लल्लुभाई सं० पाठशाला, गुलालवाड़ी, बम्बई ।

## साहित्य-प्रथम परीक्षायाम्

( द्वितीयविभागे । )

८२—श्रीमणिशंकर भट्ट देवीदास लल्लुभाई सं० पाठशाला, गुलालवाड़ी, बम्बई ।

( तृतीयविभागे । )

६७—श्रीस्वामीपरमानन्द उपदेशक महाविद्यालय, लक्ष्मीकुण्ड बनारस ।

६६—श्रीस्वामी शिवपुरी " " "

६८—श्रीब्रह्मचारी शिवचैतन्य संन्यासी " " "

## व्याकरणमध्यमपरीक्षायाम्

( तृतीयविभागे )

२२—श्रीरुद्रानन्दपाठक, हरिहरम्बाराज्य सं० महाविद्यालय, अमावां, पटना

## व्याकरणप्रथमपरीक्षायाम्

( प्रथमविभागे )

१८८—श्रीकेशवलाल शर्मा माणिकबाई सं० वैदिकपाठशाला, पोरबन्दर, काठियावाड़

१९०—श्रीवामनराव शर्मा " " " "

( द्वितीयविभागे )

१८४—श्रीभाणजीशर्मा माणिकबाई सं वैदिक पाठशाला, पोरबन्दर, काठियावाड़

१९२—श्रीशिवहरलाल शर्मा " " " "

१९३—श्रीआत्माराम शर्मा " " " "

१८३—श्रीगिरीशचन्द्र शर्मा " " " "

१८५—श्रीहरिलाल शर्मा " " " "

१११—श्रीशान्तिदेवी स० ध० महासभा सं० पाठशाला इटावा

९३—श्रीगौरीशंकर शर्मा स० ध० सभा, बीकानेर

१८६—श्रीलालजी शर्मा माणिकबाई सं० वैदिक पाठशाला पोरबन्दर

९४—श्रीसत्यनारायण शर्मा स० ध० सभा संगड़िया बीकानेर

१८२—श्रीनाथालाल शर्मा माणिकबाई सं० वैदिक पाठशाला, पोरबन्दर

रोल नम्बर

५६—श्रीमोरध्वज शर्मा हंसमठ, पीलियाखाल इन्दौर
१३४—श्रीमथुराप्रसाद दीक्षित हितकारिणी सं० पाठशाला, जब्बलपुर
१५६—श्रीगदाधर प्रसाद त्रिपाठी " " "
५२—श्रीकुमारी निर्मला जमनादास संघवी देवीदास लल्लुभाई सं० पाठशाला, गुलालवाड़ी, बम्बई
६५—श्रीहजारीलाल शर्मा स० ध० सभा, संगड़िया बीकानेर
१६१—श्रीमुकुन्दराय शर्मा माणिकबाई सं० वैदिक पाठशाला पोरबन्दर
५८—श्रीअम्बाशंकर भट्ट देवीदास लल्लुभाई सं० पाठशाला गुलालबाड़ी, बम्बई
१४२—श्रीकस्तुरचन्द्र शर्मा स० ध० सभा संगड़िया, बीकानेर
६२—श्रीदौलतराम शर्मा " " " "
१२८—श्रीहीरालाल वर्मा हितकारिणी सं० पाठशाला जब्बलपुर
५६—श्रीमहाशंकर जोशी देवीदास लल्लुभाई सं० पाठशाला गुलालवाड़ी बम्बई
१८४—श्रीमणिशंकर शर्मा, माणिकबाई । सं० वैदिक पाठशाला पोरबन्दर ।

( तृतीय विभागे । )

८१—श्रीमगनलाल गोड़ लल्लुभाई सं० पाठशाला, गुलालवाड़ी, बम्बई
६६—श्रीगोकुलराम शर्मा पुरोहित ध० सभा संगड़िया बीकानेर ।
१२६—श्रीगौरीशंकर पाण्डेय हितकारिणी सं० पाठशाला, जब्बलपुर ।
१८७—श्रीहरगोविन्द शर्मा माणिकबाई सं० वैदिक पाठशाला, पोरबन्दर

## धर्मप्रवेशिकापरीक्षायाम् ।

( प्रथम विभागे । )

७४—श्रीमती सावित्रीदेवी संस्कृत महाविद्यालय, शाहाबाद, ( आरा । )
७५—राधेश्यामपाण्डेय " " " "
७६—यमुनादत्तचतुर्वेदी " " " "
५५—ब्रजेन्द्रसूरि हंसमठ, पीलियाखाल इन्दौर ।
१६७—तुरन्तलाल पाठक हरिहरम्बा राज्य सं० महाविद्यालय, अमावाँ पटना
३३—रामावतार दीक्षित स० ध० महासभा सं० पाठशाला, इटावा ।

( द्वितीयविभागे । )

२३—यदुनन्दन झा हरिहरम्बा राज्य सं० महाविद्यालय, अमावाँ, पटना
७७—उमाशंकर चतुर्वेदी संस्कृतमहाविद्यालय शाहाबाद, ( आरा । )
७८—गणेशदत्तत्रिपाठी " " "
७६—रामनरेश पाठक " " "

रोल नम्बर
१५३—रामसेवक शुक्ल ऋग्वेद महाविद्यालय, कानपुर।
२४—रामेश्वर झा हरिहरम्बाराज्य सं० महाविद्यालय, अमावां पटना।
६०—जगन्नाथ उपाध्याय उपदेशकमहाविद्यालय, लक्ष्मीकुण्ड, बनारस।

( तृतीयविभागे। )

६७—सूर्यनारायण झा हरिहरम्बाराज्य सं० महाविद्यालय, अमावां, पटना।

( सर्वाभ्यर्हितायाम् पी० एच डी प्रभृतिपरीक्षायश्चाधोनिर्दिष्टा विद्वांसः समुत्तीर्णाः। )

## पी० एच्० डी० परीक्षायाम्।

श्रीस्वा० ब्रह्मानन्दगिरिजी वेदान्तशिरोमणिः, उपदेशकमहाविद्यालयः, लक्ष्मीकुण्ड, काशी। श्रीधर्मभास्कर मंगियाह वि० ए० एल० टी०।

## बी० टी० सी० परीक्षायाम्।

१—शोभाराम वर्मा सनातनधर्म कालेज, कानपुर
२—राजनारायण भट्टनागर शास्त्री, किरातपुर, बिजनौर
३—पद्मदेवपाण्डे सनातनधर्मकालेज, कानपुर
४—रामचन्द्र शर्मा " " "
५—हरेन्द्रनारायण पाण्डेय कल्हुवा होस्टल, बनारस।
६—गोविन्द नारायण मोहनत, सनातनधर्मकालेज, कानपुर

## चौल-कर्मणि मुण्डनम्।

चौले शिखां वर्जयित्वा वपनमुत सशिखं वपनमिति विचारे—

बौधायनापस्तम्बपारस्करादिभिर्महर्षिभिः "अथैनमेकशिखस्त्रिशिखः पञ्चशिखो वा (यथैवैषां कुलधर्मः स्याद्यथर्षिशिखां निदधातीत्येके" बौ, गृ, २-४-१७-१८ ) यथर्षि शिखां निदधाति यथैवैषां कुलधर्मः स्यात्" ( आप गृ-१६-१५ ) "यथामङ्गलं केशशेषकरणम्" ( पा० गृ-२-१-२१ ) इत्यादिसूत्रैः शिखाधारणस्य आवश्यकता प्रतिपादिता। "केशशेषं ततः कुर्याद्यस्मिन् गोत्रे यथोचितम्। वसिष्ठा दक्षिणे भागे उभयत्रापि कश्यपाः शिखां कुर्वन्त्यङ्गिरसः शिखाभिः पञ्चभिर्युताम्, परितः केशपङ्क्तया वा मुण्डाश्च भृगवो मताः" इत्यादि स्मृत्या च आर्षसङ्ख्यया कुलधर्मतो देशविशेषे शिखाधारणं विधीयते चूडाकरणम् इत्यन्वर्थसंज्ञाकरणाच्च चौले शिखाधारणं कर्त्तव्यमिति प्रतीयते। शिखाधारणार्थमेवायं संस्कारो न तु शिखाच्छेदनार्थमिति संस्कारप्रकाशादौ निर्णीतम्। संस्कारकौस्तुभेऽपि उपनयनप्रकरणे चौलकाले धृतानां शिखानां मध्ये मध्यशिखेतरशिखानामुपनयने वपनं कार्यम्॥ इत्युक्तया चौले शिखानां धारणमेवोक्तम्। वीरमित्रोदये—"शिखां छिन्दन्ति ये मोहाद् द्वेषादज्ञानतोऽपि वा तप्तकृच्छ्रेण शुद्ध्यन्ति त्रयो वर्णा द्विजातयः। इति हारीतेन शिखाविनाशे प्रायश्चित्ताभिधा

नाश्च चौलप्रभृति यावज्जीवं शिखाया अवश्यधार्यत्वमवगम्यते । तस्मात् चौले सशिखं वपनं न कार्यं शिखा धार्येवेति ।

श्रीविद्याधरशर्मा, वेदाचार्यः ।

लय काशी ।

---

## 'विराट्कविसम्मेलनम् सरस्वतीसम्मेलनञ्च'

—:o:—

विदितमस्तु शास्त्रनिष्णातधियां सुधियां 'बुलन्दशहरमण्डलान्तर्गत सिकन्दराबादीयमहाविद्यालयस्य गुरुकुलस्य महामहसि एकमभूतपूर्वं कविसम्मेलनम् सरस्वतीसम्मेलनञ्च शिवविभावर्या अवकाशे सोत्साहं सम्पत्स्यते । यस्मिन्ननेके गीर्वाणवाणीतत्त्वविदो विद्वद्वरिष्ठाः स्वकविताह्लादित-सामाजिक-स्वान्ताः कविवराश्च निमन्त्रिताः सन्ति । आशासे श्रीमन्तो महानुभावाः स्वागमनेन कृतार्थयिष्यन्ति नः समस्यापूर्तिप्रेषणेन च तोषयिष्यन्ति मनांसि ।

'समस्याः'

१—जयति कश्चिद्यतिवरः,

२—निगमाध्वनिष्ठः,

३—भारतं दैवदग्धम्,

४—कर्माण्यारभते श्रुतिस्मृतिपथोद्भूतान्यनारागयहो,

सरस्वतीसम्मेलने 'वैदिकधर्माभिनिविषयकाः' निबन्धा भविष्यन्ति । सर्वोत्तमकविताविधातॄणां कृते पारितोषिकत्वेन पदकं वितरिष्यते । समस्यापूर्तिं विधाय २० विंशतितारिकायाः फरवरीमासस्य पर्यन्तं मन्त्रिसविधे प्रेषणीयं वलम् ॥

विदुषां वशंवदः

ब्र० परशुराम ।

महाविद्यालय गुरुकुल सिकन्दराबाद, जि० बुलन्दशहरः,

---

## सरस्वतीपूजनोत्सवः ।

छपरामण्डले हथुआ राजकीय श्रीछत्रधारिसंस्कृतविद्यालये भगवत्याः सरस्वतीदेव्याः पूजनस्यतृतीयवार्षिकोत्सवः जातः तस्मिन्नेव दिने सायंकाले श्रवणकुमार नाटकाभिनयोऽपि सम्भूत् । स च जनरञ्जकश्च द्वितीये प्रधानाध्यापकस्य सभापतित्वे सनातनधर्मस्य सभा सुसम्पन्नेति ।

श्रीरामराजत्रिपाठी साहित्यशास्त्री पुराणरत्नम्, श्रीछत्रधारिसंस्कृत विद्यालयस्थः ।

# वेदान्तदर्शन-भाष्य-भूमिका ।

ॐ पूर्णमदः पूर्णमिदं पूर्णात् पूर्णमुदच्यते ।
पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ॥
यस्मिन् सर्वे यतः सर्वे यः सर्वे सर्वतश्च यः ।
यश्च सर्वमयो देवस्तस्मै सर्वात्मने नमः ॥ १ ॥

कारणब्रह्म-कार्य्य-ब्रह्मणः पार्थक्य-ज्ञानमेव भवत्यज्ञानम्, तत्त्वज्ञानस्य पूर्णतया तु कार्य्यब्रह्म-कारणब्रह्मणोरेकत्वमनुभूयते । एवमेकस्यामद्वैत-सत्ताया महम्भावेदम्भावयोः पृथक्-सत्ताया अनुभवनमज्ञान-कार्यं भवति । एतयोर्द्वयोः पृथक् सत्ताविलयतः सच्चिदानन्दमयाऽद्वितीयब्रह्म-सत्तायाः प्रतिष्ठैव भवत्यात्मज्ञान-स्वरूपम् । विज्ञान-रहस्यमिदमन्यथापि शक्यते ज्ञातुम्,

यथा हि ब्रह्माण्डसम्बन्धतो ब्रह्म ब्रह्माण्डयोः पार्थक्यमज्ञानेनैव प्रतीयते । तथैव पिण्ड-सम्बन्धादहमिदम्भावयोः पृथक्-सत्ताऽज्ञानेनैवाऽवगम्यते । बाह्याभ्यन्तरेषु कार्य्य-कारणेषु ब्रह्माण्डपिण्डेषु च यदद्वितीय-ब्रह्मसत्तायाः प्रतिष्ठा भवति, तदेवात्मज्ञानस्वरूपम् । एतदात्मज्ञानोदयायैव वेदान्त-सिद्धान्तात्मकस्य ब्रह्म-मीमांसा-दर्शनस्य प्रवृत्तिरुपजायते । अज्ञानतः खलु समुत्पद्यते सृष्टि-प्रपञ्चः । अतः सृष्टे र्यथार्थ-स्वरूपज्ञानमन्तरेण सृष्टयतीतस्य अज्ञान-राज्यतः परस्याऽनुभवनीयस्य स्वस्वरूपस्य ब्रह्मणोऽनुभवो न शक्यते कर्त्तुम् । अतो ब्रह्मावबोध-जनकत्वेन सृष्टि-रहस्यमवश्यमेव प्रागवगन्तव्यम् । अधिभूत-रूपा पिण्डसृष्टिरधिदैवरूपा ब्रह्माण्डसृष्टिरध्यात्मरूपा अनाद्यनन्तप्रवाहसृष्टिरिति सृष्टेस्त्रैविध्यंवेदस्योपासनाकाण्डाय-मीमांसा-शास्त्रतो दैवीमीमांसा-दर्शनतो विद्यते सिद्धम् । ( 'अनाद्यनन्ताऽध्यात्मिकी सृष्टिः' दै० मी० २।२ । 'आधिदैवाधिभौतिक्यौ सादि सान्ते दै० मी० २।४।) चतुर्विंशति-तत्त्वमय्याः पिण्डसृष्टेः सुसिद्धत्वं सांख्य-दर्शनतो निर्णीतमास्ते । अत एव बहुपुरुष-वादोऽपि स्वीकृतः सांख्यदर्शने, यतः प्रत्येकपिण्डे पञ्चविंशतत्त्व-रूपा पुरुषसत्ता स्वातन्त्र्येण पार्थक्येन चानुभवगम्यता-

मापद्यते। ("सत्त्वरजस्तमसां साम्यावस्था प्रकृतिः, प्रकृतेर्महान् महतोऽहङ्कारोऽहङ्कारात् पञ्चतन्मात्राणि, उभयमिन्द्रियं, स्थूलभूतानि, पुरुष इति पञ्चविंशतिर्गणः" सां० सू० १।६१ ) ('जन्मादिव्यवस्थातः पुरुषबहुत्वम्' सां० सू० १।१४६। ) पिण्डरूपेयमधिभूतसृष्टिः पिण्डस्योत्पत्ति-प्रलयसम्बद्धरूपतः सादिः सान्ता चेति स्वतः सिद्धं स्यात्। ('ततो ब्रह्माण्डापिण्डे नश्वरे' दै० मी० २।५।) अधिदैवसृष्टिरूपायाश्चतुर्दशलोकमय्या ब्रह्माण्डसृष्टेः सहजजैवैशकर्ममयं रहस्यं कर्ममीमांसादर्शने संक्षेपतो निरूपितमस्ति।

जैवैश-सहजाख्यानां द्रष्टा सन् कर्मणामहम् ।
गतिभिस्तु स्वतन्त्राभिरमीभिस्त्रिभिरेव वै ।
सम्प्रयच्छामि कैवल्यं त्रिविधं वै विशेषतः,

( इति दैवीमीमांसादर्शनेऽपि' )

"यथापूर्वमकल्पयत्" इति श्रुतिदर्शनात् ब्रह्माण्ड-सृष्टिरूपाधिदैवसृष्टिः सादिः सान्ता चेति ( "पिण्डवदुत्पादविनाशो ब्रह्माण्डस्य" कर्ममी० २।२०४ ) भवति सर्वतन्त्रसिद्धान्तः। यथैकस्य मानवपिण्डस्य निर्जीवतस्वतो विनाशेऽप्यन्येऽसंख्या मानवपिण्डा जीवन्तस्तिष्ठन्ति तथैवैकस्य ब्रह्माण्डस्य प्रलयता विनाशेऽप्यन्येऽसंख्य-ब्रह्माण्डनिचया भगवतः परमात्मनः परमेश्वरस्य विराड्देहे स्वस्वरूपतोऽवस्थिता वर्तन्ते। सृष्टि-प्रवाहरूपाऽध्यात्मसृष्टिरनादिरनन्तेति दैवीमीमांसादर्शनतः सिद्धं भवति। ब्रह्माण्डपिण्डयोः सादिसान्तत्वं वेदादि-शास्त्रेषु प्रतिपादितमस्ति। यदैकपिण्डवर्त्ती जीवो निर्वाणपदमारोहति तदा तदीयांशभूता प्रकृतिर्मूल-प्रकृतावेति लयम्। एवम् तदीयपिण्डसत्ताऽवच्छिन्ना चेतनसत्ताऽपि स्वस्वरूपमुपलभ्य सागरे गगनपतितवारिबिन्दुवद् ब्रह्मसागरे विलयमधिगच्छति। यावद्धि निःश्रेयसपदं नाधिगम्यते जीवेन तावदस्य स्थूलपिण्डो भूयो भूयो विलयमाप्नोति, परन्तु सूक्ष्म-शरीरमस्य विविधलोकानवाप्य यातायात-चक्रेषु परिभ्रमतीति ("संसृतिः सूक्ष्मस्य" क० मी० २।१५५) पिण्डसृष्टि-ज्ञानतो ब्रह्माण्डसृष्टि-ज्ञानस्योत्कर्षः। ब्रह्माण्ड-सर्ग-प्रारम्भे "यथापूर्वमकल्पयत्" इति श्रुतिविज्ञानानुसरणतः यत् ब्रह्माण्डं प्रलयतःप्रकृति-गर्भे विलीय परमात्मनि लीनमासीत् तदेव बीजरूपस्य संस्कारराशेरनुरूपमाविर्भवति। एकस्य ब्रह्माण्डस्य विनाशदशायां यथा यथा स्वेदजाण्डजजरायुजादयः सहजपिण्डा आकर्णानाच्यादयो मानवपिण्डा देवासुरर्षि-पितृरूपा देवपिण्डा यान्संस्कारानासाद्य विलीना भवन्ति, तांस्तान् संस्कारान् सम्प्राप्य पुनराविर्भवन्ति। अद्वितीय-ब्रह्मसत्तायां सच्चिदानन्द-

भयाद्वैतभावे सद्भावाधिक्यानुभवात् अहमस्मीति भावो ब्रह्मशक्तेस्तुरीयाया दशायाः साहाय्यतः प्रकटतामाप्नोति। अयमेव निर्गुणब्रह्मतः सगुण-ब्रह्मपदाविर्भावोऽभिधीयते। ब्रह्मशक्तिरूपाया मूलप्रकृते र्महामायाया वैभवमेवास्य कारणम्।

सृष्ट्वाऽखिलं जगदिदं सदसत्स्वरूपं।
शक्त्या स्वया त्रिगुणया परिपाति विश्वम्॥
संहृत्य कल्पसमये रमते तथैका।
तां सर्वभूतजननीं मनसा स्मरामि॥

(दै० मी० २।५) अनन्तरं ब्रह्मशक्तेः परिणामतः सृष्टिरैशी प्रारभ्यते। तदैवेश्वरस्य तुरीया शक्तिः कारणशक्तिरूपतामासाद्य ब्रह्माण्डगोलकमुत्पादयति। तावत् जीवशून्य एवासीद्गोलकः। ('ततश्चतुर्दशकलं गोलकं' दै० मी० २।२०७) ततः सा कारणशक्तिः त्रिमूर्त्तिजननीभूय ब्रह्मविष्णुमहेशान् जनयति। ('तत्र त्रिमूर्तिः' २।२०६ 'उत्पादको ब्रह्मा' २।२०८ 'स्थितिहेतुर्विष्णुः' २।२०९ 'संहर्ता रुद्रः' २।२१०) इयमेवावस्था निरूपिता पुराणेषु। यथा योगनिद्रया निद्रितस्य भगवतो नारायणस्य नाभिकमलतो भगवान् ब्रह्मा, स्वाविर्भावमासादयति।

योगनिद्रां यदा विष्णुर्जगत्येकार्णवीकृते।
आस्तीर्य शेषमभजत् कल्पान्ते भगवान् प्रभुः॥

(इत्यादि मार्कण्डेयपुराणे)

ब्रह्मणस्तृतीयनेत्रतो भगवान् रुद्र आविर्भवति। अस्मिन्नेव समये भगवान् ब्रह्मा स्वकार्य्यमारभते। ततः सनकादिपरमहंसानां दक्षादि-दशप्रजापतीनां सहज-मानव-देवपिण्डमयानां सृष्टिः क्रमशः प्रचलति। "त्रिविधं पिण्डं सहजमानव-देवभेदात्" (कर्ममी० सं० पा० सू० १७४)।

सहजो मानवो दैवो जीव-पिण्डस्त्रिधा मतः।
मर्त्येभ्यश्चेतरे निम्ना भूतसंघाश्चतुर्विधाः॥
यैस्तु कर्मफलं पिण्डैर्भुज्यते सहजा हि ते।
मर्त्योपयुक्तपिण्डा हि कथ्यन्ते मानवाभिधाः॥
दैवपिण्डाश्च ये व्याप्ता भुवनानि चतुर्दश।
वर्तन्ते पितरो दैवभोगायतनरूपिणः॥

(कर्ममी० भाष्यम्)

पुनः समुपस्थिते महाप्रलये ब्रह्माण्डपिण्डावेकदैव लयमापद्येते। ततः पृथ्वी

सलिले सलिलमग्नौ अग्निर्वायौ वायुराकाशे आकाशो दिक् कालश्च मूलप्रकृतौ विलयमाप्नुवन्ति। इन्द्रियाणि च स्वस्व-कारणेषु तन्मात्रेषु तन्मात्राण्यहंतत्त्वेऽहंतत्त्वं महत्तत्त्वे महत्तत्त्वं मूलप्रकृतौ विलयमुपयान्ति। ततो मूलप्रकृतिरूपा ब्रह्म-शक्तिः "अहं ममेतिवत्" इति सिद्धान्तस्य कृतार्थतानुरूपमहमस्मि इति भावपर्य्यन्तं सर्वं स्वेन सहैव लीनं विधाय ब्रह्मणि विलयमधिगच्छन्ती, अद्वितीय-सच्चिदानन्दात्मकं स्व-स्वरूपोदयमाविर्भाव्य स्वयमपि विलयमेति। एषा ब्रह्मशक्तिर्महामायैव विद्याऽविद्येति द्विधा विभज्यते। तत्राविद्या अज्ञान-जनना द्वैतप्रपञ्चविधायिनी च भवति। विद्या तु ज्ञान-जननी द्वैतप्रपञ्चरहिताऽनन्दमय स्व-स्वरूप-प्रकाशिनी च त्रिगुणमयी प्रकृतिः पूर्वं तुरीयावस्थायां गुण-साम्ये सम्बद्धा तिष्ठति, सा हि प्रकृतिः दर्शनान्तरैः साम्यावस्थेति अव्यक्तेति प्रधानमिति च गीयते। तत्र प्रकृतावारब्धे एव गुणविकाशे क्रियाशीलं रजः प्रधानतामेति। यदा स एव रजोगुणस्तमोगुणमादाय परिणामी भवति, तदा भवत्यविद्या-विलास-भवनम्। यदा स एव रजोगुणः सत्त्वगुणमादाय परिणाममाप्नोति, तदा भवति महामायाया विद्यास्वरूपस्य विलास-निकेतनम्। इदमेव ज्ञानाज्ञानयो मोक्ष-बन्धयोः स्वरूपज्ञान-तटस्थ-ज्ञानयोरद्वैत-द्वैतावस्थयोः प्राकट्य-कारणं मनोवाणी-बुद्ध्यतीतं गूढतमं रहस्यम्।

षोडशपदार्थ-विचारतो भवति तत्त्वज्ञानमिति कस्यचिद्दर्शनस्य मतम्। 'प्रमाण-प्रमेय-संशय-प्रयोजन दृष्टान्त—सिद्धान्तावयव-तर्क—निर्णय-वाद-जल्प-वित—ण्डाहेत्वाभासच्छल-जाति-निग्रहस्थानानां तत्त्वज्ञानान्निःश्रेयसाधिगमः।'

( गौ० सू० १।१।१ )

षट्पदार्थ-विचारत आहोस्वित् सप्तपदार्था-नुसन्धानतस्तत्त्वज्ञानमित्यन्यस्य, ( 'धर्मविशेषप्रसूताद्द्रव्य-गुणकर्म-सामान्य-विशेष-समवायानां पदार्थानां साधर्म्यवैधर्म्याभ्यां तत्त्वज्ञानान्निःश्रेयसम्' वै० सू० १।१।१। ) समाधितः पञ्चक्लेश-निवृत्त्या स्वस्वरूपोपलब्धिरिति कस्यचित्। ( 'अविद्यास्मिता रागद्वेषाभिनिवेशाः पञ्च क्लेशाः' यो० सू० २।३। 'तदभावात् संयोगाभावो हानं तद् दृशेः कैवल्यम्' यो० सू० २।२५। प्रकृति-स्वरूपविचारतः प्रकृत्यतीतस्य निःसङ्गस्य पुरुषस्योपलब्धिरिति कस्यचित् मतम्।

"रङ्गस्य दर्शयित्वा निवर्तते नर्तकी यथा नृत्यात्।
पुरुषस्य तथात्मानं प्रकाश्य विनिवर्तते प्रकृतिः" ॥

( सां० का० ५९ ) इत्थं द्वे पदार्थवाददर्शने, द्वे सांख्य प्रवचनदर्शने, विद्याऽविद्या-प्रभाव-निराकरणाय स्वस्वरीत्योपायमेव निर्दिशतः। काण्डत्रयोपेतस्य

भगवतो वेदस्य मीमांसात्रयस्याप्यत्र प्रायेणैकमत्यमेव। कर्म्ममीमांसादर्शनं कर्म्मणा, दैवीमीमांसा-दर्शनं भक्त्या योगेन च, ब्रह्म-मीमांसादर्शनं ब्रह्मज्ञानेन, मुक्तिमुपदिशति, विद्याऽविद्या स्वरूप-निर्णये त्रयाणामेवैषां दर्शनानां प्रायेणैवैकमत्यम्। बन्धनहेतुरविद्या मुक्तिहेतु र्विद्येत्यत्रापि त्रयाणामेषामैकमत्यमेव।

• सप्तज्ञानभूमयो भवन्ति सप्तसोपानरूपा याभिः स्वस्वरूपमधिगच्छन्ति मुमुक्षवः। इति॥

"ज्ञानदा ज्ञानभूमे र्हि प्रथमा भूमिका मता।
संन्यासदा द्वितीया स्यात्तृतीया योगदा भवेत्॥
लीलोन्मुक्तिश्चतुर्थी वै पञ्चमी सत्पदा स्मृता।
षष्ठ्यानन्दपदा ज्ञेया सप्तमी च परात्परा॥
यत्किञ्चिदासीज् ज्ञातव्यं ज्ञातं सर्वं मयेति धीः।
प्रथमो भूमिकायाश्चाऽनुभवः परिकीर्त्तितः।
त्याज्यं त्यक्तं मयेत्येवं द्वितीयोऽनुभवो मतः।
प्राप्या शक्तिर्मया लब्धाऽनुभवो हि तृतीयकः॥
मायाविलसितञ्चैतद् दृश्यते सर्वमेव हि।
न तत्र मेऽभिलाषोऽस्ति चतुर्थोऽनुभवो मतः।
जगद्ब्रह्मेत्यनुभवः पञ्चमः परिकीर्तितः।
ब्रह्म एव जगत् षष्ठोऽनुभवः किल कथ्यते।
अद्वितीयं निर्विकारं सच्चिदानन्दरूपकम्।
ब्रह्माऽहमस्मीति मतिः सप्तमोऽनुभवो मतः॥
इमां भूमिं प्रपद्यैव ब्रह्मसायुज्यमाप्यते।"

सप्तज्ञानभूम्यनुसारं यथाक्रमं न्यायदर्शनं, वैशेषिकदर्शनं, योगदर्शनं, सांख्यदर्शनं, भगवतो वेदस्य काण्डत्रयानुसारं यथाक्रमं मीमांसादर्शनत्रयं चेति इत्थं सप्त वैदिक-दर्शनानि तत्त्वज्ञानेन मिथ्याज्ञानमज्ञानं वा निराकृत्य स्वस्वरूपे प्रकाशमानमात्मज्ञानमुपजनयन्ति। वैदिकदर्शनानां क्वापि क्वापि मतभेदे प्रतीयमानेऽपि लक्ष्यभेदाभावेन वस्तुतो मतभेदो नास्ति। ज्ञानभूमिभेदतो भवति आपाततः पुरुषार्थभेदो वस्तुत आत्मज्ञान-निःश्रेयसयो र्लक्ष्यत्वमविशिष्टमेव सर्वेषाम्। परन्तु विद्यया अविद्या-प्रभावनिरसनेन अपवर्ग-परम-पुरुषार्थ-कैवल्य-निर्वाण-मुक्त्यादि-पदवाच्याया अवस्थायाः प्राप्तावुपायः स्वस्वरीत्या निर्दिश्यते। परात्परनामधेयायाः सप्तमज्ञानभूमेरुपायप्रदर्शकतया अन्तिम-सिद्धान्त-रूपतया च ब्रह्म-मीमांसा-दर्शनं तत्त्वज्ञानान्तिम-सीमानमधिगमयति मुमुक्षून्।

वस्तु दर्शनस्यास्य सिद्धान्तः सर्वदर्शन-सिद्धान्त-समन्वयतोऽद्वैतपद-पूर्ण-सिद्धितश्च वेदानां सिद्धान्त इति शक्यते प्रतिपादयितुम्। मतभेद-समन्वययोः कानिचिदुदाहरणानि भवन्ति प्रदर्शनीयानि—तथाहि, किंचन दर्शनं जीवानां सादित्वं मन्यते, किंचन अनादित्वम्। अत्र समालोच्यते उद्भिज्जयोनौ यदा चिज्जडग्रन्थिरूपो जीवभाव आरभ्यते ( चिज्जडग्रन्थि र्जीवः, दै० मी०.२।६ ) तदा व्यष्टिरूपतो जीवसृष्टिः सादिरेव। यदा तु पिण्डब्रह्माण्डयो रनाद्यनन्तप्रवाहोऽविद्यानादिप्रभावश्चोपलभ्यते तदाऽनादिरेव चिन्त्येत। एवं यद्धि दर्शनमनाद्यनन्तत्वं मन्यते तत् प्रकृतिप्रवाहरूप वीचयेव तन्मन्यते। एवं यद्धि दर्शनं ब्रह्मप्रकृतेर्महामायाया अनादिसान्तत्वं मन्यते तदपि सत्यमेव। यतो मुक्तात्मनां महामायारूपा ब्रह्म-शक्तिः स्वस्वरूपे विलीनतामेति। एकात्मवाद-बहुपुरुषवाद-विवादोऽपि एवमेव समन्वयनीयः। यतो विराड्देहावच्छिन्ने एकात्मतत्त्वस्य पिण्डावच्छिन्ने बहुपुरुषस्यानुभवः स्वतः सिद्ध एव।

पदार्थवादे परमाणोः, सांख्यप्रवचने प्रकृतिपुरुषयोः, मीमांसात्रये एकाद्वितीयब्रह्मणो यन्नित्यत्वं प्रतिपादितं तदपि विचार—समन्वयोपयोग्यमेव भवति। पदार्थवादे अनुमानमात्मनः प्रदर्शितं, सांख्यप्रवचने प्रकृति-पुरुषयोः प्रत्यक्षमलौकिकमभिहितम्, अतः पदार्थवाद-दर्शनाधिकारिणां दृष्टिः ब्राह्मसृष्टितोऽतीतापि तत्पूर्व-सृष्टावेव निबद्धा तिष्ठति। अतः सृष्टेरतीत आत्मा एभिरनुमीयते। अत एव ते परमाणोः नित्यत्वमीक्षन्ते। यतस्तत एव प्रकटतामधिगच्छतो ब्रह्माण्डपिण्डे। ततोऽनन्तरं प्रारब्धा ब्राह्मी सृष्टिः। अतोऽस्यामवस्थायां कार्य्य-ब्रह्मतः कारण-ब्रह्मणोऽनुमानमेव यत्र भूमौ स्यात् तत्र परमाणो नित्यत्वावेक्षणमपि सृष्टिप्रवाहावलम्बनतया स्वतः सिद्धमेव भवति। सांख्य—प्रवचनमपि प्रकृति-परिचयात् प्रकृतिजयस्य कैवल्योदयं मन्यते तद्विज्ञानानुसरणतः प्रकृतिपुरुषयो र्द्वयोरेव नित्यत्वमनुमेयं भवति। परन्तु मीमांसात्रयविज्ञानं समधिकवेदसम्बद्धतया सप्तज्ञान—भूमीनामन्तिम-ज्ञानत्रय-सम्बद्धतया "मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्" इति श्रुति-संश्लिष्टतया च भवति किञ्चिद् विलक्षणमेव। मीमांसात्रयं भक्त्या ब्रह्म ब्रह्म-शक्ति-मूलप्रकृतिरूपां मायां च अभ्युपगच्छति। दृश्यप्रपञ्चो मायाया विलास एव मन्यते, अतो यावद् दृश्य-प्रपञ्चसहिता माया ब्रह्मणि विलीना न भवति, तावदपवर्गो न सम्भवतीति तद्विज्ञानानुरूपम् एकमेवाद्वितीयं ब्रह्मैव स्वीकर्तव्यमित्यत्र नास्ति कोऽपि सन्देहः। मीमांसात्रयेऽपि ब्रह्ममीमांसाया विचारभूमेः समधिकोन्नततया ब्रह्मस्वरूपनिर्णायकतया च समधिक-माहात्म्यम्

विज्ञेयम् । यथा लौकिकी सृष्टिः स्त्रीपुरुष-संयोगतो जायते इति प्रत्यक्षसिद्धम् । उद्भिज्जतो मानवयोनिपर्य्यन्तं सर्वत्रैवमेवोपलभ्यते ।

आदिसृष्टावपि तथैवावगम्येत । दृश्य-प्रपञ्चो भवति प्रकृति-पुरुषात्मकः । यथा सर्वदर्शनसिद्धान्तभूतां प्रकृतिं, मूल-प्रकृतिः ब्रह्मशक्ति मायाविद्या अविद्येति ये यथेच्छं ब्रुवन्ति ते तथा ब्रुवन्तु नाम, किन्तु तैः सर्वैरेव प्रकारान्तरेण ब्रह्मप्रकृति ब्रह्मशक्ति र्वा अङ्गीक्रियेतैव । तथा परमेश्वरं सगुण ईश्वर इति निर्गुणं ब्रह्म इति पुरुष इति पुरुष-निर्विशेष इति वा ये यथेच्छं ब्रुवन्ति ते तथा ब्रुवन्तु नाम, किन्तु प्रकारान्तरेण तैः सर्वैरेव विविध-नामभेदेऽपि एकमद्वितीयं ब्रह्म एवाङ्गीक्रियेत नान्यः कश्चनेह पन्थाः स्यात् ।

वस्तुतस्तु एकस्माद्द्वितीयात् तस्मात्परमपुरुषात् तस्य शक्तिविशेषभूताया महामायायाः सम्बन्धेनैव चरमचरमुच्चावचमिदं जगज्जायत इत्यत्र सर्वेषामेव दर्शनानामैकमत्यम् ।

अनिर्वाच्याऽविद्याद्वितय-सचिवस्य प्रभवतो ।
विवर्ता यस्यैते वियदनिलतेजोऽबवनयः ।
यतश्चाभूद्विश्वं चरमचरमुच्चावचमिदम् ।
नमामस्तद् ब्रह्माऽपरिमितसुखज्ञानममृतम्

( भामती )

केवलं ज्ञानभूमिकाभेदेनैव प्रकृतिपुरुष-लक्षणे तयोः सम्बन्धविशेषज्ञाने च भेदः प्रतीयते । तेनैव च तेषु तेषु दर्शनेषुस्व-स्व ज्ञानोदयप्रकारविज्ञापनेऽपि भेदो भाति । यथा पार्वतीयप्रदेशगः पान्थः स्वानुगान् कटिभागवलेन गन्तुमादिशति । समतलधराधावी पथिक निजानुचरान् ऋजुनैव व्रजितुमादिशतीति । उभावपि मार्गभेद-पुरुषार्थभेदतः प्रामाणिकावेव । तथैव दर्शनान्यपिपरस्परप्रस्थानभेदेन पुरुषार्थभेदेन च स्वाधिकारिणः स्वमार्गे प्रयुञ्जन्ति प्रमाणान्येव ।

यथार्थतस्तु एकं शुद्धं बुद्धं मुक्तं सत्यं-स्वरूपं ब्रह्मैवास्ति नेह नानाऽस्ति किञ्चनेति शतशः श्रुतिरुपदिशति । ("सत्यज्ञानमनन्तं ब्रह्म" "एक मेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन" इत्यादि तदेव कारणं ब्रह्म, तदेव च कार्य्यं ब्रह्म, तस्यैव शक्तिर्माया वाऽविद्या वा प्रकृतिर्वेत्यभिधीयते । सैव-तस्मिन्विलीना सती यदाऽव्यक्तदशामाश्रयति तदा तस्य ब्रह्मणाऽद्वैतस्वरूपाभिव्यक्तिर्भवति यदा च व्यक्तीभूय दृश्यप्रपञ्चं रचयति तदा द्वैतमिदं भासत इति सर्वैरपि दार्शनिकैः स्वीकर्त-

न्तो विद्यते। अत्र विषये वेदान्ताचार्य्य वेङ्कटनाथीयम् पद्यद्वयमिदं संक्षिप्तमुदाह्रियते।

द्रव्याद्रव्यप्रभेदान्मितमुभयविधं तद्विदस्तत्त्वमाहुः।
द्रव्यं द्वेधा विभक्तं जडमजडमिति प्राच्यमव्यक्तकालौ
अन्त्यं प्रत्यक् पराक् च प्रथममुभयथा तत्र जीवेशभेदात्
नित्या भूतिर्मतिश्चेत्यपरमिह जडामादिमां केचिदाहुः
तत्र द्रव्यं दशावत्प्रकृतिरिह गुणैः सत्त्वपूर्वैरुपेता
कालोऽब्दाद्याकृतिः स्यादणुरवगतिमाञ्जीव ईशोऽन्य आत्मा
संप्रोक्ता नित्यभूतिस्त्रिगुणसमधिका सत्त्वयुक्ता तथैव
ज्ञातुर्ज्ञेयावभासो मतिरिति कथितं संग्रहाद् द्रव्यलक्ष्म।

(तत्त्वमुक्ताकलापे)

जीवस्याणुत्वे रामानुजसम्प्रदायगताः—

"बालाग्रशतभागस्य शतधा कल्पितस्य च
भागो जीवः स विज्ञेयः स चानन्त्याय कल्पते" इति (बृहदारण्यकीयम्,)

"आराग्रमात्रः पुरुषः" (इतिश्वेताश्वतरीयम्,) "अणुरात्मा चेतसा वेदितव्यः" (इति मुण्डकीयम्) वचनं प्रमाणयन्ति। तस्य नित्यत्वे ईशभिन्नत्वे च—

न जायते म्रियते वा विपश्चिन्नायं भूत्वा भविता वा न भूयः।
अजो नित्यः शाश्वतोऽयं पुराणो न हन्यते हन्यमाने शरीरे। इति

(कठोपनिषद्)

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरेकः पिप्पलं स्वाद्वत्ति अनश्नन्नन्योऽभिचाकशीति" इति

मुण्डकश्वेताश्वतरयोर्वाक्यमुदाहरन्ति।

सृष्टिविषयेऽस्मिन्मते परमकारुणिकाद्भक्तवत्सलादीश्वरादेव सकलेतरविलक्षणात् सर्वशक्तेः सर्वमाजायते। स एव निमित्तकारणमुपादानकारणञ्चेति साधु विमृष्टम् श्रीरामानुजाचार्य्यः 'प्रकृतिश्च प्रतिज्ञादृष्टान्तानुरोधादिति' सूत्रीयश्रीभाष्ये।

दर्शनेऽस्मिन् भक्तेरेव प्राधान्यं विद्यते। भक्ति-बलेनैव जीवो मुक्तिपदमधिगच्छति। तत्र जीवानां कल्याण-कामनयैव परमकारुणिको भगवान् भक्तानां पञ्चधा प्रकल्प्य तिष्ठते। येन स्व-स्वाधिकारानुगुणं सर्वेऽपि जीवाः येनकेनापि प्रकारेण तं परमेश्वरं प्रकृष्टकारुण्यं समाराध्य तद्भावापन्नमधिगम्य यथेष्ट पूर्वपूर्वोपासनया पुरुषार्थपरिपन्थिदुरितनिवहापक्षयद्वारेणोत्तरोत्तरानुग्रह-

दर्शनभावे विलुप्ते सति, तस्मादेव पुरुषोत्तमात्परमकारुणिकात् तद्याथात्म्यानुभवासुसुखं निरवधिसुखानन्दं पुनरावृत्तिरहितं तदीयपदमृच्छन्ति ।

तत्र दर्शने वेदानामपौरुषेयत्वं नित्यत्वं स्वतः प्रामाण्यञ्च विद्यते । तथास्मिन् मते मुक्तौ श्रीमत्परमकारुणिकस्य परमेश्वरस्य प्रसादाद्दिव्यमप्राकृतं देहं लब्ध्वा परमेश्वरकैङ्कर्य्यमाचरन् आनन्दातिरेकमनुभवन् अष्टाभिर्गुणैर्युक्तो मुक्तो जीव ईश्वरेच्छाधीनो भूत्वा सर्वत्रैव परमानन्दनिमग्नः सञ्चरति । अत्र विषये रामानुजीयदर्शन-पद्यानि कियन्ति समुपन्यस्यन्ते। तथा हि—

वासुदेवः परं ब्रह्म कल्याणगुणसंभृतः
भुवनानामुपादानं कर्ता जीवनियामकः
वासुदेवः स्वभक्तेषु वात्सल्यात्तत्तदीहितम्
अधिकार्य्यानुगुण्येन प्रयच्छति फलं बहु ।
तदर्थं लीलया स्वीयाः पञ्चमूर्त्तीः करोति वै ।
प्रतिमादिकमर्चाः स्यादवतारास्तु वैभवाः ।
संकर्षणो वासुदेवः प्रद्युम्नश्चानिरुद्धकः ।
व्यूहश्चतुर्विधो ज्ञेयः सूक्ष्मं ( परं ) सम्पूर्णषड्गुणम् ।
तदेव वासुदेवाख्यं परं ब्रह्म निगद्यते ।
अन्तर्यामी जीवसंस्थो जीवप्रेरक ईरितः ।
अर्च्चोपासनया क्षिप्ते कल्मषेऽधिकृतो भवेत् ।
विभवोपासने पश्चाद्व्यूहोपास्तौ ततः परम् ।
( परे ) सूक्ष्मे तदनु शक्तः स्यादन्तर्यामिणमीक्षितुम् ।
स्वभक्तं वासुदेवोऽसौ सम्प्राप्यानन्दमक्षयम् ।
पुनरावृत्तिरहितं स्वीयं धाम प्रयच्छति ।
ततः स्वाभाविकाः पुंसां ते संसारतिरोहिताः ।
आविर्भवन्ति कल्याणाः सर्वज्ञत्वादयो गुणाः ।
एवं गुणाः समानाः स्युर्मुक्तानामीश्वरस्य च ।
सर्वकर्तृत्वमेवैकं तेभ्यो देवे विशिष्यते ।
मुक्तास्तु शेषिणि ब्रह्मण्यशेषे शेषरूपिणः ।
सर्वानश्नुवते कामान् सह तेन विपश्चिता इति ।

रामानुजीया भक्तिलभ्यत्वमात्मनः—आमनन्ति ।

तत्र 'नायमात्मा प्रवचनेन लभ्यो न मेधया न बहुना श्रुतेन यमेवैष वृणुते तेन लभ्यस्तस्यैष आत्मा विवृणुते तनुं स्वाम्, इतिकठोपनिषद्वचनम् ।

"पुरुषः स परः पार्थ भक्त्या लभ्यस्त्वनन्यया"

इति गीताप्रभृतिस्मृतिवचनञ्च प्रमाणयन्ति तदित्थं रामानुजीयमतसंक्षेपः। इमे हि विशिष्टाद्वैतिनः कथ्यन्ते । स्थूलचिदचिद्विशिष्टो हरिः सूक्ष्मचिदचिद्विशिष्टो हरिः तयोरद्वैतम्। विशिष्टं च विशिष्टं च विशिष्टे तयोरद्वैतम् विशिष्टाद्वैतमिति विग्रहे विशिष्टाद्वैतशब्दसिद्धिः ।

ईश्वरश्चिदचिच्चेति पदार्थत्रितयं हरिः ।
ईश्वरश्चिदिति प्रोक्तो जीवो दृश्यमचित्पुनः।

भोक्तृ-भोग्य-नियामक-भेदेन व्यवस्थितो पदार्थत्रैविध्यमेषाम् ।

## श्रीकण्ठमतम् ।

अयं हि श्रीकण्ठाचार्य्यः कदा स्वजन्मना जगतीतलमलञ्चकारेत्यत्र विषये बहवो विप्रतिपत्तयः सन्ति । केचिज्ज्ञालास्यशास्त्रिप्रभृतयः शङ्कराचार्य्यतोऽर्वाचीनान् रामानुजाचार्य्यतः प्राचीनान् आधुनिका बहवो विद्वांसस्तु रामानुजाचार्य्यतोऽपि अर्वाचीनानेवेमान् आमनन्तीति सम्प्रति सूर्य्योदयपाठकानां पुरतो निश्चयमस्मिन् विषये नोपस्थापयामः । यतो हि नेदानीमयमस्माकं विषयोऽस्ति । सम्प्रति तु आचार्य्योऽयं कीदृशं स्वीयं मत ब्रह्मसूत्रभाष्ये प्रकटितवान्, एतदीयं दर्शनं किमस्मानुपदिशतीत्येतावन्मात्रं विचार्य्यते । आचार्योऽयं पाशुपतसम्प्रदायप्रवर्तक आसीदिति श्रीमदप्पयदीक्षितपद्येन प्रकाश्यते । तथाहि—

महापाशुपत-ज्ञान-सम्प्रदायप्रवर्तकान् ।
अंशावतारानीशस्य योगाचार्य्यानुपास्महे । इति ।

योगाचार्य्य इति श्रीकण्ठस्य नामान्तरम् । सूक्ष्मचिदचिद्वस्तुशरीरकं ब्रह्मकारणं स्थूलचिदचिद्वस्तुशरीरकं ब्रह्मकार्य्यमित्यादिना ब्रह्मण एव निमित्तमुपादानञ्चोभयमपि कारणमस्य दर्शनस्य सम्मतम्, परिणामवाद एवास्य सम्मतः । जगद्धि ब्रह्मण एव परिणामः, तदपि सदेव । ब्रह्मैव अनन्तायाः चिच्छक्तेर्बलेन जगदाकारेण परिणमते इति जगतोऽपि सत्यत्वमेव । अस्य मते वेदाध्ययनानन्तरं धर्मजिज्ञासया विचारितश्रुतिकस्य यज्ञाद्यनुष्ठानलब्धचित्तशुद्धेः पुंसो ज्ञानेऽधिकारः ज्ञानकर्मसमुच्चयवादोऽस्य दर्शनस्य प्रतीयते ।

अत्र दर्शने ब्रह्म विभु। उपासनया जीवात्मा ब्रह्मसमानतां विन्दति । शिव एव परब्रह्म स्वानुग्रहेण जीवेभ्यः पुरुषार्थप्रदानं कृत्वा स्वसमानतां प्रयच्छति। इह सगुणः सविशेषः शिवो भक्तितुष्टो जीवेभ्यो मुक्तिं प्रयच्छति । मुक्तिश्चेहोपासनात्मकक्रियालभ्या। मुक्तौ जीवः शिवसादृश्यमेव लभते। तदानीं तु स तत्परवशः तिष्ठति । अनादिवासनया बद्धो जीवो निजकर्मपरवशो नानायोनिं परिभ्रमति ।

स च कर्ता भोक्ता विभुः नाना ब्रह्मतो भिन्न एवास्ति। अत एव भेदवैशिष्ट्यप्रतिपादकतयाऽयं विशिष्टाद्वैतमतप्रतिपादको गीयते। पशुः पाशाः पतिश्चेति पदार्थत्रितयम्। ईश्वरस्य शाक्तं शरीरम्। अनुग्रहतिरोभाव-दानलक्षणस्थिति-लक्षणोद्भवलक्षणकृत्यपञ्चकं तस्य विद्यते। शक्तिरूपा ईशानादिमन्त्रास्तस्य शरीरम्। ईशानमस्तकः तत्पुरुषवक्त्रः घोरहृदयः वामदेवगुह्यः सद्योजातपादः,

इति तस्य शरीरकल्पनापि श्रूयते। भक्तानुग्रहार्थं शरीरधारणमपि स करोत्येव। तत्र प्रमाणानि—

मलाद्यसम्भवाच्छाक्तं वपुर्नतादृशं प्रभोः
तद्वपुः पञ्चभिर्मन्त्रैः पञ्चकृत्योपयोगिभिः
ईशतत्पुरुषाघोरवामाद्यैर्मस्तकादिमत्
साधकस्य तु रक्षार्थं तद्वपुर्धारणं स्मृतम्।
पञ्चविधं तत्कृत्यं सृष्टिस्थिति-संहारतिरोभावाः
तद्वदनुग्रहकरणं प्रोक्तं सततोदितस्यास्य।

पशुः पुनस्त्रिविधः विज्ञानाकलः प्रलयाकलः सकल इति भेदात्। तत्र प्रमाणं यथा—

विज्ञानाकल नामैको द्वितीयः प्रलयाकलः
तृतीयः सकलः शास्त्रेऽनुग्राह्यस्त्रिविधो मतः।

पाशाश्चत्वार उक्ताः

प्रावृतीशो मलं कर्म मायाकार्य्यं चतुर्विधम्
पाशजालं समासेन धर्मनाम्नैव कीर्तिता

इति हि श्रीकण्ठसम्प्रदायदर्शनं संक्षेपतो विज्ञेयम्। विस्तरेण तु मृगेन्द्रसंहिताप्रभृतिग्रन्थेषु द्रष्टव्यम्।

## माध्वदर्शनम्।

माध्वाचार्य्या अपि रामानुजवदेव जीवानामणुत्वं दासत्वं, वेदानामपौरुषेयत्वं, नित्यत्वं, सिद्धार्थ-बोधकत्वं, स्वतःप्रामाण्यं, प्रत्यक्षानुमानागमभेदेन प्रमाणानां त्रैविध्यं, प्रपञ्चस्य च सत्यत्वमामनन्ति। परन्तु रामानुजाचार्य्यवदिमे चिदचिदीश्वरभेदेन पदार्थत्रैविध्यं नामनन्ति। इमे हि स्वतन्त्रास्वतन्त्रभेदेन पदार्थद्वित्वमेवाध्यवस्यन्ति। तत्र स्वतन्त्रो भगवान् विष्णुरेकः अस्वतन्त्रो जीवो जगच्चेति अस्वतन्त्रपदार्थो द्विधा भिद्यते। तत्र तत्त्वविवेकीयपद्यम् यथा—

इह मते जीवः सर्वदैव भगवतो दासः । स्वतन्त्रस्य भगवतो दास्यादि-सेवया तत्प्रसादोपलब्धिरेव जीवस्य चरमं कर्तव्यम् । तच्च कर्तव्यम् अङ्कन-नाम-करण-भजनद्वारा साधु सम्पाद्यते । तत्राङ्कनं नाम तप्तमुद्रात्मकैः नारायणायुधा-दिभिः स्वदेहे चिन्हकरणम् । तत्र प्रमाणम्—

'अतप्ततनुर्न तदामो अश्नुते श्रितास इद्वहन्तस्तत्समासत' इति

( तै० आ० १ । ११ । )

नामकरणञ्च स्वापत्यानां केशवादिसंज्ञाकरणम् । भजनन्तु दशधा कायिक-वाचिक-मानसिकभेदेन विद्यते । याः शुभाः प्रवृत्तयो दानं, परित्राणं, परिचरणं । सत्यं, हितं प्रियं स्वाध्यायः । दया, स्पृहा, श्रद्धेति नाम्ना प्रसिद्धाः, तासां सर्वासामपि यथायथमनुष्ठानं कृत्वा तस्मिन् परमगुरौ परमेश्वरे समर्पणम् ।

ज्ञेयत्वादिना च जीवेश्वरभेदमनुमिन्वन्ति । तथाहि परमात्मा जीवाद्भिन्नः जीवेन ज्ञेयत्वात् सेव्यत्वाच्च, यो येन ज्ञायते सेव्यते स ततो भिन्नो यथा ज्ञातु-र्घटादि, सेवकात् स्वामी चेत्याद्यनुमानम् ।

सत्य आत्मा सत्यो जीवः सत्यं भिदा सत्यं भिदा इत्यादि श्रुतयोऽपि भेदं प्रमाणयन्ति । स च भेदः पञ्चधा तथाहि—

जीवेश्वरभिदा चैव जडेश्वरभिदा तथा
जीवभेदो मिथश्चैव जडजीवभिदा तथा
मिथश्च जडभेदो यः प्रपञ्चो भेदपञ्चकः
सोऽयं सत्योऽप्यनादिश्च सादिश्चेन्नाशमाप्नुयात्
न च नाशं प्रयात्येष न चासौ भ्रान्तिकल्पितः ।
काल्पतश्चेन्निवर्तेत न चासौ विनिवर्तते
द्वैतं न विद्यत इति तस्मादज्ञानिनां मतम्
मतं हि ज्ञानिनामेतन्मितं त्रातञ्च विष्णुना
तस्मान्मात्रमिति प्रोक्तं परमो हरिरेव तु ।

पदार्थाश्च स्वतन्त्रास्वतन्त्रभेदेन द्विधा विभक्ता अपि अस्वतन्त्रपदार्था दशधा भिद्यन्ते । तथा हि—तेषाम् भावाभावश्चेति द्वौ भेदौ, तत्र भावो द्रव्यं गुणः क्रिया, जातिः विशेषत्वं, विशिष्टं, अंशी, शक्तिः सादृश्यञ्चेति भावाः, अभावश्च दशम इति दशाप्येते पदार्थाः परतन्त्रा एव । एतेषां पारतन्त्र्य-ज्ञानेनैव मुक्तिर्भ-वति मुक्तिश्च वैकुण्ठवासोपलब्धिः ।

सालोक्य-सामीप्य-सारूप्यादितत्स्वरूपं ज्ञेयम् । जीवश्चाणुर्नित्यः सर्वदैव परमेश्वराद्भिन्नः । परमेश्वरश्च ब्रह्मशिवविष्णुभेदेन त्रिधा विभक्तोऽपि विष्णुः

सर्वश्रेष्ठः स एव मुक्तिदाता सर्वनियन्ता चेति ।

"मुक्तानां चाश्रयो विष्णुरधिकोऽधिपतिस्तथा" ।

इत्यादि विष्णुतत्त्वनिर्णये द्रष्टव्यम् । स हि भगवान् कालदेशगुणशक्त्यादिभिरपरिच्छिन्नः । स हि सर्वगुणसम्पन्नः तस्य गुणानामियत्ता कर्तुं न शक्यतेऽत एव स निर्गुण उच्यते, न तु गुणानामभावतया तस्य निर्गुणत्वाभिधानम् । अस्मिन्दर्शने जगदपि सत्यमेव । दृश्यत्वेनैव हेतुना जगतः सत्यत्वं साध्यते । केवलसत्यतयैव ज्ञानस्फूर्तिर्भवतीत्यादि बहुयुक्तिभि र्जगतः सत्यत्वं साध्यते । प्रपञ्चमिथ्यात्वखण्डने ते बद्धपरिकराः सर्वैरेव हेत्वाभासैः प्रत्यवतिष्ठन्ते माध्वैः सहैव विरोधे मधुसूदनसरस्वतीनामद्वैतसिद्धिग्रन्थ उपयुज्यते । ते हि सर्वथाऽद्वैतविरोधिनः । एकविज्ञानेनैव सर्वं विज्ञायते इत्यादि श्रुतितात्पर्य्यं ते प्रधानज्ञानेन, कारणज्ञानेन यथा अप्रधानानां कार्य्याणां ज्ञानं भवति तथैव प्रधानस्य कारणस्य ईश्वरस्य ज्ञानेनैव सर्वं ज्ञायते इत्यादि वाक्यैः समर्थयन्ति । 'तत्त्वमसि' इत्यादिं श्रुत्यर्थमपि सादृश्यार्थतया अतत्त्वमसीति पदच्छेदं विधाय वा समर्थयन्ति किं बहुना सर्वथा शङ्कराचार्य्यमतविरोधिन इमे । तत्र जीवब्रह्माभेदज्ञानान्मुक्तिरिह भेदज्ञानान्मुक्तिः अभेदज्ञानेन तु पतनमेव भवति । तत्र मोक्षे प्राप्यत्वाद्यभावोऽस्ति अत्र तस्याप्यत्वमेव । तत्र संसारस्य मिथ्यात्वमिह सत्यत्वमित्यादि बहवो भेदा माध्वदर्शनाध्ययनतोऽवसेयाः ।

## शुद्धाद्वैतदर्शनम् ।

अस्य दर्शनस्य प्रवर्तको विष्णुस्वामीति नाम्ना प्रसिद्धो महापुरुष आसीदेतदीयमेव मतं श्रीमता वल्लभाचार्य्येण व्यावृतम् । तच्चेत्थं संक्षेपेण ज्ञेयम् । विष्णुस्वामिप्रभृतयः चत्वार आचार्य्याः पूर्वं बभूवुः । पञ्चमोऽयं श्रीवल्लभाचार्य्यः यश्च ब्रह्मसूत्रभाष्यादिभिरस्य मतस्य सम्यक् प्रचारं व्यधात् ।

अस्मिन् दर्शने ब्रह्म साकार-सर्वशक्तिसम्पन्न-सर्वज्ञ सर्वकर्तृ-सच्चिदानन्दरूपं विद्यते । तत्र मायासम्पर्को नास्ति । ब्रह्मणि प्रयुक्ता निर्गुणादिशब्दाः प्राकृतगुणाभावं द्योतयन्ति । तस्याचिन्त्यानन्त्यशक्तिशालित्वात् सर्वेषामपि विरुद्धधर्माणां स्थितिसम्भवः ।

ब्रह्मणो निर्गुणस्यापि सतः श्रुतिप्रतिपाद्यत्वात् जगत्कर्तृत्वे को विरोधः । श्रुतिरेवात्मशब्देन ब्रह्म बोधयति यच्च निर्गुणं प्रख्यापयति तस्मादेव जगतः सृष्टिरपि व्याख्यातीति श्रुतिप्रामाण्यात् सर्वमपि विरोधं ब्रह्मगतं स्वीकर्तुं नापराधो ममेति श्रीमद्वल्लभाचार्य्याशयः । तथा हि तदीयमणुभाष्यम् "आत्मशब्दः पुनः सर्वेषु वेदान्तेषु निर्गुणपरब्रह्मवाचकत्वेनैव सिद्धः ।" (अणुभा० १४० पृ०)

"तस्मादात्मशब्दप्रयोगाद्गुणातीतमेव कर्तृ" ( अणु० १४१ पृ० ) "अचिन्त्यानन्त शक्तिमति सर्वभवनसमर्थे ब्रह्मणि विरोधाभावाच्च ।" "विरुद्ध सर्वधर्माश्रयत्वन्तु ब्रह्मणो भूषणायैव" । ( अणु० १२१ पृ० )

अस्मिन्दर्शने ब्रह्मैव कर्तृ भोक्तृ च गीयते । "तस्माद् ब्रह्मगतमेव कर्तृत्वं भोक्तृत्वञ्चोच्यते ।"

स्वमत-पुष्ट्यै स श्रुतिमप्युदाहरति । तथाहि—

परास्य शक्तिर्विविधैव श्रूयते स्वाभाविकी ज्ञानबलक्रिया च

अपरञ्च—

उत्पत्तिस्थितिनाशानां जगतः कर्तृ वै बृहत् ।
वेदेन बोधितं तद्धि नान्यथा भवितुं क्षमम् ॥
नहि श्रुतिविरोधोऽस्ति कल्पोऽपि न विरुध्यते ।
सर्वभावसमर्थत्वादचिन्त्यैश्वर्य्यवद्बृहद् ॥

अविकृतपरिणामोऽस्य सम्मतः । ब्रह्मैव स्वक्रीडार्थं जगद्रूपेण परिणमति । एवं जगद्रूपेण परिणमदपि तद् ब्रह्म अविकृतमेव तिष्ठति । यथा सुवर्णविकारा अङ्गुलीयककटककुण्डलादयः सुवर्णविकाराः सन्तः सुवर्णतां नैव जहति । जीवोऽपीह ब्रह्मण एव अंशः स चाणुः, हृदि तस्य स्थितिः, एकत्र संस्थितोऽपि चैतन्यगुणेन सर्वं कायमावृणोति । स च शुद्ध-संसारि-मुक्तभेदेन त्रिधा । अविद्यासम्बन्धरहितः शुद्धः । अनाद्यविद्याबद्धो जीवः संसारी । भगवत्कृपया मोक्षाधिकारिणो देवत्वमुपेता एव जीवा मुक्ता इति ।

भगवदनुग्रहेणैव जीवो मुक्तो भवितुमर्हति । मुक्तिश्चेह दर्शने गोकुल-स्थस्य श्रीमतो भगवतः श्रीकृष्णस्य सायुज्योपलब्धिरेव । सर्वथा भगवति स्वात्मनिवेदनमेवेह भक्तिः । इत्यादय एव श्रीमद्भिर्वल्लभाचार्यैः प्रख्यापिताः श्रीविष्णुस्वामिमताभिप्राया वि[illegible]या इति विरम्यते विस्तरात् ।

वेदान्तसूत्रोपरि भाष्यकर्तारोऽपरेऽपि भास्कराचार्य-श्रीकराचार्य-निम्बार्काचार्य-बलदेवविद्याभूषण-विज्ञानभिक्षुप्रभृतयः सन्ति । येषां क्रमशो भेदाभेदः, शक्तिविशिष्टाद्वैतम्, द्वैताद्वैतम्, अचिन्त्यभेदाभेदः, सांख्याद्वैतम्, इत्यादि वादाः प्रतीयन्ते । परन्तु इह स्थानसंकोचात्सम्प्रति ते परित्यज्यन्ते । पुनः कदाचित्सत्यवसरे तेषामपि संक्षेपतो मत-विवृतिं करिष्यामः ।

# चाण्डालाद्यस्पृश्यतायां प्रमाणसङ्ग्रहः ।

निबन्द्धा—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री ।
( 'मुलतान'-स्थ-श्रीसनातनधर्मसंस्कृतकालेजाऽध्यापकः )

—:o:—

( क्रमागतः )

'चाण्डालेन यदा स्पृष्टो द्विजवर्णः कदाचन ।
अनभ्युक्ष्य पिबेत्तोयं प्रायश्चित्तं कथं भवेत् ? ॥ १ ॥
ब्राह्मणस्तु त्रिरात्रेण पञ्चगव्येन शुद्ध्यति ।
क्षत्रियस्तु द्विरात्रेण पञ्चगव्येन शुध्यति ॥ २ ॥
अहोरात्रेण वैश्यस्तु पञ्चगव्येन शुद्ध्यति ॥ ३ ॥
व्यापयित्वा द्विजानान्तु शूद्रो दानेन शुद्ध्यति ॥ ५ ॥
आपस्तम्बः ५ माऽध्याये ।

अथोऽभ्युक्षनात्तुपरिष्टात्तनाय वर्णायाऽधिका शुद्धिरपेक्ष्यते ; अतोऽत्र तत्तारतम्यम् । एतस्मादौदार्य्यं किम्भविष्यति, यद्धर्म्मशास्त्रैश्चाण्डाला न दण्ड्यन्ते, किन्तु ब्राह्मणादिरेव प्रायश्चित्तीय=क्रियते । अग्रे श्रूयताम्—

' एतैः स्पृष्टो द्विजो नित्यमेकरात्रं पयः पिबेत् । —
उच्छिष्टैस्तैस्त्रिरात्रञ्च घृतम्प्राश्य विशुद्ध्यति । अत्रिः २८१

'चाण्डालैः श्वपचैः स्पृष्टो विण्मूत्रे च कृते द्विजः ।
त्रिरात्रन्तु प्रकुर्व्वीत भुक्त्वोच्छिष्टः षड़ाचरेत् ॥ १० ॥ यमः ।
आपस्तम्बे ४ अध्याये ५ श्लोकेऽप्येवम् ।
'चाण्डालश्वपचैः स्पृष्टे निशि स्नानं विधीयते ।
न वसेत्तत्र रात्रौ तु सद्यः स्नानेन शुध्यति ॥ ६४ ॥
अथ वसेद् यदा रात्रावज्ञानादविचक्षणः ।
तदा तस्य तु तत्पापं शतधा परिवर्त्तते ॥ ६५ ॥ यमः ।

अन्त्यजातिरविज्ञातो निवसेद्यस्य वेश्मनि । तस्य ज्ञात्वा तु कालेन द्विजाः कुर्व्वन्त्यनुग्रहम् ॥ १ ॥ चान्द्रायणं पराको वा द्विजातीनां विशोधनम् । प्राजापत्यन्तु शूद्रस्य शेषं तदनुसारतः ॥ २ ॥ यैर्भुक्तं तत्र पक्वान्नं कृच्छ्रं तेषां प्रदापयेत् । तेषामपि च यैर्भुक्तं कृच्छ्रपादं प्रदापयेत् ॥ ३ ॥ कूपैकपानैर्दुष्टानां स्पर्शसंसर्गदूषणात् । तेषामेकोपवासेन पञ्चगव्येन शोधनम् ॥ ४ ॥ आपस्तम्बः ३ याऽध्याये ।

' ब्राह्मणो वृक्षमारूढश्चाण्डालो मूलसंस्पृशः । फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथं भवेत् ? ॥ १७५ ॥ ब्राह्मणान् समनुज्ञाप्य सवासाः स्नानमाचरेत् । नक्तभोजी भवेद्विप्रो घृतं प्राश्य विशुद्ध्यति ॥ १७६ ॥ एकवृक्षसमारूढश्चाण्डालो

ब्राह्मणस्तथा। फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथम्भवेत्? ॥ १७७ ॥ ब्राह्मणान् समनुज्ञाप्य सवासाः स्नानमाचरेत्। अहोरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति। ॥१७८॥ (आपस्तम्बे ४ अध्याये ६-१० श्लोकयोरप्येवम्)। एक शाखासमारूढश्चाण्डालो ब्राह्मणो यदा। फलान्यत्ति स्थितस्तत्र प्रायश्चित्तं कथम्भवेत्? ॥ १७९ ॥ त्रिरात्रोपोषितो भूत्वा पञ्चगव्येन शुध्यति ॥ १८० ॥ अत्रिः।

अत्राऽतिशयोक्तिः प्रतीयमानाऽपि चाण्डालस्य * स्पर्शपरिहरणे तात्पर्यं ग्राहयति; अत एव एष एवाऽर्थोऽस्य 'यत् परश्शब्दः स शब्दाऽर्थः' इतिन्यायात्। निषिद्धस्य परिहरणे, विहितस्य विधेयस्य चोपादाने सर्व्वेष्वेव शास्त्रेष्वतिशयोक्ति रर्थवादा वा कृता भवन्ति; तात्पर्य्यं तदीयं निषिद्धस्य त्यागे विहितस्योपादाने च भवति। यथा हि—अथर्व्ववेद-दशमकाण्डे २ अनुवाके ३ सूक्ते वरणनामकमणेर्धारणार्थं तत्प्रशंसाया अतिशयोक्तिरेव कृता; यथा—

'अयं मणिर्वरणो विश्वभेषजः सहस्राक्षो हरितो हिरण्ययः। स ते शत्रूनधरान् पादयाति पूर्वस्तान् दभ्नुहि ये त्वा द्विषन्ति ॥ ३ ॥ अयं ते कृत्यां विततां पौरुषेयादयं भयात्। अयं त्वा सर्वस्मात् पापाद् वरणो वारयिष्यते ॥ ४ ॥ स्वप्नं सुप्त्वा यदि पश्यासि पापं मृगः सृतिं यति धावादजुष्टाम्। परिक्षवच्छकुनेः × पापवादादयं मणिर्वरणो वारयिष्यते ॥ ६ ॥ अरात्यास्त्वा निर्ऋत्या अभिचारादथो भयात्। मृत्यो रोजीयसो वधाद् वरणो वारयिष्यते ॥ ७ ॥ इत्याद्यथर्व्ववेदे।

अथ च 'यावदङ्गीनं पारस्वतं हास्तिनं गार्दभञ्च यत्। यावदश्वस्य वाजिनस्तावत्ते वर्द्धतां पसः? अथर्व० ६। ८। ७२। ३ पसः—शिश्नम्। किं कदाऽपि मानुषशिश्नमश्वगर्दभशिश्नपरिमाणविशिष्टं भवितुमर्हति? तस्मान्मन्तव्यम्भविष्यति, यदत्राऽतिशयोक्ति र्व्वर्त्तते। केवलं तस्य स्वपरिमाणादृद्धिरेव एव सूचने तात्पर्य्यम्। अग्रे गतिर्विधीयताम्—

चाण्डालेन तु संस्पृष्टं यस्तोयं पिबति द्विजः। कृच्छ्रपादेन शुध्येत आपस्तम्बोऽब्रवीन्मनुः' अत्रिः २०२ 'श्वपाकचाण्डालपरिग्रहे तु पीत्वा जलं पञ्च-

* मिसहेलेननामिकया यन्त्रद्वारा प्रमाणितं यत्—परस्परस्पर्शद्वाराऽपि रोगबीजानि इतरेतरस्मिन् गच्छन्ति। केवलं रोगा एव न, प्रत्युत स्पर्शेन शारीरिकमानसिक-वृत्त्योरपि परिवृत्तिर्भवति। भिन्नभिन्नविद्युत्कप्रकृतिपरिणाम इतरेतरस्मिन्नवश्यम्पतति। भिन्नविद्युत्क-पुरुषसाहचर्य्येण स्वोत्तमगुणविशिष्टा विद्युद् विक्रियते।

× अनेन मन्त्रेण तु स्वप्नफलम्, मृगस्य विपरीतदिशि गमनस्य, छिक्कायाः, उलूकादिपक्षिणां शब्दस्य च दुष्फलं वैदिकमिति ध्वनितम्॥

गव्येन शुद्धिः ' अत्रिः २३१ । ' चाण्डालं पतितं म्लेच्छं मद्यभाण्डं रजस्वलाम् । द्विजः स्पृष्ट्वा न भुञ्जीत भुञ्जानो यदि संस्पृशेत् । अत्रिः २६५ । ' अन्त्यहस्तात्तु विक्षिप्तं काष्ठं लोष्ठं तृणानि च । न स्पृशेत्तु तथोच्छिष्टमहोरात्रं समाचरेत् ' अत्रिः २६४, अस्मदीयास्तेषां भृत्यर्थं तृणकाष्ठादीनि तेभ्यो यद् गृह्णन्ति ; तेषां 'प्रोक्षणात्तृणकाष्ठञ्च' मनुः ५ । १२२ इत्यनुसारं जलेन मार्ज्जनं कृत्वैव तानि गृह्णन्ति—इत्याचारः ।

भुक्त्वोच्छिष्टस्त्वनाचान्तश्चाण्डालैः श्वपचेन च । प्रमादात् स्पर्शनं गच्छेत्तत्र कुर्याद्विशोधनम् ॥ ३ ॥ गायत्र्यष्टसहस्रन्तु द्रुपदां वा शतं जपेत् । जपँस्त्रिरात्रञ्चाऽनश्नन् पञ्चगव्येन शुध्यति । ४ आपस्तम्बः ४ अध्याये ।

' पाने मैथुनसम्पर्के तथा मूत्रपुरीषयोः । सम्पर्कं यदि गच्छेत्तु उदक्या चान्त्यजैस्तथा ॥ ६ ॥ एतैरेव यदा स्पृष्टः प्रायश्चित्तं कथं भवेत् । भोजने च त्रिरात्रं स्यात् पाने तु त्र्यहमेव च ॥ ६ ॥ मैथुने पादकृच्छ्रं स्यात्तथा मूत्रपुरीषयोः । दिनमेकं तथा मूत्रे पुरीषे तु दिनत्रयम् ॥ ८ ॥ आपस्तम्बः ४अध्याये ।

एतानि सन्देहमन्देहजयमार्त्तण्डभूतानि स्मार्त्तप्रमाणानि बुधा बुबुधिर एव × । अधुना महाभारते मतङ्गेन्द्रसँवादम्पश्यन्तु—यत्र शूद्रचाण्डालयोन्योस्तत्र कियदन्तरम्प्रदर्शितम्—

'तिर्य्यग्योनिगतः सर्व्वो मानुष्यं यदि गच्छति । स जायते पुक्कसो वा चाण्डालो वाऽप्यसंशयः ।६। पुक्कसः पापयोनि र्वा यः कश्चिदिह लक्ष्यते । स तस्यामेव सुचिरं मतङ्ग ! परिवर्त्तते । ७ । ततो दशशते काले लभते शूद्रतामिति । शूद्रयोनावपि ततो बहुशः परिवर्त्तते । ८ । ततस्त्रिंशद्-गुणे काले लभते वैश्यतामपि । वैश्यतायां चिरं कालं तत्रैव परिवर्त्तते । ९ । ततः षष्टिगुणे काले राजन्यो नाम जायते । राजन्यत्वे चिरं कालं तत्रैव परिवर्त्तते । १० । ततः षष्टिगुणे काले लभते ब्रह्मबन्धुताम् । अनुशा० पर्व्व० अ० २८ ।

यत्र धर्म्मशास्त्रैश्शूद्रेणाऽपि त्रैवर्णिकानां सम्बन्धो व्युदस्यते, ततोऽवरेण चाण्डालादिना तु किमु वक्तव्यम् । तत्राऽपि चाण्डालादीनां स्पर्शस्तु दूरे-भुञ्जानानां द्विजानां चाण्डाल-कर्तृकदर्शनमपि ३।२३९ इति मनुमनुसृत्य निषिध्यते । दीक्षितस्य तु चाण्डालादिना वार्त्तालापोऽपि निषिद्धः शतपथस्य तृतीयकाण्डारम्भे ।

वस्तुतस्तु सनातनधर्म्माण एव चाण्डालादीनां सुधारकाः, न सुधारकाः

× एतदतिरिक्तस्मार्त्तप्रमाणानि दिदृक्षवो 'धर्म दुर्गत्राणायाऽस्मत्पूर्व्वजानां दूरदर्शित्वम्' इति निबन्धं 'सूर्य्योदये' ९।५-६-७ पश्यन्तु मामकीनम् '

सुधारकाः। कथमिति चेच्छ्रूयताम्—यद्यस्माकं पुनर्जन्मनि विश्वासः, कर्म्ममीमांसायां वाऽटलो विश्वासः; तर्हि मन्तव्यम्भविष्यति, यच्चाण्डालादय><पूर्व्वजन्मन><पापेनैव एतद्योन्यामुत्पन्नाः। ('मानसैरन्त्यजातिताम्, इति मन्वर्थे स्वा० दयानन्दोऽपि मानसदोषैश्चाण्डाल-शरीर-प्राप्तिं मनुते)। प्राक्तनकर्म्मणां फलस्य भोगादेव तेषां क्षयश्शरीरस्य परिवर्त्तन-(जन्मान्तर) श्च भवति—इति हि सार्व्वजनीनम्। अत एव सनातनधर्म्माण स्तेभ्यस्सर्व्वविधसुविधाप्रदानं स्थाने न मन्यन्ते, यत्तेऽग्रिमजन्मनि पूर्व्वपापक्षयात् किञ्चिदुन्नतिमेष्यन्ति। यदि तेभ्य उत्तरोत्तरं सुविधा एव प्रदास्यन्ते; तर्हि तेषाम्प्राक्तन-कर्म्मणामवशेषादग्रिमजन्मन्यपि तेषामुन्नति र्न भविष्यति; अत एव सीमितदृष्टयस्सुधारकास्तेषामग्रिमजन्मन्यपि पापयोनिषु जन्मनि सहायका अत एव तच्छत्रव एव मन्तव्या भविष्यन्ति। कश्चन कश्चन स्वेष्टवस्तुभक्षणेच्छुकं रोगिणं पुरुषं कटुकौषधं न पाययित्वा तदिष्टवस्तून्येव भोजयेत्, किं स सूक्ष्मदृष्ट्या तस्य हितैषिपदवाच्यो भवितुमर्हति? एवमेव नास्तिकानां कर्म्ममीमांसाऽविश्वस्तानां × पुनर्ज्जन्मसिद्धान्ताऽवहेलकानां सुधारकाणां गतिरपीयमेव ज्ञेया। ते स्थूलदृष्टयो वर्त्तमानमेव पश्यन्ति, न भविष्यत्कालम्, अत एव दयनीया इमे।

अत एव तु धर्म्मशास्त्रकारा श्चाण्डालेष्वनुगृह्णैव ब्रुवन्ति-'श्वपाकं वाऽपि चाण्डालं विप्रः सम्भाषते यदि। द्विजैस्सम्भाषणं कुर्य्यात् सावित्रीञ्च सकृज्जपेत्। २२' चाण्डालैस्सह सुप्तं तु त्रिरात्रमुपवासयेत्। चाण्डालैकपथं गत्वा गायत्रीस्मरणाच्छुचिः। २३' पराशरः ६ अध्याये।

'उदक्यां सूतिकां वाऽपि अन्त्यजां स्पृशते यदि। त्रिरात्रेणैव शुद्धिः स्याद् विधिरेष पुरातनः'। अत्रिः २७१ 'वर्णबाह्येन संस्पृष्टः उच्छिष्टस्तु द्विजोत्तमः। पञ्चरात्रोषितो भूत्वा पञ्चगव्येन शुद्ध्यति। अत्रिः २३४। संसर्गं यदि गच्छेच्चेदुदक्या वा तथाऽन्त्यजैः। प्रायश्चित्ती स विज्ञेयः पूर्व्वं स्नानं समाचरेत्। अत्रिः २७३। एवमस्पर्शादिना यत्तेषां दुखम्भविष्यति; तन्मूलक-पापक्षयादग्रिमजन्मनि-ते क्रमश उन्नतिमेव प्राप्नुयुः, यतस्सञ्चितकर्म्मणां भोगादेव क्षयः। *इदमेव सात्त्विकसुखम्।

(क्रमशः)

---

× पूर्वजन्मपुनर्जन्म च ते नाममात्रेणैव मन्यते। यदि ते वस्तुतो मन्येरन्; तर्हि त एव सनातनधर्म्मावलम्बिनस्तन्मते मन्तव्यतामापद्येरन्।

* तल्लक्षणम्—'यत्तदग्रे विषमिव परिणामेऽमृतोपमम्। तत्सुखं सात्त्विकं प्रोक्तमात्मबुद्धिप्रसादजम्' गी० १८।३७ एतद्विपरीतन्तु राजसतामसं सुखम्।

# मिथिलेशितुर्धार्मिकोऽध्यवसायः ।

शश्वदुन्मीलदिन्दिराऽमन्द-मदोल्वणित-पूर्णतारुण्य-विलासलहरी-परिप्लव-मानमानसा अपि महाराजाधिराज-श्रीमन्मिथिलेश सर कामेश्वरसिंह—( के० सी० आई० ई ) महोदया अधुनापि न धार्मिकधारणां विमुञ्चन्तीति किञ्चित्रम् । यतो हि ते मतिमद्राज–महाराज श्रीमन्महेश-ठक्कुरप्रभृतिभिरतिमात्र-पवित्रे गोत्रे धृतवर्णाश्रमधर्ममूर्त्तीनां स्वीयवैदुष्यविशेष वैभवेन कृतविदेहपदपूर्त्तीनामादिगन्तजोगुञ्ज्यमान-धार्मिक-कीर्त्तीनां स्वर्वासि-महाराजाधिराजश्रीमद्रमेश्वरसिंह महाभागानामगण्यपुण्यप्रभवाः सत्प्रसवा इति—

अस्मिन्नपण्डितं गोत्रे नापत्यमुपजायते ।
आकरे पद्मरागाणां जन्म काचमणेः कुतः ॥
इति नौति कथमन्यथयन्तु ।

तथा हि भूकम्पभीषणोपद्रवभग्नभूरिप्रासादप्रतिनिर्माण-व्ययित-बहुद्रव्यकत्वेऽपि कार्त्तिक-शुक्लपक्षस्य नवमीमारभ्यैकादशीं यावन्निजराजधान्यां दूरदूरदेशाहूत-मैथिलपण्डित-सम्मेलनं सम्मिलितजनसमुचितार्थिकसम्मान-पुरस्सरमकार्षुः, तत्राद्यदिवसीयसाभापत्यमभ्युपेत्य दरभङ्गामागतानामपि पं० श्रीमन्मदनमोहनमालवीयमहोदयानां किञ्चिदशुभसन्देशवशात्सभादिवसपूर्वदिवस एव वाराणस्यां परावर्त्तनमभूदिति श्रीमन्मिथिलेशमहाभागा एव तदासनमलञ्चक्रुः—यामासुः । तस्मिंश्च दिवसे सरिसव-लक्ष्मीवती सं० विद्यालय-प्रधानाध्यापक पं० श्रीयुत दीनबन्धुझामहोदयाः, सीतामढ़ी-संस्कृतविद्यालयप्रधानाध्यापक पं० श्रीदामोदरमिश्रमहोदयाः पं० श्रीसुद्धिनारायणझा महोदयाश्च कूपादिजलाशयसार्वजनिकताविप्रतिपत्तिमाश्रित्य धर्मशास्त्रोद्धृत प्रमाणरमणीय-व्याख्यानेन तत्त्वं व्यवस्थापितवन्तः । द्वितीयदिवसे च महामहोपाध्याय, पं० श्रीयुत डाक्टर-गङ्गानाथझामहोदयानां सभापतित्वे चाण्डालादि-साधारण्येन देवालयप्रवेश-सप्रणवमन्त्रोपदेशाद्यवश्य-विवेचनीय-विषयानुपादाय म० म० पं० श्रीयुतमुकुन्दझा बक्शीमहोदयाः, लक्ष्मीपुर पी० एन० संस्कृतमहाविद्यालयाध्यक्ष पं० श्रीयुत भरतमिश्र महोदयाः, लोहाना संस्कृतमहाविद्यालयाध्यक्ष पं० श्रीयुतत्रिलोकनाथ-मिश्रमहोदयाः तत्रत्यराजगुरुदेव-पं० श्रीयुतबलदेवमिश्रमहोदयास्तदन्ये च विपश्चिद्वराः प्रकाण्डपाण्डित्य-प्रतिपन्न-प्रमाणप्रतिमण्डित-स्वस्वव्याख्यानेन तत्त्वमुपदर्शयामासुः । सभान्ते च पं० श्रीबलदेवमिश्रमहोदया विद्वज्जनमानसोद्दीपिनी-

भिरोजस्विनीभिर्वाग्भिराधुनिकवर्णाश्रमधर्मावनतिं विद्वज्जनसंघटनाभाव-निबन्धनत्वेन निरूप्य पुनस्तदुन्नति-प्रकारमुद्भावयामासुः।

तृतीयदिवसे च सभापतिपदमलङ्कुर्वाणेषु श्रीमन्मिथिलेशमहोदयेषु पं० श्रीमद्बालबोधमिश्रप्रभृतिभिरतिहृद्यपद्यैरभिनन्दितेषु न्याये पं० श्रीबालकृष्णमिश्र पं० श्रीमार्कण्डेयमिश्र पं० श्रीसहदेवझाशर्मणां माध्यस्थ्ये, व्याकरणे म० म० पं० श्रीयुतमुकुन्दझा पं० श्रीदीनबन्धुझा पं० श्रीरविनाथझा पं० श्रीनिरसनमिश्र पं० श्रीबालबोधमिश्रमहोदयानां माध्यस्थ्ये, ज्योतिषे च पं० श्रीगेनालाल चौधरी पं० श्रीश्रीदेवचौधरी पं० श्रीयुतानुपलालझामहोदयानां माध्यस्थ्ये प्राचीन-पण्डित-शास्त्रार्थो नवीन पण्डित-शास्त्रार्थश्च समजनि।

न्याय-शास्त्रे प्राचीनपण्डित-शास्त्रार्थस्य कृते काशिक-गोयनका-संस्कृत-महाविद्यालयाध्यापकैः श्रीसहदेवझामहोदयैर्विप्रतिपत्तौ प्रदत्तायां काशिक-पद्म-सुन्दरीसंस्कृतविद्यालयाध्यापकेषु श्रीमदुग्रानन्दझामहोदयेषूत्तरपक्षमादायोपविष्टेष्वपि कमपि पूर्वपक्षं जिघृक्षुमनवेक्ष्य मध्यस्थभूता अपि श्रीसहदेवझा महोदयाः पूर्वपक्षमनुसृत्यापूर्वपरिस्कारम्प्रवाहयन्तः समेषामेव समिति-समवेत-सुधियां स्वान्तमत्यन्तमुल्लासयामासुः। प्राचीनवैयाकरणशास्त्रार्थप्रसङ्गे तु हाजी-पुरीय-रत्नाकर सं० विद्यालय प्रधानाध्यापक पं० श्रीभूपनारायणझा महोदया स्त्रिंशद्वर्षोनवयस्का अपि स्वस्मिन् प्राचीनत्वमारोप्य पं०श्रीनिरसनमिश्र-महोदयैः प्रदत्तायां विप्रतिपत्तौ एकपक्षमादायोपविष्टाः सुलतानगञ्ज कलावती संस्कृत-विद्यालय प्रधानाध्यापक पं० श्रीमहेशझामहोदयैः समं सुललित संस्कृतेनातीव तीव्रतया शास्त्रार्थमकार्षुः, एवं नवीनपण्डितशास्त्रार्थोऽप्यतिस्पृहणीयः समजनि। अन्ते च शास्त्रार्थकर्तृभ्यस्तदितरेभ्यश्च विद्वद्भ्यः समुचितमार्थिकसत्कारं विधाय श्रीमन्मिथिलेशेन समिति विसृष्टेति। ईदृशस्तेषामध्यवसायो न केवलं मैथिलानाम् अपि तु समेषामेव संस्कृत-सौरभजुषां कृते प्रमोदप्रदः समजनि, विश्वसिमि च यदेवमेव प्रत्यब्दं पण्डितसम्मेलमहोत्सवं सम्पादयिष्यन्ति कर्हिचिन्मैथिलेतर-सुधियामप्युपरि दृष्टिं निक्षेप्स्यन्ति चेति शिवम्।—कश्चन काशीस्थो विद्वान्।

---

## विवाहस्याऽऽवश्यकता का ?

### ले०—केदारनाथत्रिपाठी ( गोलास्थः ) [ क्वींसकालेज काशी ]

——:०ॐ०:——

"विवाहस्याऽऽवश्यकता का वर्त्ततीति" इति विचारणायामित्थमेव स्पष्टतरत्वेन प्रतिभासते। यद्धि ललितललामललनाकुल-वदनारविन्दमकरन्दास्वादनमेव न हि विवाह-शृङ्खलायाः फलम्। नापि विषय-विष-तृष्णाया शमनमेव प्रयोजनम्। अपि तु सर्वाश्रमभोग्यस्य गृहस्थाश्रमयानस्य संचालन-रूप-प्रयोजनमुररीकृत्य नारी-नररूपे चक्रे निरमायि सर्वज्ञेनेश्वरेण।

उक्तमपि धर्मशास्त्रे—

"पुत्रार्थे क्रियते भार्या" इति

अर्थात् सन्तानोत्पादनार्थ-कामनयैव विवाह-श्रृङ्खलायाः प्रयोजनं संविभाति। "नापुत्रस्य लोकोऽस्ति" इति श्रुत्युद्घोषात्।

गृहस्थाश्रमविषये सम्मतिरेवं मनो भगवतः—

यथा वायुं समाश्रित्य वर्तन्ते सर्वजन्तवः।
तथा गृहस्थमाश्रित्य वर्तन्ते सर्व आश्रमाः॥
यस्मात्त्रयोऽप्याश्रमिणो ज्ञानेनान्नेन चान्वहम्।
गृहस्थेनैव धार्यन्ते तस्माज्ज्येष्ठाश्रमो गृही॥

[अ० ३ श्लो० ७७ ७८]

यथा नदी-नदाः सर्वे सागरे यान्ति संस्थितिम्।
तथैवाश्रमिणः सर्वे गृहस्थे यान्ति संस्थितिम्॥

[अ० ६ श्लो० ६०]

पुनरपि यैः किल "असवर्ण-विवाहः" "अन्ताराष्ट्रिय-विवाहः" इत्यादि स्वीकुर्वते; तत्र का विचारणेति विशदीक्रियते—

शास्त्रेषु सवर्ण-विवाहस्यैव समुद्घोषो निर्मल मञ्जुल-ध्वनि-संगर्भित-लहरीभिः संविराजते।

प्राकृतिक-नियम-निर्माता मानव-कुल-कल्याणसाधको भगवान् मनुरत्र समुद्घोषयति—

गुरुणानुमतः स्नात्वा समावृत्तो यथाविधि।
उद्वहेत द्विजो भार्यां सवर्णां लक्षणान्विताम्॥
असगोत्रा च या मातुरसपिण्डा च या पितुः।
सा प्रशस्ता द्विजातीनां दारकर्मणि मैथुने॥
महान्त्यपि समृद्धानि गोजाविधनधान्यतः।
स्त्री-सम्बन्धे दशैतानि कुलानि परिवर्जयेत्॥

[अ० ३ श्लो० ४ ५-६]

कानि दश कुलानि परिवर्जयेदित्युच्यते—

हीनक्रियं निष्पुरुषं निश्छन्दो रोमशार्शसम्।
क्षय्यामय्या व्यपस्मारि-श्वित्रिकुष्ठिकुलानि च॥

[अ० ३ श्लो० ७]

अविप्लुतब्रह्मचर्यो लक्षण्यां स्त्रियमुद्वहेत्।
अनन्यपूर्विकां कान्तामसपिण्डां यवीयसीम्॥

[याज्ञवल्क्यस्मृतिः]

प्रमाणपुञ्जै रेतैः संसिद्ध्यति यद्धि सवर्ण-विवाह एव शास्त्रेषु विहितः ।

ये किल प्रलपन्ति यत् " असवर्ण-विवाहः " प्रोक्तः ; ते प्रमार्णवकल्लोल-मालिकामग्नदूषितान्तः करणाः सन्ति—

सवर्णाग्रे द्विजातीनां प्रशस्ता दारकर्मणि ।
कामतस्तु प्रवृत्तानामिमाः स्युः क्रमशो वराः ॥

[ अ० ३ श्लो० १२ ]

तत्र व्यवस्थां प्रकाशयति—

शूद्रैव भार्या शूद्रस्य सा च स्वा च विशः स्मृते ।
ते च स्वा चैव राज्ञश्च ताश्च स्वा चाग्रजन्मनः ॥

[ अ० ३ श्लो० १३ ]

इत्युक्तत्वात् ।

न हि खलु ब्राह्मण-कन्यका ब्राह्मणेतरै विवाह्या, यादृशो सांप्रतिकी परिस्थितिः दृश्यते ।

पुनरपि श्रूयतां सिद्धान्तः—

न ब्राह्मण-क्षत्रिययो रापद्यपि हि तिष्ठतोः ।
कस्मिंश्चिदपि वृत्तान्ते शूद्रा भार्योपदिश्यते ॥
हीन-जातिस्त्रियं मोहादुद्वहन्तो द्विजातयः ।
कुलान्येव नयन्त्याशु स-सन्तानानि शूद्रताम् ॥
शूद्रावेदी पतत्यत्रेरुतथ्यतनयस्य च ।
शौनकस्य सुतोत्पत्त्या तदपत्यतया भृगोः ॥
शूद्रां शयनमारोप्य ब्राह्मणो यात्यधो गतिम् ।
जनयित्वा सुतं तस्यां ब्राह्मण्यादेव हीयते ॥

[ अ० ३ श्लो० १४ १५-१६-१७ ]

पुनरपि—

दैवपित्र्यातिथेयानि तत्प्रधानानि यस्य तु ।
नाश्नन्ति पितृदेवास्तन्न च स्वर्गं स गच्छति ॥
वृषली-फेनपीतस्य निःश्वासोपहतस्य च ।
तस्यां चैव प्रसूतस्य निष्कृति र्न विधीयते ॥

[ अ० ३ श्लो० १८-१९ ]

कुविवाहैः क्रियालोपै र्वेदानध्ययनेन च ।
कुलान्यकुलतां यान्ति ब्राह्मणातिक्रमेण च ॥

[ अ० ३ श्लो० ६३ ]

इत्यादि प्रमाण-प्रकाण्डैरित्येव सिद्धान्तितो यद्धि सवर्ण-विवाह एवाचरणीयः । अलं पल्लवितेनेति शम् ।

# नैषधीय-सुधापरिचयः।

——:❀❀:——

ले०—श्री पं० परमानन्दशर्मा शास्त्री,

( ऋषिकुल, लक्ष्मणगढ़, जयपुर स्टेट )

सुमधुरा सुधया सुधिया धिया, विरचिता रससङ्ग-समन्विता ॥
अलमलौकिक-शातशतप्रदा जयति सा कविना कवितापहा ॥ १ ॥
पदविलास-विलोलितमानसा, सरस-सूक्ति-विगीत-सुधारसा ॥
भुवि सुवर्णरुचिर्ननु हर्षजा सुकविता वनितेव विराजते ॥ २ ॥

संसारे हि सर्वोऽपि जन्तुजातः स्वशक्तिमधिकृत्य सुखमीहितु प्रयतमानो नयनयोः पेशलं पन्थानमाश्रयति। यतो हि अबोध-विक्लवः पशुपक्षिसमजः क्षुत्तृषाक्रान्तः सन् क्षेत्रस्य मार्गं मार्गयते। दण्डाद्बिभेति, पिण्डान्मुदमेति। मृगः सङ्गीतगतिं लक्षीकृत्य तदर्थमर्पयति स्वजीवनम्। तृणाय मत्वात्मरूपं सरितः सरित्पते रक्ततां भजन्ते। स्पर्शशर्म्मणे गच्छति कुञ्जरः पञ्जरे। अथ च श्रियां श्रीकामः, राज्ये राज्याभिलाषी, मद्ये मद्यपः, विलासितायां विलासितारतः, माने मानवान्, मदे मदवान्, क्रोधे च क्रोधवान् सुखं कल्पयितुमवलोकयतेतमाम्। परमेषु सर्वेष्वपि विषयेषु निर्दिष्टं सुखं सुखतया न व्यवहर्त्तुं व्याहर्त्तुं वा शक्यते। यतो निरुक्तान्येतानि सुखानि अल्पीयस एवानेहसे स्थितिमन्ति भवन्ति, अयन्ति च तत्तत्पुरुषेभ्य एव सुखताम्। तथा हि श्रीमतीषूपनिषन्निकषभूतासु गीतोपनिषत्सु श्रीमता सगुणेन ब्रह्मणाऽपि प्रत्यपादि:—

ये हि संस्पर्शजा भोगा दुःखयोनय एव ते।
आद्यन्तवन्तः कौन्तेय! न तेषु रमते बुधः ॥

अतो वास्तविकं सुखन्तु तदेव भवितुमर्हति यन्नैसर्गिकं सनातनं सर्वेषां कृते च प्रियङ्करं स्यादिति। तादृशं तदर्थभास्वत्यां ललितायां कवितायामेव समधिगन्तुं शक्यते। एतमेवाभिप्रायं सुव्यक्तं करोति पण्डितराजस्य जगन्नाथस्य पीयूषजुषो लेख:—

"जगति नरजन्म दुर्लभं तस्मिन्वैदुष्यं तत्र सत्कविता।
कवितायां परिणामो दुष्प्रापः पुण्यहीनेन" ॥

वैयाकरणशिरोमणेरपि भर्तृहरेर्लेखनी तु साहित्यराहित्यं पशुकल्पं कल्पयन्ती तस्याभ्यर्हितत्वं द्योतयति:—

"साहित्य सङ्गीत कलाविहीनः साक्षात्पशुः पुच्छविषाणहीनः" ।

अनुभवसिद्धमेतद्यत्-कवितया राशीकृता कीर्त्तिश्चन्द्र-सूर्ययोः स्थितिमनुसृत्य त्रिभुवनं भूषयति, एवं कवयः कविवर्णिताश्च पुरुषाः सदैव जगतीतलं समलङ्कुर्वन्ति युक्तमुक्तमभियुक्तैः । काव्यसम्बन्धिनी कीर्तिः स्थायिनी निरपायिनी—

ते धन्या स्ते महात्मान स्तेषां लोके स्थिरं यशः ॥
यै र्निबद्धानि काव्यानि ये च काव्येषु कीर्त्तिताः ॥

कृतं बहुना करकङ्कणायितेऽत्र विषये-यदत्रत्यं तत्रत्यञ्च यशश्चिचीषतां विपश्चिताङ्कृते काव्यमेवास्ति निरूपमं साधनम् ।

धर्मार्थकाममोक्षेषु वैलक्षण्यं कलासु च ।
करोति कीर्त्तिं प्रीतिं च साधुकाव्यनिषेवणम् ॥
काव्यं यशसेऽर्थकृते व्यवहारविदे शिवेतरक्षतये ।
सद्यः परनिर्वृतये कान्ता-संमिततयोपदेशयुजे ॥

ननु सर्वेऽपि प्राणिनस्तु नात्रापि सन्तुष्यन्ति, इति चेत् को नाम दोषः नहि कण्टक-लम्पटाय क्रमेलकाय सरसं पेशलञ्चाशनं रोचते, नापि तरला मुक्तिमाला वानरस्य कण्ठे शोभते, एवमवटीटस्य वचसा सुखदामोदोऽरविन्द-मकरन्दो नापलपितुं शक्यते । अथ च किं वेद जनुषान्धो रुचिरचरणन्यासाया-मधुराधराधरीकृतसुधाया लोकलोचनलोभनीयायाः कान्तायाः सौन्दर्यम् ।

लोकोत्तर-रचना-चतुरेण कविना रचितं लोकोत्तराह्लादकरं काव्यं तरुणीजनेनोद्भावितं सलावण्यं ताहरूये रसिकैरिव रसिकैरेव रात्रिन्दिवं रम्यते । यतो-

विधेरपि स्वारसिकः प्रयासः परस्परं योग्य समागमाय—

आम् ! स्मृतम्, प्रकृतो दूरमाकृष्टो मया वाचकश्चाय इत्यहं तस्य कृपाया लालाटिकोऽस्मि सम्वृत्तः । सानुनयं साम्प्रतमहं प्रकृतमनुलक्ष्येकेन सुभाषितेनोपयुक्तं विषयमुपसंहरामिः—

अपूर्वो भाति भारत्याः काव्यामृतफले रसः ।
चर्वणे सर्वसामान्ये स्वादुवित्केवलं कविः ॥

एतादृशी विशुद्ध-ललिताकारा गुणालङ्कारधारिणी रसस्राविणी च कविता नास्ति सकलैरपि मर्त्यधर्मभिः सुकरेति मनसि विधाय महर्षिवाल्मीकि-प्रभृतिभिर्वसुमतीव सुखरूपै विधिभिरेवापरैः सरस्वतीचरणसेविभिः कविमूर्धन्यैर्वसुधायामपि सुधानिधायं निहिता नितरां चकास्तितरां सौहित्यमावेदयन्ती कविता । को नाम लोके स्वीयास्तित्वाभिमानी मानवः, यः कवितामृतं निपीयापि

विगलितवेद्यान्तरं ब्रह्मानन्द-सहोदरं न विन्दतामानन्दम् न वा भजतां समस्ताङ्ग सन्तर्पकं तादृशा साहित्येनापि सौहित्यम् ।

कविता वनिता कस्य न मोदाय स चेतसः ।
रस एव सदा यस्या नरीनर्त्तीव सर्वतः ॥

परमिदमेव विधातुश्चातुर्यं यत्तेन रचितायां रचनायां न कस्यापि कोऽपि समो विद्यते, अवश्यं येन केनापि भेदेन भाव्यमेव सर्वेषु । पश्यन्तु भवन्तः संसारे यत्सर्वेषामपि जनिमतां मुखादिकं भवति परन्तथापि न सर्वे सुन्दराः—कश्चित्सत्स्वपि सर्वेषु शुभेषुष्वङ्गकेषु स्वीयाङ्ग-सन्निवेशवशादसुन्दरः, अन्यश्चासदृशेष्ववयवेष्वपि तस्मात्सुन्दरः, सर्वथापि कल्याणे रमणीनां रमणीयके यत्किञ्चित्तारतम्यं ध्रुवमेवाभ्युपगन्तव्यम् । इति यावन्त्यपि कोमलायां कविसंसृतौ काव्यानि सन्ति, तावन्ति नैकविधानि, सन्तु नाम सर्वाण्यपि समन्ततो रस्यरसश्च्योतीनि । परन्तु कश्चित्कस्मिंश्चिदेव काव्ये भावं बध्नाति इतरश्चेतरस्मिन् यथा कविकुलतिलकेन कालिदासेन षष्ठे रघुवंशे पद्येनैकेन निरणायि—

अथाङ्गराजादवतार्य चक्षु र्याहीति कन्यामवदत्कुमारी ।
नासौ न काम्यो, न च वेद सम्यग्द्रष्टुं न सा, भिन्नरुचि र्हि लोकः ॥

अतो हेतोरभिनवानल्पकल्पनाकलितं सकलालङ्कारसमलङ्कृतं वृत्तैर्वृत्तं प्रसह्य सचेतसां चेतसामाकर्षकं प्रतिवर्णैलावण्यपूर्णं नैषधीयमेव काव्यं काव्यजुषां चक्षुगोर्जनुषश्च सफलता-प्रतिपादकमिति द्रढीयान् विश्वासोऽस्माकम् । यतोऽस्य काव्यस्य साद्यन्तमालोकनेन स्फुटमेतदेव लोचनयोः पुरतः प्रस्फुरति यदयं तत्र भवानस्य कर्त्ता कविकुलललामः श्रीहर्षः समधीतसमस्तशास्त्रः कविकर्ममर्मज्ञो रचनाव्यापारेऽनुपमश्चासीत् ।

अस्य काव्यस्य विशेषेषु प्रथमः शब्दार्थानुगुण्यम् ।

अयं किल प्रारम्भत एव एवम्विधां रचनोपरिपाटीं घटयितुमचेष्टत ययाद्यो नैषधं निरुपमाकं समजानष्ट । अतः कविमूर्धन्यजन्मन श्चिरन्तनानां प्रायः सकलानामेव कवीनां कवितासु बाहुल्येनेदमवलोक्यते यद्यत्र ते भावगौरवमाधातुमैहन्त तत्र भवतु नाम हृदयङ्गमोभावः, वर्णविन्यासस्य तु नितरामभाव एव । अथ च यत्र ते ललितेभ्यः पदेभ्यः प्रायतन्त तत्र सत्स्वपि ललितेषु पदेषु भावस्य खपुष्पायितत्वमिति । परन्तु पठन्तु भवन्तोऽत्रत्यं कतमदेव पद्यम् नात्र बहु वाच्यं यत्तत्र भवन्तः स्वयमेव विभाव्यैव तत्रस्थं भावं, रसनां व्यापारयिष्यन्ति ससाधुवादं वक्तुम् शब्दार्थयोर्द्वयोरपि सजीवमवैदंशचित्रम् "इदंसाकारमुदाहरणं शब्दार्थयुगलस्य काव्यस्वरूपस्येति"

महीपालमौलिमालालालिताङ्घ्रिचरणकमलतो राज्ञो निषध-वसुधासुधांशो-

नैलतः साधु विसृष्टो मरालकुलनायकः स हंसो विदर्भानधिगत्य दमयन्तीं पश्यति—

अथ कनकपतत्रस्तत्र तां राजपुत्रीं, सदसि सदृशभासां विस्फुरन्तीं सखीनाम् ।
उडुपरिषदि मध्यस्थायिशीतांशुरेखाऽनुकरणपटुलक्ष्मीमक्षिलक्षीचकार ॥
(२।१०६)

नैषधः कतिधापि दूतधर्मतया दमयन्तीमनोगतिं स्वस्मात्परिवर्त्तयन्नपि यदा दृढनिश्चयां रुदतीमेव तां समाससाद तदा मानवमर्यादया द्रुतमेव द्रवीभूय प्रकाश्य च स्वीयं दूतरूपाद्रूपं सान्त्वयति—

अयि ! प्रिये कस्य कृते विलप्यते विलिप्यते श्रुहा ! मुखमविन्दुभिः ।
पुरस्त्वयालोकि नमत्ययं न किं तिरश्चलल्लोचनलीलया नलः ॥

अपि च—चकास्ति विन्दुच्युतकातिचातुरी घनाश्रुविन्दुस्रुतिकैतवात्तव ।
मसारताराक्षि ! ससारमात्मना करोषि संसारमसंशयं यतः ॥
(९।१०३-१०४)

सान्ध्यं विधिं विधिवदुपास्य सप्तभूमं प्रासादं समारुह्य सुखासीनं महीमहेन्द्रं नलं, चन्द्रमस्तुत्य दमयन्ती विरोधानुप्राणितामुत्प्रेक्षामेकां श्रावयति—

आदर्शदृश्यत्वमपि श्रिताऽयमादर्शदृश्यां न बिभर्त्ति मूर्त्तिम् ।
त्रिनेत्रभूरप्ययमत्रिनेत्रादुत्पादमासादयति स्म चित्रम् ॥ (२२।७५)

पनयोः सम्भोगं सिसाधयिषु स्तत्र भवान् विद्वच्चकचूडामणिः श्रीहर्षो दिवानिशं सम्भोगेऽपि तयोः पापापात्रत्वमेव समर्थयतिः—

आत्मवित्सह तया दिवानिशं भोगभागपि न पापमाप सः ॥
आहृता हि विषयैकतानता ज्ञानधौतमनसं न लिम्पति ॥ (१८।२)

न चकासति किं पूर्वोक्तेष्वेषु पद्येषूपमातिशयोक्तिश्लेषापह्नवोक्तिविरोधोत्प्रेक्षाप्रभृतयोऽर्थाऽलङ्काराः, हृदयहारो ललितोऽनुप्रासश्च ? कथञ्चात्र न व्याप्नोति भावुकतेति सहृदया एव केवलं प्रमाणम् ।

## अतिशयितातिशयोक्ति द्वितीयः ।

दशमे काव्यप्रकाशे विशेषालङ्कारप्रस्तावे वाग्देवतावतारभूतो मम्मटभट्टो यः सहृदयमूर्धाभिषिक्तोऽभिधीयते स प्रधानपदवीमारोहयाञ्चकार वक्रोक्तिमखिलेष्वप्यलङ्कारेष्विति नैषधे प्रतिपदं प्रतिपद्यं प्रत्यभिप्रायञ्च सा नटीनृतीति । अस्मदीयोऽयं कविः प्रतिवस्तु वक्रोक्त्या वर्णयति । अत्र वक्रोक्तिपदेन न "वक्रोक्तिः श्लेष-काकुभ्यामितरार्थप्रकल्पनम्" इतिलक्षणलक्षितायास्तस्या ग्रहः । अपितु "वक्राभिधेयशब्दोक्तिरिष्टा वाचामलङ्कृति" रिति सर्वैरप्यालङ्कारिकै रङ्गीकृतत्वादतिशयोक्तेरेव ग्रहणम् । अत्र "सैषा सर्वत्र वक्रोक्ति रनयाऽर्थो विभाव्यते । यत्नोऽस्यां कविभिः कार्यः कोऽलङ्कारोऽनया विने" ति भामहाचार्योक्तं ध्वन्यालोक-

स्थितं तद्व्याख्यास्थितं च पद्यं तद्व्याख्यानञ्च शस्तम् । तत्र हि लोचनाख्ये व्याख्याने "यातिशयोक्ति र्लक्षिता सैवैषा सर्वापि वक्रोक्तिरलङ्कृतिरिति शिष्टं स्पष्टम् इति लभ्यते ।

अथ चात्र "सर्वत्र एवंविधे विषयेऽतिशयोक्तिरेव प्राणत्वेनावतिष्ठते तां विना प्रायेणालङ्कारत्वायोगादिति" विषयेऽत्र पूर्वोक्ता प्रमाणत्वेनोपन्यस्ता च कारिकापि दृढ़ो हेतुः । अधुना स्वाद्यतां पद्यमेकम् :—

त्वं हृद्गता भैमि ! बहिर्गताऽपि प्राणायिता नासिकयास्यगत्या ॥
न चित्रमाक्रामति तत्र चित्रमेतन्मनो यद्भवदेकवृत्ति ॥ ( ३।१०५ )

गाढ़तरव्युत्पत्तिदृढीकृतान्तःकरणो नानाविधपदार्थरचनापरिवृत्तिचतुरः पण्डितराजो जगन्नाथो विशेषालङ्कारस्य द्वितीयं प्रकारं लक्षयति "यच्चैकमाधेयं परिमितं यत्किञ्चिदाधारगतमपि युगपदनेकाधारगततया वर्ण्यते सोऽपरो विशेष" इति भावोऽयं यत्रैकस्यैवाधेयस्य बहव आधारा एकस्मिन्नेव क्षणे प्रतिपादिताः स्यु स्तत्र द्वितीयो विशेषः, एकस्वरूपा दमयन्ती आधेया एकत्रैवाधारे स्थातुमर्हति परमत्र तु तस्या भूयांस आश्रयाः, विरोधश्लेषादयोऽप्यलङ्कारा अत्र चमत्कारकाः परमस्या एवातिशयोक्ते रुपलम्भात् ।

अतिशयोक्तिमाश्रित्य एतस्यैव विशेषालङ्कारस्य प्रथम-प्रकारकमुदाहरणन्तु कियता चातुर्येण व्यवर्णयद्येषोऽस्माकङ्कविरिति विभावयन्तु ।

एतद्यशोभिरमलानि कुलानि भासां सत्यं तुषारकिरणस्य तृणीकृतानि ॥
स्थाने ततो वसति तत्र सुधाम्बुसिन्धौ रङ्कुस्तदङ्कुरवनीकवलाभिलाषात् ॥
( ११।८७ )

रङ्कोरवनिरेव प्रसिद्धमाधेयं परमत्र तु, पश्यन्तु भवन्तो यच्चन्द्रं गौडधराधिराजकीर्त्या शुक्लत्वरूपे साम्ये तृणवत्तुच्छं निर्माय तमेव (चन्द्रमेव ) तृणवनीं कल्पयित्वा साधु समर्थितस्तदङ्केऽप्रसिद्धेऽप्याधारे मृगस्य वासः । एवमेव पुष्पेषुश्चिकुरेष्वित्यादि, ३।१२८ नैषधपद्येऽपि ।

## वक्रोक्तिबाहुल्यं तृतीयः ।

"वक्रोक्तिः श्लेषकाकुभ्यामपरार्थप्रकल्पनम् ।"

इतीत्थं लक्षितापि वक्रोक्तिरत्र प्राञ्जलप्रयोगा—

शस्ता न हंसाभिमुखी तवेयं यात्रेति ताभिश्छलहास्यमाना ।
आह स्म नैवाशकुनीभवेन्मे भावि प्रियावेदक एष हंसः ॥

छलेन हंस-( सूर्य ) सम्मुखी हे भैमि ! ते यात्रा न शस्ता ( शुभशकुना ) इत्यभिप्रायेणोक्तं सखीवाक्यं दमयन्ती प्रतिवदति यदयं हंसो मह्यं नाशकुनम् यतोऽयं मरालः, पक्षी शुभावेदकश्च । (क्रमशः)

# अहो साहसम् ।

सूचकः—श्रीमान् 'अन्तर्यामी' ।

'संस्कृतरत्नाकर' स्य प्रथमवर्षीय १० संख्यायां 'शरद्वर्णनाऽष्टकं' द्वितीय वर्षीय २ संख्यायाञ्च 'वसन्तवर्णनं' श्रीशङ्करशास्त्रि-( काजड़ास्थ ) कर्तृक दृष्टम्; परं तत्र 'सूर्योदय' प्रकाशितचरकवितानां मात्राऽऽपहारश्शब्दाऽपहारश्च दृश्यते । 'सूर्योदय' स्य प्राचीनपाठकानां स्मृतं स्यात्; यत्—तस्य प्रथमवर्षीय-१६ संख्यायां'सूर्योदयः' इतिशीर्षकः पद्यद्वयमयो लेखः श्रीगङ्गाविष्णुशास्त्रिनाम्ना प्राकाश्यत; तल्लेखकोपरि म० म० माननीयपण्डित श्रीगिरिधरशर्मभिः 'सूर्योदय' स्य १-२३ संख्यायां भीषणरूपेणाऽऽक्रमणमक्रियत 'अहो साहसम्' इति शिरस्कनिबन्धेन; यतोऽसौ पद्यद्वयमयलेखो जीवज्जाग्रतः कस्यचित् कवेः कवितायाः स्पष्टमपहार आसीत् । अधुना तत्प्रकाशकत्वेन प्रकाश्यमाने पत्रे प्रकाशितं लेखद्वयं वीक्ष्याऽहमपि तत्कृते 'अहो साहसम्' इति प्रयुञ्जानस्तद्-दिग्दर्शनं कारयामि ।—

'रत्नाकरे' १।१० 'शरद्वर्णनाऽष्टकम्' इति शीर्षकं दृश्यते श्रीशङ्करशास्त्रिनाम्ना; अधुना 'सूर्योदय' स्य तृतीयवर्षीय १३ संख्यायां 'श्रीभूपनारायणशर्मणः' 'श्रीवासुदेवस्य' ( नयपालस्थस्य ) च 'शरद्वर्णनं' शीर्षकं पश्यन्तु पाठकाः । यदुभयत्र कियत्साम्यम्—

'वर्षर्तुसौम्यघनघोषमवेत्य यातं द्रागङ्गनाजनमनस्तु सखेदमासीत् ।
शश्वन्निरम्बुदनभःशशलक्ष्मभासा स्वानन्दमेधयितुमेत्य शरच्चकास्ति ।१।

इति श्रीशङ्करशास्त्रिणः । यस्मात् सूर्योदयलेखादस्यापहारः, स दृश्यताम्—

'वर्षर्तुरत्ययमगाद् द्रुतमित्यवेत्य नोपेत्यमीषदपि दुःखमिहाङ्गनाभिः ।
एषा निरम्बुदनभोऽन्तरुदञ्चितेन्दुरानन्द मेधयितुमेत्य शरद्विभाति' । १ ।

सूर्यो० ३।१३ श्रीभूपनारायणस्य । कीदृशमनेन साम्यं पूर्वश्लोकस्य, अन्यद्दृश्यताम् –

'उदन्वरिः किमु च पास्यति निर्दयो नः प्राणेश्वरं पुनरगस्तिरितीव नूनम् ।
चिन्ताशतैरविरतं भृशखिन्नचित्तास्त्वेता भजन्ति सरितः कृशतामिहर्त्तौ ॥'

रत्नाकरे १।१० श्रीशङ्करस्य ।

'उदन्वरिः पास्यति निर्दयः किं भूयोऽपि नो जीवितनाथमेषः ।
इतीव चिन्ताशत-खिन्नचित्ताः कृशत्वमेताः सरितो वहन्ति ।'—

सूर्यो० ३।१३ श्रीवासुदेवशर्मणः ॥ कीदृशमनेन साम्यं पूर्वस्य ?

'फुल्लारविन्ददलमञ्जुधृतातपत्रा या सस्यकाशसितचामरवीज्यमाना ।
श्वेताऽभ्रवृन्दपरिपूर्णदिगन्तराला विक्टोरियेव ननु सा मुदमातनोतु'

रत्ना० १।१०।३ शङ्करशास्त्रिणः । अस्य भावस्य यस्मादपहारः कृतः, सोऽपि श्लोको दृश्यताम्—

'श्वेतातपत्रोदितपुण्डरीकः काशालसच्चामरवीज्यमानः ।
हंसावलीविस्तृतशुभ्रकीर्त्तिर्वर्षात्ययो भूमिपतिर्विभाति'
सूर्यो० ३।१३।५ श्रीवासुदेवशर्मणः ।

'नीरप्रवाहनिकरैर्नलिनीं प्रियां स्वां नीतां कुतश्चिदवगम्य दिवाकरोऽयम् ।
दुःखात् कथञ्चन कृशाङ्गलतान्त्ववाप्य तां कोपताह्यनुदिनं भृशमुद्दिदीपे ।
रत्ना० १।१०।७ शङ्करशास्त्रिणः ।

'जलप्रवाहैर्नलिनीं प्रियां हठात् कुतोऽपि नीतां मृगयन् दिवाकरः ।
कथञ्च तां प्राप्य कृशाङ्गयष्टिकां विवृद्धतेजाः सुतरां विराजते'
सूर्यो० ३।१३।८ श्रीवासुदेवशर्म्मणः इयं कविता कीदृक्कौशल्येन श्रीशङ्करशास्त्रिणाऽपहृता !

'चेत् साम्प्रतं शरदियं भुवि नागता स्याद् ।
यायात् कथं पितृगणः सगणश्च तोषम् ।
संसारभावुककृते तु गिरीन्द्रपुत्री ।
प्राविर्भवेत् कथमुपेत्य भवे भवानी'
रत्ना० १।१० शङ्करशास्त्रिणः ।

इयं रचना यस्मात् 'सूर्योदय' श्लोकादपहृता, सश्लोकः श्रूयताम्—

'एषा शरद् भगवती न समागता चेदञ्चेत् कथम्पितृगणः सकलस्य तृप्तिम् ।
भव्योद्भिभावयिषया च कथं भवेऽस्मिन्नाविर्भवेत् स्वयमुपेत्य गिरीन्द्रकन्या ॥'

सूर्यो० ३।१३ श्रीभूपनारायणस्य ।

इत्थं सं० १९८४ मुद्रितयोः 'सूर्योदय' ३।१३ स्थ-श्रीवासुदेव श्रीभूपनारायणशर्मलेखयोः सन् १९३३ अक्टूबरमुद्रिते संस्कृतरत्नाकरे श्रीशङ्करशास्त्रिणाऽपहारः कृत इति स्पष्टं सिद्ध्यति ॥

अथ पुनरमुनैव श्रीशङ्करशास्त्रिणा द्वितीयवर्षीय-'रत्नाकर' द्वितीयसंख्यायां यद् 'वसन्तवर्णनं' कृतम्, तदपि तुरीयवर्षीय-'सूर्योदय'स्य विंशयां संख्यायां मुद्रितात् श्रीजगदीशशास्त्रिव्याकरणाचार्य्य प्रणीताद् 'वसन्तवर्णनाद्' अपहृतम् । प्राक्तनाऽपहारे तु क्वचिच्छन्दःपरिवर्त्तनं कृतं शङ्करशास्त्रिणा, परमत्र तु छन्दोऽपि समानं स्थापितम् । तद्यथा—

'शिशिरिता शिशिरर्त्तुसमीरणैस्सुखमवाप न या प्रियसङ्गमात् ।
सपदि तामनुनेतुमना मनागयमुपैति वरः कुसुमाकरः ॥'
रत्ना० २ । २ शङ्करशास्त्रिणः । अधुनैतदुपजीव्यपद्यं दृश्यताम्—
'शिशिरिता निशि शैशिरमारुतैर्मुदमवाप न या प्रियसङ्गतः ।
झटिति तामनुनेतुमना मनागयमुपैति पुरः कुसुमाकरः ॥'
सूर्यो० ४ । २० । १ श्री जगदीशशर्म्मणः ।

'मधुरयं ननु मित्र ! समागतो भवदसौख्यदमत्र लयं गतम् ।
मधुकरा निगदन्त इतीव वै मुदमवाप्य रुवन्ति वियोगिनः ॥'
रत्ना० २ । २ । २ श्रीशङ्करशास्त्रिणः ।
'जहि शुचं मधुरेष समागतो गतमहो भवतामसुखप्रदम् ।
प्रणिगदन्त इतीव वियोगिनो मुदमुपेत्य रुवन्ति मधुव्रताः ।'
सूर्यो० ४ । २० ५ जगदीशशर्म्मणः । कीदृशमनेन साम्यं पूर्व्वस्य ॥
'प्रतिनिशं प्रिययोगविवर्जिताः सवितुरन्य सुयोगसुशङ्किनीः ।
हृतरुचीर्नलिनीरिव बोधयन्नलिगणो ननु गुञ्जति मञ्जुलम् ॥'
रत्ना० २ । २ । ३ शङ्करशास्त्रिणः ।
'विरहिता रजनीषु विवस्वतः परवधूसहवासविशङ्किनीः ।
कलुषिता नलिनीरिव बोधयन्नधिसरो रमते मधुपावलिः

सू० ४ । २०.' ६ जगदीशशर्मणः । 'बोधयन् मधुपावलिः इति लिङ्गदोषो दृश्यते ; श्रीशङ्करशास्त्रिणा स्वबुद्धिमत्तया, बोधयन्नलिगणः ' इति पाठं कृत्वा स दोषो दूरी कृतः ॥

रुचिरचूतसुफुल्लितमञ्जरी सुभगकोकिलरम्यकुहूरवैः ॥'
रत्ना० २ २ । ४ शङ्करशास्त्रिणः ।
'नवरसालमदालसमञ्जरीजमनभूमविरञ्जितकण्ठकः ।
मदनकीर्ति ततीरिव घोषयन् कलरवं कुरुते कलकण्ठकः ।'
सूर्यो० ४ । २० । ११ जगदीशशर्म्मणः ॥

पाठकै दृष्टमेव—श्रीशङ्करशास्त्रिणा कीदृक्-चातुर्य्येण 'सूर्य्योदय' स्य प्राचीनकवितात्रयं नव्यरूपेण परिष्कृत्य पुरातनलेखकानां नाम निह्नुत्य स्वकार्य्यं साधितम् । यथा म० म० माननीय श्रीगिरिधर शर्म्मभिः 'सूर्य्योदय' स्य १ । २३ संख्यायाम् 'अहो साहसम्' इति लेखो लिखितः ; तथैवाऽस्माभिरपि तादृशशीर्षकं धृतम् । एतादृशचौर्य्याऽनिच्छुकानां तेषां पत्रे तादृशचौर्य्यबद्धं लेखद्वयं लेखकेन प्रेषितम्, तत्र युक्तं कृतम् । आश्चर्य्यम्–चिरमुद्रित म० म० हरनारायणशास्त्रि-लेखस्तु + तेषां स्मृतावस्थात् ; परमल्पकालमुद्रित–' सूर्य्योदय' लेखानां स्मृतिस्तेषां न स्थिता ; कदाचित्तैर्मनोयोगेन ताः कविताः 'सूर्य्योदये ' न दृष्टाः स्युः ; अन्यथा-न कदाऽपि सम्भाव्यतेसम ; यच्चौर्य्यवद्धः कस्यचन लेखस्तेषामेव ( म० म० श्रीगिरिधरशर्म्मणां ) प्रकाशकत्वेन प्रकाशिते ' संस्कृतरत्नाकरे ' प्रकाशनं भजेत् । अस्तु—लेखका एवंविधचौर्य्यप्रकृतिं त्यक्त्वा मौलिकरचनारचनाय प्राथ्य॑न्ते ।

श्री ' सूर्य्योदय ' सम्पादकमहाभागाः ! मदीयोऽयं सन्देशः स्वपत्रे प्रकाशनीयः, ' संस्कृतरत्नाकर ' सम्पादकमहाभागपर्य्यन्तञ्च प्रापणीयः ; यतः प्रेषितमप्यमुं लेखं ते महोदयाः स्वपत्रे न प्रकाशितवन्तः । चिरकालप्रतीक्षां विधाय चाऽस्माभिरसावेव लेखो भवत्पार्श्वे प्रकाशनाय प्रहित इति ।

+ तेषां—म० म० श्रीगिरिधरशर्म्मणाम् ।

धर्मत्वकल्पना इति नैयायिका आहुते। एषां चतुर्णामपि लक्षणानां सूक्ष्मेक्षिकया पर्य्यालोचने नाणुरपि वैमत्यलेशो भ्रम-स्वरूपनिरुक्तौ। चरमभूमिगमिदं मीमांसाशास्त्रम् एवमेव सूक्ष्मेक्षणपरिशीलनेनात्मज्ञानप्राप्तावद्वितीयं साहाय्यमाचरति।

ज्ञानं हि स्वात्मनः स्वरूपम्। यथा ज्योतिर्मयः सूर्यः। तेजोविरोध्यन्धकारवदेव ज्ञानविरोध्यज्ञानम्। अज्ञानद्वारा स्वयम्प्रकाशेऽप्यात्मनि यदावरणशक्त्या स्वरूपज्ञानतिरोभावो भवति, तदेव रज्जुसर्पभ्रमवज्जीवभावनिदानम्। तदेवाज्ञानं क्रमशो बद्धमूलं सत् अध्यासशब्दवाच्यम्भवति, तदेव च जीवस्य संसारचक्रभ्रामणे साक्षान्निदानम इति। अनाद्यविद्यावशतः प्रथमे चिज्जडग्रन्थौ निबद्धो जीवश्चतुर्विधानामपि भूतसङ्घानां विविधासु योनिषु चंक्रम्यमाणोऽहमिदं ममेदमित्यादिभावप्राबल्येन द्रष्टृदृश्यभावं दृढयन्पूर्णजीवभावमासाद्य मनुष्ययोनाववतरति। तदैव स्वांपिण्डस्य पूर्णाधिकारी प्रकृतिधाराविच्युतः स्वतन्त्रो भूत्वाऽनात्मनि शरीरादावात्मभावं दृढयन् जन्ममरणकारणं संसारचक्रं दृढं चालयितुं कारणीभवति।

इदमेवाविद्ययाऽज्ञानम् अज्ञानेन भ्रमो भ्रमेण चाध्यासोऽध्यासेन च बन्धनस्यालौकिकवाङ्मनसातीतं रहस्यमस्ति। औपनयद् रहस्यमिदमन्यथ पि ज्ञातुं शक्यते यथा—ब्रह्मशक्तिरियं माया ब्रह्मणि आविर्भूय तस्मिन् सगुणत्वमासञ्जयन्ती तमोमयी=अविद्या, सत्त्वमयी=विद्येति। आत्मानं द्विधा विबभाज, प्रथमायाः प्रभावतो जीवो बद्धो भूत्वा संसारचक्रं निर्वर्तयितुम् द्वितीयायाश्चात्मज्ञानं लब्ध्वा मुक्तो भवितुमारंभे। अविद्याया अज्ञानोत्पत्तौ तमः कारणम् विद्यायाश्च ज्ञानोत्पत्तौ सत्त्वं कारणम्। एतदेवाज्ञानेन बन्धनम् ज्ञानेन मुक्तिरिति निगद्यते। इदमेवाज्ञानम् ज्ञानस्वभावमपि शुद्धमात्म-स्वरूपमावृणोति आवृत्य च भ्रममुत्पाद्य नानायोनिषु भ्रामयत् तमेव दृढयदध्यासपरम्परया संसारचक्रे जीवं दृढबन्धं बध्नाति।

अस्मादेव द्वैताध्यासादुन्मोच्याद्वैतस्वरूपेऽवस्थापयितुम् वेदस्य भगवतः प्रवृत्तिः तस्य च काण्डत्रयात्मकस्यानुरूपमेव मीमांसात्रयं विद्यते। तत्र च कर्मकाण्ड-बहुलस्य कर्मकाण्डमूलकस्य च जगतो जन्यस्थितिप्रलयाः कर्मकाण्डे एवावलम्बन्त इति तस्य विस्तारोऽपि महानस्ति। अतस्तत्प्रतिपादकस्य च कर्ममीमांसाशास्त्रस्यापि भरद्वाजजैमिन्युपज्ञस्य बृहद्वपुष्ट्वम्। तस्य च पूर्वार्धभागस्य प्रवर्तयिता महर्षिर्भरद्वाज उत्तरार्द्धभागस्य तच्छिष्यो जगद्विख्यातो जैमिनिरिति विवेकः। कदाचिदिह चिरकालं यावत्पूर्वार्द्धभागस्य विलोपाद्दर्शनक्रमभङ्गो महत्यासीद्दुविधा

बाधा च बहुधा। अद्यत्वे तु महर्षीणानुग्रहतः पुनरुपलब्ध्या तस्य भागस्य महत्सौकर्य्यं जातम्।

पूर्वार्द्धस्य चत्वारोऽध्यायाः उत्तरार्द्धस्य च देवताकाण्ड-सङ्कर्षणकाण्ड भेदाभ्यां षोडशाध्याया इति सङ्कलय्य विंशत्यध्यायात्मिका गुरुशिष्योभयोपदिश्यमाना केवलं पूर्वमीमांसा भवति। उपासनाकाण्डस्य प्रतिपादिका तु महर्षिमङ्गिरसोपनिबद्धा दैवीमीमांसा चतुष्पादात्मिका। ज्ञानकाण्ड-प्रतिपादिका महर्षि बादरायणप्रज्ञा ब्रह्ममीमांसा, ब्रह्मसूत्र-वेदान्तापराभिधा चतुरध्यायी विविधाचार्यभाष्यविभूषिता वरिवर्ति। तत्र पूज्यपादभगवच्छङ्कराचार्य्यप्रणीत-शारीरकभाष्यमेवाद्वैततत्त्वप्रतिपादकं सर्वत्र जगति प्रसिद्धिमुपगतमस्ति। एवमिदम्मीमांसात्रयम्।

"अनादिनिधना नित्या वागुत्सृष्टा स्वयम्भुवा,
आदौ वेदमयी नित्या यतः सर्वाः प्रवृत्तयः" ॥
"न कश्चिद्वेदकर्ता च वेदस्मर्ता पितामहः,
तथैव धर्मं स्मरति मनुः कल्पान्तरान्तरे" ॥

इति प्रमाणैः प्रमाणितस्य भगवतोऽपौरुषेयस्य वेदस्य काण्डत्रयं प्रतिपादयज्जीवावरणविक्षेपमलमपाकुर्वत् द्वैतभूमिमधिगमय्य निःश्रेयसम्प्रापयतीति सुधीभिः संक्षेपत ऊहनीयम्।

यद्यपि मीमांसा-दर्शनत्रयमपि जीवब्रह्मैक्यवादम्, अविद्यया जीवत्वम् विद्यया च मोक्षमेवमद्वैत-तत्त्वमेव प्रकारान्तरेणाङ्गीकरोति, तथापि कर्ममीमांसा-दर्शनन्तु मलापाकृत्यैव विक्षेपावरणाभावं स्वीकरोति।

दैवीमीमांसादर्शनन्तु विक्षेप-नाशेन मलावरणयोर्विलयमुरीकरोति। ब्रह्म-मीमांसया च श्रवण-मनन-निदिध्यासनैरावरणक्षयं विदधत्या मलविक्षेपविनाशोऽभ्युपेयते। एवमस्मिन्दर्शनत्रये न दृश्यते स्वल्पोऽपि मूलसिद्धान्तभेदः। यथा चिकित्साशास्त्रविदामेको ब्रवीति अन्नेन शरीरपोषणे मुखयन्त्रस्य प्राधान्यमन्यो ब्रूते पाकस्थल्याः प्राबल्यमपरः स्वीकरोति हृदययन्त्रस्याभ्यर्हितत्वमिति। एवमेषु वाचां भेदेऽपि न सिद्धान्तापगतिः। तथा हि शरीरावष्टम्भकानाम्प्राणानां पोषकमन्नं प्रथमतो मुखे ततः पाकस्थल्यां याति तत्र च रसत्वेन परिणम्य हृदय-यन्त्रे प्रविशति। ततश्च रुधिरत्वमुपेत्य शरीरधमनीषु सञ्चरत्कार्यं पुष्णाति। एवमेवात्र मीमांसात्रये प्रस्थान-पुरुषार्थ-भेदेऽपि न लक्ष्यभेदलेशोऽप्यस्ति।

ब्रह्ममीमांसा-शास्त्रस्य वेदान्तस्य तु सर्वाभ्यर्हितोऽधिकारः। यतो हि दर्शनमिदं वेदस्य चरमं ज्ञानकाण्डं मीमांसते, आत्मज्ञानं प्रकाशयति सर्वेभ्योऽपि

दर्शनेभ्योऽभ्यर्हितं पदं समश्नुते, स्वाश्रितेभ्योऽद्वैततत्त्वोपलब्धिमपि वितरति इति महिमास्यानिर्वचनीयख्यातिजुषो दर्शनस्यानिर्वचनीय एव !

अद्वैतवादस्यायं सिद्धान्तो यज्जीवो दार्शनिक-दृष्ट्या ब्रह्मसाक्षात् कुर्वन् ब्रह्मभावं समश्नुते। एवमात्मज्ञानेन त्रिविधतापविमुक्तो भवति विद्वान्। नास्ति कोऽप्यन्योऽत्रोपायस्तापत्रय-विमुक्तये।

वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्।
तमेव विदित्वातिमृत्युमेति नान्यः पन्था विद्यतेऽयनाय" इति

"ब्रह्मवाहं" इत्यसन्दिग्धापरोक्षानुभूतिरेवात्रात्मज्ञान-शब्देन निगद्यते। तत्प्राप्तेः प्रधानं कारणं श्रवणं मनननिदिध्यासने च तस्योपकृतिमातनुतः। तत्रापि न केवलमात्मज्ञानमुपदिशन्तीनामुपनिषदां श्रवणेनैवात्मलाभः किन्तु गुरु-वेदान्तवाक्येषु श्रद्धया तदुपदेश-श्रवणपूर्वकं तत्रैव शास्त्रचरमलक्ष्यतत्त्वप्रतिष्ठाप्य मनननिदिध्यासनाभ्यां तत्सिद्धिरिति न विस्मर्तव्यम्। प्रायः परिदृश्यते यदत्र लोका एकेन कर्णेन श्रुत्वाऽपरेण निःसारयन्ति। विश्वासश्रद्धास्तिक्यबुद्धेरभावात् तेषां श्रवणमप्यश्रवणतामाश्रयति।

"सत्वानुरूपा सर्वस्य श्रद्धा भवति भारत।
श्रद्धामयोऽयं पुरुषो यो यच्छ्रद्धः स एव सः॥"
(गीता)

ननु बहवो वेदान्तं शृण्वन्ति, तत्त्वमस्यादिवाक्यञ्च विचारयन्ति, मनन-मप्याचरन्ति, परन्तु नोदेति तेषान्तत्त्वज्ञानम्। बहूनाञ्च वेदान्तमशृण्वतां तत्त्व-मसीत्यादिवाक्यमजानतामप्युदेति तत्त्वज्ञानम्। निदर्शनमत्र कपिलवामदेवादयो-जन्मसिद्धाः। एवञ्च श्रवणस्य फलं कार्यं वा तत्त्वज्ञानमिति कथं सिध्यतीति शङ्कायाः समाधिः—पूर्वजन्मार्जितकर्मवेगेन कायिक-मलाभ्यन्तरिकविक्षेपाभ्यां बुद्धिरावृता तिष्ठति येन आत्मज्ञानमङ्कुरितमपि तिरोहितमेवावतिष्ठते, न बहिरा-विर्भवति। एतेन तस्य कारणस्याभावो न विज्ञायते यथाग्निसंयोगे विद्यमानापि दाहिका-शक्ति र्मणिमन्त्रौषधिभिस्तिरस्क्रियते, किन्तु-सा शक्तिः सर्वदैव तत्राग्निसंयोगे लीना तिष्ठत्येव। एवमेव उभयोर्मलविक्षेपयोः प्रभावतो विलीन-मात्मज्ञानं जन्मान्तरश्रवणफलरूपमवरुद्धं तिष्ठति प्रतिबन्धकापगमे च पुनः स्फुरितम्भवति। अपरञ्च वामदेवादिमहर्षीणां जन्मान्तरजं श्रवणफलं तिरोहितं जन्मनैव सहोद्भूतमिति। अतः श्रवणमात्मज्ञानस्य प्रधानं कारणं मनननिदिध्यासने च परं साहाय्यमाचरत इति सिद्धम्।

एवं तत्त्वमस्यादि-वाक्यानां गुरुमुखतः श्रवणेनापि यस्य पूर्वकथित-

कारणतोऽश्रद्धाऽसम्भवोदयो भवति तस्य मननेन तन्निरासः ततश्चात्मज्ञान-मार्गे श्रद्धयाग्रेसरस्यापि तस्य "अहमेव ब्रह्म" इति ज्ञानं कथमपि बाध्यमानमपि निदिध्यासनतो दूरनिरस्तबाधमुदेत्येवेति श्रवणमनननिदिध्यासनानि समुदितानि क्रमेणात्मज्ञाने हेतुः—

"श्रोतव्यः श्रुतिवाक्येभ्यो मन्तव्यश्चोपपत्तिभिः ।
मत्वा च सततं ध्येय एते दर्शन-हेतवः ॥"

एषाम् त्रयाणां प्राधान्ये पुनराचार्य्याणां मतभेदो दृश्यते—केचन मनन-साहाय्येन श्रवणस्य प्राधान्यमामनन्ति, अपरे मननस्यैव प्राबल्यमङ्गीकुर्वन्ति, इतरे पुनः निदिध्यासनमेव सर्वाभ्यर्हितमिच्छन्ति । वस्तुतो नास्त्यत्र किमपि वैषम्यम् श्रवणमनननिदिध्यासनानां क्रमशः स्थूलसूक्ष्मकारण-शरीरैः सह सम्बन्धात् ।

पूर्वजन्मार्जित सुकृतैः शुद्धं निर्मलं स्थूलं शरीरम् उत्तमोऽधिकारी प्राप्नोति । तत्र च वेदान्तानां श्रवणमात्रेण पूर्णफलोपलब्ध्या मनसो विक्षेपस्य बुद्धेरावरणस्य चाशेषापहृत्या तयोरपि चारितार्थ्यमक्षुण्णमेवासादयति । एवं श्रवणं ब्रह्म-स्वोपलब्धे मार्गतया तयोश्च कारणरूपतयाऽभ्यर्हितम्भवति । अत एव श्रवणाधिकारस्याभ्यर्हितत्वेन वैलक्षण्यात् साधन-चतुष्टयसम्पन्नानामेवाधिकारिणां वेदान्त-श्रवणेऽधिकारः ।

आत्मज्ञानञ्च ब्रह्मात्मनोरद्वैतभावस्यापरोक्षज्ञानमेव निगद्यते । मरुमरी-चिकायां जलभ्रान्तिवद्रज्जौ चोरगप्रतीतिवद् अज्ञानतो ब्रह्मणि दृश्यप्रतीति-र्जायते । विच्छिन्नेऽज्ञाने तज्जन्यभ्रान्तौ च विलीनायाम् एवमध्यासनिरासे दृश्यं मिथ्या ब्रह्मैव सत्यमिति धीरुदेति । ततश्च योऽयमहमस्मीत्यहं-भावः सृष्टि-कारणं सन् त्रिपुटीयुतं तटस्थज्ञानमुद्भावयद्द्वैतभावं विषयीकरोतिस्म । स एवेदानीं श्रवणमनननिदिध्यासनैरहं ब्रह्मास्मि, अहं शुद्धमुक्तोऽस्मीति ब्रह्मतामात्मनो विषयीकरोति । क्रमशश्च तद्भावमप्यात्मज्ञानेन विलाप्य सर्वेभ्योऽपि दृश्य-प्रपञ्चेभ्यो विनिर्गत्य स्वस्वरूपे तिष्ठति । इमामेवावस्थां निःश्रेयसमिति, मुक्ति-रिति, कैवल्यमिति, तत्त्वज्ञानाप्तिरिति, आत्मज्ञानोपलब्धिरिति जीवतत्त्वनाशः, शिवत्वप्राप्तिः, निर्विकल्पक-समाधिलाभः, परभक्तिसमाप्तिः, तुरीयत्वाधिगमः, ब्रह्मसद्भावोद्गम इत्यादि-शब्दैः शास्त्रकारा अभिदधति । ब्रह्ममीमांसा शास्त्रञ्च लक्ष्यमिदं अद्वैतसिद्धेः साहाय्यद्वारा विशेषतोऽधिकुरुते ।

अद्वैतवादिनो मायावादिनो वा आचार्य्या एकमद्वितीयं ब्रह्मैवा ऽनादि अनन्तं नित्यं तत्त्वं स्वीकुर्वन्ति । तच्छक्तिं मायान्तु अनादिं सान्तां ब्रुवते ।

तस्या एवाविद्या विद्येति भेदद्वयं ब्रुवन्ति। मायोपाधिवशत एवैकस्मिन्नद्वितीयस्मिन्नपि ब्रह्मणि द्वैतभावस्तस्यानन्तता दृग्गोचरयत इत्यपि ते व्याहरन्ति अविद्योपहितचैतन्यो जीवो विद्योपहितचैतन्यश्चेश्वरः। (योहि अविद्या-वशगो भूत्वाऽऽत्मानं विस्मृत्य परिच्छिन्नोऽज्ञानी जातः स जीवो यश्च विद्यासंवितस्तां वशीकृत्यात्मानं सर्वनियन्तारं मत्वा जगच्चक्रं चालयति स ईश्वर इत्यर्थः) उपाधिरहितः स्वस्वरूपमधिगत एव जीवो ब्रह्मभावाश्रितो मुक्त इत्युच्यते। पूर्वजन्मार्जितपुण्यबलेनैवोन्नताधिकारिभिः साधनचतुष्टयसम्पत्त्या मुक्तिमार्गाधिकारो लभ्यते। ततश्च गुरुकृपया श्रवणमनननिदिध्यासनाधिकारी स भवति। विद्याविद्याप्रभावादेव प्रकाशान्धकारवत् चैतन्य-जडत्व-ज्ञानाज्ञानयोरुपलब्धिर्भवति। अन्धकारो यथा प्रकाशस्य सहधर्मिणी शक्तिरेवं प्रकाशोऽप्यन्धकारस्य सहायिका शक्तिः। यतो हि यथा प्रकाशेन विनान्धकारस्य एवमन्धकारेण विना प्रकाशस्य महिमा नाधिरोहति चेतांसि, तथैव ज्ञानाज्ञानयोरपि परस्परं सम्बन्धः। यतो हि इमे अपि विद्याऽविद्ये इव परस्परं पार्श्वचारिणी स्तः यद्विषये पूर्वमेव बह्वभिहितमस्ति। ब्रह्माश्रितेनाज्ञानेन ब्रह्मण्येव जगद्विवर्तमानमवलोक्यतेऽत एव ब्रह्म अज्ञानश्च सृष्टिप्रपञ्चेऽन्योन्याश्रितमेवावतिष्ठते। तत्स्वरूपञ्च पञ्चधा परिदृश्यते। तथा हि—

"अस्ति, भाति, प्रियं रूपं नाम चेत्यंश-पञ्चकम्।
पूर्वं त्रयं ब्रह्मरूपम् मायारूपं ततो द्वयम्॥" इति।

'अस्ति' इति सत्ता प्रत्ययः, 'भाति' इति प्रकाश परामर्शः, 'प्रियं' इति सौन्दर्यज्ञानं, 'रूपं,' इति वस्तुस्वरूपनिर्देशः, 'नाम' इति संज्ञोपपत्तिः। तत्र ज्ञानमहिम्नैव उत्तरार्धार्थस्यापरोक्षत्वं जायतेऽयतो—

"ब्रह्म सत्यं जगन्मिथ्या जीवो ब्रह्मैव नापरः"

इति वक्तुम्प्रभवति पुमान्। वेदान्तश्रवणेन 'मुक्तोऽहमिति धीरुदेति तन्मननेन च ब्रह्मरूपोऽहमिति निदिध्यासनेन च 'अहं ब्रह्मास्मीति' अहम्वृत्ते ब्रह्माकारतयाऽद्वैतस्थिति र्जायते। सृष्टौ विचारणीयमिदमेवास्ति यत् यदेकः पदार्थः पदार्थान्तरेण परिणमति तदा विकारः कथ्यते यथा दुग्धस्य दधि, यदा चैकमेव वस्तु वस्त्वन्तराकारेणान्यथा विवर्तते स विवर्तः यथा रज्जावुरगधीरिति।

"सतत्त्वतोऽन्यथा प्रथा विकार इत्युदीरितः।
अतत्त्वतोऽन्यथा प्रथा विवर्त इत्युदीरितः"

पूर्वाचार्याणामप्याभाणकमस्ति। वस्तुतो दृश्यप्रपञ्चमिन्द्रजालवद् तात्त्विकं

सत्ताशून्यमेवेति। यथा एक एव विभुराकाशो मठोपाधितो मठाकाशो घटोपाधितो घटाकाश इति निगद्यते। यथा सर्वेषाञ्चोपाधीनां विलये एक एवाकाशोऽवशिष्यते। एवमेवैकस्मिन् अद्वितीये ब्रह्मणि अविद्योपाधितः पिण्डब्रह्माण्डयोर्भानमज्ञानजनितभ्रमेण भासते। आत्मज्ञानेन च नश्यति। यथा समुद्रे वायुना अनन्तास्तरङ्गा उत्पद्यन्ते समुद्रतरङ्गयोश्च नाणुरपि भेदः प्रत्युत तरङ्गाः समुद्रे प्रतीयमाना वायुविनाशे पुनस्तत्रैव विलीयन्ते। तथैव मायोपाधित एकस्मिन् ब्रह्मणि ब्रह्माण्ड-पिण्डानन्त्यभेदः दृश्यन्ते। एकस्मिन्नद्वितीयेऽखण्डे, चिन्मये, विभौ अनाद्यनन्ते ब्रह्मणि अविद्या-प्रभावेणचिज्जड़-ग्रन्थि-रूपेण मिथ्याध्यासेन द्रष्टृदृश्ययो र्भ्रमात्मकः सम्बन्धो भासते।

वेदान्तानाञ्च श्रवणमननिदिध्यासने विद्याप्रभावेणात्मज्ञानिनि महापुरुषे महामायायाः सर्वथा स्वतन्त्रसत्ताऽपि विलीयत एव। यदाहि—मायाब्रह्मणो द्वैतसत्ताप्रतीतिर्बाधिता भवति तदैव चिज्जडयोर्ग्रन्थिविप्रमोको भवति। तदानीञ्च माया सान्ता सती व्युपरमति इदमेव मायायाः सान्तत्वम्। इदमेवाद्वैततत्त्वस्य तत्त्वम्। अधःश्रेणिगानि षडपि दर्शनानि क्रमशः स्वस्वाधिकारानुसारम् इदमेवब्रह्मज्ञानपूर्णमद्वैततत्त्वम् सप्तमभूमिप्रवणं तुरीयं ब्रह्ममीमांसाज्ञानं प्रतिपादयितुमुन्मुखानि सन्ति। तेषां परस्पर—प्रतिपाद्यविषयाणां समन्वयो यथाकथञ्चित्पूर्वमेव निदर्शितम्। अविद्याप्रभावनिरासाय भ्रामिकाध्यासनिरासपूर्वकं अज्ञानान्धकारता ज्ञानलोकपूर्ण-स्वस्वरूपप्राप्तये सप्तमभूमि-स्थितं ब्रह्ममीमांसा-शास्त्रमेव वस्तुतो वेदान्तनाम्नाभिधातुं योग्यमस्ति। सर्वविधबन्धनिदानभूतया अघटनघटनापटीयस्याः पञ्चात्मकक्लेशमूलाया अविद्यायाः प्रभावमुन्मूलयितुमेकमद्वैतञ्च ज्ञानं प्रकाशयितुं वेदान्तमेवैकं शास्त्रं कल्पवृक्षायते। अतएव एकस्याद्वितीयस्यात्मतत्त्वस्य प्राप्तये—परमकारुणिकं श्रीमन्महर्षिप्रवरं—

सर्वे भवन्तु सुखिनः सर्वे सन्तु निरामयाः
सर्वे भद्राणि पश्यन्तु मा कश्चिद्दुःखभाग्भवेत्।

इति प्रसिद्धप्रघोषमष्टादशपुराणप्रणेतारं बादरायणं व्यासं नमस्कृत्य तत्प्रणीतस्य वेदान्तशास्त्रस्यानुशीलन-लब्धये समन्वयभाष्यमिदमधुना प्रस्तूयते।

# वेदान्त-दर्शनम् ।

## प्रथमाध्यायस्य प्रथमः पादः ।

### अथातो ब्रह्मजिज्ञासा ॥१॥

अथ शब्दोऽयं भावत्रय-बोधकः सिद्धत्वात् सर्वेषां सिद्धशब्दानां भावत्रय-बोधकत्वमित्याम्नायः । "मङ्गलादीनि मङ्गलमध्यानि मङ्गलान्तानि शास्त्राणि प्रथन्ते" इति पतञ्जल्यनुशासनात् मङ्गलमुखस्य कार्य्यारम्भस्य विहितत्वात् सर्ववादिसिद्धत्वात् परम्परागत-शिष्टाचारविषयत्वाच्च मङ्गलात्मकेन अथ-शब्देनैव सूत्रारम्भः । ब्रह्मानुध्यानपुरःसरं कार्य्यारम्भ एव मङ्गलम् तस्य फलमपि ब्रह्मवदनन्तमेव । अथ च 'अथ' शब्दस्य मन्त्रवत्फलदत्वाद् ब्रह्मार्पकत्वमप्यक्षुण्णमेव ।

'अथ' शब्दस्य द्वितीयोऽर्थ आनन्तर्य्यमस्ति तदनुसारतो वेदस्य कर्मोपासनाकाण्डात्मकयोरुभयोरपि मीमांसयोरनुशीलनानन्तरम् ब्रह्ममीमांसारूपस्य वेदान्तदर्शनस्य तुरीयकाण्डात्मकमीमांसादर्शनस्वरूपत्वाज् ज्ञानस्वरूपस्य च ब्रह्मणः प्रतिपादकत्वात्सर्वाभ्यर्हितत्वाच्च तस्यैव जिज्ञासोदेति, इति द्वितीयो भावः । वेदान्तदर्शनस्य स्वनामानुरूपं सप्तमज्ञानभूमिचरमस्वरूपत्वात् गुरुमुखश्रवणबोधकत्वार्थलाभश्चेति तृतीयोऽयमथशब्दार्थः । साधनचतुष्टयसम्पन्नो जिज्ञासुरेवाऽधिकारी, इति विषये भगवन्तः शङ्कराचार्य्याः—" तस्मात् किमपि वक्तव्यम् यदनन्तरं ब्रह्मजिज्ञासोपदिश्यत इति । उच्यते नि[1]त्यानित्य-वस्तु-विवेकः इहा[2]मुत्रार्थफल भोगविरागः, शम[3]दमादिसाधनसम्पत् मु[4]मुक्षुत्वञ्च, तेषु हि सत्सु प्रागपि धर्म-जिज्ञासाया उद्र्ध्वञ्च शक्यते ब्रह्म जिज्ञासितुं ज्ञातुञ्च न विपर्य्यये ।

तस्मादथ-शब्देन यथोक्त-साधनसम्पत्त्यानन्तर्य्यमुपदिश्यते महामुनिना व्यासदेवेनेत्यवश्यमेवाङ्गीकरणीयम् । एवं प्रथमं मंगल-सूचकं, द्वितीयं वेदस्य

---

( १ ) आत्मातिरिक्तं सर्वं कार्य्यत्वाद् घटवदनित्यम् आत्मैवैको नित्यस्तद्विरुद्धत्वादिति निश्चयः ।

( २ ) वर्तमानदेहस्थितिहेत्वनिषिद्धान्नाद्यतिरिक्तार्थेच्छाविरुद्धा दृढा चेतोवृत्तिः ।

( ३ ) शमदमोपरतितितिक्षासमाधानश्रद्धाश्चेति षट् तत्र लौकिकव्यापारात् मनस उपरमः शमः, बाह्यकरणानामुपरमो दमः, सत्त्वशुद्धौ नित्यानामपि विधित एव त्याग उपरतिः, शीतोष्णसुखदुःखादिद्वन्द्व-सहिष्णुत्वं तितिक्षा, गुरुवेदान्तवाक्येषु विश्वासः श्रद्धा, चित्तैकाग्रता समाधिः, आत्मनोऽज्ञानात् कार्य्यसंबन्धो बन्धः, तद्विच्छेदो मोक्षः, तदिच्छावत्त्वम् मुमुक्षुत्वम् इति ।

# सूर्योदयः ।

दशमे वर्षे } चैत्रस्य पूर्णिमा सं० १९८१, { दशम-संख्या

## सम्पादकीया अभिप्रायाः ।

——:०:——

### केयं सभ्यता साम्प्रतिकी ।

—०:※:०—

अथात्तु ह्यार्य्यपूर्वजा एकान्ते नदीतीरे, जनशून्य-पर्वते, स्थले वा स्वच्छ-वायुजलयुते, सुरम्ये वने वा नीवार-शाकमूल-फलाद्यशना निर्मल-चेतसः । तेषां साम्प्रतं यथा पयःफेनतुल्य-पर्य्यङ्कशयनं नाविद्यत । परं तेषां विचारा एतावन्त उच्चतमा आसन्, यै विचारैः सूक्ष्मातिसूक्ष्मो गहनातिगहनोऽपि विषयः साधारणबालक्रीडनमिवासीत् विषयीकृतः । प्रागार्य्यसभ्याः शान्ता दान्ता उदाराः स्वमनांसि वशीकृत्य ये यथा आसन् ते तथा सभ्यतमकोटौ स्थानं लेभिरे । अधुना शान्तिप्रिया दमनशीलाः सज्जना मन्दा मन्दमतयो गण्यन्ते, मनसो वशीकरणं तु मूढानां कृत्यं इति जल्पन्ति उपहसन्ति विवदन्ते च साम्प्रतिकाः ।

आधुनिकै र्मानवैः चंचलमनसः प्रोत्साहनाय लालनाय सम्बर्धनाय च विविधोपाया विरच्यन्ते । फ्रान्सदेशे तु स्त्रीणां मनोविनोदाय वस्त्राणां भूषणाञ्च दिवसे वारत्रयं परिवर्तनं क्रियते, आचरणेनानेन तु भारतेऽपीदानीं साम्प्रतिक-सभ्यगृहे पदार्पणं कृतम् इति यत्र कुत्रापि तावदेव दृश्यते । अद्यत्वे येषां वस्त्र-वेष्टनपरिवर्तनं अलंकारविपर्य्ययनं च दिवसे यावतीमधिकां संख्यामुल्लङ्घेत एवं वर्तमानाः ते मानवाः स्त्रियश्च सभ्यतमकोटौ गण्यन्ते ।

इन्द्रियाणामसंयमेन षड्विकारा वर्धन्ते । इदानीं परिवर्धनं तेषां शोभा कथ्यते । मनसोऽनिग्रहः विपदां मार्गः कथितः स एवेदानीं सभ्यतायाः शेखरीभूतो दृश्यते । पूर्वं आर्यसभ्याः सायं प्रातः परब्रह्मणि लग्ना ध्यानावस्थायामवालोकियत । अधुना च वायुगन्धीमवरुद्ध ब्रह्मचिन्तनात्मिकां सन्ध्यां परिभूय बहिर्वायुं सेवितुं भ्रममाणा अवलोक्यन्ते । तदानीं बाह्योन्नतौ सभ्यता नाविद्यत । किन्त आन्त-

रिकाध्यात्मिकोन्नतौ सभ्यानां लक्ष्यं अस्तिस्म । आर्य्याणां आध्यात्मिकोन्नतौ अन्तरायो नापतेत् भौतिकोन्नतिरपि भवेत् तथा व्यवहृतिरभिलषिता आसीत् । इदानींतना भौतिकोन्नतौ बद्धपरिकरा लक्ष्यन्ते । येनाध्यात्मिकता दैनंदिनं क्षीयते।

साम्प्रतिक-सभ्यता केवलं अर्थपरा विद्यते । द्रविण-हीनाः सकलगुण-गरीष्ठा अपि शिष्टसमाजे मूर्द्धाभिषिक्ताः सन्तोऽपि श्रद्धास्पदविरहिता लघुदृष्ट्या अवलोक्यन्ते । तथा हि आधुनिका अर्थाभिलाषुका भाषन्ते यत्—

ब्रह्महापि नरः पूज्यो यस्यास्ति विपुलं धनम् ।
शशिनः तुल्यवंशोऽपि निर्धनः परिभूयते ॥

इमामुक्तिम् सर्वथा चरितार्थयन्ति साम्प्रतं कलिमानवाः । अतो यदा हि सर्वसाधारणमानवानां चेतसि निश्चितं जातं यदधुना निर्धनाः परिभूयन्ते । द्रव्यस्य एव समादरो विद्यते । द्रव्ये एव सर्वा प्रतिष्ठा प्रतिष्ठते । यदा येन केनाप्युपायेन सताऽसता वा सभ्यतारक्षणाय द्रव्यसञ्चय एवास्माकीनं लक्ष्यमिति चेतन्ति ।

येन अस्माकीनाध्यात्मिकशक्तिरपि प्रत्यहं परिक्षीणा तनुतां गता । तदानींतना नैवंविधा आसन् । आभ्यन्तरिक-शक्ति-रक्षापूर्वकं यया विधया द्रविण-लाभो भवेत् स पन्थाः तेषां श्रेष्ठो ग्राह्यश्चाविद्यत ।

अपरं चास्या द्रव्यैषणाया हेतुभूतमिदं कथ्येत चेन्नानुचितम्भविष्यति । यत् पूर्वं भारतवर्षोऽयम् वर्तमानकालादस्मादधिको द्रव्यपूर्णः शस्यसम्पन्न आसीत् । अत्र रघोः विश्वजिदध्वरे सुवर्णपात्रादीनां वितरणं तथा साम्प्रतमपि यत्र तत्र सुवर्णमुद्राया अवलोकनं भारतस्य पूर्णवैभवं ख्याति, यत्पूर्वं सुवर्णपूर्णेयम् भारतभूमि रासीदिति ।

अधुना संसारे दरिद्रताया वृद्धि रधिका संजाता । येन जना द्रव्योपार्जने एव परिश्रान्ता व्यग्रा दृश्यन्ते । दरिद्रताया मूलं कारणं चात्र आधुनिकी सभ्यता एव प्रतिभाति । नेदृशी सभ्यता भारतीयानामनुकूला । यतो हि सभ्यताया देशीयजलवायुभ्यां सह अतिप्रबलः सम्बन्धः तिष्ठति । अस्मिन् देशे प्राकृतिकै र्नियमैः तथा तद्देशीय-जलवाय्वनुकूलं कालानुकूलं यद्भवति तदेव तस्मिन् देशे सभ्यतायोग्यं जायते । यथास्माकं देशः कृषिप्रधानः । अत्र कृष्यनुकूलायां पृथिव्यां शस्यसम्पन्नता।यया स्यात् सा एव सभ्यताया चरमा सीमा स्यादिति निर्विवादोऽयं पन्थाः ।

अस्माकीनाः पूर्वजा देशीया प्रकृतिं परित्यक्तुं नेच्छन्ति स्म । उत प्रकृतौ विकृतिं नापतेत् सरलरीत्या यथायथं कार्यं च सिद्ध्येत् तथा कर्तुं प्रभवन्तिस्म।

आधुनिकी सभ्यता कस्यचिदपि कार्यस्य नानुकूला विद्यते। किन्तु प्रतिदिनं अनया अस्माकीनो ह्रास एव पद्यते। जनाः पशुप्राया जायन्ते। भोगाकुला विलासप्रिया मानवा वीथ्यां घंटापथे च दम्पती वा, केवलं वनिता एवैकाकी मनोविनोदाय क्रीडनकादीनवलोकितुं विचरन्ति। किं बहुना यथा शशश्रृगालकाकाः मिथुनं भ्रमन्तः सततमवलोक्यन्ते, तथैवेमेऽपि व्यवहरन्तो दृश्यन्ते।

अधुनेयं प्रक्रिया सभ्यतायाश्चरमावस्था गीयते। हन्त! भो! गता भारतीया सभ्यता। कदाचित्कोऽपि एवं कालोऽविद्यत यत् "कामाप वनितां बहिरागतां दृष्ट्वा शोचन्ति स्म जनाः। तथा हि रामायणे।

या न शक्या पुरा द्रष्टुं देवैराकाशगैरपि॥
तामद्य सीतां पश्यन्ति राजमार्गगता जनाः।

इदानीं स्वदेशाननुकूलमाचरन्तं जनं दर्शं दर्शं दूयते हृदयं खिद्यते चेतः। पश्यत यद्येवं विलासप्रिया भविष्यन्ति चेत् भारतीयाः प्रायशः कृषिप्रधाना बहवो द्रव्यहीना सन्तः विनंङ्क्ष्यन्ति, इति संभाव्यते। अतो विलासितापूर्णामिमां सभ्यतां परिहृत्य स्वपूर्वजानां पद्धतिमनुसृत्य गमनाय कथयतामनुगमनं श्रेयो विद्यते।

अधोऽधः पश्यतः कस्य महिमा नोपचीयते।
उपर्युपरि पश्यन्तः सर्व एव दरिद्रति॥

अधिकबलवताम् अनुकरणेन सर्वे दरिद्रा भवन्ति। अतः किं कर्तव्यमिति सहृदयैः संस्कृतज्ञैः स्वमतिं सूर्योदये प्रकाश्य तदनुरूपमेव व्यवहारमाचरितुं यतेतामिमिति।

धर्मस्य भारतीयस्य पौरुषस्य धनस्य च।
नूनं विनाशिका ह्येषा सभ्यता समुपागता॥ १॥

× × × × ×

## संस्कृतपरीक्षाणामनैक्यम्।

सम्प्रति भारतेऽस्मिन् प्रधानतः षट् संस्कृत-परीक्षाप्रकाराः प्रचलन्ति। लवपुरीय-संयुक्त-प्रान्तीय-विहारप्रान्तीय-वङ्गप्रान्तीय-मयसुरप्रान्तीय-जयपुरप्रान्तीयाश्चेति। तत्र मयसुरप्रान्त-जयपुर-प्रान्तीय-परीक्षाप्रकारं विहाय अपरप्रान्तीयानां सर्वासामपि परीक्षाणां प्रकारनियामकास्तत्प्रान्तीया भारतशासनाधिकारिण एव विद्यन्ते। परन्तु सर्वास्वपि परीक्षासु एतादृशं वैषम्यं विद्यते। येन एकत्र प्रान्ते प्रथमां परीक्षामुत्तीर्णश्छात्रोऽन्यत्र प्रान्ते मध्यमा

प्रभृति परीक्षासु ग्रहीतुमेव न शक्यते। अनेन संस्कृतविद्याप्रचारेऽन्तरायस्तु आयात्येव। तेनैव महाकिञ्चनानां संस्कृतच्छात्राणामुपरि कीदृग् निर्दयवज्रप्रहारो भवतीति त एव जानन्ति। ये किल विहारप्रान्तेऽध्ययनं कृत्वा संयोगवशात् विषयान्तरमध्येतुं काशीमागच्छन्ति चेत् तेषामत्र सतीष्वपि शतशः संस्कृत-पाठशालासु कुत्रापि प्रवेशो न भवति। यतो हि राजकीय-परीक्षा-सञ्चालकाः पाठशालाधिकारिणः, पाठशालासु प्रवेष्टुकामान् विहारप्रान्तीयपरीक्षोत्तीर्णान् विद्यार्थिनः कथयन्ति, भवन्तमहं कस्यां परीक्षायां प्रवेशयामि? यदि भवान् विहार प्रान्तीय-परीक्षाया आचार्य्यपरीक्षामप्युत्तीर्णोऽस्ति तथापि काशिकराजकीयपरीक्षायां तु भवतः प्रवेशः प्रथमायामेव भविष्यति। सम्पूर्णमध्यमायान्तु वयं कञ्चनापि छात्रं न प्रहिणुमो यतस्तत्रैकदा समुत्तरणं दुस्तरमेव। अतः तत्र भवतः प्रवेशोऽशक्य एव। यदि भवान् इह काश्यां पठितुमिच्छति तदा प्रथमां परीक्षां दत्वा कस्मिंश्चिदपि विषये खण्डशो मध्यमां ददातु। तदाऽहं भवन्तं स्वपाठशालायां ग्रहीष्यामि, नो चेत् यथागतं गच्छतु, काश्यां भवतः पठनमसम्भवीति। इत्थं हि विहारप्रान्तीयानां छात्राणामत्र दुर्दशा भवति, ये हि विहारप्रान्तीयाचार्य्यपरीक्षामपि दत्वेह काश्यां विषयान्तरमध्येतुमायान्ति।

एवमेव येऽपि काश्यां कस्याञ्चन पाठशालायामधीत्य यदि दैववशात् केनापि निमित्तेन विहारप्रान्ते गच्छन्ति। तेषामध्ययनं निरुद्धमेव भवति। यथा हि कोऽपि विहारप्रान्ताभिजनो विद्यार्थी काश्यामधीतेऽत्र च तेन मध्यमायाः खण्डत्रयं दत्तं विद्यते। दैववशात् तस्य पितुर्निधनं जातश्चेत् सस्वगृहे स्थित्वा तत्रैव विहारप्रान्तीयपाठशालासु अध्येतुमिच्छति चेत्तस्य नक्वापि पाठशालायां प्रवेशः। तत्र स पुनः प्रथमां परीक्षां दत्वा क्रमशः मध्यमां दास्यति चेत्तदा तु किञ्चिदध्येतुमर्हति, नो चेत् अध्ययनं त्यक्त्वा विषण्णवदनो भूत्वा गृहे मक्षिकामारं तिष्ठतु। इह काश्यां वर्षत्रयं वर्षचतुष्टयं वा स्थित्वा यत् किमपि पठितं तत्सर्वमपि व्यर्थमेव तस्य जातम्।

ईदृशी हि दुरवस्था सम्प्रति संस्कृतच्छात्राणां विद्यते। कोऽपि तेषां दुर्दशायाः श्रोतापि नास्ति। ते हि वराका अज्ञात-देशकालाः किमपि कर्तुं नार्हन्ति। सर्वथा अनुपयुक्ताया अकिञ्चित्कराया अपि राजकीय-परीक्षाया मोहं ते त्यजन्त्यपि नहि। तस्याः परिष्कारार्थमपि न यतन्ते। केवलं तैलकारवृषभवत् पिनद्धाक्षाः राजकीयपरीक्षायन्त्रसञ्चालकैर्निर्मितां परीक्षाप्रणालीं प्रन्थाक्षां घोषणया प्रतिवर्षं प्रवाहयन्ति।

अत्र वयं पृच्छामो यदि विहारप्रान्तीयपरीक्षाणां काशिकराजकीय-परीक्षाणां परस्परं सामञ्जस्यं स्याच्चेत् किं राजकीयपरीक्षाधिकारिणां तेषां व्ययग स्यात्। तासां परीक्षाणां परस्परमैक्येन संस्कृताध्यायिनान्तु सौकर्य्यं स्यादेव तेनैव सह संस्कृतभाषाध्ययनप्रचारेऽपि सारल्यं स्यादतो वयमिह सर्वथा संस्कृतभाषाभ्युदयार्थं यतमानं वर्तमानं काशिकराजकीय-परीक्षाप्रबन्धक-(रजिष्ट्रार) महोदयं तथा विहारसंस्कृत-परीक्षासमिति-कार्य्य-सम्पादकञ्च निवेदयामो यदस्य दोषस्य दूरीकरणाय शीघ्रमेव श्रीमन्तौ यतेतां श्रीमतोरेवोद्योगेनेयं महती त्रुटि र्व्यपगता भविष्यति। अनेन परीक्षासु परस्परमनैक्याऽधायकेन दोषेण संस्कृतच्छात्राणां महती हानिर्भवति। याऽत्र मनागेव निर्दिष्टा विस्तरेण निर्देशस्तु समयान्तरे भवितुमर्हति।

× × × × ×

## श्रीमतो महाराजाधिराज-दरभंगाधिपतेः शुभागमनम्।

विगत-चैत्रशुक्ल चतुर्दश्यां बुधे (ता० १७।४।२५ ई०) सायं षड्वादने (बनारसकैण्ट स्टेशन) वाराणसीस्थप्रधानधूमानःस्थाने महाराजाधिराज-मिथिलाधिपतेः श्रीकामेश्वरसिंह के० सी० आई० ई०...महोदयस्य इन्द्रप्रस्थराजकीयसभाकार्य्यं समाप्य काशीसमागमनमभूत्। तत्र श्रीभारतधर्ममहामण्डल-प्रतिनिधयः पूर्वतः समुपस्थाय महाराजानां पुष्पमालादिभिः स्वागतं कृतवन्तः। काशीस्था बहवो विद्वांसो महाराजस्य सम्बन्धिनश्च बहवस्तत्रोपस्थिता आसन्। इह काश्यां दिनत्रयं स्थित्वा प्रतिष्ठाप्यमानस्य श्रीतारामन्दिरस्य महोत्सवे सम्मिलितो भूत्वा स्वदेशं मिथिलादेशं प्रस्थितः। श्रीमन्महाराजस्य धार्मिककृत्यसम्पादनानुरागः प्रशस्यो विद्यते। वयं सर्वथा प्रसीदामो यदयं महाराजाधिराजः स्वपूर्वजानां धर्मरक्षा गौरवस्य यथापूर्वमेव पालने तत्परो विद्यत इति।

× × × × ×

## अमरभारती।

संस्कृतपत्रिकेयं गवर्न्मेण्ट संस्कृतकालिजमुखपत्रिकारूपेण प्रतिमासं निःसरति। संरक्षक स्थाने श्रीमतां माध्वाचार्य्याणां श्रीसत्यध्यानतीर्थस्वामिमहोदयानां नाम विद्यते) सञ्चालकाश्च श्रीमन्तो महामहोपाध्यायाः श्रीगोपीनाथकविराज एम्० ए० काशिक-राजकीय-संस्कृतपाठशालाप्रधानाध्यक्षाः सन्ति। सम्पादकाश्च श्रीमन्तः पण्डितशिरोमणि वरखेडकर-नरसिंहाचार्य्याः, श्रीमन्तः पं० श्रीगोपालशास्त्रिणो नेनेमहोदयाः, श्रीमन्तः साहित्यवारिधिपण्डित नारायण-

शास्त्रिमृस्ते महोदयाः सन्ति। पत्रिकेयं राजकीयपक्षाश्रितानां संस्कृताभ्युदयानुरागं समर्थयन्ती संस्कृतसाहित्यस्याभ्युदयं विधातुं सन्नद्धा कार्यक्षेत्रेऽवतीर्णेति प्रबलेयम स्माकमाशालताऽवश्यं सम्पादकत्रय्या सफलिता भविष्यति । लेखाश्चास्मिन् विदुषां पाण्डित्यपूर्णा विद्वद्रम्या अवलोक्यन्ते । सहृदयधुरीणानां मनोविनोदनाय समस्यापूर्तयोऽपि समीचीना दृश्यन्ते । चित्राण्यपि मध्ये मध्ये चेतोहराणि सन्ति मुद्रणकर्गजसौष्ठवमपि साधु विद्यते । प्रकारोऽपि 'डिमाई' इत्याख्योऽस्ति षण्णवतिपृष्ठात्मकं पत्रजातं च निवेशितं विद्यते । सर्वथा बाह्याभ्यन्तराकारप्रकारविषयगाम्भीर्यादिविभूषितेयं पत्रिका स्वात्मनो राजपत्रिकात्वं स्फुटमेव प्रत्याययति । किम्बहुना पत्रिकायाः सर्वथा सुसज्जितं मनोज्ञं वपुर्विदुषां मन आवर्जयत्येव । इत्येवं सर्वमनोज्ञाया अस्यास्याः पत्रिकाया मूल्यं वार्षिकं रूप्यकत्रयं विद्यते । विद्यार्थिभ्यः पुस्तकालयेभ्यश्च रूप्यकद्वयम् । प्राप्तिस्थानम्—

अमरभारती कार्यालय ३६ घासीटोला बनारस सिटी । इदानीं स्थानाभावात् केवलं पत्रिकायाः परिचयमेव दत्वा विरम्यते । कदाचिदग्रे सति समये विशेषतो गुणदोष-विवेचनं विधास्यते ।

× × × × ×

## भ्रमसंशोधनम् ।

रोलनम्बर—३ श्रीयुत चन्द्रशेखरचतुर्वेदी—

संस्कृत विश्वविद्यालयस्य साहित्यशास्त्रि-परीक्षायां द्वितीयश्रेण्यामुत्तीर्णः । अत्र धार्मिक-परीक्षाया विशिष्टता विद्यते।

अग्रिमवर्षीया परीक्षा-नियमावली यन्त्रालये प्रकाश्यमाना विद्यते । प्रकाशिता शीघ्रमेव सर्वकेन्द्रेषु प्रहिता स्यादिति ।

मन्त्री—
परीक्षाविभाग,
संस्कृतविश्वविद्यालय, महामण्डल भवन ।

× × × ×

## धर्मप्रचारः ।

श्रीभारतधर्ममहामण्डलस्य महामहोपदेशकः साहित्यनिधिः शास्त्राचार्यः काव्यतीर्थो वेदरत्नम् श्रीमान् पं० गङ्गाविष्णुशास्त्री मार्चमासे एप्रिलमासे निम्नलिखित-स्थानेषु धार्मिक व्याख्यानानि विहितवान् । सर्वत्रैव शास्त्रिमहोदयस्य मार्मिकं सामयिकं प्रभावोत्पादकं व्याख्यानमाकर्ण्य जनता परमं प्रसादमनुभवन्ती श्रीभारतधर्ममहामण्डल सञ्चालकान् भूरि भूरि प्रशंसावाक्यैः समर्थयत् ।

२१।३।३५ तारिकायां गाजीपुरमण्डलान्तर्गते दिलदारनगरे शङ्कासमाधानावसरे शास्त्रिमहोदयेन कृतां शङ्कावलीमसमादधाना आर्यसमाजीयाः पराजिताः सभास्थानात् पलायिताः । तत्रत्या जनता शास्त्रिणो विद्वत्तां वाग्मितां मनोहारिणीं व्याख्यानशैलीञ्च विलोक्य नितान्तं विमुग्धा सहस्रशो धन्यवादान् महामण्डलाय प्रादात् ।

२६।३।३५ तारिकातो दिनत्रयं यावत् आजमगढ़मण्डलान्तर्गते अहिरौलानगरे शास्त्रिमहोदयस्य पुराण-मूर्त्तिपूजा-श्राद्धादिविषयानवलम्ब्य सातिशयं प्रभावोत्पादकं व्याख्यानत्रयमभूत् । सनातनधर्मविरोधिनोऽपि व्याख्यानतो विमुग्धा बहुशो महामण्डलकृत्य मिदं प्रशंसितवन्तः । विश्वासश्च तेषां श्राद्धे मूर्तिपूजायां च समजनि ।

७।४।३५ तारिकायां सारी—( फैजाबाद ) देवविद्यालयस्य वार्षिकोत्सवे माण्डलिकसमितेः । ( जिला बोर्ड ) शिक्षाविभागाध्यक्षस्य सभापतित्वे संस्कृतविद्याया महत्त्वमुररीकृत्य घण्टाद्वयं यावत् हृदयग्राहकं व्याख्यानमभूत् । शास्त्रिमहोदयस्यापूर्वया भाषणसरण्या समस्ता जनता चित्रलिखितेव जाता । शिक्षाध्यक्षमहाशयस्तु नितरां प्रसादमासादितवान् ।

८।४।३५ तारिकायां विन्ध्याचले भा० संस्कारसमितेर्महोत्सवे १० । ४ तारिकायां मिर्जापुरनगरे च शास्त्रिमहोदयस्याश्रुतपूर्वमेव भाषणमभूत् । यस्य प्रभावो जनतायां महद् वैलक्षण्यं विभर्त्तिस्म ।

१५।४ ३५ तारिकातो दिनत्रयपर्यन्तम् आजमगढ़मण्डलान्तर्गते रजादेपुरमठे सनातनधर्मप्रान्तीयसभाया महोत्सवे शास्त्रिणो व्याख्यानत्रयमजनि । अन्तिमं तदीयं व्याख्यानं श्राद्धविषयेऽनिर्वचनीयमेव जातम् । व्याख्यानतो जनतायां रोमाञ्चोद्गमो जातो लोचनेषु चाश्रुधारा प्रावहत् । सर्वेऽपि जना वक्तृतां भूरि भूरि प्रशंसितवन्तः । दिनद्वयं यावद् आर्यसमाजीयाः प्रतिदिनं घण्टात्रयं सनातनधर्मे विविधाः शङ्का अपि विहितवन्तः । शास्त्रिमहोदयेन शङ्कानां यानि समाधानानि विहितानि तानि निशम्य आर्यसमाजीयैरपि मुक्तकण्ठैः प्रशंसितानि । स्वयमेव तैरुक्तं च वयं समाधानतो नितान्तं सन्तुष्टाः प्रसन्नाश्च महामण्डलसञ्चालक महोदयेभ्यः असङ्ख्यान् धन्यवादान् दद्मः । अस्याः सभायाः समस्तमपि श्रेयः श्रद्धेय श्रीशिवगुलाम भारतीमहोदयस्यैवास्ते ।

× × × × ×

## 'धर्मव्यवस्था' ।

साम्प्रतिका मानवाः विशेषेण भूदेवाः स्वब्रह्मक्रियां विसृज्य बूटहैटादिषु संल्लीनाः सन्ति । संसारे महीसुरा ब्रह्मकुलोद्भवत्वं व्यर्थीकुर्वन्ति । शतेष्वेकः स्वधर्ममाचरति । अन्येऽखिला धर्मविहीनाः स्वब्रह्मकर्म उत्सृज्य शूद्रक्रिया आचरन्ति । शूद्रा आनन्देन सुरभारतीः वेदांश्चाधीयते । बहवो ब्राह्मणाःशूद्रान् शिक्षयन्त्यपि यद्यूयं वेदान् अधीध्वं । देवालये प्रविश्य देवा-

नर्चयत यानि युष्माकम् शरीरे रक्तमांसादीनि तान्येव मत्केऽपि विद्यन्ते । सर्वे स्पृश्या अस्पृश्याश्च समानभावेन सन्ति ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः । ऊरू तदस्य यद्वैश्यः पद्भ्यां शूद्रोऽजायत ॥ एतां वेदविहित वर्णव्यवस्थां तिरस्कुर्वन्ति । बहवो ब्राह्मणा ब्राह्मणस्यापि किं कर्मेति जानन्तोऽपि स्वक्रियां न विदधति. स्वहस्तेनात्मानं विनाशयन्ति । शुक्लपीतादि चन्दनराशिभूषित-भालेन किं भवति, ब्रह्मसूत्रधारणेन च किं भवति.इति तु ब्राह्मणानाम्मायाविति । ईदृशाः पण्डित पौराणिका -अन्ये च बहवो—ब्राह्मणाः,स्वोदर-पोषणाय मायाविनो भवन्ति। इत्येवं ते लोका अहर्निशं जल्पन्ति । अपरमस्पृश्यान्नमश्नन्ति । ईदृक्-धर्मक्षयत्वा-देव मेदिनीप्रचलनं भवति । ( भूचालनं भवति । ) भूचालादेव लक्षाणां जीवानां निधनं भवति । अनेनैव धर्मक्षयपापेन दैविकबाधाः समुपद्रवाश्च सम्प्राप्नुवन्ति जनान् । योगेश्वरस्य श्रीकृष्णस्य कथनमत्र भवतां समक्षे स्थापयामि । श्रीकृष्णेन गीतायां कथितम् ।

यदा यदा हि धर्मस्य ग्लानिर्भवति भारत ।
अभ्युत्थानम धर्मस्य तदात्मानं सृजाम्यहम् ॥ १ ॥
परित्राणाय साधूनां विनाशाय च दुष्कृताम् ।
धर्मसंस्थापनार्थाय सम्भवामि युगे युगे ॥ २ ॥

यदा यदा धर्महानिर्भवति तदा तदा श्रीभगवान्नारायणः भुवि जन्म संगृह्य धर्मविनाशकान् विनाशयति, धर्मरक्षकान् रक्षति ।धर्मरक्षकाणाम्, सदैव च क्षेमं भवति । धर्मस्तु तृणवलेन संसारे स्थितः । एतर्हि बहवोऽमरवागध्येतारोऽन्तेवा-सिनः सुरभारतीं पठन्तोऽपि स्वकर्मसंध्यावन्दनादिकम् , न कुर्वन्ति । केवलं-पुस्तकानि रटन्तः कालं नयन्ति । स्वधर्मं स्वप्नेऽपि न पालयन्ति । यवना एव धन्याः ये स्वधर्मपालनं प्रति हिन्दुभिरुत्तमाः सन्ति । यदि केऽपि हिन्दवः यवनदेवनिन्दां कुर्युस्तर्हि ते तत्ताडनायोद्यतन्ते । हिन्दूभिरप्येवं भवितव्यम् । यद्यदि हिन्दू समक्षे तद्देवनिन्दां कोऽपि कुर्यात् तर्हि तत्ताडनाय हिन्दुरपि समुद्यतो भवेत् । आशासे यदधुनापि स्वस्वकर्म विमृश्य ब्राह्मणादयः स्वेस्वे कर्मणि उद्यतिष्यन्ते । ब्राह्मणास्तु संध्यापूजन वेदपाठादिषु, अस्पृश्य-न्कदापि न संस्पृ-शेयुः । स्वकर्मणि निपुणेन स्थातव्यम् । यतो धर्मस्ततो जयः ।

यत्र धर्मस्तत्रावश्यमेव मङ्गलं भवति । स्वधर्मानुकूलनिवासत्वादेव पूर्वजाः महर्षयः मृतेऽपि जनैः अमराः कथ्यन्ते । आशासे यदवश्यमेव हिन्दवः धर्मज्ञाः स्वधर्मचरितार्थका भविष्यन्ति । अवश्यमेव स्वधर्मरक्षा हिन्दुभिर्विधेया । अलम् विज्ञवरेषु ।

भगवानदत्त पाण्डेयः—
पाण्डेय टोला तरहटी रीवाँ ।

---

# नैषधीय-सुधापरिचयः।

——:❀❀:——

ले०—श्री पं० परमानन्दशर्मा शास्त्री,
( ऋषिकुल, लक्ष्मणगढ़, जयपुर स्टेट )

( क्रमागतः )

पूर्वं प्रतिश्रुत्यापि यदि त्वं पितुराग्रहेण, बालाहृदयस्य लौल्येन वा नला-न्तरं युवानं मनोरथातिथिं कुर्वीथास्तर्हि भवेयुः कियत्योऽपि युवतयस्त्वया तु मद्-नुरोधेन भैम्या एव पाणिः पीडनीयो यतोऽसावपि त्वां कामयत इति नलाग्रे स्वपक्षोपोद्बलकस्य मे का गतिः स्यादतथ्यवचस इति वैदग्ध्यधुरन्धरस्य हंसस्य काल्पनिकीं शङ्कामपनुदति समर्थयति च तस्य वचः सतीकुलालङ्कारभूता वैदर्भी सूचयन्ती स्वीयां सत्यां प्रतिश्रुतिम्—

"साधु त्वया तर्कितमेतदेव स्वेनानलं यत्किल संश्रयिष्ये"

हे धूर्त्तालापपण्डित ! सत्यमेव भवतोक्तम् यदहं नलमन्तरेण "अनलम्" नलान्तरं वह्निं वरीष्य इति—नलं वा वरीष्यामि वह्निसात्करिष्यामि वा विफलं नश्वरं शरीरम्, इति मे साधुसन्धारिता सन्धेति भावो भीमभूपतेरुद्भूताया भैम्याः।

"अमृतदीधितिरेष विदर्भजे भजसि तापममुष्य किमंशुभिः।
सखि ! भवन्ति मृता यदि चन्द्रिकाः शशभृतः क्व तदा परितप्यते"

सख्यश्चतुर्थसर्गे स्मरज्वरजर्जरितदेहां दमयन्तीमकारणमेव त्वममृत-दीधितेरपि चन्द्रस्य किरणैस्तापमाप्नोषि नायं चण्डांशुरमृतांशुरयमित्येवं सान्त्वयन्ति बोधयन्ति च, परं भीरुस्वभावाः खलु बाला वियोगेऽस्थिरप्रकृतयोऽ-पीति दमयन्ती सखीः श्रावयति स्वदाहनिदानम्। हे सख्यः तापो नात्र शङ्क्यः। यतोऽस्य दीधितयो नाद्यावध्यपि मृता इति युष्माकमुक्तौ न क्षोदक्षमा याभिर्दी-धितिभिरहं तापमनुभवामि, ता इदानीमपि प्राप्तप्रकर्षा अतो मया नानुभवा-नीयस्ताप इति विरुद्धो हेतुः। तापस्तु तदानुभवनीयो भवेद्यदा चन्द्रो न द्योतेत अस्यांशवो न स्युर्दीप्ताः मृतांशुः स्याद्यदि चन्द्र इति भावः। चापल्या-द्भैम्या सखीवाक्यमितरथा ज्ञातम्। यदुक्तम्

"यदुक्तमन्यथावाक्यमन्यथान्येन योज्यते।
श्लेषेण काक्वा वा ज्ञेया सा वक्रोक्तिस्तथा द्विधा"

श्लिष्टमत्र 'अमृतदीधिति' रितिपदम् एवम् हे भैमि ! अद्य तु ते हृदयमपि वियोगवैरस्यादनलङ्कृतं वेषभूषाशून्यम् इत्याशयं प्रकटयन्ती वयस्याः सोपा-

तदर्भे "यदि हृदयादपि मे प्रियः प्रयात स्तर्हि हा हतास्मि निराश्रये" ति प्रत्यु-स्मरन्ती विरहवेदनाकदर्थितचित्ता विदर्भजा मूर्च्छति । यतो हि—

आशाबन्धः कुसुमसदृशं प्रायशोह्यङ्गनानां
सद्यः पाति प्रणयि हृदयं विप्रयोगे रुणद्धीति ।

वैलक्षण्यन्तुरीयः ।

वयं यत्राप्यस्य काव्यस्य पद्ये पदे पदांशे वा दृष्टिकोणमपि पातयाम-स्तत्रैव एवंविधा जाग्रत्यो मनोमोहिकाश्च विच्छित्तिततयो नयनपथपातिन्यो जायन्ते । यदि च ताः सर्वा अपि सङ्कलिताः स्युस्तदा पृथगेकमन्यत्काव्यं निर्मितं स्यादिति विषयादितोऽत्रैव विरम्यते ।

अत्र काव्येऽपरस्त्वेष विशेषो यदयं स्वनामधन्योऽनन्यसहृदयोऽप्रतिम-प्रतिभः कविः पुरातनकवीनामिव निजपूर्वजानां नापाहरत भावान्, शब्दान् कल्पनाश्च; आहृतंवा न तथैव विन्यास्थत् । तथा हि कविकुले करकमलमुखा चन्द्राधरबिम्बारम्भोरुत्वादयः प्रसिद्धाः सन्ति तत्रायङ्कविः श्लेषेण, व्यतिरेकेण प्रतीपेन, वक्रोक्तियुक्त्या वा वचोवञ्चनचातुर्या तादृशमाधाज्जीवनकल्पं वैचित्र्यं येनेमा अपूर्वत्वमवगाहमानाः सचेतसां चेतस्सु भूयांसमानन्दमातन्वते । नन्वत्रैकस्मिन्नेव पद्ये चरणकरमुखानां साधु समावेशितं वर्णनमाकर्णयन्तु सहृदयशिरोमणयः ।

अधारि पद्मेषु तदङ्घ्रिणा घृणा क तच्छयच्छायलवोऽपि पल्लवे ।
तदास्यदास्येऽपि गतोधिकारितां न शारदः पार्विकशर्वरीश्वरः ॥

अत्र पद्मपदेनैव 'मम पदश्चरणाद् यस्य मा शोभा तत्कथं ममाङ्घ्रिणा (तच्छोभाधायकेन) तुल्यं स्यात् नहि याचका वदान्यसादृश्यं समाश्रयितुं प्रभवन्ति, इति द्योतितं भवति । एवमेव "पल्लव" इति पदं "चरणशोभाया अपि यत्र लवो लेशस्ते करसाम्याभिलाषिणोऽपि कथङ्कारं भवितुं प्रभवन्ति इति सूचनार्थम् । "शारद" इति पदं "शरदि तत्रापि पूर्णिमायां यस्य रमणीयता यश्च धूर्तः" इति सूचयति "पार्विक" इति पदञ्च "पर्व स्यादुत्सवे ग्रन्थौ प्रस्तावे लक्षणान्तरे दर्शप्रतिपदोः सन्धौ विषुवत् प्रभृतिष्वपीति विश्वकोषानुरोधेन चरणग्रन्थिसमशोभश्चन्द्रः इति सूचयति । अतः, आपातरमणीयः स्वभावरमणी-यस्य धूर्तो विनयवतः, पादाङ्गुलिग्रन्थिसब्रह्मचारी उत्तमोत्तमाङ्गनिवसतेर्मुखस्य चन्द्रो भृत्यत्वस्याप्यधिकारी न कुतस्तरां साम्यस्येति ।

दमयन्त्याः समार्पितस्वयम्भूसमस्तसौन्दर्यसम्भारमास्यं वैदग्ध्येन कवि-र्लक्षयति—

"साक्षात्सुधांशुर्मुखमेव भैम्या दिवः स्फुटं लाक्षणिकः शशाङ्कः" ।

नितान्तकान्तिमत्त्वातिवृत्तत्वाकलङ्कत्वा ... दकत्वाधरलक्षणस्वादुतमसुधावत्त्वादिभ्यो विशेषेभ्यः प्रसिद्धात्सुधांशोरिदमस्या आस्यमेवाधिकत्वात्सुधांशुपदाभिधेयम् अभिधाव्यापारेण सन्निधिना च मुख्यः सुधांशुः, दिवः सम्बन्धी शशाङ्को लाक्षणिकत्वात् "सकलङ्कत्वात् सन्निधेरभावादानुमानिकत्वात् लक्षणाव्यापारपारवश्याच्च" न मुख्यः सुधांशुरिति स्फुटम् ।

करधरवर्णनस्य वैशिष्ट्यं विवेचयन्तु विवेकिनः ।

अस्याः करस्पर्धनगर्धनर्द्धिर्बालत्वमापत्खलु पल्लवो यः ॥
भूयोऽपि नामाधरसाम्यगर्वं कुर्वन्कथं वास्तु न स प्रबालः ॥

अत्र प्रबालसंज्ञाया अन्वर्थता समर्थिता ।

केवलमधरमाधुर्यमेव रसयन्तां रसिकाः

जानेऽतिरागादिदमेव बिम्बं बिम्बस्य च व्यक्तमितोऽधरत्वम् ॥
द्वयो विशेषावगमाक्षमाणां नाम्नि भ्रमाऽभूदनयोर्जनानाम् ॥

केवलङ्करकीर्त्तनमपि कविभिर्नोपेक्षणीयम् ॥

अजीयतावर्त्तशुभंयुनाभ्यां दोर्भ्यां मृणालं किमु कोमलाभ्याम् ॥
निःसूत्रमास्ते घनपङ्कमूर्त्तसु मूर्त्तासु नाकीर्त्तिषु तन्निमग्नम् ॥

पराजयमन्तरा किं नु किल पङ्किले गर्त्तप्रदेशे वैरस्येन वासं वहि, मृणालन्तत्र निर्व्यवस्थं यत्नयति जीवनं तद्ध्रुवमसौ पराजित एव । अपकीर्त्तीनां कविसमये कृष्णताः स्वीकृतैव ।

ऊरुमार्दवं गौरवेण वर्णयति—

रम्भापि किञ्चिद्दयति प्रकाण्डं न चात्मनः स्वेन न चैतदूरू ॥
स्वस्यैव येनोपरि सा ददाना पत्राणि जागर्त्यनयोर्भ्रमेण ॥

रम्भास्तम्भेन जायमानायामस्या ऊर्वोः समतापरीक्षायामनयोः सौन्दर्यं समालोक्य रम्भास्तम्भःस्वं विसस्मार स्वल्पस्य साम्यस्य तत्र सत्वात्, पुनः पराजयविषयं ( स्वमेव ) पत्रालम्बनेन ( शब्दमाहात्म्याद्दलविस्तारेण ) तिरस्कर्त्तुमुपचक्रमे । कविश्चरणावुपश्लोकयति महता चातुर्येण—

कृपारुणा सर्वगुणैर्जयन्त्या भैम्याः पदं श्रीः स्म विधेर्वृणीते ।
ध्रुवं स तामच्छलयद्यतः सा भृशारुणैतत्पदभाग्विभाति ॥

श्रीःस्वजयिन्या भैम्याः पदं पदवीं विधातुरभ्यर्थयते स च तां तत्पदस्थाः सर्वथानधिकारिणीम्मत्वा तत्पदत्वं ( चरणसाम्यम् ददच्छलयति । कविसम्प्र-

दायप्रथितायाः "नेत्रकमलं" मिति प्रसिद्धेरन्वर्थतां दर्शयति कविरेकोनविंशे सर्गे—

यत्पाथोजविमुद्रणप्रकरणे निर्निद्रयत्यंशुमान्—
दृष्टीः, पूर्णयति स्म यज्जलरुहामक्ष्णा सहस्रं हरिः ॥
साजात्यं सरसीरुहामपि दृशामप्यस्ति यद्वास्तवम्
यन्मूलाद्रियतेतरां कविनृभिः पद्मोपमाचक्षुषः ॥

सहचरितपरिभाषया कमलान्युन्मीलन्सूर्यो यस्माच्चक्षूंष्यपि उन्मीलयति पुराणमधिकृत्य विष्णुर्यस्माद्धेतोः केवलं कमलेनैव नेत्रकार्यं सम्पादयति, तस्मादेव हेतोः कालिदासादयः कमलेन नेत्रयोः साम्यकल्पनां कल्पन्ति ।

## विद्वदौषधम् पञ्चमः ।

अथ च वयं लवेनापि न पारयामो निश्चेतुं यदयं रसिकालिधुरिकीर्त्तनीयः कविः कुत्र शास्त्रे विहितसमधिकप्रयास आसीदिति । यतोऽयं विषयस्तदीयरचनयैव विनिर्मूलयितुं शक्यः, परन्तु तदीया रचना आत्मनि प्रतिविषयकमन्यजनमतिपथातीतं वैलक्षण्यं धारयन्त्योऽवलोक्यन्ते । अत एव सद्भूक्तमुक्तियुक्तिपटुभिः पण्डितैः "नैषधं विद्वदौषधम्" इति ।

वैयाकरणत्वमस्य द्योतयन्तः कियन्तः श्लोकाः—

परिखावलयच्छलेन या न परेषां ग्रहणस्य गोचरः ॥
फणिभाषित-भाष्यफक्किका विषमाकुण्डलनामिवापिता ॥
स्थितिशालिसमस्तवर्णतां न कथं चित्रमयी बिभर्तु या ॥
स्वरभेदमुपैतु या कथं कलितानल्पमुखारवा न वा ॥
क्रियेत चेत्साधु विभक्तिचिन्ता व्यक्तिस्तदा सा प्रथमाभिधेया ॥
या स्वौजसां साधयितुं विलासैः स्तावत्क्षमा नामपदं बहु स्यात् ॥
स्वं नैषधादेशमहो विधाय कार्यस्य हेतोरपि नानलः सन् ॥
किं स्थानिवद्भावमधत्त दुष्टं तादृक्कृतव्याकरणः पुनः सः ॥
इह किमुषसि पृच्छाशंसि किंशब्दरूप प्रतिनियमितवाचा वायसेनैष पृष्टः ॥
भण फणिभवशास्त्रे तातङः स्थानिनौकाविति विहितमुदीवाग्रुत्तरः कोकिलोऽभूत् ॥

अत्र वर्णितं प्रभातं कीदृङ्मनोहरम्—

भक्तुं प्रभु व्याकरणस्य दर्पं पदप्रयोगाध्वनि लोक एषः ॥
शशो यदस्यास्ति शशी ततोऽयमेवं मृगोऽस्यास्ति मृगीति नोक्तः ॥

इत्यादि स्वयमुन्नेयमन्यत्

( क्रमशः )

# अखिलभारतवर्षीयसंस्कृतवाद-सम्मेलनम्।

—:*:—

विदाङ्कुर्वन्तु श्रीमन्तः संस्कृतान्तेवासिनो महानुभावाः !

यदिदानीं पाश्चात्यशिक्षाप्रभावेण प्रत्यहं ह्रासपथं गच्छन्त्यपि भगवती सुरभारती सहृदयमुखकमलविनिःसृता सती प्रमोदयत्येव तद्विदां चेतांसि। तस्याः समुन्नतिः सर्वावयवेन तदुपासकैरवश्यं सम्पादनीयेति छपरामण्डलस्थाखिलभारतवर्षीय-संस्कृतवादसम्मेलनस्य तृतीयवार्षिकोत्सवः श्रीचन्द्रमहाविद्यालये मार्गशीर्षशुक्लप्रतिपदि भृगुवासरे (ता० ७-१२-३४) मध्याह्ने वेदान्तकेशरि श्रीस्वामिदर्शनानन्दमहोदयस्य सभापतित्वे महता समारोहेण समजनि। तत्र नानादेशेभ्यः, आगतानां छात्राणाम् व्याख्यानानि जातानि। ततो निरीक्षकै निरीक्षमाणे सति श्रीबालपाठशालीयस्य श्रीविश्वेश्वरझाशर्म्मणः सर्वश्रेष्ठव्याख्यानमभूत्। अतस्तस्मै सुवर्णपदकं प्रदत्तम्। श्रीदर्शनविद्यालयीयस्य श्रीधर्मनाथत्रिपाठिशर्मणः द्वितीयं समभूत्। अतस्तस्मै रजतपदकं प्रदत्तमिति। तथा चान्येभ्योऽपि यथायोग्येभ्यः पुस्तकानि प्रदत्तानि-इति।

निवेदकः—कपिलदेवपाण्डेयः।

---

# श्रीरामताण्डवम्।

—:*:—

लें०—विनायकरावभट्टः, सबपोस्टमास्टर, छत्रपुरम्।

नमामि सच्चिदानन्दं दशरथन्दन-नन्दनं!
जानकी-जीवनं रामं नित्यं साकेतवासिनं॥
दिनेशवंशसंभवं नवीन नीरदच्छविं,
नमस्कृतं पुरारिपद्मजत्रिविष्टपैः सदा।
सुहासमञ्जुलाननं लसत्सुचारुकुण्डलं,
सुलक्षणादिसंयुतं सरोजलोचनं भजे॥ १॥
सदैव मातृलालितं सलक्ष्मणं धनुर्धरं,
सुबाहुताटिकातमीचरादिनाशतत्परं।
मुनीन्द्र कौशिकक्रतोः सुरक्षणे परायणं,
सकौतुकं च गौतमस्त्रिशापहारकं प्रभुम्॥ २॥

विदेहदेशगामिनं विभक्तशम्भुकार्मुकं,
अनेकभूमिपालसंघमानमर्दनक्षमं ।
विदेहजापतिं विदेहराजभूरिसत्कृतं,
कृतज्यचापकं च भार्गवस्य गर्वहारकं ॥ ३ ॥
विमातृवाग्वशात्सलक्ष्मणं च सीतया समं,
त्रिसप्तवर्षकाननप्रवासिनं जटाधरं ।
स्वदर्शनप्रदत्तपूर्णमुन्मुनीशमण्डलं,
निजानुजं स्वपादपद्मपादुकाप्रदायिनं ॥ ४ ॥
कृतागसःशचीसुतस्य लोचनैकहारिणं,
विराधजीवितापहं सुतं दशामुक्तिदायकं ।
दशाननानुजां विधाय हीनकर्णनासिकां,
तदा खरत्रिशीर्षदूषणान्तकं नतोऽस्म्यहं ॥ ५ ॥
कृतैणछद्मवेषयामिनीचरासुनाशकं,
जटायुमोक्षकारिणं कबन्धजीवहारिणं ।
मतङ्गमुख्यशिष्यभिल्लिनीफलाशनप्रियं,
समीर-सूनुवन्दितं सुकण्ठमित्रमुत्तमं ॥ ६ ॥
प्रकृष्टवीर-वानरेश-बालिघातकं परं,
कपीशराजसेवकैः समुद्रपाटने पटुं ।
नदीशकूलशंकरस्य रम्यमूर्तिकारकं,
विभीषणाभयप्रदं शरण्यपालकं हरिं ॥ ७ ॥
दशास्यबन्धुकुंभकर्णमुक्तिदं सुरार्चितं,
सवंशरावणान्तकं त्रिलोकशोकहारकं ।
सबन्धुमित्रपुष्पकस्थमिन्दिरापतिं भजे,
स्वधामनीतमैथिलीविराजमानमीश्वरं ॥ ८ ॥
सुधांशुरत्ननागभूमिवत्सरे च माधवे,
पुनीतसप्तमीतिथौ सहस्ररश्मिवासरे ।
इमं रघूत्तमस्तवं विनायकेन निर्मितं,
लभेदनेकसम्पदः पठेत्सदैव यः पुमान् ॥

# तातपादाञ्जलिः ।

(प्रातः स्मरणीयानां तातपादानां श्रीश्रीनाथशर्मणां गोलोकप्राप्तौ )

विधौ वामे याते सकलशुभसंघे च शमिते, ।
प्रियो यातस्तातः परमपदवीं मामगणयन् ।
तदुत्सङ्गाद् भ्रष्टः मलयचलयोन्मूलिततरो,
र्दशामेतां प्राप्तः किमिव करवाणीह विकलः ॥ १ ॥
त्वया पूतम्मन्यः सरसवचनास्वादतृषितः,
जनश्चेत् कातर्य्यं व्रजति सहसा साश्रु विलपन् ।
तदा पश्यन्तीमं सततरुदितोच्छूननयनम् ।
त्वदीया सा निद्रा कथमपि विधेया न भवति ॥ २ ॥
जराजन्मव्याधीन् मरणमनु जीवस्य च गतिम्,
सदा ध्यायन्नासीः यदपि हृदि नॄणां विलसति ।
दशां तामेवाद्य त्वमिह चरमां प्राप्य विकलः,
कुतः सीदन्नन्धे तमसि ननु लप्स्ये कथय भोः ॥ ३ ॥
त्वया हीनं गेहं भवति खलु शून्यं, दश दिशः,
श्रवन्त्यः कारुण्यं, निरवधि नभः भाययति माम् ॥
अनाथो हा ! तात त्वयि दिवि गते हा ! अशरणः,
कुतश्चित् संक्षोभः हृदयमनिशं कम्पयति मे ॥ ४ ॥
असारे संसारे विषयमृगतृष्णासु पतताम्,
जनानामानन्दं मनसि जनयन् स्निग्धवचसा ।
समालेभे शान्तां विषयदवदान्तां शुभगतिम्,
अहो ! अन्तःशून्याः वयमिह परं हन्त ! रुदिमः ॥ ५ ॥
रुदन्त्यो धाराभि र्नभसि विरहे ते घनघटा
लताः पुष्पैर्हीनाः मधुषु विरहोत्कण्ठविकलाः, ।
मधुश्रीः किं तादृक् तरुषु लभते कोकिलरवम्
त्वया को वा हीनो भवति ननु दीनो न जगति ॥ ६ ॥
तवाङ्गं संश्लिष्टाः शिशिरमरुतस्तात तरलाः,
पुनर्वास्यन्त्यद्धा मधुमधुरवाताः ! मलयजः ।
यथापूर्वं गन्ता अहह ! सकलं संसृतिपथे ।

त्वदीयं व्यासङ्गं किमपि सुलभं स्यात् कथमपि ॥ ७ ॥
समागन्ता तूर्णं पुनरपि गृहात् यो हि गतवान्,
अपत्यैः सङ्गन्ता सपदि मिलिता स्नेहतरलः ।
अहो! विच्छेदस्ते कथय ननु कीदृक् समजनि,
न जानीमस्तस्य अवधिमथ च नो कारणमपि ॥ ८ ॥
दया वा दाक्षिण्यं विबुधजनगोष्ठीविलसनम्,
सुधा वा माधुर्यं भवति वचने यत् यदिह वा ।
सभाचातुर्यं वा यदपि रमणीयं पुरुषके,
समं सर्वं मन्ये मृतमिव त्वया तात! जगतः ॥ ९ ॥

शोकसन्तप्तस्य—

नोखेलालशर्म-शास्त्रिणः, बी० ए० काव्यतीर्थस्य ।

## मत्कृते त्वत्कृपाशरत् ।

[ भ्रमात् समये न प्रकाशितमिति-प्रकाश्यतेऽधुना । ]

निबन्धकः—पं० माधवप्रसाद उपाध्यायः ( पालपा )

अधुनाऽपसृता घनावली प्रतिमीरा न तु मे तमोमयी ।
अभवद्गगनं सुनिर्मलं भगवन्! नो हृदयं तु मामकम् ॥ १ ॥
सुतरां दिवि भान्ति तारका न तु दैव्यो मयि हन्त! संपदः ।
अतिचारु चकास्ति चन्द्रमा न तु रुपं मम सच्चिदात्मकम् ॥ २ ॥
अभवन्सृतयोऽप्यपङ्किला न ममाऽऽचारपरम्पराः परम् ।
उदितः कलशोद्भवो मुनिर्न तु बोधो मम भेदरोधकः ॥ ३ ॥
सरितः कलयन्ति तानवं विमलत्वं च न वासनास्तु मे ।
सरितां विहरन्ति जीवने परहंसा, न तु हन्त! मामके ॥ ४ ॥
अभवन्प्रतिकूलभेदिनो वृषभा, नैव तु धर्मसंचयाः ।
फलपाकमनोरमोऽधुना कलमाली, न तु मे मनुष्यता ॥ ५ ॥
परितः सुविकाशमाप्नुवन्त्यपि काशा, न तु मे सुखाशिकाः ।
सरसो व्यकसच्च पङ्कजं हतभाग्यस्य न मे तु मानसम् ॥ ६ ॥
अरिवर्गजयाय सोद्यमाः क्षितिपाः प्रस्थितिमद्य कुर्वते ।
न तु कामसुखाधरीकृतौ बत! मेऽद्यापि शमादयो गुणाः ॥ ७ ॥
इयमभ्युदिता शरत्प्रभो! न मनो मोदयितुं मम क्षमा ।
अत एव मया प्रतीक्ष्यते भवदीयैव दयोत्तमा शरत् ॥

# तथ्यः श्रीमद्वल्लभाचार्यस्येतिहासः ।

——:०ⵘ०:——

ले०—पं० केशवशास्त्री तैलङ्गः ।

( विद्याविभागाध्यक्षः गोपालमन्दिर, काशी )

——※——

'सुप्रभात' स्य विक्रमाब्द-१९९१ कार्तिक-मार्गशीर्षयोरङ्कस्य १३७ तमे पृष्ठे 'वल्लभ-सम्प्रदायस्येतिहासः' इति शीर्षके श्रीमता पण्डित ताराद्त्तपन्त साहित्याचार्य-दर्शनशास्त्रि-काव्य व्याकरणतीर्थेन योऽयं भगवतां श्री १०८ श्रीवल्लभाचार्याणां सम्प्रदायपरिचयगवेषणारूपो लेखः प्रारब्धस्सचाऽविचारचारुः । नैवं विधस्सः किन्त्वेवंरूपः यस्य दिग्दर्शनमधस्तात् करोमि ।

अस्ति समस्तनिगमागमप्रवीणानां यथोक्तनिजवर्णाश्रमधर्माचरणकर्तॄणां सुपवित्र दर्शनानां वसतिभूता बहुल तीर्थसमाश्रिता महर्षिणाऽगस्त्येन रक्षिता दक्षिणा दिक् । तस्यां 'काकुम्भकर' इति नाम्ना प्रसिद्धा नगरी। तत्र च भारद्वाजवंशीयानान्तैत्तिरीयशाखाऽध्यायिनां रेणुकाकुलदेवानामान्ध्रवेल्लुनाटीयभट्टानान्त्रिप्रवराणाम्ब्राह्मणानाङ्कुलम् । तस्मिंश्च दीक्षितो यज्ञनारायण आसीत् । तस्य च गङ्गाधरसोमयाजीतिनाम्ना विख्यातः पुत्रः प्रादुरासीत् । तस्य सर्ववेदकुशलो गणपतिस्तनयो बभूव । तस्य च तनयो वल्लभ सोमयाजीति ख्यातो वालम्भट्टः । तस्यात्मजन्मा लक्ष्मणशर्मा । सच विद्यानगरे राजपुरोधसः सुशर्मणः काश्यपगोत्रस्य तनयाम् "इल्लम्मागारु" नाम्नीमुपयेमे । स च भगवदादेशं स्मरन्निर्विण्णस्तीर्थयात्राव्याजेन निर्गतो जनार्दनक्षेत्रे भ्रमन् विष्णुस्वामिसम्प्रदायि-त्रिदण्डिनः श्रीगोपालोपासकप्रेमाकर-मुनेर्लब्ध-गोपालदीक्षः, तत्पुरश्चरणञ्चरन स्वगृहम्प्रति समागतः । निजधर्मं समाचरन्त्रिस्थलीयात्राकामोऽभवत् । अथ च धर्मपुरीं समेत्य पौषकृष्णे प्रयागे समागतः । तत्र च तीर्थविधिना स्नानम्पुरोहितार्चनादि च यथोचितञ्चक्रे । अथ महत्याऽप्यर्थयात्रायां वाराणसीम्प्रविश्य हनुमद्घाटे स्वकीयानां वेश्मसु स्वकीयानवतार्य मणिकर्णिकास्नानादि विश्वेश्वरदर्शनादि कृत्वा गयाम्प्रतिगतः । सप्तदशदिनैस्तां यात्रां यथोचितं विधाय राघवोत्सवे पुनःकाश्यामागतः । तत्र व्रतं राघवोत्सवस्पारणञ्च चकार । तत्र निशि लक्ष्मणभट्टः 'जाते शते सोमेऽपि किं नाऽफलं सम्पत्स्यत' इत्यचिन्तयन् एवञ्चिन्तयतस्तस्य "प्रातर्म्लेच्छानां सैन्य

समेष्यति दग्डिनो युद्धङ्करिष्यन्ति प्रजा भयभीता धावन्ति" इति श्रुतिगोचरो नादोऽभूत्। तदा निजदेशाय सपत्नीक उपरि मार्गेण दुद्राव।

अथ च स्वल्पैर्दिनैश्चम्पारण्यमासाद्य शरवन्हिवाणेन्दुमिते (१५३५) विक्रमेऽब्दे वैशाखकृष्णैकादश्यां निशायाम्महानदीकूले सप्तमासिकङ्गर्भंतत्पत्नी, अविज्ञातजीवितन्निजवस्त्रार्धेनाऽऽच्छन्नं विधाय शमीकोटरे निधाय शुचिपर्णैरावेष्ट्य च चलिता। निशि लक्ष्मणभट्टस्तत्पत्नी च भगः दर्शनन्तद्वाज्ञाञ्च लेभाते 'भवद्गृहेऽवतीर्णोऽस्मि' इति श्रुत्वा सपत्नीकस्सः पुत्रान्वेषणार्थम्पत्न्या निरूपितस्थाने गतः। तत्राग्निमध्ये खेलन्तम्बालमवलोक्य समीपे गमनङ्कृतं, वन्हिरपसृतः कृतहस्तो बालस्तया गृहीत्वा भर्त्रे समर्पितः। बालं गृहीत्वा सर्वेषां मनः प्रीतिर्जाता। ततस्तौ दम्पती स्वपुरं गतौ। तत्र राज्ञा तस्यापेक्षितं सर्वं सम्पादितम्। लक्ष्मणदीक्षितेन च तस्य जातकर्मादिकं सर्वङ्कृतम्। निष्क्रमणदिनेऽष्टाक्षरदीक्षाऽर्पिता। एवन्तस्य क्रमशः संस्कारास्समभवन्। पुनश्च काशीम्प्रति सकुटुम्बः सपरिजन उपद्रवे शान्ते प्राप्तः। अथात्राष्टमेऽब्दे बालकस्य व्रतोत्सवमारभत। पिता गायत्र्युपदेशंदत्वाऽध्यापनाय विष्णुचित्ते स्वपुरोहिताय वटुंदौ। स्वीयां शाखामधीत्य, यजुःशाखा अचिरतः पपाठ। ऋक् शाखा 'तिरुम्मल' द्वारा षट्शास्त्राणि चान्ध्रनारायणदीक्षितद्वारा पपाठ। माधवयतिः कृपयास्मै वैष्णवशास्त्राणि ह्यपाठयत्। एवं समग्रां विद्यामधीत्यैकादशवर्षदेशीयरो वल्लभो दिगन्तविख्यातकीर्तिर्जातस्तदा बहवो विद्यावन्तस्समागतास्ते च विवादे पराजिताः शिष्या बभूवुः। अनन्तरं राजपुरोधसः स्वमातुलस्य दर्शनार्थं विद्यानगरे गतः। तत्र वैष्णवशास्त्राणि गवेषयन् कियन्तङ्कालं श्रीवल्लभोऽवसत्। तत्र च धर्माचार्याणाम्परस्परं विवादः प्रारब्धः। 'विवादे शैवैः स्मार्तैर्वैष्णवा निर्जिताः' इति वल्लभेन श्रुतम्। प्रातः स्वयं स्वशिष्यैः सह राजसदसि श्रीवल्लभो गतो राज्ञा सत्कृतोऽभिमतो विद्वद्भिरप्यादृतो वैष्णवविदामासने संस्थापितः। श्रीवल्लभः राजानं प्रत्याह 'कस्मिन्विषये विवादोऽस्ति'?

'स्मार्ता निर्धर्मकं ब्रह्म वदन्ति, वैष्णवाः सधर्मकमिति, राजाह।

अथायमाह, वयन्तु विष्णुस्वामिसम्प्रदायिनो वैष्णवाः सधर्मकब्रह्मण उपासकाः। अतस्तं पक्षं साधयिष्याम' इत्युक्त्वा तदुपपादनमकरोत्।

इत्थं प्रथमघस्रे यामद्वयं सभा समभवत्। ततो द्वितीयदिनमारभ्य सप्तदिनावधि तद्विचार आसीत्। ततो दिग्दिनावधि तार्किकैर्मीमांसकैः सांख्यैश्च ख्यातिवादादौ!विचारो जातः। तस्मिन् विचारे श्रीवल्लभसाहाय्येन वैष्णवा जितवन्तः। वल्लभस्य विजयो जातः। अपरे खिन्नमनसो विस्मिता

बभूवुः। तेन राज्ञा कृष्णदेवेन 'कनकाभिषेकं' कृत्वा विष्णुस्वामिसम्प्रदायाचार्यसिंहासनेऽधिष्ठापितः श्रीवल्लभः। ततः प्रभृति श्रीवेदव्यासविष्णुस्वामिसम्प्रदायसमुद्धार-संभूत श्रीपुरुषोत्तमवदनावतारसर्वाम्नायसञ्चारवैष्णवाम्नायप्राचुर्यप्रकारश्रीविल्वमङ्गलाचार्यसाम्प्रदायिकार्पितसाम्राज्यासनाखण्ड-भूमण्डलाचार्यवर्य जगद्गुरुमहाप्रभुश्रीमदाचार्य इत्यस्य विरुदावलिः। राज्ञा सकुटुम्बेन शरणागतदीक्षा च स्वीकृता।

अनन्तरं दिग्विजयार्थं भूमिपर्यटन्तत्र तत्र स्थानेषु श्रीमद्भागवत सप्ताहपारायणं दैवान् जीवाँश्च्छरणी कुर्वन् पञ्चभिस्समाभि द्वितीया पृथिवी परिक्रमा समापिता काशीञ्च प्राप्तः। अत्र चाषाढशुक्ल पञ्चम्यां देवदत्तसुतया 'महालक्ष्म्या' सह यथाविधि विवाहः कृतः। विवाहं समाप्यौपासनहोमार्थं षट्मासं तत्रैव स्थितम्। ततस्तृतीया परिक्रमा दैवजीवोद्धृतये चतुर्भिर्वर्षैस्समापिता। हयरसशररसामितेऽब्दे (१५६७) आश्विनकृष्ण द्वादश्यां ज्येष्ठतनूजस्य गोपीनाथस्य प्रादुर्भावः। तस्मिन् प्रादुर्भूते सकुटुम्बो जगदीशयात्रार्थं प्रस्थितः। विधाय यात्रां 'चरणाद्रिं' ( Chunar ) प्राप्तस्तत्रैव च वसतिञ्चक्रे। द्विसप्तशरभूमितेऽब्दे (१५७२) पौषकृष्णनवम्यां 'विट्ठलनाथ, स्य प्रादुर्भावः समभवत्। चरणाद्रावेव तस्य संस्काराः कृताः। अतः परं व्रजयात्रा विहिता। पुनश्चरणाद्रावागमनम्। अत्र सभायां मातृचरणेभ्य उपदेशो दत्तः। संन्याससमर्थना च कृता। गोपीनाथस्याचार्यसिंहासनारोहणञ्च कारितम्। स्वशिष्येभ्यो 'दामोदरादिभ्यः शिक्षा दत्ता 'भवद्भिर्विट्ठलनाथो रक्ष्यः शिक्ष्यश्च' इति,। अनन्तरं वधूजितां प्रबोधनं विधाय 'संन्यासनिर्णय' ग्रन्थश्च कृतः। अतः परं वहूदकाश्रमं गृहीत्वा चरणाद्रौ गङ्गातीरे वसन् स्वसम्बन्धिनां गेहे भिक्षाङ्कुर्वन् दिनाष्टकं तत्रैव तस्थौ। पुनः काश्यां हनुमद्घाटे प्राप्तः। सप्तदिनानि पारमहंस्ये वसन् कौपीनाच्छादनमात्रं धृत्वा जले प्रविष्टः। नाभिमात्रजले निमीलितलोचनः परमानन्दविग्रहं पुरुषोत्तमश्चिन्तयन् सप्ताशीत्युत्तरपञ्चशतेऽब्दे (१५८७) आषाढ़शुक्लद्वितीयादिने मध्याह्ने ज्वालापुञ्जमार्गेण व्यापि वैकुण्ठमवाप। •

चतुरशीतिस्तद्ग्रन्थाः चतुरशीति रासिकाः।
चतुरशीतिस्तद्भक्ता आद्दु रार्यास्तु तत्कथाः॥

ज्येष्ठसूनोर्वंशाभावेऽस्य कनिष्ठपुत्रस्य श्रीमद्गोस्वामिनो विट्ठलनाथस्य सप्त सुता अभूवन्। गोस्वामिभि स्तेषां कृते सप्त पीठाः स्थापिताः। सप्त स्वरूपाश्च तेभ्यः प्रदत्ताः। ते चाधुना यत्र तत्र वर्तन्ते! तेषां स्थानानि सेवापरिपाटी क्रमश्च यथावसरं निवेदयिष्यामीति शम्।

---

# चाण्डालाद्यस्पृश्यतायां प्रमाणसङ्ग्रहः !

निबन्द्धा—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री ।
( 'मुलतान'-स्थ-श्रीसनातनधर्मसंस्कृतकालेजाऽध्यापकः )

—:०:—

( क्रमागतः )

यदपि केचिदाचक्षते—'ब्राह्मणे गवि हस्तिनि । शुनि चैव श्वपाके च पण्डितास्समदर्शिनः, ५ । १८ गीता । इत्यादिशास्ति सनातनो धर्म्म इति । तत्राऽप्युच्यते—अत्र 'समदर्शिन' इत्यस्ति, ननु 'समवर्त्तिन' इति । अन्यथा–हस्त्यारोहणे कर्त्तव्ये शुन्यपि आरोढव्यम्भविष्यति, गोस्थाने शुन्या दुग्धमपि पेयम्भविष्यति, शुनो मूल्येन हस्त्यपि विक्रेतव्यो भविष्यति । परमनिष्टमेतत् । व्यावहारिकभेदोऽवश्यं स्थास्यत्येव । तथा च वेदे–'समौ चिद्धस्तौ न समं विविष्टः, संमातरा चिन्न समं दुहाते । यमयोश्चिन्न समा वीर्य्याणि ज्ञाती चित् सन्तौ न समं पृणीतः' ऋ० १० । ११७।८ इति भणिते यदोभयोर्हस्तयोः, द्वयोर्मात्रोः,, यमजबालकयोः, ज्ञातीयपुरुषाणां च यदा पारस्परिकभेदः; तर्हिनार्य्यैर्योऽप्यवरेषां भिदायास्तु का कथा ।

यदप्युच्येत–तत्स्पर्शेन ब्राह्मणादयोऽशुद्धा भवन्ति, किं ब्राह्मणादीनां स्पर्शेन ते न शुद्धाः स्युः ? एतदपि यत्किञ्चित् । उन्नतस्याऽवनामस्तु सुगमो भवति, अवनतस्योन्नामस्तु दुराप एव । रोगी स्वस्पर्शेन नीरोगमपि रोगिणं तनुते, नीरोगो रोगिणं स्वस्पर्शेन न नीरोगं कर्त्तुं क्षम इति हि सामान्यशास्त्रम् ।

केचिदाग्रहिला अभिदधति—'भङ्गी'-प्रभृतयश्चाण्डाला न सन्ति । चाण्डालास्तु—'शूद्राद् ब्राह्मण्याम्भवन्ति । इमे त्वरङ्गजीवादिसमये मलाऽपकर्षणकर्म्मणि बलान्नियोजिता इति । तत्र विमृश्यते-समाजे कतिचिदुच्छृङ्खलाः खला जना अवश्यम्भवन्ति । ते वर्णाश्रमधर्म्म–मर्य्यादाविरुद्धमप्याचरन्ति कालाऽनुकूल्ये । एवमेव कैश्चिच्छूद्रैरपि प्राग् बलात्कारेण वा प्रलोभनेन वा कामेन वा ब्राह्मणकन्याभिः काभिश्चित् सम्बन्धः कृतो भवेन्नैतदसम्भावि । धर्म्माऽऽग्रहिला अस्मदीयप्राचीनपुरुषास्तादृशदुरात्मसु सम्यगदृष्टिमतिष्ठिपन् । प्रत्युत तदीयवंशपरम्पराया अपि बहिष्कारे सम्यक् प्रणिधानमकार्षुः । अद्य 'गान्धि' पुत्रो देवीदासः कामं कामङ्कामं, कामं ब्राह्मणकुमारीमुपयच्छत, 'गान्धि' महाशयश्च 'इन्जैक्शन' प्रयोगद्वारा मुमूर्षुं गोवत्सं कामं घातयेत्, तत्र

च पं० मदनमोहनमालवीयसदृक्षाः सनातनधर्म्मनेतारः, तथा पञ्चनदीय स० ध० प्रतिनिधिसभासदृश्य उत्तरदायिन्यः संस्था अपि चोपेत्य, चक्षुषी निमील्य च वाचंयमतामाचामेयुः तादृशानाम्बहिष्कारवार्त्ता तु दूरापेता, तेषां निन्दायामेकमपि शब्दं ( कामं किमपि कारणं स्यात् ) न कथयन्तु, प्रत्युत तदीयवार्त्तमानिकाऽशास्त्रीयसिद्धान्तप्रचारप्रसारे आकाशपाताले अपि एकीकुर्व्वन्तु; परम्प्राचीनसमये आस्माकीनधर्म्मनेतार एतादृशीषु वार्त्तासु, तादृक्षेषु, च दुष्कर्म्मसु जनेषु कात्स्न्र्येन प्रणिदधति स्म। प्राक्कथितानाञ्च ( शूद्राद् ब्राह्मण्यामुत्पन्नानां मनोः १०।१२ वचनमनुसृत्य ) 'चाण्डाल' * इति सञ्ज्ञां कुर्व्वन्ति स्म; तैश्च सर्व्वेषां स्पर्शो व्युदस्तो बभूव। तत्फलस्वरूपे कालान्तरे वंशपरम्परया प्रवृद्धा ( 'व्यभिचारेण वर्णानामवेद्यावेदनेन च। स्वकर्मणाञ्च त्यागेन जायन्ते वर्णसङ्कराः। मनु० १०।२४ इतिलक्षणलक्ष्यभूता) सङ्करजातिः कतिपयस्वनियतकर्म्मणां परिवृत्तावपि स्वसत्तां प्रणाशयितुमनलम्। तत्कारणं केवलमास्माकीनदूरदर्शिपूर्व्वजानां बहिष्कार एव वर्त्तते; येनेयमस्मासु विलीना न जाता। अत एवेदं कथयितुम्पार्य्यते कालान्तरे सैव प्रवृद्धा चाण्डालजातिर्यस्या मनुस्मृत्यादिसमये ( दिवा चरेयुः कार्य्यार्थं चिह्निता राजशासनैः। मनुः १०।५५ ) वध्यानां हननं कर्म्म बवृते, तस्या एव वैखानसमहाशास्त्रौशनसमृत्यादिकाले मलाऽपकर्षणादि कर्म्म नियतीभूतम्। ( 'वृत्तिः सङ्करजातीनां तत्तत्कुलकृता भवेत्। अचौराणामपापानामन्त्यजान्तेवसायिनाम्। भागवत० ७।११।३० प्रायः स्वभावविहितो नृणां धर्म्मो युगे युगे। वेददृग्भिः स्मृतो राजन्! प्रेत्य चेह च शर्म्मकृत्' भाग० ७।११।३१ इति कारणाद् विषे उत्पन्नस्तत्र निवसंश्च कृमिर्यथा न म्रियते-तथैव स्वनियतकुत्सितकर्म्मणाऽपि न हानिः।) तेन नैतत्कथयितुं शक्यते—यदियं सा चाण्डालजाति र्न, यद्वा-चाण्डालजातिरधुना विद्यतेऽपि न। आर्य्यसमाजप्रवर्त्तकदयानन्दसदृशः स्वेच्छाधर्म्माऽपि जनो 'भङ्गी' नामकानेव चाण्डालान् मेने। 'ब्राह्मणाद्वैश्यकन्यायाम्' मनुः १०।८ इत्यम्बष्ठजातिं स वर्त्तमानकालिक 'कायस्थ' जातिं मनुते। तेनैतत्कथयितुं

* यदा खल्वस्माभिः 'श्राद्ध' सिद्धिः, 'हिन्दु' शब्दसिद्धिर्व्वा चिकीर्ष्येत; तर्हि सुधारका ब्रुवन्ति; वेदे इमौ शब्दौ न स्तः; तेनेमावर्वाक्तनौ; तेनाऽमान्यावप्रयोज्यौ च। परं यदा ते पृच्छयेरन्,—'चाण्डालानां' 'हरिजन' सञ्ज्ञा कस्मिन् वेदे? अर्वाक्तनत्वाद्वा कुतो नाऽमान्या? तर्हि तेऽभिदधति—'पुराणमित्येव न साधु सर्व्वं न चाऽपि सर्व्वं नवमित्यवद्यम्'। एवमेव स्वार्थे समापतिते ते सुधारकाभासाः स्वमतप्रवर्त्तकनिषिद्धान्यपि पुस्तकानि स्वतःप्रमाणानि मन्वते; स्वार्थभ्रंशे च दृश्यमाने स्वमतप्रवर्त्तकस्य स्वकीयपुस्तकान्यपि प्रामाण्यादपास्यन्ति, बत !!!

शक्यते, यत्-पूर्वत एव प्रचलितानां शुद्धानां सङ्कराणाञ्च जातीनामत्यन्ताऽभावो दुश्शक एव । अन्यथाऽत्रैव किम्प्रमाणम्—यद्वयं द्विजाः स्मो न खलु शूद्राः; आर्य्याः स्मो न खलु दस्यवः । तेनेयमेव सा चाण्डालजातिर्वंशपरम्परयेत्यभ्युपेयमेव । अवरङ्गजीवोऽप्युच्चजातीयान् एवं—विधकर्म्म कारयितुं नेशान आसीत्, प्रत्युतेमान्नीचजातीयानेव, अन्यथा महदान्दोलनमभविष्यत् । अथ च-'द्विजोच्छिष्टञ्च भोजनम्' ५ । १४० इति मनुमनुसृत्य शूद्रेभ्योऽप्यवरेभ्यश्चाण्डालादिभ्यो यदि कचित् स्वोच्छिष्टभोजनमप्यर्पयन्ति द्विजाः, एतदपि नाऽशास्त्रीयम् ।

केचनोदीरयन्ति—विजातीया ईशवीयय्रनास्तु स्पृश्यन्ते, परमिमे सजातीया अपि चाण्डाला न-इत्यन्याय इत्यत्रोच्यते—मलापकर्षणकर्म्माणि कुर्व्वन्तो मौहम्मदादिका अपि न स्पृश्यन्ते । तदितरे चाऽपि यत् स्पृश्यन्ते तत्राऽन्धपरम्परैव, यत्कारणं भयं वा लोभो वा । तत्राऽपि कृपा सुधारकाणाम् नाऽत्र शास्त्र-प्रमाणम् । श्रीमालवीयमहोदया अस्माभिर्मुलताने नागरिकसमित्यध्यक्षमौहम्मदं स्पृष्ट्वा स्नान्तो दृष्टा इति प्राचीनप्रणालीसमुपासकाश्चाऽपि दृश्यन्त एव ।

अधुनाऽन्त्यजादीनां मन्दिरादि प्रवेशविषये श्रूयताम्—

'दर्शनं गेहचूडाया दर्शनं गोपुरस्य च ।
अन्त्यजानां तथाऽन्त्यानां विशेयं देवदर्शनम्' ( शैवसिद्धान्तरत्नम् । )

यदि सुधारका इदं शास्त्रीयवचनं न प्रमाणं मन्यन्ते यन्मन्दिरशिखरादि दर्शनमेव तेषां स्वर्गसाधनम्, तर्हि मन्दिरे प्रविश्यैवोपासनाकरणेन तेषां स्वर्गो भविष्यति-इत्येव कथनं कथं प्रमाणभूतं तेषाम्; अविश्वासो यदि तेषां जीवनम् तर्ह्युभयत्रवाऽविश्वास॒ कार्य्यस्तैः । परं विचारणेन ज्ञायते ,यत्ते ( सुधारकाः ) चाण्डालादीन् मन्दिराणि न प्रविवेशयिषन्ति; प्रत्युत शास्त्रवचनान्येवोल्लिलङ्घयिषन्ति, अन्यथा कथममीषामाग्रहः । शास्त्रं स्पष्टमाचष्टे—

'पञ्चमहापातकैश्चाण्डालाद्यैश्चाऽऽलये प्रविष्टे तत्स्पृष्टनिवेदने च सप्ताहं महाशान्ति हुत्वा देवं कलशैः संस्नाप्य पुनः प्रतिष्ठां कारयेत्, श्रीमरीचिप्रणीते वैखानसे महाशास्त्रे विमानाऽर्चनकल्पे ।

'खण्डिते स्फुटिते दग्धे भ्रष्टे स्थानविवर्जिते ।
यागहीने पशुस्पृष्टे पतिते दुष्टभूमिषु ।
अन्यमन्त्राऽर्चिते चैव पतितस्पर्शदूषिते ।
दशस्वेतेषु नो कुचः सन्निधानं दिवौकसः, ( इति पुराणवचनम् ।' )

'चाण्डालमद्यसंस्पर्शदूषिता वह्निनाऽथवा।
अपुण्यजनसंस्पृष्टा नाऽर्चनीया तनुर्हरेः' इति (हयशीर्षपञ्चरात्रे।)
'प्रासाददेवहर्म्याणां चाण्डालपतितादिषु।
अन्तः प्रविष्टेषु तथा शुद्धिः स्यात्केन कर्म्मणा?।
गोभिः सङ्क्रमणं कृत्वा गोमूत्रेणैव लेपयेत्'। (वृद्धहारीतस्मृतिः।)

"सनातनधर्म्माणः खलु कथं पतितान् मन्दिरप्रवेशाय निषेधन्तु—एकतस्तु तदीयधार्म्मिकसिद्धान्तः प्रचरतिः अपरं यावच्छक्ति दयानन्दादिसमाजद्वारा मूर्त्तिपूजाया देवालयादिप्रवेशस्य च निराकरणम्भवति स्म, तद्द्वारैव चाऽद्यत्वे इतरेषां मन्दिरप्रवेशायोत्साहनम् आग्रहणञ्च स्पष्टं सनातनधर्म्मसिद्धान्त—विजयस्य डिण्डिमघोषः सिद्ध्यति-पुनः कुतस्सनातनधर्म्माणस्तद्विरोधं कृत्वा स्वसिद्धान्तप्रचारे क्षतिमापाद्य स्वपादे निशितधारकठोरकुठारपातङ्कुर्व्वन्ति, यत्राऽद्यत्वे मन्दिरगन्तॄणां सङ्ख्या ह्रसन्ती आसीत्; तत्राऽधुना यदैतावती सङ्ख्या गन्तुं सज्जा; तत् किं सनातनधर्म्माणोऽत्र विघ्नन्ति?"—अत्रेदमेव सरलमुत्तरम्, यत्–स्वसिद्धान्तस्य विश्वव्यापितया सर्वस्य प्रसन्नताऽऽसन्नता भवति; परञ्चाण्डालादीनां मन्दिरप्रवेशान्मर्य्यादा भज्यते। यावच्च खलु नियमोऽयम्, यत्परमात्मोपासनं पवित्रतादशायामेव कर्त्तव्यम्–तदा तत्राऽपवित्राणां कुतः प्रवेशसम्भवः। तदैव तु जननमरणाऽशौचे स्वयमशुद्धाः, अस्नानादिकदशायां वा ते सन्ध्यां न कुर्व्वते। यदा च ते नैमित्तिकाऽस्पृश्यतायामात्मानमपि परमात्मनो मर्य्यादितवैधपूजया वञ्चितं विदधति; तद् यदीयोऽस्पृश्यतासम्बन्धो वंशपरम्परयाऽस्थिमज्जासम्पृक्तः; तानेव ते तदधिकृतान् कर्तुं कथमिवेशते। स्वकीयसिद्धान्तस्य बाह्यप्रचारप्रसन्नतायां ते शास्त्रीयमर्य्यादां भङ्क्तुं पदञ्चाऽर्प्पिपयिषन्ति। अत एव तु कथितम्†—

'रुद्रस्य वाऽथ विष्णो र्वा प्राकाराऽभ्यन्तरे यदि।
रजस्वला वधूश्चैव चाण्डालश्च समागतः।......
तद्दैवस्य कलाहानी राज्ञो मरणमेव च, (कारिकावृत्तिः, प्राश्चित्तकाण्डे।)
'चाण्डालः श्वपचो वाऽपि तादृशाः पुल्कसादयः।
अज्ञानाद् गर्भगेहे तु कर्मस्वधिकृता यदि।
शोधयेन्मन्दिरं पूर्व्वं गोमयाऽऽलेपनादिभिः।........
प्रतिमानां यथायोगमुद्धारो वा नवीकृते।

† ये महोदया एतदतिरिक्तप्रमाणान्यत्र दिदृक्षन्ताम्; ते मम 'धर्मदुर्गत्राणायास्मत्पूर्वजानां दूरदर्शित्वम्' इति निबन्धं 'सूर्य्योदये' ९।५-६-७ पश्यन्तु।

प्रतिष्ठाप्य यथाशास्त्रं स्नापयेत्कलशैरपि' ( पञ्चरात्रेपाद्मतन्त्रे चर्य्यापादे १८ अध्याये । )

'अन्येषामपि सर्व्वेषां नराणं मुनिपुङ्गवाः !

पूजा देवालयं दृष्ट्वा प्रणामस्तस्य कीर्त्तितः । ( सूतसंहिता, ५ माऽध्याये । )

चाण्डालपतितादीनां गोपुराद् बहिरेव च' ( कारिकावृत्तिः । )

एवं विस्तीर्णविचारेण प्रतीयते, तेषां देवालयप्रवेशेऽधिकारो नाऽस्ति; आश्चर्य्यम्—अद्यत्वेऽसहयोगित्वेन आत्मन प्रख्यापयन्तोऽपि नेतृम्मन्या एतदर्थे 'कानून' * निर्म्मापणे व्यग्रा न लज्जन्ते । स्वकीयान् स्वशत्रूणां हस्ते ददतो न जिह्रियति । मूर्त्तिपूजनखण्डनाय सततमुद्यता अपीमेऽद्यत्वे मूर्त्तिपूजनपरा एव सन्ति । एभिरेव कुचारकैरस्मदीयसनातनधर्म्माणो जना अपि भेदेन योजिता भागद्वये वा विभक्ताः; एकतायां रता अनेकताकारयितार इमे 'विनायकं प्रकुर्व्वाणो रचयामास वानरम्' इति चरितार्थयन्ति ।

यदपि केचित् कथयन्ति—ब्राह्मणैरेव धर्म्मशास्त्राणि रचितानि । तै द्वेषवशाद् 'यन्नीचा नीचा एव तिष्ठेयुः कदाचनाऽस्मदादिभिस्साम्यं न प्राप्नुयुरस्मदीय-ब्राह्मणाद्युत्तमवर्णरक्तं वर्णसङ्कररक्तेन दूषितं न स्यादत एवेयमस्पृश्यताभित्तिः स्थापिताऽस्ति इत्यपि न समीचीनम् । यदि ब्राह्मणैश्चाण्डालादीनामेव कृतेऽस्पृश्यताऽव्यावहारिकता वा कृता भवेत्तर्हि त्वेतन्नाम कदाचित् कथयितुं शक्येताऽपि; परं तैस्तु ब्राह्मणा अपि अस्पृश्या अव्यावहारिका वा मताः । द्रष्टव्यम्—महाब्राह्मणाः, श्रावणिब्राह्मणाः पतितब्राह्मणाः ( मनुः ३ । १५० ), चिकित्सकदेवलक-विपणिजीविब्राह्मणाः ( मनुः ३ । १५२ ), हव्यकव्यादिषु अव्यवहार्य्याः कृताः; किन्तेषां स्वजात्याऽपि द्वेष आसीत् ? इति को बुद्धिमान् मन्येत । स्वजातावपि, अधिकं किमु—स्वप्राणप्रेयस्यामपि तैरस्पृश्यताम्प्रदर्श्य स्वस्य धर्म्मपक्षपातित्वमेव द्योतितम् । किं स्वकीयादपि कस्यचिज्जुगुप्सा द्वेषो वा भवितुमर्हति ? तस्माद् यत्किञ्चिदेतत् । ग्रहेष्वपि राहुकेत्वादयोऽस्पृश्या मताः, यत्स्पर्शेन तैः स्नायते, देवेष्वपि शिवस्य निर्म्माल्यमव्यावहारिकं मतम्, पशुष्वपि रासभश्वादयोऽस्पृश्या प्रोक्ताः, स्वमातृकल्पाया अपि गोर्मुखस्याऽस्पृश्यता प्रतिपादिता; किं तेषामेभिस्सहाऽपि विरोध आसीत्, किमिमेऽपि पदार्था ब्राह्मणजात्या विरोधिन आसन् ? ( क्रमशः )

* अधुना सनातनधर्म्मिणां प्रबलया जागर्य्यां मन्दिरप्रवेशनियमस्य वटे निवासः; परमस्पृश्यताऽपसारणनियमस्तु न तथा, यदीयनिरोधाय सनातनधर्म्मभिस्तद्विरोधो विधेयः ।

# युक्तप्रान्तीय गवर्नमेण्ट संस्कृत-कालेज काशी परीक्षाफलम्।

[ सन १९३५ ई० ]

## आचार्यप्रथमखण्डे।

### नव्य व्याकरणे।

४, (७, प्रथमश्रेण्याम ) ( ८, प्रथमश्रेण्याम्) (९,प्रथमश्रेण्याम्) १०, (१४ प्रथमश्रेण्याम् ) ( १७, प्रथमश्रेण्याम् ) २१, २२, २५, ( २७, प्रथमश्रेण्याम् ) ३०, ३२, ( ३३, प्रथमश्रेण्याम् ) ( ३४, प्रथश्रेण्याम् )३७, ४१, ४४, ४५, ४८, ४९, ( ५२, प्रथमश्रेण्याम्) ( ५५, प्रथमश्रेण्याम) ५६, ५८, ५९, ६०, ६१, ( ६५ प्रमथश्रेण्याम् ) ६६, ६७, ६८, ६९, ७२, ७५, ( ७७, प्रथमश्रेण्याम्) ७९ प्र०) ८०; (८२, प्र०) ८३, ८५, ८६, ८७, ८८, ८९,९०, ( ९१, प्र०) ९२, (९४,प्र०) ९८, १०१, ( १०६, प्रथमश्रेण्याम्) १०७, १०९, ११०, १११, ११२, ( ११४, प्रथमश्रेण्याम् ) ११५, ११६, A. ११७, १०८, १२०, १२३, १२४, १२६, १२९, ( १३० प्रथमश्रेण्याम) १३१, ( १३२, प्रथमश्रेण्याम् ) १३७, १४१, १४२, १४३, १४४, १४५, ( १५३ प्रथमश्रेण्याम ) १५४, १५५, १५६, १५७, १५९, १६३, १६४, १६५, १६८, १६९, १७१, १७६, १७९, (१८६, प्रथमश्रेण्याम्) १८८, ( १८९, प्रथमश्रेण्याम् ) ( १९१, प्रथमश्रेण्याम् ) १९४, १९६, ( १९७, प्रथमश्रेण्याम् ) १९९, २०६, २०७, ( २०८, प्रथमश्रेण्याम् ) २१०, २१३, २१४, ( २१५, प्रथमश्रेण्याम् ) २१६ । प्राचीन व्याकरणे २१७ ।

### साहित्ये—

२२३, २२४, २२७, २३०, २३७, २४१, २५०, २५२, २५५ । ज्यौतिषे २६९, २७०, २७२, ( २७४, प्र० ) ( २७६, प्र० ) २७८, २८० ।

### नव्यन्याये।

२६०, २६१, २६२, ( २६३, प्र० ) २६४, २६५, ( २६६, प्र० )

### प्राचीनन्याये २६७।

धर्मशास्त्रे २८२, ( पूर्वमीमांसायां २८३, प्र० ) शांकरवेदान्ते २८७। रामानुजवेदान्ते २८८।

## द्वितीयखण्डे।

### नव्यव्याकरणे।

२९१, २९२, २९४, २९६, २९७, २९८, २९९, ३००, ३०२, ३०३, ३०४, ३०५, ३०७, ३०८, ३०९, ३१०, ३११, ३१३, ३१४ ३१५, ३१६, ३१९, ३२२, ३२४, ३२५, ३२६, ३२९; ३३१, ३३४, ३३५, ३३६ ३३९, ३४०, ३४२, ३४३, ३४९, ३५०, ३५१, ३५६, ३५७, ३६०, ३६१, ३६२, ३६३, ३६४, ३६५, ३६६, ३६८, ३७०, ३७१, ३७२, ३७३, ३७६, ३७८, ३७९, ३८१, ३८२, ३८५, ३८६, ३८७, ३९२।

साहित्ये— ३९४, ३९६, ३९७, ४००, ४०२, ४०४, ४०६, ४०७, ४०८, ४०९, (४१० ४११, प्रथमश्रेण्याम् )

नव्यन्याये ४१३, ( ४१४, प्रथमश्रेण्याम् )

प्राचीन न्याये—४१५,

ज्यौतिषे—४१६, ४१७, ४१९, ४२१, ( ४२३ प्रथमश्रेण्याम् ) ४२४, ( ४२५ प्रथमश्रेण्याम् ) ४२६, ४२८, ।

धर्मशास्त्रे—४३१,

पूर्वमीमांसा—( ४३२ प्रथमश्रेण्याम् )

शांकरवेदान्ते— ४३६, ४३७, ४४०,

शुक्ल यजुर्वेदे—( ४४२ प्रथमश्रेण्याम् )

## तृतीयखण्डे—

### नव्यव्याकरणे ।

( ४४३ प्रथमश्रेण्याम् ) ४४४, ४४५, ४४७, ४४९, ४५१, ४५२, ४५५, ४५६, ४५९, ४६२, ४६३, ( ४६४ प्रथमश्रेण्याम् ) ४६६, ४६७ ( ४६८ प्रथमश्रेण्याम् ) ४६९, ४७१, ( ४७२, ४७३, ४७४ प्रथमश्रेण्याम् ) ४७५, ( ४७६ प्रथम श्रेण्याम् ) (४७७, ४७९, ४८० प्रथमश्रेण्याम् ) ४८१, ( ४८२ प्रथमश्रेण्याम् ) ४८३, ( ४८४ प्रथमश्रेण्याम् ) ४८५, ४८६, ( ४८७, ४८८, ४८९, ४९० प्रथमश्रेण्याम् ) ४९१, ( ४९२, ४९३ प्रथमश्रेण्याम् ) ४९४, ( ४९५ प्रथमश्रेण्याम् ) ४९६, ४९७, ४९८, ४९९, ५०१, ५०२, ५०४, ( ५०५ प्रथमश्रेण्याम् ) ( ५०६ प्रथमश्रेण्याम् ) ५०९. ५१२, ( अन्यछात्रो )

साहित्ये—५१६, ५१८, ५१९, ५२२, । ( नव्यन्याये ५२५, ( ५२६, ५२७, ५२८, प्रथमश्रेण्याम् ) ५२९, ( ५३० प्रथमश्रेण्याम् )

ज्यौतिषे ५३१, ५३३, ( ५३५, ५३६, प्रथमश्रेण्याम् ) ५३९; ( ५४० प्रथमश्रेण्याम्)

धर्मशास्त्रे—५४२ ।

शांकरवेदान्ते—५४३, ५४४, ५४६ ।

रामानुजवेदान्ते—५४७ ।

शुक्लयजुर्वेदे—५४८, ( ५४९ प्रथमश्रेण्याम् ) ।

## शास्त्रि प्रथमखण्डे ।

### नव्यव्याकरणे—

१, २, ३, ५, ७, ( ८, १०, ११, प्रथमश्रेण्याम ) १२, १४, १५, १६, १७, २०, ( २४, प्रथमश्रेण्याम ) २५, २६, २७, २९, ३०, ३१, ३४, ३५, ३६, ३७, ३८, ( ३९, प्रथमश्रेण्याम् ) ४०, ४१, ४२, ४३, ४६, ( ४७, प्रथमश्रेण्याम् ) ५०, ५१,

५३, ५५, ( ५६, प्रथमश्रेण्याम् ) ५७, ५८, ५९, ६१, ६३, ( ६४, ६५, ६६, प्रथम-श्रेण्याम् ) ६८, ७१, ७२, ७३, ७५, ७७, ७८, ७९, ८०, ( ८३, प्रथमश्रेण्याम् ) ८४, ८५, ८७, ( ९१, प्रथमश्रेण्याम् ) ९२, ( ९३, प्रथमश्रेण्याम् ) ९४, १००, १०२, १०३, १०४, १०८, १११, ११२, ११८, १२१, १२४, १२५, ( १२७, प्रथम-श्रेण्याम् ) १२८, १२९, ( १३२, प्रथमश्रेण्याम् ) १३३, १३४, १४०, १४३, १४४, १४५, १४६, १४८, ( १५३, प्रथमश्रेण्याम् ) १५५, १५६, १५७, १५९, १६०, १६१, १६४, १६५, १६६, १६७, ( १६८, प्रथमश्रेण्याम् ) ( १७०, प्रथम श्रेण्याम् ) १७१, १७३, १७७, १७८, १७९ १८०, १८२, १८५, १८६, १८७, १९१, १९३, १९४, ( १९६, प्रथम श्रेण्याम् ) १९७, १९८, २००, २०१, २०२, ( २०४, प्रथमश्रेण्याम् ) २०५, २०७, २०९, २१२, २१३, ( २१५, प्रथमश्रेण्याम् ) २१६, २१७, २१८, २१९, २२०, ( २२१, प्रथम श्रेण्याम्) २२२ २२३, २२४, २२५, २२६, २३०, २३१, २३३, (२३४, प्रथमश्रेण्याम् ) २३५, २३९, २४१, २४३, ( २४५, २४६, प्रथमश्रेण्याम् ) २४७, २४९, २५१, ( २५२, २५३, २५४, प्रथमश्रेण्याम् ) २५६, २६२, २६३, २६५, २६६, २६८, २६९, ( २७४, २७५, २७७, प्रथमश्रेण्याम् ) २८२, २८७, ( २९१ प्रथम-श्रेण्याम् ) २९४, २९६, २९७, २९९, ३०१, ३०३, ३०४, ३०५, ३०७, ३०८, ३०९, ३१०, ३११, ३१२, ३१३, ३१५, ३१६, ३१८, ३१९, ३२०, ३२२, ३२३, ३२५, ३२६, ३२८, ३३०, ३३३, ३३५, ३३७, ( ३३८, प्रथमश्रेण्याम् ) ३३९, ३४१, ३४४, ३४५, ३४६, ३४८, ( ३४९, प्रथमश्रेण्याम् ) ३५०, ३५१, ३५२, ३५३, ( ३५४, प्रथम-३५५, ३५६, ३५७, ३५८, ३६१, ३६२, ३६३, ( ३६४, प्रथमश्रेण्याम् ) ३६६, (३७२, प्रथमश्रेण्याम् ) ३७४, ३७७, ३७८, ३७९, ( ३८०, ३८१, प्रथमश्रेण्याम् ) ३८२ ३८५, ३८८, ( ३९०, प्रथमश्रेण्याम् ) ३९१, ३९२, ३९५, ३९६, ३९७, ( ३९८, प्रथम-३९९, ४००, ४०१, ४०५, ४०६, ४०७, ४०८, ४१२, ४१५, ४२१, ४२३, ४२७, ४२९, ४३०, ४३१, ४३२, ४३५, ४३७, ४३९, ४४०, ४४१, ४४६, ( ४४७, प्रथमश्रेण्याम् ) ४४८, ४५०, ( ४५१ प्रथमश्रेण्याम् ) ४५२, ४५३, ४५६, ४५७, ४५९, ( ४६४, प्रथमश्रेण्याम् ) ४६८, ( ४६९, प्रथमश्रेण्याम् ) ४७२, ( ४७३, ४७४, प्रथम-श्रेण्याम् ) ४७६, ( ४८२, ४८३, प्रथमश्रेण्याम् ) ४८५, ( ४८६, प्रथमश्रेण्याम् ) ४८७, ( ४८८, प्रथमश्रेण्याम् ) ४८९, ४९२, ४९३, ( ४९६, प्रथमश्रेण्याम् ) ४९७, ४९९ ।

## प्राचीन व्याकरणे—

५०१, ५०२, ( ५०३, प्रथमश्रेण्याम् ) ५०४, ५०७, ५०९, ५१०, ५११, ५१२, ( ५१५, प्रथमश्रेण्यान् ) ५१६, ५१७, ५१८, ५१९, ५२२ ।

**साहित्ये**—५२३, ५४२, ५४४, ५५६, ५५८, ५७१, ५७५, ५८१, ५८४, ५८५, ५८६, ६११, ६१२, ६१८, ६१९, ६२०, ६२४, ६२७, ६३१, ६३५, ६३६, ६३७, ६४१, ६४३, ६४५, ६४६, ६४८, ६४९, ६५०, ६५१, ६५२, ६५७, ६६२, ६६३, ( ६७०, प्र०) ६७२, ६७३, ६७४, ६७७, ६८२, ६८३, ६८६, ६८९, ६९२, ६९३, ६९४, ६९५, ( ६९७, प्रथमश्रेण्याम् ) ६९९, ७००, ७०४, ७०५, ७०६, ७०९, ७१४, ७१५, ७१६,

७१७, ७१८, ७१६, ७२३, ७२६, ७२७, ७२८, ७२६, ७३१, ७३२, ७३५, ७३६, ७३७, ७४०, ७४४, ७४६, ७५१, ७५२, ।

नव्यन्याये—

( ७५५, ७५६, ७५७, प्रथमश्रेण्याम् ) ७५८, ( ७५६, प्रथमश्रेण्याम् ) ७६०, ७६१, ७६२, ( ७६४, प्रथमश्रेण्याम् ) ७६५, ७६६ ।

प्राचीनन्याये–७६८ ।

गणितज्यौतिषे–

७७२, ( प्रथमश्रेण्याम् ) ७७४, ( ७७७, प्रथमश्रेण्याम् ) ७७६, ( ७८२, ७८३, ७८५, ( ७८७, प्रथश्रेण्याम् ) ।

फलित ज्यौतिषे–७८६, ७६० ।

पुराणेतिहास–७६४, ७६७, ७६८, ।

धर्मशास्त्रे ( ८०४, प्रथमश्रेण्याम् )

सांख्ययोग–८१०, ८१४, शांकरवेदान्ते–( ८१५ प्र० ) ८१६, ( ८१७, प्रथम श्रेण्याम् ) ( ८१६, ८२०, प्र० ) ८२१, ( ८२२, प्रथमश्रेण्याम् ) ८२३, ( ८२४, प्र० ) ८२५, ८२६, ८२८, ( ८२६ ८३२, प्रथमश्रेण्यान् ) ८३३, ८३४, ( ८३५, प्र० ) ८३७, ८३८, ( ८४०, ८४१, प्रथमश्रेण्याम् ) ८४२, ८४३, ।

माध्ववेदान्ते–८४३, ८४४ । शुक्लयजुर्वेदे–( ८४८, ८४६, ८५०, प्र० ) ८५१ ।

## द्वितीयखण्डे ।

### नव्यव्याकरणे

८५३, ८५४, ८६०, ८६४, ८६५, ८६६, ८६७, ८६८, ८७४, ८७६, ८८०, ८८१, ८८२, ८८५, ८८६, ८८८, ८८६, ८६२, ८६८, ८६६, ६०१, ६०२, ६०३, ६०५, ६०६, ६०७, ६१४, ६१५, ६१८, ६१६, ६२१, ६२२, ६२३, ६२४, ६३१, ६३६, ६३७, ६४०, ६४२, ६४७, ६४८, ६५०, ६५५, ६६२, ६६३, ६६४, ६६५, ६७२, ६७६, ६८०, ६८४, ६८५, ६८८, ६६१, ६६५, ( ६६६ प्रथमश्रेण्याम् ) ६६८, ६६६, १०००, १००१, १००२, १००७, १००८, १०१०, १०१४, १०१५, १०१६, १०१७, १०२०, १०२६, १०२८, १०३२, १०३३, १०३५, १०३६, १०३७, १०४०, १०४१, १०४३, १०४६, १०५०, १०५७, १०६०, ( १०६२ प्रथमश्रेण्याम् ) १०६३, १०६५, ( १०६६ प्रथमश्रेण्याम् ) १०६८, १०६६, १०७०, १०७१, १०७३, १०७५, १०७६, १०८० १०८३, १०८५, १०८८, १०८६, १०६६, ( १०६८ प्रथमश्रेण्याम् ) ११०२, ११०४, ११०५, ११०६, ११०७, ११०६, १११०, १११२, ( १११३ प्रथमश्रेण्याम् ) १११५, ( १११६, १११७, १११८, १११६, ११२१, ११२२ प्रथमश्रेण्याम् ) ११२८; ११२६, ११३३, ११३४, ११३८, ११४०, ११४१, ११४२, ११४३, ११४५, ११४६, ११४७, ११४८, ११४६, ११५०, ११५१, ( ११५२ प्रथमश्रेण्याम् ) ११५५, ११६०, ११६२, ११६७, ११६८, ११७०, ११७१, ११७२, ११७३, ११७४, ( ११७५, ११७६, अन्त्य छात्र )

प्राचीन व्याकरणे—११७८, ( ११७६, ११८०, ११८२, ११८३ प्रथमश्रेण्याम् ) ११८४, ११८५ ।

साहित्ये—११८८, ११६१, ११६२, ११६७, १२००, १२०१, १२०६, १२०८, १२०६, १२१०, १२११, १२१४, १२१६, १२१७, १२१६, १२२०, १२२१, १२२२, १२२३, १२२४, १२२५, १२३२, १२३३, १२४३, १२४५, १२४६, १२५१, १२५३, १२५४, १२५६ ।

नव्यन्याय—( १२७०, प्रथमश्रेण्याम् ) १२७१, १२७२, १२७३, ( १२७४, १२७५, प्रथमश्रेण्याम् ) १२७७, १२७८, ( १२८०, प्रथमश्रेण्याम् ) १२८१ ।

प्राचीन न्याये—( १२८२, प्रथमश्रेण्याम् ) १२८३ ।

ज्यौतिषगणिते—१२८६, १२६२; ( १२६३, १२६७, प्रथमश्रेण्याम् ) १२६८, ( १३००प्रथमश्रेण्याम्) १३०१, १३०२, ( १३०३, प्रथमश्रेण्याम् ) १३०४, १३०७, १३०८ ।

ज्यौतिषफलित—१३१० । पुराण-इतिहास—१३१३ ।

धर्मशास्त्रे—१३१४, १३१६, १३१७ । साङ्ख्ययोग—१३१६ ।

शांकर वेदान्ते—१३२०, १३२१, ( १३२४, १३२५, १३२६, १३२७, प्रथमश्रेण्याम् ) १३२८, ( १३२६, १३३०, प्रथमश्रेण्याम् ) १३३१, १३३२, ( १३३३, प्रथमश्रेण्याम् ) ( १३३४ १३३५, प्रथम श्रेण्याम् )

रामानुज वेदान्ते १३३७ ।

माध्ववेदान्ते १३४० ।

शुक्लयजुर्वेदे—१३४१, ( १३४२, प्रथमश्रेण्याम् )

## शास्त्रि तृतीयखण्डे ।

### नव्यव्याकरणे ।

१३४५, १३४७, १३४८, १३५०, ( १३५४ प्रथमश्रेण्याम् ) १३५६, १३६२, १३६३, १३६४, ( १३६५ प्रथमश्रेण्याम् ) १३६६, ( १३६७ प्रथमश्रेण्याम् ) १३६८, १३७०, १३७३, ( १३७४ प्रथमश्रेण्याम् ) १३७६, १३८१, १३८२, १३८३, १३८५, ( १३८८ प्रथमश्रेण्याम् ) १३६१, ( १३६२ प्रथमश्रेण्याम् ) १३६३, १३६४, ( १३६६ प्रथमश्रेण्याम् ) १३६८, १३६६, ( १४०० १४०१ प्रथमश्रेण्याम्) १४०२, १४०३, ( १४०५ प्रथमश्रेण्याम् ) १४०७, १४१०, ( १४११ प्रथमश्रेण्याम् ) १४१४, १४१५, १४१७, ( १४१६ प्रथमश्रेण्याम् ) १४२१, १४२३, १४२५, १४२८, ( १४२६, १४३२ प्रथमश्रेण्याम् ) १४३५, ( १४३७ प्रथमश्रेण्याम् ) १४४१, १४४२, १४४३, ( १४४४, १४४५ प्रथमश्रेण्याम् ) १४४७, १४४६, ( १४५० प्रथमश्रेण्याम् ) १४५१, १४५२, १४५७, १४५६, १४६१, ( १४६३, १४६४, १४६५, १४६८ प्रथमश्रेण्याम् ) १४६६, ( १४७२, १४७३, १४७५, १४७६, १४७७ प्रथमश्रेण्याम् ) १४७६, १४८०, ( १४८२, प्रथम श्रेण्याम् ) १४८३, ( १४८४ प्रथमश्रेण्याम् ) १४८५, ( १४८७

प्रथमश्रेण्याम् ) १४८६, ( १४९१, १४९२ प्रथमश्रेण्याम् ) १४९३, ( १४९७, १४९८, १५०० प्रथमश्रेण्याम् ) १५०१, ( १५०३ प्रथमश्रेण्याम् ) १५०४, १५०८, १५०९, १५१०, ( १५११, १५१३ प्रथमश्रेण्याम् ) १५१४, (१५१५ प्रथमश्रेण्याम्) १५१७, ( १५१९ प्रथमश्रेण्याम् ) १५२१, १५२२ ।

साहित्ये—१५२६, ५२९. १५३०, १५३५, १५३६, ( १५३७ प्रथमश्रेण्याम् ) १५३९, १५४५, ( १५४९ प्रथमश्रेण्याम् ) १५५१, १५५२, १५५६, १५५७, १५५८, १५५९, १५६२, १५६५, १५६६, १५६९, १५७१, १५७३, १५७४, १५७९, १५८१, १५८४, १५९२, ( १५९४, प्रथम श्रेण्याम् ) १५९५, १५९७, १६००, १६०१, १६०२, १६०३ ।

नव्यन्याये—( १६०४, प्रथमश्रेण्याम् ) १६०६, ( १६०७, १६०८, प्रथमश्रेण्याम् ) १६१० ।

प्राचीनन्याये—१६१२, १६१३ ।

गणितज्यौतिषे—१६१४, १६१५, ( १६१६, प्रथमश्रेण्याम् ) १६१७, १६१८, ( १६२० प्रथश्रेण्याम् ) १६२१, १६२२, १६२४, १६२५, १६२६, १६२७, १६२८, ( १६३१, प्रथमश्रेण्याम् ) ।

धर्मशास्त्रे १६३४ ।

पूर्वमीमांसायां १६३५, प्र० )

सांख्ययोग—१६३७ ।

शांकरवेदान्ते—( १६३८, १६३९, १६४०, १६४१, १६४२, १६४३, १६४४, १६४५, १६४६, १६४८ प्रथम श्रेण्याम् )

शुक्लयजुर्वेदे—१६५०, ( १६५३, प्रथमश्रेण्याम् ) १६५४ ।

अस्मिन् वर्षे आचार्यशास्त्रिपरीक्षयोरेव फलं प्रकाशितम् । प्रथममध्यमपरीक्षयोः फलं राजकीय 'गजट' पत्रेऽवलोकनीयम् । सति प्रयोजने परीक्षाफल जिज्ञासुभिः कार्यालये पत्रं प्रेषणीयम् । उत्तर प्रदानार्थं चिटिकास्वरूपेण ( अथवा जवाबी कार्ड ) पत्रोत्तरप्रेषणव्ययो नूनं प्रेषणीयः । अन्यथा कार्यालयः पत्रोत्तरं दातुं न प्रभुर्भवेदिति—

व्यवस्थापकः ।

# चाण्डालाद्यस्पृश्यतायां प्रमाणसङ्ग्रहः !

## निबन्द्धा—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री ।

( 'मुलतान'-स्थ-श्रीसनातनधर्मसंस्कृतकालेजाऽध्यापकः )

( क्रमागतः )

तस्मात् सुधारकाणामुचितमेतद्, यत्-स्वकीयं वर्त्तमानान्दोलनं † धर्म्मशास्त्राऽनुकूलं मा साधयन्तु, स्वातन्त्र्येणैव तत्प्रचारङ्कुर्वन्तु, एवं कृते तेषां सङ्ख्याऽपि प्रवृद्धा भविष्यति । अथ ये सुधारकाः स्वयं 'भङ्गी' पथपथिका बुभूषन्ति, स्वयमेव भवेयुः, अन्यान् 'भङ्गी' पथपथिकान् कृत्वा कथं तेषु कुसंस्कारान्निवेशयन्ति, निविवेशयिषन्ति वा । यदि तेषां चाण्डालसधर्म्मतायामानन्दः, कामं ते तादृशाः स्युः ; परमन्येषां चाण्डालीकरणे तेषां कोऽधिकारः ? चाण्डालानां वा तैस्सहोपवेशने—( 'सहासनमभिप्रेप्सुरुत्कृष्टस्याऽपकृष्टजः । कट्यां कृताऽङ्को निर्वास्यः' मनुः ८ । २८१ ) कोऽधिकारः ? हन्त ! वस्तुतस्त्विमे चाण्डानां सङ्ख्यां प्रवर्द्धय प्राक्तनानां चाण्डालादिकानां वृत्तिमप्युच्छित्सन्ति; ( यथाऽद्यत्वेऽध्यापकादिभिस्सङ्ख्यावृद्ध्याऽध्यापकान्तराणां वृत्तिहानिः कृता ) वराकाः किं कुर्य्युः—अद्यत्वे वृत्त्यल्पतासमये कोऽपि स्वकीय-प्रबन्ध-करणीय एव । तद्प्रचारत्वात्तत्कर्म्मकरणे त्रपा स्यात्, प्रचारेण च जनानां सहाऽनुभूतिः प्राप्ता स्यात् , हन्त ! चातुर्य्यस्य सेयं परा काष्ठा । ये ब्राह्मणा अप्यस्मिन्नान्दोलने व्यग्राः, तेषामपि यजमानानां सङ्ख्या न्यूनाऽनुमीयते; तदर्थमेव ते यजमानान्तराणि निष्पिपादयिषन्ति ।

अस्तु—अधिककथनेनाऽलम् । अन्ते—

* 'वरं स्वधर्म्मो विगुणो न पारक्यः स्वनुष्ठितः' इति मनुवचनं १०, ९७, समुपस्थापयन्तो वयमेतत्सम्मतिप्रदानधाष्टर्यं कुर्म्महे—यद्य आर्य्यसामाजिकप्रमुखाश्चाण्डालादीनां देवमन्दिराद्यप्रवेशनाग्रहात् सनातनधर्म्मभ्यः कुप्यन्ति; तर्हि तैः स्वमन्दिरेष्वेव देवमन्दिराणि निर्म्माय देवमूर्त्तिदर्शनं स्वयं कृत्वा परान् कारयित्वा च स्वकीयजन्माऽपि सफलयितव्यम्, स्वभ्रातृणां 'भङ्गी' प्रमुखाणामपि । अथ च ये पुरीषवहन कर्म्म चिकीर्षन्तु, तेऽपि महत्या प्रसत्त्या एतत्कार्य्यं कुर्वन्तु । पौरस्त्यसंस्कृतिसंस्कृताः सनातनधर्म्मिणो न क्रोत्स्यन्ति तेभ्यः; प्रत्युत वृत्तिमपि तेभ्योऽधिकां दास्यन्तीतिकृतं दुस्तरविस्तरेणेति ।

† एषामयं व्याजो भवति; यद्वयं स्मृत्यादिप्रमाणं सनातनधर्म्मणामेव कृते उपस्थापयामः, न तु स्वकृते, वयन्तु वेदप्रमाणादेव तत्तन्मन्महे—परं तदसद् । वेदे तु तेषां सिद्धान्ता न सन्ति; तदर्थं स्मृत्यादिकवचनानि स्वतः प्रमाणानि मन्यन्ते । सनातनधर्म्मिणश्च तत्कृतस्मृत्याद्यर्थाश्च मन्वते—न च स्मृत्यादीनां तत्सम्मता अर्था एव शुद्धाः; तेन तैः स्मृत्यादीनामवलम्बो हेयः, वैदिकवचनान्येव निर्दिष्टव्यानि स्वकीयानां कृते स्मृत्यादीनि न तदीयानि ।

* 'स्वानि कर्म्माणि कुर्वाणा दूरे ( व्यवहारादिति भावः) सन्तोऽपि मानवाः । प्रिया भवन्ति लोकस्य स्वे स्वे कर्म्मण्युपस्थिताः । अत्रिः १२, 'ये व्यपेताः स्वधर्म्मात्ते परधर्म्मे व्यवस्थिताः । तेषां शास्तिकरो राजा स्वर्गे लोके महीयते । अत्रिः १७ । आत्मीये संस्थितो धर्म्मे शूद्रोऽपि स्वर्गमश्नुते । परधर्म्मो भवेत्याज्यः सुरूपपरदारवत् । अत्रिः १८ ।

### पं० रामसेवकत्रिपाठी व्याकरणाचार्यः सूचयति—

गतमाघ मासे कृष्ण सप्तम्यां रविवासरे काशीस्थ श्रीजयदेव वैष्णव संस्कृत-महाविद्यालये श्रीजगद्गुरु १००८ श्रीमद्रामानन्दाचार्यस्वामिनां जयन्तीमहोत्सवः समपादि समारोहेण ।

समजनि च महान् प्रभावः कार्यजातेनानेनोपरि जनताया इति तदुपकारश्च श्रीमतां १०८ श्रीवासुदेवाचार्यस्वामिनाङ्कृते कोटिशो धन्यवादान् समर्पयामः । ततो नीराजनानन्तरं समाविसर्जनमभूत् । एतत्सर्वं कार्यजातं श्रीमतां प्रातः स्मरणीयानां महन्त प्रवर १०८ श्रीजयदेवदासजी महाराजानामध्यक्षतायां साधु सम्पन्नमिति तेऽपीव धन्यवादार्हा इति धन्यान् वदामस्तान् कोटिशः । पश्चाज्जनतायाः कृते भगवत्प्रसाद वितरणन्निर्वृतमिति शम् ।

१—पूर्वं छात्रैः पुरुषसूक्तस्य पाठो मङ्गलाचरणत्वेनानुष्ठितः, तदनु श्रीमतां जगद्गुरु १००८ श्रीमद्रामानन्दाचार्यस्वामिपादानां षोडशभिरुपचारैः प्रेमपूर्वकं पूजनम् सम्पन्नमभूत् । ततश्च कतिपयैः छात्रैः स्वामिपादानां स्तवनं यतिराज-सप्तक श्लोकैर्मधुरस्वरेण विहितम् । तदनु साह्लादैः कतिपयैर्महात्मभिर्मानस-रामायणगानं किञ्चित्सानुरागैः सम्पादितम् । तदनन्तरं व्या० व्या० चार्याणां (प्रिंसिपल श्रीजयदेववैष्णव संस्कृतकालेज काशी) श्री १०८ वासुदेवाचार्याणां १००८ श्रीमद्रामानन्दाचार्यस्वामिपादानामवतारप्रयोजननिर्देशपूर्वकमतिभावुकम् श्रद्धेयञ्च प्रवचनं श्रीस्वामिनां जन्म कथाकथनमपि सम्पन्नम् । समाप्त-व्याख्येषु निरुक्ताचार्येषु सभ्यानामानन्दवर्द्धनाय 'यतिराजराजः इति' यति राजराज मुकुटः 'इति श्रीजयन्ती रामानन्दकी' समस्या छात्रैः श्राविता ।

## धर्मविज्ञानम् ।

### प्रणेता-सनातनधर्मस्य सुप्रसिद्धव्याख्याता श्रीस्वामी दयानन्दजीमहाराजः

अस्मिन् धर्मग्रन्थरत्ने सनातनधर्मस्य सम्पूर्णः प्रतिपाद्यविषयः सुमहतानुसन्धानेन वैज्ञानिकेन विधिना वर्णितो विद्यते । अस्यैकस्यैव पुस्तकस्याध्ययनेन सर्वविधोऽपि धार्मिकसन्देहो निरस्तः स्यात् । मूल्यं नवशतात्मकपृष्ठे रमणीयकागजे सुमनोहराक्षरैः मुद्रितस्य पुस्तकस्य रूप्यकचतुष्टयम् । मार्गव्ययः पृथक् देयः ।

प्राप्तिस्थानम्—

मैनेजर धर्मप्रचारक-ग्रन्थमाला C/o महामण्डलभवन, जगतगंज, बनारस ।

जिज्ञास्य ब्रह्मणः स्वरूपोपलब्धिसूत्रम् ।

जन्माद्यस्य यतः । १।१।२ ।

अस्य *दृश्यप्रपञ्चस्य जगतो यतो यस्मात् जन्मादि, जन्म आदिर्यस्येति तद्गुणसंविज्ञानेन बहुव्रीहिणा जन्म-स्थिति-भङ्गं गृह्यते समाहारद्वन्द्ववशतः । भवति तदेव ब्रह्म शब्दगम्यं वस्तु सत् । वैदिकानां आस्तिकदर्शनकाराणां चतुर्धा हि जगत्कारणगवेषणसरणि र्दृश्यते । प्रथमतः पदार्थवादः, द्वितीयं सांख्य-प्रवचनम्, तृतीयः पूर्वमीमांसाप्रकारः, चतुर्थं उत्तरमीमांसाध्वा चेति । पदार्थवादेऽपि प्रकारद्वयमस्ति न्यायदर्शनम् वैशेषिकदर्शनञ्चेति उभयत्रापि नित्यपरमाणोरेव सृष्टिरारभ्यते । सांख्य-प्रवचनेऽप्यस्ति प्रकारद्वयम् सांख्यदर्शनं योगदर्शनञ्चेति। इमे उभे अपि प्रकृतिमेव नित्यां जगज्जननीमङ्गीकुरुतः। यद्यपि पातञ्जलेऽस्य विषयस्य कोऽपि विस्पष्ट उल्लेखो न दृश्यते, तथापि तदीयसृष्टिविधानं सांख्यानुसृतमेवामनन्ति विद्वांसः । तृतीया या पूर्वमीमांसा विद्यते, तत्रास्ति भेदद्वयम्, एका कर्ममीमांसा, द्वितीया च दैवीमीमांसा, चरमा मध्यमीमांसापि कथ्यते । सृष्टिवादे उभयोरपि परस्परं साम्यमेव । इमे उभे अपि 'अहं' 'मम' इतिवत् ब्रह्म प्रकृतिश्चेति उभयमप्याद्रियेते। उभे अप्याभ्यामेव जगत उद्भूतिं ब्रूतः।

तुरीयः प्रकारोऽस्या उत्तरमीमांसाया अस्ति । सूत्रकृत् महर्षिर्बादरायणो ब्रह्मैवैकं जगत्कारणमभिदधत् तेनैव पथा तदुपलब्धिं ब्रवीति । यथा हि सप्तानामपि ज्ञानभूमिकानामुत्तरोत्तरमुन्नतिमाश्रितवतोऽध्यात्मिकाधिकारेण सहैव जिज्ञासो र्जीवस्य तत्त्वज्ञानवृद्ध्या स्व-स्वरूपानुभवोऽपि क्रमशो वर्द्धते । ततश्च जगतः कारण-ज्ञानेऽपि क्रमविकाशः सुतरां देदीप्यत एव । प्रथमद्वितीयज्ञानभूम्योः पदार्थवादात्मिकयो र्जगन्निमित्तकारणत्वेन ब्रह्मणोऽनुमानमेव भवति। यतो हि अस्यामवस्थायां ब्रह्मणः सगुणनिर्गुणयोः स्वरूपयो र्न साधु परिचयो भवति । अत एव जगदाश्रयत्वेन हेतुना केवलमनुमितिरेव तदानीम्भवति ब्रह्मणः । यथा धूमेन कार्य्येण कारणस्य वह्नेरनुमानं तथैव कार्य्याज्जगतः तत्कारणस्येश्वरस्यानुमानमिति ।

ननु वह्नेः प्रत्यक्षपदार्थत्वात् धूमदर्शनेनापि तस्य भानं सम्भवति ? ब्रह्मणस्तु नैवं सम्भवति अप्रत्यक्षस्वरूपत्वात्तस्य। सत्यमेतत् अनेनानुमानेन ब्रह्मणस्तादृशी प्रतीतिर्नोदेति यादृशी च धूमेनाग्नेः । अत एव तु ज्ञानभूमिप्रतिपादकानामेषां दर्शनानामात्मस्वरूपप्रतिपादने न्यूनत्वमेवोद्घुष्यते । तथा हि—सांख्यप्रवचनदर्शनद्वयम् तृतीयतूर्य्यज्ञानभूमिप्रतिपादकम् । तत्र हि विशेषतस्तत्त्वज्ञानं समेधते । पुरुषप्रकृत्योश्च द्रष्टृदृश्यत्वेन भेदञ्च प्रत्यक्षीकरोति तत्त्वज्ञानी ।

यद्यपि सांख्यप्रवचनज्ञानभूमौ पुरुषस्वरूपज्ञानापेक्षया प्रकृतेरेव विस्तारो ज्ञायते। तथापि पुरुषाणामानन्त्यम्, निर्गुणत्वम्, ईश्वरसिद्धिश्च विविच्यत एव। अत्र हि एकतः तत्त्वं जिज्ञासमाना पुरुषबुद्धिः परमाणुवादतोऽग्रे समेत्य चतुर्विंशतितत्त्वानि परीक्षते। अपरतश्च अनाद्यनन्तां ब्रह्मसत्तां वेत्तुमसमर्थाऽपि तस्य सगुणत्वनिर्गुणत्वेऽनुमातुन्तु प्रभवत्येव।

ज्ञानभूमेः पञ्चमषष्ठयोरवस्थयोः पूर्वमीमांसाप्रतिपादितयोस्तु आवरणरहितेयं पुम्बुद्धि ब्रह्मणः सगुणत्वनिर्गुणत्वे प्रत्यक्षीकरोति। ब्रह्मप्रकृत्योश्चाद्वैतं अहम्ममेतिवत् प्रत्यक्षयितुं प्रयतते च। अत्र हि ज्ञानभूमौ ब्रह्मप्रकृत्योरेकत्वप्रतिपादिकायां तयोरचिन्त्यभेदस्तु तिष्ठत्येव। सप्तमज्ञानभूमौ चतुर्थं वेदान्तदर्शनन्तु एतमन्तरायमपाकृत्य ब्रह्मप्रकृत्योरभेदमेव दर्शयति। अत्र तु सर्वेषामेव दर्शनानामैकमत्यम्, यद् अज्ञानेन बन्धनम् ज्ञानपूर्णतया च मोक्ष इति। अज्ञानस्थितिश्चात्मविरोधिभावेषु ज्ञानस्थितिश्चात्मनीत्येतदपि सर्वैरङ्गीकार्य्यमेव। एवं सति आत्मनः पूर्णानुभव एव पूर्णज्ञानपदवाच्यो भवितुमर्हति। सर्वतन्त्रसिद्धान्तसिद्धमिदं यत् यावत् द्रष्टृदृश्ययोः सम्बन्धस्थितिस्तावन्न स्वस्वरूपोपलब्धिरूपात्मज्ञानोदयः सम्भवति। शब्दान्तरेण यथा—यावत् दृश्यं जगत् प्रकृतिर्वा द्रष्टा पुरुषो वा पृथक्त्वेन भासते तावत् कथं पुरुषस्य यथार्थस्वरूपोपलब्धिः सम्भाविनी। सा तु तदैव सम्भाव्यते यदा प्रकृति ब्रह्मशक्तिरपि सती तस्मिन्नेव विलीना स्यात्। अतोऽद्वैतावस्थायामेव स्वरूपोपलब्ध्या आत्मज्ञानोदयो भवति।

प्रथमे कार्य्यतो ब्रह्मणोऽनुमानम्, द्वितीये ब्रह्मप्रकृत्योः पृथक्त्वेन विवेकः, तृतीये अहम्ममेतिवत् ब्रह्मप्रकृत्योर्निरीक्षणम्, चतुर्थे च ब्रह्मणि मायारूपां तच्छक्तिं प्रविलाप्य "एकमेवाद्वितीयं ब्रह्म" इति स्वानुभूत्युपलब्धिः। इत्येवं पूर्वोक्तानां चतुर्णां सिद्धान्तानामभिप्रायः। तदेवैकस्याद्वितीयस्य स्वरूपस्य सिद्धिः सम्भवति यदा कारणब्रह्मणः परमात्मनः कार्य्यब्रह्मणश्च जगत ऐक्यं प्रतिपादितं स्यात्। तयोरैक्यञ्च तदैव प्रतिपादितं स्याद्यदा एकमेवाद्वितीयं ब्रह्म जगतः कारणं स्वीक्रियेत।

एतदभिप्रायेणैव 'एकमेवाद्वितीयं ब्रह्म' इति श्रुतिशिरश्चरितार्थयितुम् सूत्रकृता प्रथमसूत्रे वाङ्मनोबुद्ध्यतीतं ब्रह्म निदर्शयितुमेव 'ब्रह्म' शब्दोपादानं कृतम्। अस्मिंश्च सूत्रे तल्लिलक्षिषया जगज्जन्मादिकारणतया तस्य निर्देशः। एतदेवालौकिकं दार्शनिकं रहस्यं विवरीतुं सप्तानामपि ज्ञानभूमीनां प्रतिपादनं पूर्वमीमांसाशास्त्रे समाचरितम्। तत्र चतुर्णाञ्च स्वानुभवस्वरूपाणामुपरि निर्देशः कृतः।

ननु सप्तसु ज्ञानभूमिषु सतीषु कथंचत्वार एव स्वानुभवाः सप्त कथं न स्यु-

रिति चेत्सत्यं ज्ञानभूमयो हि प्रकृतिसाम्राज्यविषया अनन्ताः सप्तविधाः । स्वतन्त्रतया तत्प्रतिपादकानि दर्शनान्यपि सप्तैव। किन्तु स्वानुभवस्तु पुरुषसम्बन्धभाक् आवरणस्य क्रमविलयनेन आत्मनश्च क्रमोदयेन जायमानश्चतुर्धैव भवतु। इति इति दार्शनिकसिद्धान्तः । अत्र एतदवश्यं वाच्यं विद्यते यद् अद्वितीयब्रह्मविषयकेऽद्वयतुरीयस्वानुभवविषये यावन्तोऽन्ये आचार्या अन्यविधं स्वानुभवं प्रकाशितवन्तोऽग्रे वा प्रकटयिष्यन्ति स सर्वोऽपि ईदृश्याश्चतुर्थज्ञानभूमेः तुर्यस्वानुभवाच्चाधःश्रेणिग एवेति अप्रतिहतो नादः ।

एतत्सूत्रव्याख्यानावसरे अद्वैतस्य ब्रह्मणो विषय एवमाहुः श्रीमच्छङ्करभगवत्पादाः । "अस्य जगतो नामरूपाभ्यां व्याकृतस्यानेककर्तृभोक्तृसंयुक्तस्य प्रतिनियतदेशकालनिमित्तक्रियाफलाश्रयस्य मनसाप्यचिन्त्यरचनारूपस्य जन्मस्थितिभङ्गं यतः सर्वज्ञात्सर्वशक्तेः कारणाद्भवति तद्ब्रह्मेति वाक्यशेषः, अन्येषामपि भावविकाराणां त्रिष्वेवान्तर्भाव इति जन्मस्थितिनाशानामिह ग्रहणम् । यास्कपरिपठितानान्तु 'जायते' अस्ति वर्द्धते, परिणमते, अपक्षीयते, नश्यति" इत्येतेषां ग्रहणे तु एषां जगतः स्थितिकाले सम्भाव्यमानत्वान्मूलकारणादुत्पत्तिस्थितिनाशा जगतो न गृहीताः स्युरित्याशङ्क्येत तन्माशङ्कि इति योत्पत्तिर्ब्रह्मणस्तत्रैव स्थितिः प्रलयश्च त एव गृह्यन्ते । न यथोक्तविशेषणस्य जगतो यथोक्तविशेषणमीश्वरं मुक्त्वाऽन्यतः प्रधानादचेतनादणुभ्योऽभवात् संसारिणो वा उत्पत्त्यादि सम्भावयितुं शक्यम् । न च स्वभावतः, विशिष्टदेशकालनिमित्तानामिहोपादानात् । एतदेवानुमानं संसारिव्यतिरिक्तेश्वरास्तित्वादिसाधनं मन्यन्ते ईश्वरकारणिनः ।

नन्विहापि तदेवोपन्यस्तं जन्मादिसूत्रे ? न, वेदान्तवाक्यकुसुमग्रथनार्थत्वात् सूत्राणाम् । वेदान्तवाक्यानि हि सूत्रैरुदाहृत्य विचार्यन्ते । वाक्यार्थविचारणाध्यवसाननिर्वृत्ता हि ब्रह्मावगति र्नानुमानादिप्रमाणान्तरनिर्वृत्ता । सत्सु तु वेदान्तवाक्येषु जगतो जन्मादिकारणवादिषु तदर्थग्रहणदार्ढ्यायानुमानमपि वेदान्तवाक्याविरोधि प्रमाणं भवन्न निवार्य्यते, श्रुत्यैव च सहायत्वेन तर्कस्याभ्युपेतत्वात् । तथा हि—'श्रोतव्यो मन्तव्यः' ( बृह० २।४।५। इति श्रुतिः 'पण्डितो मेधावी गन्धारानेवोपसंपद्येतैवमेवेहाचार्यवान् पुरुषो वेद' ( छान्दो० ६।१४।२। ) इति पुरुषबुद्धिसाहाय्यमात्मनो दर्शयति । न धर्मजिज्ञासायामिव श्रुत्यादय एव प्रमाणं ब्रह्मजिज्ञासायाम् । किंतु श्रुत्यादयोऽनुभवादयश्च यथासंभवमिह प्रमाणं अनुभवावसानत्वाद् भूतवस्तुविषयत्वाच्च ब्रह्मज्ञानस्य । कर्तव्ये हि विषये नानुभवापेक्षास्तीति श्रुत्यादीनामेव प्रामाण्यं स्यात् पुरुषाधीनात्मलाभत्वाच्च कर्तव्यस्य । कर्तुमकर्तुमन्यथा वा कर्तुं

शक्यं लौकिकं वैदिकं च कर्म, यथाश्वेन गच्छति, पद्भ्यामन्यथा वा, न वा गच्छतीति। तथा 'अतिरात्रे षोडशिनं गृह्णाति, 'नातिरात्रे षोडशिनं गृह्णाति, 'उदिते जुहोति, अनुदिते जुहोति' इति विधिप्रतिषेधाश्चात्रार्थवन्तः स्युः, विकल्पोत्सर्गापवादाश्च। ननु वस्त्वेवं नैवमस्ति नास्तीति वा विकल्प्यते। विकल्पनास्तु पुरुषबुध्यपेक्षाः। न वस्तुयाथात्म्यज्ञानं पुरुषबुद्ध्यपेक्षम्। किं तर्हि वस्तुतन्त्रमेव तत्। नहि स्थाणावेकस्मिन् स्थाणुर्वा, पुरुषोऽन्यो वेति तत्त्वज्ञानं भवति। तत्र पुरुषोऽन्यो वेति मिथ्याज्ञानम्। स्थाणुरेवेति तत्त्वज्ञानम्, वस्तुतन्त्रत्वात्। एवं भूतवस्तुविषयाणां प्रामाण्यं वस्तुतन्त्रम्। तत्रैवं सति ब्रह्मज्ञानमपि वस्तुतन्त्रमेव, भूतवस्तुविषयत्वात्। ननु भूतवस्तुत्वे ब्रह्मणः प्रमाणान्तरविषयत्वमेवेति वेदान्तवाक्यविचारणानर्थिकैव प्राप्ता। न इन्द्रियाविषयत्वेन संबन्धाग्रहणात्। स्वभावतो विषयविषयाणीन्द्रियाणि, न ब्रह्मविषयाणि। सति हीन्द्रियविषयत्वे ब्रह्मणः, इदं ब्रह्मणा संबद्धं कार्यमिति गृह्येत। कार्यमात्रमेव तु गृह्यमाणं किं ब्रह्मणा संबद्धं किमन्येन केनचिद् वा संम्बद्धमिति न शक्यं निश्चेतुम्। तस्माज्जन्मादि सूत्रं नानुमानोपन्यासार्थं किन्तर्हि वेदान्तवाक्यप्रदर्शनार्थम् किम्पुनस्तद्वेदान्तवाक्यं यत्सूत्रेणेह लिलक्षयिषितम्। "भृगुर्वै वारुणिः वरुणं पितरमुपससार अधीहि भगवो ब्रह्मेति" इत्युपक्रम्याह "यतो वा इमानि भूतानि जायन्ते येन जातानि जीवन्ति यत्प्रयन्त्यभिसंविशन्ति तद्विजिज्ञासस्व तद्ब्रह्मेति" तस्य च निर्णयवाक्यम्—'आनन्दाद्ध्येव खल्विमानि भूतानि जायन्ते आनन्देन जातानि जीवन्ति आनन्दं प्रयन्त्यमिसंविशन्तीति" (तैत्तिरीय ३।६)। अन्यान्यप्येवंजातीयकानि वाक्यानि नित्यशुद्धबुद्धमुक्त-स्वभावसर्वज्ञस्वरूपकारणविषयाण्युदाहर्तव्यानि।

सृष्टे विस्तरशो वर्णनन्तु अपरमीमांसासु विद्यते। तस्यापि मूलञ्च गूढ़रहस्यं बृहदारण्यकादिषु द्रष्टव्यम्। ऐश्वरी प्राकृतिकी सृष्टिराहो भगवतो ब्रह्मणो ब्राह्मी सृष्टिरुताहो ऋषीणां मानसी सृष्टिरथवा जैवी वैजी सृष्टिः सर्वापि अद्वैताऽत्रिगुणात्रिक्रियात्मनोऽचिदानन्दस्वरूपा द्विभुनो ब्रह्मण एव भवतीति निर्बाध सिद्धिः। तस्मिन्नेव निर्बाधं तिष्ठति। अवसाने च तस्मिन्नेव निर्विशेषं विलीयते। अन्यथापीदं विवरीतुं शक्यते यथा—सृष्टिस्थितिलयाः शक्तिविशेषकार्य्याणि, सर्वशक्त्याश्रयश्च प्रकृतिः प्रकृतेरधिष्ठानं लयस्थानम्वा अद्वैतं ज्ञानरूपं ब्रह्मवेति जगज्जन्मादिहेतु र्ब्रह्मातिरिक्तं न किञ्चिदप्यन्यत् सिद्ध्यति। निःश्रेयसवर्णने व्यापृतमिदं तुरीयं मीमांसादर्शनं ब्रह्मणः स्वरूपप्रतिपादनेनैव साफल्यमश्नुते। तस्य तत्त्वज्ञानेन सृष्टिविलोमविचारणया सर्वेषामेव पदा-

र्थानां क्रमशो विलयनपद्धत्या स्वस्वरूपोदयक्रमेण सर्वापि शङ्का निरस्ता स्यात् । ब्रह्मणः प्रकृतेः शक्तेर्वा चतुर्विधस्वतन्त्रभावात्मकस्वरूपसम्बलितायाः स्थूलं, सूक्ष्मं, कारणञ्चेति त्रिविधमपि स्वरूपं दृश्येऽस्मिन्प्रपञ्चे योगाञ्जनाक्तनेत्रेण तत्वज्ञानिना स्फुटं प्रत्यक्षीक्रियते । ज्ञानिनो हि भक्ताः तत्स्वरूपदर्शनेन शक्ति-शक्तिमतोरभेदं पश्यन्तो ब्रह्मानन्दाब्धौ मज्जनोन्मज्जनमाचरन्तीति दैवीमीमांसादर्शने साधु विविक्तमिदमितीदानीं विरम्यते । संक्षेपतस्तुरीयात्मकस्य ब्रह्मण ईश्वरस्य च पृथक्त्वं दर्शयन्तीयं स्वप्रस्थानभेदं साधयतीत्येतदेव दैवीमीमांसासिद्धान्तः । अद्वैतस्वरूपोपलब्धौ इयमेव तुरीया ब्रह्मशक्तिरात्मज्ञानप्राप्तिद्वारा तटस्थज्ञानं विलापयन्ती स्वरूपज्ञानञ्चोद्भावयन्ती स्वयमपि तत्रैव ब्रह्मणि विलीयत एव । एतामेवावस्थां केचिद्दार्शनिकाः शक्तेः प्रकृतेर्वा विलयं ब्रुवन्ति केचन तस्या अभावमामनन्ति प्रकृते तु वस्तुत एकमेवाद्वितीयं ब्रह्मेति श्रुतिसिद्धं सच्चिदानन्दव्यतिरिक्तं न किञ्चिदन्यदवशिष्यते । अतः दृश्यप्रपञ्चस्य सृष्टिस्थितिलयाश्रयीभूतस्य ब्रह्मण एव एकस्य सिद्धिरिति चरमसिद्धान्तः । एतदेव स्पष्टयति—

**'शास्त्रयोनित्वात्' ।१।१।३।**

सूत्रकारो महर्षिर्बादरायणो ब्रह्मणः स्वरूपनिर्णयेऽपूर्वा सरणिरनेन सूत्रेण प्रदर्शिता—तथाहि-ब्रह्म ज्ञानस्वरूपमतस्तत् सर्वज्ञानमयस्य वेदस्य सर्वेषाञ्च शास्त्राणां योनिरादिकारणम् अथवा—वेदादिसकलशास्त्रप्रमाणगम्यं तद्ब्रह्मेति भावः । प्रथमेन तु पूर्वसूत्रकथितायाः ब्रह्मणः परोक्षानुभूते र्दार्ढ्यं सम्पादितम्, द्वितीयेन तु आप्तप्रमाणेनापि प्रकृतं ब्रह्म समर्थ्यते । अत्र भगवान् शङ्कराचार्य्यपादा अपि एवमेवाभ्यधुस्तथाहि—महत ऋग्वेदादेः शास्त्रस्यानेकविद्यास्थानोपबृंहितस्य प्रदीपवत् सर्वार्थावद्योतिनः सर्वज्ञकल्पस्य योनिः कारणं ब्रह्म । नहीदृशस्य शास्त्रस्यर्ग्वेदादिलक्षणस्य सर्वज्ञगुणान्वितस्य सर्वज्ञादन्यतः सम्भवोऽस्ति । यद् यद् विस्तरार्थं शास्त्रं यस्मात्पुरुषविशेषात् संभवति, यथा व्याकरणादि पाणिन्यादेर्ज्ञेयैकदेशार्थमपि स ततोऽप्यधिकतरविज्ञान इति प्रसिद्धं लोके । किमु वक्तव्यमनेकशाखाभेदभिन्नस्य देवतिर्यङ्मनुष्यवर्णाश्रमादिप्रविभागहेतोर्ऋग्वेदाद्याख्यस्य सर्वज्ञानाकरस्याप्रयत्नेनैव लीलान्यायेन पुरुषनिःश्वासवद् यस्मान्महतो भूताद्योनेः संभवः । 'अस्य महतो भूतस्य निःश्वसितमेतद्यदृग्वेदः' ( बृह० २।४।१० ) इत्यादिश्रुतेः, तस्य महतो भूतस्य निरतिशयं सर्वज्ञत्वं सर्वशक्तिमत्त्वं चेति । अथवा यथोक्तमृग्वेदादिशास्त्रं योनिः कारणं प्रमाणमस्य ब्रह्मणो यथावत् स्वरूपाधिगमे । शास्त्रादेव प्रमाणाज्जगतो जन्मादिकारणं ब्रह्माधिगम्यत इत्यभिप्रायः । शास्त्रमुदाहृतं पूर्वसूत्रे—'यतो वा

शक्तिमत्सम्बन्धमुखेनास्यैव ब्रह्मणः साधकानि । पुराणेभ्य आरभ्य यावन्ति इमानि भूतानि जायन्ते' इत्यादि । किमर्थं तर्हीदं सूत्रं, यावता पूर्वसूत्र एवैवंजातीयकं शास्त्रमुदाहरता शास्त्रयोनित्वं ब्रह्मणो दर्शितम् । उच्यते तत्र पूर्वसूत्राक्षरेण स्पष्टं शास्त्रस्यानुपादानाज्जन्मादि केवलमनुमानमुपन्यस्तमित्याशङ्क्येत तामाशङ्कां निवर्तयितुमिदं सूत्रं प्रववृते शास्त्रयोनित्वादिति ।

पूर्वस्मिन् सूत्रे 'एकमेवाद्वितीयम्' इति परोक्षानुभूतं ब्रह्म विशेषानुमानेन साधितम् । द्वैतशून्यं, निर्गुणं, निष्क्रियं, स्वयंप्रकाशं, देशकालापरिच्छिन्नं स्वयं बोधगम्यं ब्रह्म न प्रत्यक्षप्रमाविषयतामश्नुते । द्विविधमपि लौकिकालौकिकभेदभिन्नं प्रत्यक्षं सांख्यप्रवचनरूपे दर्शनद्वयेऽपि साधुप्रपञ्चितम् । स्वमनःप्रत्यक्षासमर्थैरिन्द्रियैर्वाङ्मनोऽतीतं ब्रह्म प्रत्यक्षयितुं न शक्यत इति लौकिक प्रत्यक्षातीतमेव ब्रह्म । अलौकिकञ्च प्रत्यक्षं योगबुद्धिजमिति पितॄन् देवान् ऋषीन् सगुणब्रह्मस्वरूपञ्च योगिराट् स्वान्तःकरणेन योगविशदेन प्रत्यक्षीकरोत्येव । किन्तु द्वैतशून्यं निर्गुणं ब्रह्म तत्प्रत्यक्षविषयोऽपि न भवति । अतो ब्रह्म कस्यापि प्रत्यक्षस्य विषयो नैव भवितुमर्हतीति चरमो राद्धान्तः ।

अन्यतश्च काय्येण कारणानुमानात्मिका वा न्यायदर्शनाद्विसरणिरपि ब्रह्मविषयिण्याः शास्त्रसिद्धायाः परोक्षानुभुतेर्नान्तर्गता भवितुमर्हति । यतो हि नैयायिकोऽन्यः पन्था अन्यश्चायं जगज्जन्मादिना शास्त्रयोनित्वादिना च ब्रह्मानुभवप्रकारः । ब्रह्मानुभवार्थमेवानेन सूत्रेण अपूर्वोऽयं पन्थाः परिदर्शितः । यः स्वतःपूर्णो ज्ञानस्वरूपत्वात् । एकतश्च दैवीमीमांसाशास्त्रानुसारेण जड़कर्मणः सञ्चालका देवा ज्ञानप्रेरकाश्च ऋषयः । अपरतश्च योगशास्त्रानुसारतः "स पूर्वेषामपि गुरुः कालेनानवच्छेदात्" इति निर्धारणास्ति । अतो ज्ञानज्योतिषो यः कोऽपि प्रकाशो विद्यते स सर्वोऽपि ज्ञानस्वरूपस्य परमात्मन एव रूपम् । ज्ञानात्मनो ब्रह्मणो निःश्वासात्मकोऽलौकिकोऽपौरुषेयो वेदो वा स्यादथवा तदनुसारि शास्त्रं वा स्यादाहोस्वित् लौकिक एव पुस्तकराशिः स्यात् । सर्वमपि ज्ञानपरिणामत्वेन ज्ञानस्वरूपाद्ब्रह्मण एव उत्पद्यते । इत्येवं सर्वतन्त्रासद्धान्ततोऽद्वितीयस्यैकस्य चिन्मयस्य ब्रह्मणः स्वरूपोपलब्धौ सूत्रमिदं विशेषत उपकारकृद् भवति ।

पूर्वकथितस्य ब्रह्मणः परोक्षानुभूतिराप्तप्रमाणगम्यापीति द्वितीयो दृढतरः पक्षः । यावन्ति ब्रह्मस्वरूपनिर्णायकानि वेदे मन्त्रजातानि तानि सर्वाण्यपि अस्यैव पदस्य साधकानि । वेदशिरःस्थानिकोऽप्युपनिषद्भागो नेति नेति व्यावृत्त्यास्यैव पदस्य लक्षकः । वैदिकेषु दर्शनेषु पदार्थवाददर्शनानि जगत्कर्तृत्वरूपेण सांख्यप्रवचनदर्शनानि च पुरुषेश्वरपुरुषविशेषस्वरूपेण, पूर्वमीमांसादर्शनान्यपि शक्ति-

धर्म्मशास्त्रादीनि महर्षिग्रन्थरत्नानि सन्ति तानि सर्वाण्येव नानाप्रस्थानकोपासनादि भेदेनेदमेव ब्रह्म स्वाधिकारभेदेन स्तुवन्ति । अतः सर्वाण्यपि निगमागमपुराणस्मृतिजातानि तद्ब्रह्मपदमेव साधयन्तीति निर्विवादसिद्धमिदम् ।

गुरुमुखतः शास्त्रश्रवणेन प्राप्तप्रमाणद्वारा ब्रह्मणः परोक्षानुभूतिः । ततश्च सैवानुभूतिः क्रमशो मनननिदिध्यासनाभ्यां दाढर्य नीता अपरोक्षामनुभूतिं सूते, इति गुरुशास्त्रयो र्ज्ञानलाभहेतुत्वम् । एवमनुमानस्याप्रयोजकतया आप्तप्रमाणस्य च प्रयोजकतया ब्रह्मज्ञानस्य शास्त्रयोनित्वम् सिद्धम् । एतञ्च सर्वैरपि शास्त्रज्ञैर्निरपेक्षमङ्गीकरणीयम् । प्रकृतं विषयं सर्वतन्त्रसिद्धान्तेन प्रमाणयति ।

## तत्तु समन्वयात् ।१।१।४।

सर्वतोऽप्यभ्यर्हितेऽन्तिमेऽस्मिन् दर्शनशास्त्रे सप्तमज्ञानभूम्यधिकारनिरुपके समन्वयनिरूपणमावश्यकम् । यथा—सर्वेषां पितृस्थानीयस्य सनातनवैदिकधर्मस्य पूर्णत्वं महत्त्वञ्च प्रस्फुटमेव । तथाहि—सनातने वैदिके धर्म्मे—

"स्वधर्मे निधनं श्रेयः परधर्मो भयावहः"

इति सर्वेषामेव पुरुषाणां स्वस्वकर्तव्यमार्गतोऽविचलनस्यैवोपदेशः तथा समदर्शिताविषये च ।

"शुनि चैव श्वपाके च पण्डिताः समदर्शिनः" इति भगवद्गीतोपदेशः ।
धर्मस्योच्चाधिकारिणः स्वधार्मिकधारणाविषये च ।

"धर्मं यो बाधते धर्मो न स धर्मः कुधर्मतत्"
अविरोधी तु यो धर्मः स धर्मः मुनिपुङ्गव ! इति

ज्ञानविषये च—"सर्वभूतेषु येनैकं भावमव्ययमीक्षते'
अविभक्तं विभक्तेषु तज्ज्ञानं विद्धि सात्त्विकम्"

इति परमाभ्यर्हितमनुशासनम् अस्ति । एवमिहापि महर्षिः सूत्रकारः समन्वयाधिकरणे सूत्रमाविष्करोति । पूर्वाभ्यां सूत्राभ्यां ज्ञानस्वरूपस्य ब्रह्मणः सिद्धिः पूर्णतया साधिता । तत्र द्वितीयेन सृष्टिप्रकारमाश्रित्य तद्द्वारा तदतीतस्य सृष्टिस्थितिलयाधारस्य ब्रह्मणः सिद्धिः—तृतीयेन च ज्ञानविकाशात्मकस्य वेदस्य सच्छास्त्रस्याश्रयेण च ज्ञानमूलस्य पूर्णज्ञानस्वरूपस्य 'वाङ्मनसातीतस्यापि ब्रह्मणो लिलक्षिषया प्रतिपादनम् । अपरञ्चार्थान्तरद्वाराप्तप्रमाणेनापि तस्यैवातिदुर्गम्यस्य पोषणम् । पुनश्च "द्विर्बद्धं सुबद्धं भवतीति" नियममाश्रित्य सर्वामपि शङ्कां निरस्यन् समन्वयेनेदानीमपि तमेव सिद्धान्तं द्रढयति भगवान् सूत्रकारः—

विद्याऽविद्ययो र्ज्ञानाज्ञानयो र्वा रहस्यं साधु पूर्वं विवृतमेव । आभ्यामेव चेतनजडयोः सम्बन्धः । जीवराज्येऽनयोर्विलासप्रकारः स्फुटमेव प्रत्यक्षीक्रियते । उद्भिद्योनौ जडताया ज्ञानसीमाबद्धः प्रकारः परिदृश्यत एव । एकत्र च मनु-

# सूर्योदयः।

दशमे वर्षे } वैशाख-ज्येष्ठ-पूर्णिमा, सं० १९९२ { एकादश-द्वादश संख्या


## सम्पादकीयम्

—:o:—

### सम्राट्पञ्चमजार्ज-रजतजयन्तीमहोत्सवः।

माननीयानां चक्रवर्तिभारतसम्राजां श्रीमतां पञ्चमजार्जमहोदयानां पञ्चविंशतिवर्षाणि यावत् राज्यसिंहासनालङ्करणमहोत्सवो भारतेऽस्मिन् इंग्लैण्डदेशतोऽल्पसमारम्भेण न समपद्यत। भारतीया हि प्रजाः स्वभावत एव राजभक्तिमत्यो भवन्ति। तत्रापि सनातनधर्मावलम्बिन्यस्तु दैवे जगति देवगणेषु विश्वासमावहन्त्यो धर्मशास्त्रादिषु च प्रामाण्यबुद्धयः परम्परागतनियमनियन्त्रितगतयः:—

"बालोऽपि नावमन्तव्यो मनुष्य इति भूमिपः
महती देवता ह्येषा नररूपेण तिष्ठति"
"अष्टानां लोक-पालानां वपुर्धारयते नृपः"
"नराणां च नराधिपः"

इत्यादि वचनबलाद्देवरूपमेव राजानं मन्यन्ते। येन राजभक्तौ दृढभावभाजो बहुलोत्साहसम्भृताश्च भवन्ति।

हिलासंस्थासु, जुबलीमहोत्सव-सम्बद्धं धनाय यद्धि घोषणापत्रं निःसृतमासीत् तदुत्तररूपेण यानि सम्वादपत्राणि धर्ममहामण्डले समागतानि, यानि च जुबली महोत्सव-विवरणानि समाचार-पत्रादिषु प्रकाशितानि, ततो ज्ञायते, यद् इह भारतवर्षे पञ्चमजार्ज-जुबली-महोत्सव इंग्लेण्डदेशतोऽतिसमृद्धो महतोत्साहेन विराडायोजनेन च सुसम्पादितोऽभूदिति ।

वयञ्च सर्वेऽपि सम्मिलिताः श्रीकाशीविश्वेश्वरं समभ्यर्थयामहे यत् माननीयसम्राट्पञ्चमजार्जमहोदयो दीर्घायुर्भूयादेवमेव तस्य स्वर्णजयन्ती महोत्सवो हीरकजयन्तीमहोत्सवश्च क्रमशो भवेताम् । तेषां प्रतिनिधिभूता इह भारते राजकर्मचारिणश्च न्यायप्रियाः सत्यपक्षपातिनो यथार्थतः प्रजा-सेवकाः स्युः केषाञ्चनापि धर्मे न स्वयं हस्तक्षेपं कुर्युर्नापि कस्मैचिद्ध-स्तक्षेपं कर्तुमवसरं दद्युरिति । × × × ×

## विलम्बकारणम् ।

प्रिय पाठकमहानुभावाः !

नाविदितं श्रीमतां यदिदानीं संस्कृतपत्राणां महती दुरवस्था विद्यते । प्रथमतः संस्कृतज्ञा अकिञ्चना विद्यार्थिन एव तद्ग्राहका भवन्ति । तद्गुरवो विद्वांसस्तु प्रायः संस्कृतपत्रद्वेषिण एव भवन्ति । ते तु समाचारपठना-दित एव स्वान्तेवासिनो निषेधयन्ति । अतश्च संस्कृतपत्राणां ग्राहकसंख्या सर्वदैव न्यूना तिष्ठति । सा च संख्या ईदृशी अल्पा भवति यया च तत्पत्रस्य कर्गजमुद्रणादिव्ययोऽपि न पूर्णतामृच्छति कार्य्यालय-सम्पादनादि-व्ययव्यवस्था तु दूरे तिष्ठतु । अत एव इह बहूनि संस्कृतपत्राणि प्रादुर्भूय कियत एव मासाद् वर्षाद्वा पुनर्विलयमेवासादयन्ति । यच्च कथमपि तत्संचालकानां परि-श्रमाधिक्येन सम्पादकानाञ्चावैतनिकतया सम्प्रत्यपि बहूनि संस्कृत-पत्राणि स्वजीवनरक्षां कुर्वन्ति, स्वग्राहकाणां नियमितानियमितोपस्थित्या मनस्तोषं निदधत्येव ।

संस्कृत-पत्राणां महता प्रयासेनापि नियमतः प्रकाशनं न भवति । तत्र प्रधानम् कारणम् मुद्रणाक्षरयोजनादि-काठिन्यं विद्यते । तेन सर्वेऽपि प्रायः संस्कृतपत्रपाठका अपरिचिताः सन्ति । तस्य ज्ञानं यदि तेषां स्यात्तर्हि भवेत् कियान् परितोषस्तेषाम् । तच्चेत्थं विद्यते । सर्वत्रैव मुद्रणालये अक्षरयोजका हिन्दीभाषाया एव किमपि ज्ञानं बिभ्रति । संस्कृते च समासबाहुल्यं भवति । विभक्तयश्च शब्दैः सहैव सम्बद्धा भवन्ति

संयुक्ताक्षराणि बहूनि भवन्ति । तत्र ते बहुशो भूयो भूयस्त्रुटीः कुर्वन्ति । चतुः कृत्वापि (प्रूफ) संशोधने शुद्धिर्नैव भवति । प्रत्युत यत्र एका शुद्धिर्भवति तत्रैवापराऽन्यविधा अशुद्धिर्जायते । यतो हि अक्षरयोजका हि हिन्दी-ज्ञान-बलेन शुद्धिमपि अशुद्धयन्ति । हिन्दी-भाषाया विभक्तीनां पृथक् निवेशने अभ्यासभाजस्ते संस्कृतेऽत्रप्रायोऽशुद्धिमाचरन्त्येव । समासान्तर्गतशब्दानां प्रायः पृथगेव ते विन्यासं विदधति । विसर्गोत्वादीनान्तु तेषां ज्ञानमेव न भवति । तत्रापि पण्डितानां लेखा ब्रह्मलिपिनिबद्धा एव भवन्तीति आबालवृद्धं प्रसिद्धिरेवास्ति । तेष्वपि केचन पण्डिता वालचर्मोच्चाटका भवन्ति ये च पैच्छिकमपि सन्धिं सर्वथा सर्वत्रैवाचरन्ति । वर्कलिपकमपि जिह्वा-मूलीयोपध्मानीयादि कृत्यं निश्चयदाचरन्ति । परसवर्ण-वर्णाद्वित्वादिकमपि प्रतिपदं वाञ्छन्ति ।

सत्येवं व्यतिकरे कथं संस्कृतपत्राणि नियमितानि भवेयुः । तत्रापि तु वयं सर्वेभ्योऽपि साम्प्रतिकेभ्यः संस्कृतपत्रेभ्यः सूर्योदयं यथाशक्यं नियमत एव प्रतिमासं सम्पादयामः । अस्मिन् मासे यो हि विलम्बो जातस्तत्र मुद्रणालयस्याव्यवस्थैव हेतुः । यत्र मुद्रणालयेऽस्माकं सूर्योदयस्य मुद्रणं भवति, तच्चेदानीं निरुद्धं विद्यते । येनास्माकमन्यत्र 'सूर्य्य' मुद्रणालयेन सह सम्बन्धकरणमापतितम् । सर्वथा च नूतनायां व्यवस्थायां भवत्येव विलम्बः । तथापि सर्वथा त्वरया सर्वं कृत्यं सम्पाद्य वैशाखज्येष्ठयोरुभाव-प्यङ्कौ सहैव प्रकाशयामः । अग्रे च यथा पूर्वमेव सर्वं भविष्यतीति ग्राहका अनुग्राहका धृतिं वधन्तु । सर्वेऽपि जानन्त्येव यत्सत्स्वपि बहुषु संस्कृतपत्रेषु 'सूर्योदय'एव नियमतो दश वर्षाणि यावदविरलमनवच्छिन्नं च सुरभारतीं सेवमानः सर्वामपि विघ्नबाधां दूरीकृत्य ग्राहकाननुग्राहकान् प्रसादयन्नायाति । पुनरप्यग्र-मग्रे तथैव नियमेन प्रतिमासं ग्राहकाणां हस्ते यथापूर्वमेव गमिष्यतीति समु-चितः प्रबन्धो जातोऽस्ति ।

अधुना ग्राहकानुग्राहकाणामेव महोदयानां कृपाऽपेक्ष्यते । यत्ते स्वीय-ग्राहक-शुल्कप्रेषणेन, नूतनग्राहकसंख्यासम्वर्द्धनेन च सर्वथा सूर्योदयमनुगृ-ह्णन्तु । वर्षसमाप्तावस्यां काशीविश्वेश्वरश्चास्माकं सदुद्योगं सर्वदा सर्वथा सफलयेदिति तच्चरणयो बद्धाञ्जलि समभ्यर्थयामहे यद्ध यथास्मिन् वर्षे सर्वामपि विघ्नबाधां दूरीकुर्वन् सूर्योदयोऽविच्छिन्नं ग्राहकानुग्राहकान् संरक्षकान् सहायकान् पृष्ठपोषकान् सेवमानो यथासमयमुदीयमानो विविध प्रकारकैः साहित्यिक-सामाजिक-धार्मिकादिलेखैः पत्राकारसौन्दर्येण च

सर्वानेवानन्दयत् तथाग्रेऽपि दैनन्दिनं सम्बर्द्धमानः सर्वथा सर्वथाभ्युदयं समासादयेदिति । × × × ×

## श्रीभूदेवस्मृतिदिवसः ।

गतज्येष्ठमासे भूदेवस्मृतिदिवसः केदारघट्टस्थ-भूदेवचतुष्पाठी-भवने श्रीमतां महामहोपाध्याय-महामहाध्यापकानां पं० श्री पञ्चाननतर्करत्नमहोदयानां सभापतित्वे श्रीमतः कमलकृष्णस्मृतितीर्थमहोदयस्य सदुद्योगेन समपद्यत ।

स्वर्गस्थानां सी० आई० ई० भूदेव मुखोपाध्याय महोदयानां जीवन-चरितं ये जानन्ति तेषान्तु हृदये तदीयसदाचार-भारतीय-संस्कृति-समुद्धार-संस्कृतविद्वद्वर्गास्था प्रभृति चरितेषु महती श्रद्धा विद्यते ।

ये च तदीय-जीवनसच्चरितैरपरिचिताः सन्ति । तेषु तदीयजीवन-चरितप्रचारार्थमेव तदीयस्मृतिदिवसानुष्ठानस्यावश्यकमस्ति प्रयोजनम् ।

तदीयजीवन-चरित-विषये 'भूदेवचरित'–नामकमेकं संस्कृतमहाकाव्यमेव निर्मितं विद्यते । तस्य पठनं सर्वेषामेवाधुनिकानां इंग्लिशशिक्षा-समादरपराणां मानवानां समुचितं विद्यते । तेहि महाभागा वङ्गप्रान्तीयशिक्षाविभागस्य प्रधान-पदाधिकारिण आसन् । एवम् इंग्लिशशिक्षायाः समुन्नतकक्षायामुत्तीर्णास्तथा सर्वोन्नतपदमाश्रिता अपि ते महोदयाः स्वीयं गौरवं न विस्मृतवन्तः । नहि साम्प्र-तिक-पाश्चात्य-सभ्यता-दोषानुकरणमानसाः सर्वथा पाश्चात्यानामेव समादरण-परास्ते आसन् । ते हि साधु उभयोः सभ्यतयोर्गुणागुणं दोषादोषंञ्च निश्चि-त्य यत्र सारं दृष्टवन्तस्तमेवादृतवन्तः । नहि तेऽन्धानुकरणपरा आसन् । कीदृ-शास्ते भारतीय-संस्कृतिप्रेमाण आसन्निति तदीय-पारिवारिकप्रबन्ध-सामाजिक-प्रबन्धादि पुस्तक-पाठेनैव ज्ञायते । 'एज्युकेशन गजट्' इति नाम्ना वङ्गभाषामयं साप्ताहिकपत्रं तदीयं स्वभाषास्वदेशप्रेम द्योतयति । सर्वत्र तीर्थ-क्षेत्रे संस्कृत-विद्वद्भ्यो विद्यार्थिभ्यश्च वार्षिकं मासिकं वा पुरस्कार-वितरणं तदीयां संस्कृत-विद्याप्रेम प्रकाशयति । तेषां शिष्टाचारम् आतिथ्यसत्कारादिकञ्च तत्सम-कालीना विद्वांस एव जानन्ति । ते च समये समये स्वलेखन्या वाचा च प्रकाश-यन्त्येव । इत्थं सर्वतोऽनुकरणचरितस्य तस्य महात्मनो विशुद्धचरितस्य भूदेव-शर्म महोदयस्य स्मृतिदिवसोपलक्षे वयमपि स्वीयां श्रद्धाञ्जलिं समर्प्य मनस्तो-षमावहाम इति । × × ×

## संस्कृत-परीक्षा ।

श्रीमन्तः केन्द्राध्यक्षाः परीक्षार्थिनश्च ! बहूनां विदुषामनुरोधेनास्मिन् वर्षे सर्वेषामेव शास्त्राणां प्रवेशिकाविशारदपरीक्षयोरपि समावेशोऽखिलभारती-

यथार्मिकाध्यात्मिक-संस्कृत-विश्वविद्यालये कृता विद्यते । येन सर्वेषामपि परीक्षार्थिनां सौकर्य्यं सम्पन्नजातम् । हिन्दी-भाषाभिज्ञानां कृतेऽपि हिन्दी-प्रवेशिका हिन्दी विशारद प्रभृति परीक्षाणां सन्निवेशो जातः । शुद्धाद्वैत-सम्प्रदायस्यापि ग्रन्थानां प्रवेशिकात आरभ्य सर्वास्वपि परीक्षासु सन्निवेशः कृतोऽस्ति । विशिष्टाद्वैतद्वैतादिसम्प्रदायग्रन्थानाञ्च परीक्षासु सन्निवेशो विद्यते । यदि छात्राः प्रवेशिका विशारदपरीक्षां दिस्सवोऽपि भविष्यन्ति तर्हि तयोरपि परीक्षयोस्तत्साम्प्रदायिकग्रन्थानां पुरस्काराणां च प्रदानप्रबन्धो भविता ।

अस्मिन् वर्षे इदमप्येकं वैशिष्ट्यं सम्पादितं विद्यते यदार्य्यकुमारीणां कृतेऽपि धर्मप्रवेशिका-धर्मप्रभा-परीक्षयोः सन्निवेशः कृतोऽस्ति । येन धर्म-प्रवेशिकां परीक्षां दित्सूनाम् कुमारीणां धर्मज्ञानं सुदृढं भविष्यति । यतश्च भारतीयसंस्कृतिसुरक्षाऽनायासेनैव सम्पादिता भविष्यति । वयं तु सर्वानपि भारतीयार्यमर्यादा पक्षपातिनो विदुषो ऽनुरुन्ध्महे यत् तत्र परीक्षासु पितरः स्वीयबालिका भ्रातरश्च स्वभगिनीःप्रेरयन्तु । तासां परीक्षाग्रहणार्थमपि प्रधान-कार्य्यालयं पत्रादि व्यवहारेण सम्लः प्रबन्धो विधातुं पार्य्यते ।

इत्येवं सर्वथा-नवीन नियमावली संशोधिता वर्द्धिता सती हिन्दीपरीक्षार्थिनामार्य्यकुमारीणाञ्च सर्वेषामेव परीक्षार्थिनां सौकर्य्यार्थं हिन्दीभाषायामेव प्रकाश्यते । विलम्बवशेन च सूर्य्योदयेन सोद्धर्षमेव सर्वत्र प्रहीयते । विलम्बेनैव च कारणेन अस्मिन् वर्षे आश्विनमासतः परीक्षाकालमपसार्य्य चैत्रमासे परीक्षा कालो निर्द्धारितो विद्यते । तदर्थमावेदनपत्राणां च माघमासं यावत् प्रेषण-कालो विद्यते । अतश्च सर्वेऽपि परीक्षार्थिनोऽस्मिन् वर्षे पूर्वत एव ग्रन्थाभ्यास विधाय प्रथमश्रेणयामुत्तर्तुं कृतप्रयत्ना भवन्तु । येनास्मिन् हायने भूयस्यां संख्यायां पारितोषिकवितरणं भवेत् । अस्मिन् वर्षे पारितोषिकसंख्यापि अधिकैव भविष्यति । यतः परीक्षासमित्याधिकसंख्यायां पारितोषिकं दातुमस्मिन् वर्षे निर्णीतं विद्यते । गतहायने समुत्तीर्णेभ्योऽत्रे लिखितेभ्यश्छात्रेभ्यो विद्वद्भ्यः केन्द्राध्यक्षेभ्यश्च पारितोषिकं प्रदातुं परीक्षासमित्या निर्णीतं विद्यते । तदनुसारेण प्राप्तपारितोषिका विद्यार्थिनो विद्वांसश्चेमे विद्यन्ते ।

श्रीमान् पं० रेवाशङ्कर मेघजी शास्त्री २५) अध्यापक डी. एल. संस्कृत पाठशाला गुलालवाड़ी, ( बम्बई )

पं० हरिवल्लभ ठाकुर महोदयाः२५) हरिहराम्बाराजविद्यालय ( अमावां )

„ पं० शिवकुमारशास्त्री काव्यतीर्थ १५) ज्यौतिष शास्त्री अध्यापक उप-देशक महाविद्यालय लक्ष्मीकुण्ड काशी।

पं० बालमुकुन्द द्विवेदी १५) ऋग्वेद महाविद्यालय सतरञ्जी महाल कानपुर

## आयुर्वेदाचार्य-परीक्षायाम् ।

रोल नम्बर (प्रथम विभागे) (केन्द्रनामानि)

६०—श्रीरामप्रतापशर्मा गौड़ २५) स० ध० सभा संगरिया, बीकानेर ।

७-श्री उत्तमराम शुक्ल वैद्य । २५) ब्रजमण्डल यूनीवर्सिटी, मथुरा ।

## आयुर्वेद-शास्त्रि-परीक्षायाम्

(प्रथमविभागे)

१४६श्री विन्ध्येश्वरीप्रसाद अग्निहोत्री । २०) ऋग्वेद महाविद्यालय कानपुर ।

## आयुर्वेद-मध्यम-परीक्षायाम्

(प्रथमविभागे ।)

श्री शिवकुमारमिश्र १५) उपदेशक महाविद्यालय, लक्ष्मीकुण्ड काशी ।

## व्याख्यान-विशारद-परीक्षायाम्

(प्रथमविभागे)

६६ श्री शिवकुमारशास्त्री २०) उपदेशक महाविद्यालय लक्ष्मीकुण्ड बनारस ।

## जूनियर-परीक्षायाम्

(प्रथमविभागे)

१५१ श्रीवासुदेवद्विवेदी १०) ऋग्वेदमहाविद्यालय कानपुर ।

१५२ श्री रमेशचन्द्र १०) ,, ,,

६२ श्री नटवरलाल शर्मा १०) उपदेशक महाविद्यालय लक्ष्मीकुंड बनारस ।

## साहित्याचार्य-परीक्षायाम्

(प्रथमविभागे)

१६७ श्री वैजनाथ गौड़ शास्त्री २५) विहारीसंस्कृतविद्यालयचांदपुर (विजनौर)

## साहित्य-मध्यम-परीक्षायाम् ।

(प्रथमविभागे)

६२ श्रीधर्मनाथत्रिपाठी १५) उपदेशक महाविद्यालय लक्ष्मी कुण्ड-बनारस ।

८७ श्री गौरीशंकरपुरोहित १५) देवीदास लल्लू भाईसंस्कृतपाठशाला ।
गुलालवाड़ी-बम्बई ।

( द्वितीयविभागे )

८६ श्री भट्ट मूलशंकर शर्मा ( पुस्तकानि )। देवीदास लल्लू भाई संस्कृत पाठशाला गुलाल बाड़ी (बम्बई)।

८६ श्री हीराधर द्विवेदी ( पुस्तकानि ) उपदेशक महाविद्यालय लक्ष्मी कुण्ड बनारस।

## साहित्य-प्रथम-परीक्षायाम्

( द्वितीय विभागे )

८२ श्री मणिशंकर भट्ट ( पुस्तकानि ) देवीदास लल्लुभाई संस्कृ पाठशाला गुलालबाड़ी बम्बई।

## व्याकरण-प्रथम-परीक्षायाम्

( प्रथम विभागे )

१८८ केशव लाल शर्मा ५) माणिक बाई संस्कृत वैदिकपाठशाला पोरबन्दर काठियावाड़।

१९० श्री वामन राव शर्मा ५) ,, ,, ,,

( द्वितीय विभागे )

१८९ श्री भाणजीशर्मा ( पुस्तकानि ) माणिकबाईसंस्कृतवैदिक पाठशाला, पोरबन्दर काठियावाड़।

१९२ श्रीशिवहर लाल शर्मा ,, ,, ,, ,,

१९३ श्री आत्माराम शर्मा ,, ,, ,, ,,

१११ श्री शान्तिदेवी "स० ध० महासभा सं० पाठशाला इटावा"।

४३ श्री शिवहरलाल शर्मा ,, ,, सांगड़िया, बीकानेर।

१५९ श्री गदाधरप्रसादत्रिपाठी ,, हितकारिणी सं० पाठशाला जब्बलपुर।

१७ कुमारी निर्मला यमुनादास संघवी ,, डी० एल्० संस्कृतपाठशाला गुलालबाड़ी बम्बई।

## धर्मप्रवेशिकापरीक्षायाम्

( प्रथमविभागे )

७४ श्रीमती सावित्री देवी ५) संस्कृत महाविद्यालय शाहाबाद ( आरा )

७५ राधेश्यामपाण्डेय ५) ,, ,, ,,

७६ यमुनादत्त चतुर्वेदी ५) ,, ,, ,,

५४ व्रजेन्द्र सूरी ५) हंसमठ पीपलियापाल ( इन्दौर )

१६७ तुरन्त लाल पाठक ४) हरिहरक्षत्र राज्य सं० महाविद्यालय अमावां (पटना)

३३ रामावतार दीक्षित ४) स० ध० महासभा सं० पाठशाला इटावा

( द्वितीय विभागे )

जगन्नाथ उपाध्याय ( पुस्तकानि ) उद्देशक महाविद्यालय लक्ष्मी कुण्ड बनारस

## बी० डी० सी० परीक्षायाम् ।

रोल नम्बर एभ्यः सर्वेभ्योऽपि यथा क्रमं तारतम्येन रजतपदकानि प्रदत्तानि भविष्यन्ति ।

४ रामचन्द्र शर्मा सनातनधर्मकालेज, कानपुर ।

१—शोभाराम वर्मा सनातनधर्म कालेज कानपुर,

५—हरेन्द्र नारायणपाण्डेय कोल्हुआ होस्टल बनारस

६—गोविन्दनारायण मोहनन, सनातनधर्म कालेज कानपुर

२—राजनारायणभट्टनागर शास्त्री, किरतपुर बिजनौर

३—पद्मदेव पाण्डेय-सनातनधर्म कालेज कानपुर ।

## अवशिष्टपरीक्षाफलम् १९९१ वै०

रवीन्द्रनाथ चक्रवर्ती

सीनियर प्रोफेसर आफ्, फिलासफी, वर्द्धवान राज कालेज, ।

पी० एच० डी० परीक्षायां समुत्तीर्णः

मन्त्री—परीक्षाबोर्ड ।

—:o:—

## ॥ कुम्भकोणे द्वादशगरुड़ोत्सवः ॥

ऐषमो मे मासस्य ६ तमे रविवासरे पत्तनेऽस्मिन् क्षेत्रस्वामिनां श्रीशार्ङ्ग-पाणिचक्रपाणिभूवराहादीनां अक्षयतृतीयाप्रयुक्तनैमित्तिकगरुडोत्सवः समभवत् प्रातः सप्तघण्टाकाले क्षेत्राधीशान् बहुशोभायुक्तगरुडवाहनेषु स्थापयित्वा वस्त्राभरणै रलंकृत्य वीथीभ्रमणानन्तरं पत्तनस्थबृहद्वीथ्यां ( Big Street ) भक्तनिर्मितमण्डपे स्थापयामासुर्देवाधिकारिणः। तत्र मण्डपे मिलिता देवाः १२ संख्याका आसन्। देवदर्शनार्थ मागता जना अपरिमिताः इति महोत्सव-निवेदयिता—

न० सत्यनारायण शर्मा ।

Kumba Konam.

# उपयुक्तक्रिया-क्रमिकसङ्कलनम् !

( संशोधनम् )

निबन्द्धा—श्रीदीनानाथशर्म्मा सारस्वतशास्त्री ।

( 'मुलतान'-स्थ-श्रीसनातनधर्मसंस्कृतकालेजाऽध्यापकः )

* 'उपयुक्तक्रिया-क्रमिकसङ्कलनम्' समाप्तिमगात् । आशास्यते-पाठकानां तद् रुचिविषयीभूतं स्यात् । तत् प्रायश्शुद्धं मुद्रितम्, क्वचन विरामचिह्नानि न मुद्रितानि, तेन साधारणपाठकानां चिह्नसम्बन्धे भ्रमो न भवेदिति धिया तन्निर्देशो विधीयते—

४७ पृष्ठे भूमिकायाम् 'अनिद्-धातुषु' इति मुद्रितम्, तत्र 'अनिड्-धातुषु' इति डकारो ज्ञेयः ॥१॥ अभिमान करता है-अत्र 'दृप्यत' इत्यत्र 'दृप्यति' इति ज्ञेयम् ॥ २१ खण्डन करता है—'अपनयति' अत्र ( १ ) चिह्नं न मुद्रितम् ॥ २३ खाता है—'अभ्यवहार्षीत्' अत्र 'अभ्यवाहार्षीद्' इति ज्ञेयम् ॥—४८ जाता है—'आरत्' इत्यस्याऽग्रे विरामचिह्नं न मुद्रितम् ॥ ५७ डराता है—'अबीभषत' अत्र 'अबीभिषत' इति ज्ञेयम् ॥ ६० तिरस्कृत करता है—( १ ) लघूकरोति, अत्र ( ४ ) चिह्नं स्यात् । 'विजयते । ( १ ) व्रीडयति, अत्र ( १ ) चिह्नस्याऽग्रे विरामः स्यात्, अर्थात् ( १ ) इत्यस्य सम्बन्धो 'विजयते' इत्यनेनैव ॥ ६४ दुःखी करता है—दुःखयति-एतदग्रे विरामचिह्नं स्यात्, (४) इत्यस्य सम्बन्धो 'दुःखाकरोती' त्यनेनैव । 'दुमनयति' अत्र 'दुर्मनयति' इति ज्ञेयम् ॥ ६६ दुश्मनी करता है—विवदते-एतदग्रे विरामः स्याद्, येनाऽग्रिमचिह्नमनेन न सम्बद्ध्येत ॥ ७८ निश्चय करता है—अदद्रड़त्—अत्र 'अदद्रढत्' इति ढकारो ज्ञेयः ॥ ८१ पढ़ता है—एतद्योगे पञ्चमी भवती, अत्र 'भवति, इति ह्रस्वान्तपाठः । ६० पैदा करता है-प्रसूयते-अत्र ( ३ ) चिह्नं भवेत् ॥ ६१ पैदा करता है—प्ररोहति ( १ ) एतदग्रे विरामचिह्नं स्यात्, 'सम्भवती' त्यनेन न तत्सम्बन्धः ॥ १०१ फेंकता है—द्रवयति-एतदग्रे विरामचिह्नं स्यात् ( १ ) नुदति—इत्यनेन न तत्सम्बन्धः ।

* आभिः क्रियाभिर्नामपदानि ( क्तान्तादिकान्यपि ) चतुरा भवेतुं निर्म्मातुं च शक्ताः । ( १ ) अनिट् । ( २ ) अकर्म्मकः । ( ३ ) वेट् । (४) लङ्लुङ्टोरसेऽन्यत्राऽनिट् ।-

११३ बैठता है—आसिष्टि—अत्र 'आसिष्ट' इति बोध्यम् ॥ ११६ मारता है-अवधीत् इत्यग्रे विरामचिह्नमपेक्ष्यते, येन 'हिनस्ति' इत्यनेन पूर्व्वचिह्नसम्बन्धो न भवेत् ॥ १२० ॥ मिलना है—'सङ्गच्छते' अत्र ( १ ) चिह्नं न मुद्रितम्, अयमात्मनेपदित्वादनिट्, तत्र स्थितं ( २ ) चिह्नन्तु तदकर्म्मकतापिशुनयितृ—यतोऽकर्म्मकादेव तस्मात्तङ् भवति ॥ १२१ मिलाता है—संयुनक्ति ( १ ) एतदग्रे विरामचिह्नमपेक्ष्यते—येन 'संयोजयति' इत्यनेन पूर्व्वचिह्नसम्बन्धो न स्यात्, 'संयुनक्ति' इति विषये चैतदप्यूह्यम्—'प्र-परा-अप-अनु-अव-वि-आङ्-नि-अधि-प्रति-अपि-सु-अति-उद्-अभि-परि-उप' एतेषामुपसर्गाणामन्यतमेनाऽपि सम्बन्धे युजिर ( रु०उ० अ० ) धातोरात्मनेपदम्भवति; 'सम्-निस्-निर्-दुस्-दुर्' एतैस्सह योगे तु न केवल मात्मनेपदम्, किन्तूभयपदमेव ॥ १२२ मुकाबला करता है—तुलामधिरोहति ( १ ) एतदग्रे विराम चिह्नमपेक्ष्यते, येनैतच्चिह्नस्याऽग्रिमेण 'प्रतिगर्जती, त्यनेन सम्बन्धो न स्यात् ॥ १२५ याद करता है—अध्येति अत्र ( १ ) चिह्नं स्यात्; एतद्योगे षष्ठी भवतीत्यप्यूह्यम् । अचिचिन्तत् इत्यस्याऽग्रे विरामचिह्नं स्याद्, येन ( १ ) ध्यायति-इत्येतच्चिह्नेन सम्बन्धो न स्यात् ॥ १२७ रखता है—निदधाति, निधत्ते अत्र उभयोः ( १ ) चिह्नं स्यात् ॥ १३३ लिखता है अस्य टिप्पण्यां 'लुटि लेखिष्यति' अत्र 'लृटी'ति स्यात्, क्वचिन्मुद्रकाणां प्रमादेन 'लूकारो' दीर्घो मुद्रितः, संस्कृतसाहित्ये + दीर्घ लृकारो न भवतीति विजानन्ति विज्ञाः, क्वचिच्च टिप्पण्यां लुटः स्थाने 'लडि'ति मुद्रितं मुद्रकाणामनवधानेन ॥ १३५ लेता है—गृहणीते' अत्र हकारो हलन्तः स्यात् ॥

१५१ 'समर्थ होता है—'इष्टे' अत्र 'ईष्टे' इति दीर्घ पाठो ज्ञेयः ॥ १५४ संशय करता है—सन्धिग्धे-अत्र 'सन्दिग्धे' इति दकारो ज्ञेयः ॥ १६६ हठ करता है—अभिनिविशते, एतद्योगे कर्म्मकारकं ज्ञेयम् । आगृहणीते अत्र 'आगृह्णीते, इति स्याद्, अर्थात्-हकारो हलन्तः स्यात् ॥ १६८ हैरान करता है-व्यसिष्मयत् अत्र 'व्यसिष्मयत्' इति मकारो ज्ञेयः ॥ १७१ हो सकता है—( २ ) युज्यते अत्र ( १ ) चिह्नं स्यात् ।

४८ पृष्ठस्य टिप्पण्यां 'परिगणना' अत्र 'परिगणनम्' इति ज्ञेयम्; अथवा-शुचि मते 'छन्दोबद्धम्' इत्यग्रिमपदं क्रियाविशेषणं णमुलन्तं वा बोध्यम् । १८० पृष्ठस्याऽन्ते मल्लेखे—'अहिमिति' अत्र 'अहमिति' इति ज्ञेयम् ॥ १८६ पृष्ठे स्वीकार करता है—अत्र ( १ ) संश्रृणुते—इत्यत्र ( १ ) संश्रृणुते ( २ ) इत्येवम्पाठो ज्ञेयः;

+ दीर्घ लृकार इत्येव सन्धिः । 'दीर्घो लकारः' 'तस्माल्लकारः' इत्यादयस्तु चिन्त्यपाठाः, लृकारस्याऽच्त्वात् ।

(१) चिह्नमनिङ्कत्वस्य, (२) चिह्नञ्चाऽकर्म्मक-(अविवक्षितकर्म्मक-) ताया-ज्ञेयम्, यतोऽकर्म्मकतायामेवाऽस्य तङ् भवति॥ १६० पृष्ठस्य टिप्पण्यां ४ र्थपङ्क्तौ 'णिच्शप्' अत्र 'णिच् शप्' इति ज्ञेयम्॥ तस्याष्टिप्पण्या उपान्तिमपङ्क्ति * पाठ-स्त्रुटितः, स चेत्थम्—'धात्वक्षरमध्ये 'न' 'न्' इति वा दृश्येत; तत्र............ एतदग्रे—'रौधादिकनाऽवसेया'........इति पाठः स्याद्, यो न मुद्रितः।

अत्रैतदप्यूह्यम्—आभि× क्रियाभिस्तुमुन्-क्त-शतृ शानच्क्तिन्नन्तादिप्रयोगा अपि स्वयन्निर्म्मातुं शक्याः, परं तत्र सावधानताया अस्त्यावश्यकता, क्तप्रत्यये कदाचित् सेटोऽपीण्निषेधो भवति, सम्प्रसारणं गुणादिनिषेधो वाऽपि भवति यथायोग्यम्॥ शतृशानज्विषये त्वेतदवसेयम्—परस्मैपदिधातोश्शता भवति, आत्मनेपदिनस्तु शानच्, उभयपदिन उभयम्। तत्र शतरि एतदवसेयम्—; यद्—×भौवादिकाऽऽकारान्ताऽऽदादिक-दैवादिकतौदादिक—चौरादिकधातूनां शतरि स्त्रियां ङीपि नुमवश्यम्भवति; आकारान्ताऽऽदादिक तौदादिकानान्तु विकल्पेन नुम्=इतीयान् विशेषः, यथा-भवन्ती, दीव्यन्ती, चोरयन्ती, यान्ती-याती, तुदन्ती-तुदतीति। एवमेवैतद्-गणीयानां (शप्-श्यन्—श—णिच्शप्—विकरणानां) धातूनां शानचि त्रिलिङ्ग्यामपि 'मुक्' भवति, यथा—एधमानः, जायमाना, जुषमाणं, चोरयमाणः—इति॥ गणान्तरेषु तु (शब्लुक—यङ्लुगन्त, श्लु—श्नु-श्नम्-उ-आविकरणेषु शतरि ङीपि नुम्, शानचि मुक् च न भवति, यथा—घ्नती—बोभुवती,—दधती-प्राप्नुवती—शृण्वती,—भिन्दती—कुर्व्वती-जानतीति परस्मैपदिनः। शानचि यथा—आचक्षाणः, ब्रुवाणः, अधीयानः—बिभ्राणः-अश्नुवानः-भिन्दानः—कुर्व्वाणः—विक्रीणान इत्यात्मनेपदिनः। एवञ्चैतद्विरुद्ध'—शृण्वन्ती-प्राप्नुवन्ती—अदन्ती—कुर्व्वन्ती—जानन्ती इत्यादयः, अधीयमानः इत्यादयश्च प्रयोगा अनवधाननिबन्धना एव।

किञ्च—जौहोत्यादिकानां, जक्षि-जागृ-दरिद्रा-शास्-चकास्-इत्यादादिकानां, यङ्लुगन्तीयानाञ्च धातूनां पुंसि सर्वनामस्थानेऽपि (स्वौजसमौट्सु) नुम् न भवति, यथा-दधत् सः, जाग्रती तौ, शासतस्ते, चकासतं तम्, लेलिहत् सः, बोभुवतं तम् इत्यादि। एषामेव धातूनां शतरि क्लीबे जश्शसोर्नुम् विकल्पेन भवति; यथा-दधन्ति-दधति तानि, जाग्रति—जाग्रन्ति, पास्पर्द्धति—पास्पर्द्धन्ति इत्यादि। अमीषामेव धातूनां लट्—लोटोर्झौ 'अन्ति' इति न भवति; किन्तु 'अति' इति.

* उपान्तिमपङ्क्ति—इत्यव्ययीभावस्तेन सुपो लुक्।

× कस्य गणस्याऽयं धातुः—इति ज्ञानाऽर्थं 'सूर्योदय' स्य १९० पृष्ठे मल्लेख-टिप्पणी द्रष्टव्या।

यथा—ददति—ददतु, जाग्रति—जाग्रतु, मोमुदति—मोमुदतु—इत्यादि । एतेषा-मेव च लङो झौ 'उस्' भवति, लिङोस्तु स्वत एव भवति, यथा—अददुः, अजा-गरुः, अबोभवुः । दद्युः, जागृयुः, बोभूयुः—देयासुः, जागर्य्यासुः, चक्रियासुः । इत्यादि ।

किञ्च—'उपयुक्त क्रियासङ्कलने' इलाज करता है ६ इति क्रियात✕पूर्व्वम्-'इकट्ठा करता है' इति, अथवा—'सङ्कुचित होता है, १४६ एतदनन्तरं 'संग्रह करता है' इति क्रियाऽपि ज्ञेया । तत्पर्य्यायवाचका यथा—(४) एकत्र करोति । (४) एकी करोति । (४) राशीकुरुते । सङ्गृह्णाति । सङ्गृह्णीते । (१) सञ्चिनोतु सञ्चिनुते । (४) समाहरति । एकत्रयति-समचकलत् ।"

एवमन्यत्राऽपि क्वचिच्चिह्नादिकं विरामचिह्नम् अक्षरान्तरं वा त्रुटितं स्यात्; तत् स्वयं शोधनीयम् । साधारणैश्चाऽस्मदुक्तदिशा प्राक् स्वपत्रे संशोधनं विधाय ततो यथावश्यकतमे तदुपयोगो विधेय इति निवेद्य विरम्यते ।

---

## वसन्तागमे ।

—:❀:—

रचयिता—श्रीहरेकृष्ण चौधरी शर्म्मा । वराहीवि० मध्यमवर्गीयश्छात्रः ।

नवकिसलयधामोद्दामकामे वसन्ते
मदन-दहन-भूषामाश्रयन्तो वसन्तु ॥
मनसिजधनुषा नोचेन्मनः खण्डितं स्या-
दिति समनवयूनः कोकिलाः किं ? लपन्ति ॥ १ ॥
त्यज निजमभिमानं नायके मन्मृगाक्षि !
प्रचुरगरलबाणे व्यक्तमन्युस्मरस्य ॥
सपदि वपुरिदं ते भग्नतां चेन्न यायात्-
दिति रहसि सरोषां कोकिलाः किं ? लपन्ति ॥ २ ॥
विदधतु निजकृत्यं कामभीतिं त्यजन्तो-
विहितहृदयरोषः शेषभूपो महेशः ॥
रतिपतिमवधीत्स प्रीतिवृत्तं पुरस्ता-
दिति विरहिजनानां कोकिलाः किं ? लपन्ति ॥ ३ ॥

---

# परीक्षाकामुकेभ्योऽनुनयः ।

प्रणेता-साहित्याचार्यः रामेश्वरशास्त्री "विद्यालङ्कारः "लक्ष्मण दुर्गाभिजनः"

सर्वत्र संसारे संसरण—सरणिमारूढा परीक्षाप्रणालीयं नाधुनिकी, किन्त्वस्याः प्रजापतेः प्रजाविरचनकालतः समारभ्यास्तित्वं विभावयामः । विश्वसृड्विश्वसर्जनविधौ विश्वेषां विश्वं कर्मकलापं सूक्ष्मेक्षिकया परिसमीक्ष्य तत्तद्योनिषु जीवानां जीवनं सृजति । एवं तत्परीक्षातो विनिवृत्ता जीवाः पदे पदेऽस्यां संसारपद्धत्यां परीक्षिताः सन्तः सन्तोऽसन्तो वाः सम्भवन्तीति वयं सर्वे सर्वदाक्षिलक्षयं कुर्मः ।

वैदिके काले वैदिकान् विषयान् वेदवेत्तारः सम्यक् परीक्षन्ते स्म, इति हि सवनकर्मणि, प्रयोगयोग्यानां कासांचिदृचां प्रश्नोत्तररूपेण संग्रथितानामवलोकनेन स्फुटमेव प्रतीयते । "कः स्विदेकाकी चरतीति प्रश्नः, तस्योत्तरं "सूर्य एकाकी चरतीति । इयं हि प्रक्रिया ऋत्विजां शास्त्रीयज्ञान-जिज्ञासया सवनान्ते प्रयुज्यते स्म । उपनिषत्सु ब्रह्मबुभुत्सया विहिता बहवः प्रश्नाः सन्त्येव, तेषां चोत्तराण्यपि तत्रैवोल्लिखितानि विराजन्त एव । जीवन्मुक्तस्य जानकीजनकस्य जनकस्य परिषद् विदुषां वैदुष्यपरीक्षायै तत्काले संस्थापिता आसीदिति को न विजानाति विज्ञः ।

पौराणिकसमये तु निर्जरमूर्धन्या धन्याः प्रजापति-गौरीपति-श्रीपतयोऽपि परीक्षयानया परीक्षिता निवृत्ततर्षैर्महर्षिभिः । कोऽस्त्येतेषु वृन्दारकपरिवृढेषु महनीयतमः, इति विचारे संप्रवृत्ते चित्रगुभृगुः परीक्षकत्वेन नियुक्तो भूत्वा गत्वा तेषां समेषां निलयेषु यथायथं सम्मानमवाप्य निपुणं विलोक्य तत्तत्कर्म "श्रीपतिरेषवाहिताभिमानमतिरेव मत्कृतां परीक्षामुदतरदिति परिणामं प्राचीकटत् ।

एवं विहित-सर्व-विधसमीक्षायाः परीक्षाया अत्यन्तप्राक्तनत्वमधिगम्यागम्यापीयं परिपाटी प्रसरीसर्ति । परिपाटीयं परीक्षाया नितरां प्रशस्ता यदि परीक्षार्थिनां ज्ञानार्थिनां सम्यक् परीक्षा स्यात् । यतो हि सम्यक् परीक्षैव परीक्षितानुपयुक्तान् विज्ञातुमलङ्कर्मीणा । तथाह्युक्तं सर्वहितायां चरकसंहितायां— "सम्यक् परीक्षा हि बुद्धिमतां कार्यप्रवृत्तिनिवृत्तिकालौ शंसति तस्मात् परीक्षामभिप्रशंसन्ति कुशलाः ।"

परन्त्वधुना प्रचलिता परीक्षाप्रणाली दूषितजलप्रणालीवाभ्यवहार्यानुपादेया केवलं गन्धमात्रोत्सर्गपराऽपरव वरीवर्ति । साम्प्रतिकासु परीक्षासु समु

त्तीर्णा अन्तेवासिनः केवलं गृह्यन्ते यस्तव्या एव समुत्पद्यन्ते, न तु ते प्रकाण्ड-पण्डितमण्डल्यां मण्डनायन्ते। न च लौकिकेषु विषयेषु विषयग्राहिणी तेषां प्रतिभाभासुराभा प्रस्फुरति। एवं च ते विद्वत्परिषदो बहिष्कृता न्यक्कृता लौकिकैरपरिष्कृताः सन्तो रजकसारमेयोपमानत्वमेव बिभ्रति। ते च परीक्षामहोदन्वतः समुत्तरणाय तरणिरूपान् पूर्वेषु हायनेषु समागतान् प्रश्नानेव परीक्षासन्निहितेषु दिवसेषु रात्रिन्दिवमेकीकृत्य सम्यगभ्यस्यन्ति। तेषां गुरुरपि मेधातोऽगुरुरपि तेष्वेव प्रश्नेष्ववधानदानाय सततं तान् प्रेरयति, अतस्तावन्मात्रमेवाभ्यस्य दत्तपरीक्षाश्छात्राः समुत्तीर्णपरीक्षापारावारात् स्वाध्यापकयशोराशिमपि पारावारापरपारे नयन्ति, स्वानपि गिरिराजोन्नतशिखरतोऽपि समुन्नतान् मन्यन्ते। अध्यापकाः काँश्चिच्छिष्यान् समधिगतशास्त्र्याचार्यादिपदवीकान् तथापि काश्चिद् शीकान् विधाय शिष्यांश्च ताँस्तान् उपधिरूपान् उपाधीन् समधिगम्यामन्दानन्द-मन्दाकिन्यां निमज्जन्ति।

केवलमेतत् कल्लोलिनीपतेरतिविशालोरःस्थलतः समुत्तरणमात्रमेव संजायते, कानि रत्नान्यनर्घाणि सन्ति सागरोदरे निगीर्णानीति तु न तेऽवगच्छन्ति न तेषां गुरुम्मन्या गुरवः, एवं च शास्त्रसम्बधिमर्मज्ञानरत्नगर्भं कथं परीक्षितं भवेत्, तत्त्वविदो विदः कथङ्कारं भवे भवेयुः समुत्पन्ना इति तु पद्धतिमिमाममूर्धस्पन्दमनुसरन्त एव बोधयिष्यन्तीति।

अयं दोषोऽध्यापकानां स्वार्थसाधकानां, परीक्षाहुतवहहुतगात्राणां छात्राणां च नास्ति, अपि तु विद्यतेऽस्या दूषितप्रणाल्याः परीक्षासम्बन्धिन्याः। परीक्षा-पोषकाः पुष्यन्त्येव यथा तथेमां पाश्चात्यविष-जुष्टां सुदुष्टामपि परिपाटीम्। परन्तु परीक्षासमुत्तरणाय सर्वस्वत्यागिनां छात्राणामेषां कथङ्कारं समुन्नतिरनेन नयेन भविष्यतीति न ते जातुचिदपि विचारयन्ति। न च तेषां ज्ञानवृद्ध्यै स्वार्थसिद्ध्यै च तथाभूतान् ग्रन्थान् परीक्षाविषयेषु स्थापयन्ति यैः सुपठितैरालोचितैश्च शास्त्रीयज्ञानपूर्वकं लौकिकविषयाणामिदानीन्तनकाले सर्वाङ्गीणोन्नतिसाधकत्वेनाभिप्रेतानां ज्ञानमञ्जसा साधु सम्पद्येत। विशेषतोऽस्माकं सुरभारतीभाषाभाषण-पठन-स्पृहावतां परीक्षासु। अधुना संस्कृतभाषायां परीक्षा बहुषु स्थानेषु गृह्यते, तत्र प्राधान्यतः पञ्चनदे, वाराणस्यां, कालिक्षेत्रे विहारे, जयपत्तने च। तत्र पञ्चनदीया परीक्षा सर्वविषयसम्बद्धा अतोऽशतो योग्यान् छात्रान् समुत्पादयति। परन्तु यथेप्स्यतेऽस्माभिर्न तथा तयापि समुत्पाद्यन्ते। यतो हि ते सर्वेषां विषयपुष्पाणां चञ्चरीका इव गन्धग्राहका एव जायन्ते नतु मर्मस्पृशः। वाराणस्याः कथात्वकथनीया एव विद्यते। प्रथमा-परीक्षादानोत्तरमुत्तरोत्तरं खण्डैः खण्डश एव समेषां विषयाणां परीक्षा प्राप्नोति। खण्डैस्तु खण्डयते नाम परीक्षार्थिनां मतिततिः। प्रथमखण्डदान-

काले या सिद्धान्तकौमुदी सोत्कैः छात्रैः पठ्यते, सा च द्वितीयखण्डे विलीयते, या च द्वितीयखण्डे सा तृतीयखण्डे या च तृतीयखण्डे, सा च चतुर्थखण्डे समूलं विलयमेति। एवं च यथाविधि विधिर्विश्वं "यथा पूर्वमकल्पयत्" तद्वत् तेऽपि यथा-पूर्वं संजायन्ते। लौकिक-विषयपरिज्ञाने तु न एवम्भूता भवन्ति "पत्रमपि कथं लेख्यम्" केन कथं व्यवहर्तव्यम्" इत्यपि केचन शास्त्रिमन्या आचार्यम्मन्या वा न जानन्ति, इतिहन्त! स्मारं स्मारं दर्शंदर्शं चास्माकं चेखिद्यते चेतः। शतधा विदीर्यते हृदयम्! किमियं परीक्षा समीचीना इति विद्वांस एव विदाङ्कुर्वन्तु। एवमेवान्यासां परीक्षाग्रहित्रीणां संस्थानामवस्था। तासां सुधाराय तत्संचालकानां बालकानामिव हिताहितविधित्सायां मनागपि ध्यानं न गच्छति। नाप्यध्यापकाः कीर्तिततिकामुकाः तत्रावदधति, न च पदवीपात्राश्छात्रास्तत्र सुधाराय चेष्टन्ते। तर्ह्यभिः परीक्षाभ्यो योग्याश्छात्राः कथङ्कारं जायेरन्, इति को नामान्यो विचारयिष्यति।

तस्मात् भवद्भिरत्र विमृश्य तथेयं परीक्षातितिक्षा व्रतिभिरप्युद्यम्य विधातव्या यथाचार्यपदवीसमाधिगमे निश्शेषक्षतवयोमात्राणां छात्राणां समयव्याप्तिर्न स्यात्। न च परीक्षितव्यग्रन्थेषु सा न विकलता कलयैकयापि सम्पद्येत। यथाविवेकमन्यस्य ग्रन्थस्य तत्त्वसत्त्वज्ञाने तेषां मतिगतिर्निबाधं संचरेत् तथा विधा बहुविधाः प्रश्नाः प्रश्नपत्रेषु भवेयुरवश्यम्। गणितेतिहासभूगोलखगोलज्ञानस्यापि कृते ग्रन्थाः सरलसंस्कृतमात्रभारत्यां विरचय्यावश्यं संरक्षणीयाः। तथा च संस्कृतगिरमधीत्यापि परीक्षास्वासु समुत्तीर्णा अन्तेवासिनः स्वसनातन-सनातनधर्मज्ञानतो रहिता आजायन्त इति किन्नाम न खेदास्पदम्?

तस्माद्धर्ममर्मज्ञानायापि मनुस्मृत्या अन्यस्या वा कस्याश्चित् स्मृत्याः सर्वासु परीक्षासु प्रथमापरीक्षातः समारभ्यैव कियान् कियानंशोऽवश्यमेव संस्थापयितव्यः। एवं च वयं प्राप्तशास्त्र्याचार्यादिपदवीका धर्मविवेकतो विमुखा नो भविष्यामः। स्वास्थ्यसंरक्षणाय के नियमा अनुष्ठेया" इतिविज्ञानायाप्यायुर्वेदग्रन्थेभ्यो दिनचर्या-रात्रिचर्यार्तुचर्या-बोधक भागं संगृह्य प्रथमापरीक्षायामेव विद्यार्थिनोऽध्यापनीयाः। हिन्दीभाषाज्ञानतो राजकीयाङ्गलभाषाविज्ञानतोऽपि न ते वञ्चयितव्याः। जयपुरराजकीयपरीक्षास्वस्मिन् विषयेकिञ्चिद् ध्यानं प्रदीयत इत्यतो वयं नितरां प्रसीदामः। एवं कृते परीक्षाणामुपादेयता छात्राणां धर्मस्वास्थ्यलौकिकालौकिकज्ञानमपि सम्यक् सम्पत्स्यते। अन्यथाऽधुना प्रचलितपद्धत्या तु वयं हता एव भविष्यामो भविष्ये।

न वयं परीक्षां द्विष्मः, अपितु सम्यक् कृतसमीक्षां परीक्षामिच्छामः। यया वयं प्रकाण्डपाण्डित्यमण्डितान्तःकरणभाजो व्यावहारिकविवेकशालिनः विविधविषयचुञ्चवश्च सम्भवामः। न च तां कामयामहे यया केवलं पदवीधारिण एव निर्मीयन्ते। किन्तु तामभिनन्दामः परीक्षां यया यथार्थोपाधिसम्मण्डिता भूमण्डलमण्डनाः सम्पद्येरंश्छात्राः आशासेऽत्र परीक्षासंस्थाचालका विद्वांसोऽन्तेवासिनश्च किमप्यवधास्यन्तीति।

# केचित् प्रश्नाः ।

## प्रष्टा—'जिज्ञासुः'

( १ ) 'आवश्यक शब्दस्य स्त्रियाम् 'आवश्यिका' इति प्रयोग 'आवश्यकी' ति वा ? अस्माभिः 'कैयटे' 'आवश्यिका' इति प्रयोगो दृष्टः, साहित्यदर्पणादिके च ,आवश्यकी' ति । आवश्यकी' अत्र ङीप् कया दिशा समर्थनीयः, इति कृपयाऽत्र प्राक्रियिका वैयाकरणाः 'सूर्योदय' द्वारा प्रकाशं पातयन्तु ।

( २ ) 'तुमर्थे सेऽसेन' इति सूत्रे 'अध्यै, अध्यैन, इत्यस्योदाहरणे दीक्षितेन 'पृणध्यै, इति प्रयोगो दत्तः, तत्र अध्यै अध्यैनोरार्द्धधातुकत्वात् पृणधातो र्गुणः कथं न ? यदि छान्दसत्वात्, तर्हि 'कध्यैकध्यैन्भ्यामेव गताऽर्थत्वे अध्यै-अध्यैनोः को विशेषः, यतः कध्यै-इत्यनेन तत्र गुणनिषेधः 'आहुवध्यै' इत्यत्र च कित्वात् सम्प्रसारणम्भविष्यति-इति वैयाकरणाः 'सूर्य्योदय' द्वारा क्लिष्टकल्पनामनादृत्य वास्तविकमुत्तरं प्रहिण्वन्तु ।

( ३ ) तृतीयः प्रश्नो ज्योतिर्विदां सेवायाम्—जन्मपत्रे विंशोत्तरीप्रभृति-दशा लिख्यन्ते, तत्र नक्षत्राद्यनुसारं स्पष्टचन्द्राऽनुसारं वा या दशाऽऽगच्छति सा भुक्ता मन्यते, तत्तद्-ग्रहनियतवर्षेभ्यः सा वियोज्यते, सा च भोग्यदशा भण्यते । तयैव सह अधस्तात् स्पष्टसूर्यं सङ्कलयन्ति । ततस्तस्या एव दशायां अन्तर्दशा यदि निस्सारणीया स्यात्, तत्र किं कर्त्तव्यम् ? अर्थात् अन्तर्दशालिखितवर्षाणि पूर्णानि भवन्ति; अस्माभिस्त्वारम्भिकदशायां भुक्तमपसार्य्यते; तर्हि अन्तर्दशालिखितदशावर्षादिकेभ्यस्तानि भुक्तवर्षाणि कया विधया वियोज्येरन्; यदधस्तादिलिखितस्पष्टसूर्य्यस्य सङ्कलने मुख्यदशासङ्कलितस्पष्टसूर्य्याऽङ्कैः सह सादृश्यं स्यात्; यथा-इदमुदाहरणमत्र ज्ञेयम् कस्यचिद् विंशोत्तरी राहुदशा-भोग्यं ५।७।२०।७।४८ वर्त्तते, राहुदशाभुक्तञ्च १२ ४६।५२ १२ इति वर्त्तते, स्पष्टसूर्य्यश्च १।३ २३।२१। इति, अस्य न्यासो विंशोत्तर्यां स्पष्टसूर्यसङ्कलने कृते इत्थम्भवेत्—

| | राहु | बृ | श |
|---|---|---|---|
| भोग्य | ५<br>७<br>२०<br>७<br>४८ | १६<br>००<br>००<br>००<br>०० | १९<br>००<br>००<br>००<br>०० |
| स्पष्टसूर्यः | १<br>३<br>२३<br>२१ | ८<br>२३<br>३१<br>९ | ८<br>२३<br>३१<br>९ |
| संवत् | १९५८ | १९७४ | १९९३ |

अधुनाऽस्या राहोरारम्भिकदशाया अन्तर्दशा लेखनीया भवेत्; यदि सा तथैव लिख्येत नियतवर्षबद्धा; तर्हि आदौ १।३।२३।२१ इति स्पष्टसूर्य्येण मासदिनानां सङ्कलने, अन्तेऽपि १।३ २३।२१ आगमिष्यति, न तु मूलदशाऽनुसारम्—८ २३।३१।९ एत एव चाऽङ्का इष्टाः; तेनाऽत्रेयमेव जिज्ञासा; तेषां भुक्तवर्षाणां १२।४।९।५२।१२ कया दिशा अन्तर्दशावर्षादिभ्यो विघटनं क्रियेत; येन मूलदशाऽनुसारं स्पष्ट सूर्य्यसङ्कलनेन, साम्यं स्यात्; किमारम्भतस्तावत्पर्य्यन्तमन्तर्दशावर्षाद्यङ्का विघट्येन, यावदस्मदीयभुक्तवर्षाणि पूर्णानि न स्युः; अथवा प्रत्येकग्रहे भिन्नभिन्नवर्षविघटनव्यवस्था । कृपयाऽस्मदर्शितमुदाहरणमनुसृत्य राहोरन्तर्दशा तदधस्तात् स्पष्टसूर्य्यसङ्कलनञ्च दर्शयितव्यम् । उत्तरं कृपया 'सूर्य्योदये' प्रहेयम् । लेखप्रकारोऽत्यन्तसुगमः स्यात्, कृतश्च तारमत्कृता भविष्यतीति शम् ।

# श्रीमत्सार्वभौम-चक्रवर्त्ति-सम्राट् श्री १०८ श्रीपञ्चम-जार्ज-महोदय-रजत-जयन्ती-महोत्सवाभिनन्दनपत्रम् ।

जयतु जयतु सम्राट् पञ्चमो जार्ज-नामा,
जयतु जयतु नित्यं तस्य पत्नी च पुत्रः ।
जयतु जयतु शश्वद्भारतं तत्सुगुप्तं,
जयतु जयतु तेन त्रात एवार्य्य-धर्म्मः ॥ १ ॥
सर्वेषां निज-धर्म-कर्म-मतिदो विद्याप्रचारोत्सुको,
लोकोद्धारपरो विशेषसुखदो निःशेषशान्तिप्रियः ।
इङ्गलेन्डेश्वरसार्वभौमनृपतिः श्रीभारताधीश्वरः,
श्रीमान् पञ्चमजार्ज ईशकृपया जीव्याच्चिरं सौख्यभाक् ॥ २ ॥
दीनान् रक्षयितुं नृपान्नमयितुं पातुं धरां दुर्धराम्,
दुष्टान् मर्दयितुं बलेन सुजनान् त्रातुं दृढपक्रमः ।
साधून् सेवयितुं प्रजाः सुखयितुं नित्यं समुत्कण्ठितः,
सम्राट् पञ्चमजार्ज ईशकृपया जीव्याच्चिरं सौख्यभाक् ॥ ३ ॥
संपत्तिः प्रथतां यशः प्रसरतां धर्मः सदा वर्द्धताम्,
कल्याणं भवतात् प्रजा प्रणमताच्छत्रुक्षयो जायताम् ।
राज्यं विस्तृणुयाच्च प्रतिदिनं लक्ष्मीपतिः सर्वदा,
सम्राट् पञ्चमजार्ज ! जीव शतशो वर्षाणि रक्षन् प्रजाः ॥ ४ ॥
यद्यप्यनेकेऽत्र पुरा बभूवू राजाधिराजा बहुसुप्रसिद्धाः,
परन्न कोऽप्याप तुलां तवैव यतस्त्वयाऽकारि जगद्विचित्रम् ॥ ५ ॥
विद्यालयाश्चापि चिकित्सकालयाः स्वच्छाश्च मार्गाः सुदृढाः सुसेतवः ।
कोशाश्च पत्रालिगृहाणि मुद्रणं रैलं विमानं च तडित् प्रचारणम् ॥६॥
इत्यादि यद्यन्नहि चिन्तितं पुरा, संभावितं नैव कदापि केनचित् ।
राज्ये तवैवाद्य सुचारु रूपतः, प्रत्यक्षतामेति तदेव सर्वतः ॥ ७ ॥
तवैव राज्यं बहुधा समुन्नतिं, संप्राप्य सर्वं विविधां समन्ततः ।
कलासु विद्यासु विलक्षणक्षणाः, सुशान्ति निर्भीति सुखानि भुञ्जते ॥८॥
सम्राण् ! महाराज ! समान दृष्टे !, वैषम्यभावो नहि ते सुनीतौ ।
त्वत्सन्निधौ हिन्दु-महम्मदीय-क्रिश्चिन्नराणान्नहि कोऽपि भेदः ॥९॥
भूकम्प-दुर्भिक्ष-जलप्रवाहैः, प्रजाविपत्तौ करुणार्द्रचित्ततः ।
प्रदाय साहाय्यमुदारत स्वया, दयालुताऽदर्शि निजस्य चेतसः ॥१०॥

अतो वयं श्रीपरमात्मनोऽनिशम्, समर्थनाम् स्वच्छहृदा प्रकुर्महे ।
प्रभुत्व-संतान-सुराज्य-सम्पदाम्, तवायुषश्चापि विवृद्धये सदा ॥११॥
सम्राट्! व्यतीता किल पंचविंशतिः, संवत्सराणान्तव राज्यकालतः ।
तस्माद्वयं रौप्यजयन्तिकोत्सवे, वर्द्धापनन्ते वितराम आत्मना ॥१२॥
प्राप्तो यथा रौप्यजयन्तिकोत्सवो, भूयोऽपि भूयाद्भगवत्प्रसादतः ।
इत्थं हि सौवर्णजयन्तिकोत्सवः, पुनश्च हीराख्यजयन्तिकोत्सवः॥१३॥
क्रीडन्ति गायन्ति हसन्ति मोदिता, नराश्च नार्य्यः शिशवश्च वृद्धाः ।
ग्रामेष्वरण्येषु पुरेषु सर्वतः, सम्राड् भवद्रौप्यजयन्तिकोत्सवे ॥१४॥
सर्वत्र दीपावलिरग्निखेलनम्, दीनोपकाराय सहायतार्पणम् ।
प्रसन्नचित्ताभिरनेकधापि ते, प्रजाभिरद्य क्रियते महोत्सवः ॥ १५ ॥
सम्राट् रौप्यजयन्ती, समावहन्ती प्रजाजनानन्दम् ।
भगवत्कृपया स्याताम्, स्वर्ण-हीरक-जयंत्यौ चापि ॥ १६ ॥
बुद्धौ लाभे कीर्तौ राज्ये, मत्यां स्याच्चे शश्वद् वृद्धिः ।
एषामाद्यैर्वर्णैर्नाम्नो भक्त्या सन्त्वाशीर्वादा मे ॥ १७ ॥

( श्रीकृष्णगढ़-राज्यपंडित-पंडितराज-महामहाध्यापक-महामान्य-महामहोपदेशक पञ्चाम्बुभूषण सांख्यरत्न विद्यानिधि विद्यासागर श्रीबुलकीरामशास्त्रिणः )

---

## सनातनधर्म्मस्य महत्ता

### अनुवादकः—यशोदानन्दनशर्म्मा शास्त्री जयतलः

( हरूच्छज्जा—मुलतान )

संसारेऽस्मिन् यावन्तो धर्म्माः प्रचलिताः सन्ति, सनातनधर्म्म एव तेषु प्राचीनतमः । अस्य नाम्नैव स्पष्टं सिद्ध्यति, यत्-सनातनः 'सदातनः' अर्थात् सदैव स्थितिमान् । धर्म्मेऽस्मिन् शतशो नैव प्रत्युत सहस्रश आक्रमणानि सम्भूतानि, सम्भवन्ति च । आधुनिक सभ्यताया अन्धभक्तास्तु धर्म्ममिमं 'रुड़ातन' इति नाम्नोच्चार्य्य हास्यं राचने आत्मगौरवं मन्यन्ते, अहो! आश्चर्यं सुमतौ (?) तेषाम् ।

ईदृगवस्थायां धर्म्मोऽयमद्यापि जीवति, अस्य सत्ता च विश्वव्यापिनी वर्तते, एतदेवाऽस्य सत्यतायाः प्रत्यक्षं प्रमाणम् । सम्प्राप्ते समये विश्वमिदं स्वयमेव धर्ममिमं मानवसमाजरक्षायै सर्वथोपयोगिनम् श्रेयस्करञ्चाऽऽमनिष्यति । अद्य वयं सनातनधर्म्मस्य काँश्चन प्रसिद्ध-सिद्धान्तान्—येऽपठित-

जनसमुदायस्यापि नित्यमेव व्यवहारयोग्याः सन्ति, यांश्च विपक्षिणो वृथाऽवगच्छन्ति, पाठकानां समक्षम् वैज्ञानिकरीत्या विविच्योपस्थापयामः ।

## गृहे तुलसीवृक्षपूजनम् ।

आधुनिक-पाश्चात्यवैद्य-महोदयैरेतत्स्पष्टीकृतम्, यद्वृक्षेऽस्मिन् 'मैलेरियो' द्भूत-घातक-कीटानां नाशनस्याद्भुता शक्तिर्विद्यते । यस्मिन् गृहे 'तुलसी' वृक्षस्य स्थितिस्तत्र स्त्रीणां प्रसवकाले नाऽल्पापि वेदना भवति, न च प्रसवरोगस्योत्पत्तिर्जायते । एतदेव दृग्गोचरीकृत्याऽस्मत्पूर्व्वजै र्धर्ममन्दिरेषु भगवच्चरणामृते प्रसादस्वरूपेण तुलसीदलं निवेशितम् । सर्वत्र गृहेषु च मध्येऽङ्गणम् तुलसीवृक्षरोपणञ्च विहितम ।

## अश्वत्थवृक्षः ।

अश्वत्थसंयुक्ते गृहे निवासो निषिद्धः, यतो ग्रीष्मादीनां प्रज्वलनात्तस्य ( वृक्षस्य ) शाखाः प्रतपन्ति, ततश्चेद्वृक्षो विषवान् वायुर्निर्यांति, येन शतशो मानवाः प्रणश्यन्ति । अत एवार्य्यजातौ अश्वत्थाय जलदानं धर्मे निवेशितम् । अश्वत्थपूजनात्पुत्रोत्पत्तिर्जायते, इत्येवार्य्यमहिलानां विश्वासः । सत्यमेतन्नतु मिथ्या—आयुर्वैदिकदृष्ट्या वेदमन्त्राणामवलोकनेन प्रतीयते, यदश्वत्थे वन्ध्यात्वाऽपसारणस्य पुत्रोत्पादनस्य च विलक्षणशक्तिर्विद्यते । तत्फलभक्षणेन वन्ध्या पुत्रवती जायते । तस्य काष्ठनिर्मितपात्रेणाजादुग्धं पिबंत्याश्च सन्तानप्राप्तिः । तर्हि यदि जनतैनं —'पुत्रदाता' इति नाम्नोच्चारयेत्तत्र किमाश्चर्य्यम् ।

## शङ्खध्वनिः ।

हिन्दूनां धर्म्ममन्दिरेषु प्रत्युत्सवं प्रतिपर्व्व तथा धर्म्मकथासु च शङ्खध्वनिः क्रियते । 'प्रोफेसर जगदीशचन्द्रबोस' महोदयेन निजप्रयोगैः साधितम्, यद्—यावदन्तं शंखध्वनिः प्रसरति, तावत्पर्य्यन्तं रोगपरमाणवः स्वयमेव नश्यन्ति, पवनश्च विशुद्ध्यति ।

## काष्टपादुकापरिधानम् ।

पादुकापरिधानम् सनातने वर्त्मनि पवित्रं मन्यते, नैतद्विज्ञानरहितम्, यतोहि—पादुकास्थितमनुष्यस्योपरि विद्युत् पतति, स्वयं स्पर्शनादपि हानिर्न जायते ।

## कुशासनम् मृगव्याघ्रचर्मणी च ।

कुशासने आसनात् कौशेयवस्त्रधारणाच्च विद्युत्प्रभावो नाक्रामति । अद्याऽपि विद्युत्प्रवाहं रोद्धुं तन्त्यः कौशेयतन्तुभिराच्छाद्यन्ते । रक्षाबन्धनकाले पाणौ कौशेयनिर्मितरक्षाया बन्धनमेतदर्थमेव । मृगचर्मणि व्याघ्रचर्मणि च स्थितिरपि शुद्धिदा । मृगचर्मण्युपवेशनाद् 'अर्शो' (बवासीर) भगन्दरे' त्यादयो रोगा न भवन्ति, यदि स्युस्तर्हि नश्यन्ति । व्याघ्र-चर्मणि च सर्पादयो विषवन्तः प्राणिनो नारोहन्ति, अतो व्याघ्रचर्मण्युपविश्य हरिभजने हिंस्रकादिभिः संव्याप्ते स्थाने भयं विलीयते ।

## कट्वीतुम्बिकाकमण्डलुश्च ।

साधूनां सविधे तुम्बिका कमण्डलुश्च भवतः, यौ च पवित्रौ मन्येते । तयोरीदृशी विचित्रा शक्तिर्यया सर्वस्यापि विषस्य नाशो जायते ।

## रात्रौ निद्रायां शिरोभागे जलस्थापनम् ।

केचन मानवा ✕ प्रायशो रोगिणश्च रात्रौ दुःस्वप्नानवलोकयन्ति, यदि किञ्चित्पात्रं वारिणा परिपूर्य्य पश्चात्स्थाप्येत, तर्हि दुःस्वप्नानामुन्मूलनं जायते, निद्राप्यतिसुखेनायातीति सुगमोपायो दुःस्वप्ननाशनाय ।

## वस्त्राऽपूतं गोःक्षीरं न पातव्यम् ।

गोर्लोम्न उदरे गमनान्महापापं स्पृशतीत्यैवार्य्याणां विश्वासः । सत्यम्—कस्याऽपि पशोर्वालस्योदरे यानाद्धानिर्जायते, मुख्यतो गोर्लोम्ना तु 'राजयक्ष्मा' दयो रोगाः सम्भवन्ति ।

## भूमौ पादप्रहरणं पापमस्ति ।

जननीव पृथ्वी, अत ✕ पादप्रहारो न कार्य्य इति हिन्दुधर्म्ममानिनो मन्यन्ते । अस्याऽयं भावो यद्—भूमौ पादाघातात् पादतलप्रदेशेषु प्रहारो जायते, तेन च 'राजयक्ष्मा' दय उत्पद्यन्ते ।

## शिशूनां कण्ठे रक्षादिपरिधापनम् ।

अधुना दन्तनिर्गमनकाले कष्टापसारणार्थं बालकानां विद्युन्निर्मितयन्त्राणि परिधाप्यन्ते, यत्र च व्यर्थव्ययस्याऽधिकताऽस्ति । नैतत्किञ्चिदन्यद् वस्तु, परन्तु प्राचीनरक्षादीनां रूपाऽन्तरमेव । अन्नत्याः स्त्रियो वराटिकाः सिंहव्याघ्रादीनां नखानि च रजतस्वर्णादिभिराच्छाद्य बालान् परिधापयन्ति । 'वच' नामकौषधि ✕ पीतसर्षपाश्च बालानां गले आरोप्यन्तेस्म । पीतसर्षपादिभिस्तु

दन्ताः शैघ्र्येण निस्सरन्तिस्म, 'बच' नामकौषधिधारणाच्च बालको बुद्धिमान् जायतेस्म । परमाश्चर्य्यं यन्नवीनसभ्यतामाश्रित्याऽस्माभि र्गृहविज्ञानं विस्मृतम् ।

## कूपेषु घृतदीपप्रज्वालनम् ।

पुरा कूपनिर्मितौ सत्यामीदृशस्य स्थानस्य निर्मितिर्जायतेस्म, यत्र हिन्दवो महाश्रद्धया दीपकं प्रज्वलयन्तिस्म तत्रैतत्कारणम्—यद् बहुधा कूपेषु मनुष्याणां प्राणघातको विषाक्तो वायुर्भवति, घृतवर्तिकाया ज्वालनाच्च नश्यति । यदि कूपे ईदृशो वायुरुत्पद्येत, तत्र दीपज्वलनमसम्भवम् । दीपस्य निर्वाणाच्च वयं तत्कालमेव सावधाना भविष्यामः ।

प्रियपाठकवृन्द ! एतदतिरिक्तं सनातनधर्मस्य ईदृशा एवाऽनेके गूढरा-द्धान्ता अन्धतमसे सन्ति, येषां मार्मिकतायां वयं दृष्टिं न दद्मः । परं सनातन-धर्मस्य सर्वं एव सिद्धान्ता विज्ञानपूर्णरहस्यवन्तो लाभप्रदाश्चेत्यत्र विचारणया न कस्याऽपि वैमत्यं भवितुमर्हति । सति सम्भवे पुनरन्येषां सिद्धान्तानां रहस्योद्भावनं कर्तास्मः । इति ।

---

## श्री जार्जरौप्यमहोत्सवेऽभिनन्दनम् ।

सम्राट्-पञ्चम-जार्जभूपतिमणे र्दीर्घायुषः प्राप्तये
लोके रौप्यमहोत्सवे प्रचलिते कश्चिद् द्विजः काशिकः ।
श्रीमत्कृष्णगढाख्यपत्तनवरं प्राप्तः क्षितीशेच्छया
प्रेम्णा तत्सविधे वसन्नथ महे जार्जं युनक्त्याशिषा ॥ १ ॥
मेरीनाम्न्या स्वीयपत्न्या समेतः सम्राट् श्रीमान् पञ्चमो जार्जराजः ।
कीर्त्या युक्तः शास्तु राज्यं, तदीयं चायुः पूर्णं हायनानां शतं स्यात ॥ २ ॥
सर्वे सौख्ययुताः स्वकर्मनिरताः सद्धर्ममार्गे स्थिताः
पोष्याः पोषकमार्गगामिन इहाधीशाः सुभृत्यान्विताः ।
नो दस्यूद्भवजं भयं न च वने हिंस्रात्तथा श्वापदाद्
भूमिं शासति चक्रवर्तिनि धराधीशेऽत्र जार्जाभिधे ॥ ३ ॥
दूरस्थेन तडिद्वशाद् द्रुततरं विज्ञायते हृद्गतं
स्वाभीष्टान् विषयांश्च धूम्रशकटी नेतुं समर्था द्रुतम् ।
अन्यच्चात्र किमुच्यते दिविषदां तद्व्योमयानं हस-
त्युच्चैर्व्योमगमा विमानपटली श्रीमत्प्रकाशे स्थिता ॥ ४ ॥

ऐकाधिपत्यं जलधौ यदीयं सर्वैः पुनः स्वीक्रियते विशंकम् ।
पृथुप्रमाणैः सुदृढैश्च पोतैः पूर्वोक्तमेतत्प्रकटीकृतं हि ॥ ५ ॥
स्वाभीष्टं वसुधातलं जिगमिषूंल्लोकान् निजेच्छावशाद्
धूमाद्या शकटी सदा परवशा नेतुं न शक्ता भवेत् ।
तस्मात् तत्समगाः कनिष्ठभगिनीरूपास्तदीयाः कृता
गन्त्र्यो मृत्तरसंज्ञिका धनवतां द्वारेषु राजन्ति याः ॥ ६ ॥
संत्यन्ये बहुवस्तु मध्यमधनास्तेषां कृते चक्रगं
यानं तत्सहकीलसंज्ञकमदश्चाकारि लक्षाधिकम् ।
आबालस्थविरं सुखेन मनुजास्तद्यानवर्ये स्थिताः
सद्राजाध्वनि ते सदश्वगमनप्रस्पर्धिनो यान्त्यहो ॥ ७ ॥
विद्युच्छक्तिः प्रकृतिचपला भानुभास्वत्प्रकाशा
शक्तौ लोकातिगगुणगणा साप्यधीनाऽभवत्तं ।
लोके कार्यं कठिनतरमप्येतया लीलया द्राक्
स्वेच्छापूर्यं भवति, किमतोऽन्यद्वयं वक्तुमीशाः ॥ ८ ॥
लोकानां परिरक्षणाय बहवः श्रेष्ठा श्चिकित्सालया
राज्ञाऽनेन कृतास्तथा बहुविधाः पाठालयाः स्थापिताः ।
न्यायार्थं किल तत्र तत्र विहिता न्यायालया भूरिशो
यस्मिन् शासति भूतलं किमपि नो हीनं पुनर्दृश्यते ॥ ९ ॥
भूयांसः शरदिन्दुकुन्दयशसः शूराः प्रजावल्लभाः
सद्धर्मानुसृतिव्रताः कृतधियो भूमौ हि भूमीश्वराः ।
नैकस्मिन्नपि दृश्यते जगति तत्तेजो यतो बालको-
ऽप्यासेतोस्तुहिनाचलं जिगमिषु र्याति स्वयं निर्भयः ॥ १० ॥
इत्थं बहूनि किल नैकजनोपकारकार्याणि तस्य भुवि सन्ति महाद्भुतानि ।
एकैकशो गणयितुं मम नास्ति शक्तिर्मुख्यानि तेषु कथितानि मयेह तस्मात् ॥११॥
श्रीनाथशास्त्री वेतालो विनायकतनूद्भवः ।
जार्जरौप्योत्सवे चैतत् कृतवानभिनन्दनम् ॥ १२ ॥

—ज्योतिर्वित् श्रीनाथशास्त्री वेतालः ।

# काशी

ले० श्री० पं० अनन्तराम वेतालः ( साहित्याचार्यः )

श्रीसम्पत्प्रगुणा पुरी पशुपतेर्वर्वर्ति सर्वाधिका
शीर्णाघौघतया च यत्र बहवः सिद्धिं ययू रंहसा ।
विख्याताऽतितरां गिरामविषयः प्रोन्मूल्य पापं पुरा
जन्मोपार्जितमाश्रितस्य चरमे मोक्षाय या कल्पते ॥ १ ॥

काम्यानेकगुणा शिवस्य वसतिर्धन्या ध्रुवं काशिका
सा संसारमहासरस्वति परं पोतायिता सर्वदा ।
भूयोभूतिनिकेतनं विजयते, श्वःश्रेयसावाप्तये
कस्मान्नेयमनल्पमङ्गलमयी विद्वद्भिः स्तूयताम् ॥ २ ॥

अत्र वासः फलं नूनं तपसां दुर्गमो गिराम् ।
महत्तमोऽस्यास्तु भवे तारश्रीर्महिमाऽमलः ॥ ३ ॥

( अत्र प्रथमे पद्ये प्रतिचरणं प्रथमचरमाक्षरयोर्योगात् 'श्रीकाशी सा विराजते' इति लभ्यते । द्वितीये पद्ये प्रतिपादं प्रथमसप्तमचरमाक्षराणां मेलनेन 'काशिका सा सदा भूतये कल्पताम्' इति लभ्यते । तृतीये च पद्ये प्रतिचरणं प्रथमान्तिमयोरक्षरयोः संमेलनेन 'अनन्तरामवेतालः' इति कवेर्नामोपलभ्यते । )

---

## गंगास्तुतिः

( ले० पण्डित शशिमोहन तर्क शास्त्री )

गंगेव जलरूपेण मंत्ररूपेण मातृका ।
स्वर्गं मर्त्यं च पातालं पुनाति भुवनत्रयम् ॥१॥
त्रिवेदयां गुप्तरूपा सा मन्त्ररूपेण भारते ।
सर्वाम्नायैः सदाराध्या याऽदृश्या दृश्यतां गता ॥२॥
रसरूपा तु या नित्या स्वाद्यते रसनेन हि ।
रसने क्वचिद्व्यक्ता व्यक्ता सा वर्णरूपिणी ॥३॥
यालंकृताक्षरैरम्या वाग्मयीति च या ध्रुवा ।

रसमयी रसास्वादे कविकल्पद्रुमस्थिता ॥४॥
प्रणवो व्याहृति र्वाक् च मातृका मन्त्ररूपिणी ।
वेदमाता च गायत्री सा देवी नः सदावतु ॥५॥
या देवी यन्त्ररूपेण मन्त्ररूपेण च स्थिता ।
आदि शान्ताष्टवर्गेण भारती भातु भारते ॥६॥
सरोरुहेषु षट्स्वन्तर्भागेनावस्थिता हि या ।
मुखपद्मेषु सम्यक् सा वाग्देवी नः प्रकाशताम् ॥७॥
मातृकामन्त्ररूपेण मुद्रायाः सहकारिणी ।
मूलाधारादिपद्मेषु मुदमातनुतां स्थिरा ॥८॥
वेदेन मंत्रेण सदैव स्तौत्, स्मृत्या पुराणैरितिहासकाव्यैः ।
वाग्भिःकलाभिर्ननु या हि देवी, सा देवता किं न सदैव सेव्या ॥९॥
शास्त्रैश्च शस्त्रै र्ननु मातृका स्वैः, स्नेहैः सदास्मान परिपालयन्ती,
आनन्दयन्ती खलु नृत्यगीतैः सा भारती रक्षतु भारतीयान ॥१०॥
नृत्येन गीत्या कलयान्यया तन्मान' यशः काम्यफलं च सर्वम्,
अस्माभिराप्तं च यदीयदानम्, तस्यै नताः स्मो वयमेव विद्यै॥११॥
उपास्या सा सर्वैः सकलसरणिः सर्वसुषमा,
सुरैरन्यैर्जीवैः परमपरमा पूतहृदयैः ।
गिरा वर्णैः सेव्या वरदवरदा विघ्नबहुलैः,
कथं कारं भास्वत् किरणतुलिता शेषधवला ॥१२॥
सहस्रारं महापद्मम् रहस्या याति याति षट् ।
स्वतो मूलादतिक्रम्य तीर्थवर्य्या सरस्वती ॥१३॥
सरोरुहेषु षट्स्वन्ता रसिका रहसि स्थिता,
स्वप्रकाशमयी सूक्ष्मा तीर्थलस्या सरस्वती ॥१४॥
सर्वेशं प्रीणयेद्या याहि रसाम्भोधिपरिप्लुता ।
स्वरताललयैं रागै रागिणीभिश्च भारती ॥१५॥
सर्वेशं प्रीणयन्ती या रसै रसमयं सदा ।
सपत्नी द्वेषतोऽवश्या तीर्थं वेण्यां पलायिता ॥१६॥
सकलाभिःकलाभिर्वाक् रमानाथं स्वकं पतिम् ।
रमेवाप्यायितुं नालं तीर्थराजमतः श्रिता ॥१७॥
अक्षयहैस्त्रिलोकों याप्युक्तरेविह सर्वदा ।
मनसापि स्मृता श्रिया श्रेयमोंकाररूपिणी ॥१८॥

अमृतं या परं दद्याद् उभयोर्लोकयोश्चिरम् ।
मर्त्येभ्यो महनीयाऽसौ सेयमोंकाररूपिणी ॥ १९ ॥
विद्यावपुर्विज्ञजनाभिवंद्याऽविद्याकृतान् दोषगणान् विनाश्य ।
विद्याभिरासाद्य धनं च मानं या विद्यया ब्रह्मसुखं विधत्ते ॥ २० ॥
तस्यै नताः स्मोऽद्य वयं कृतज्ञा भक्त्येव दंडाः पतिता विनम्राः ।
शिरोवलुंठाश्च सगद्गदा ये सबाष्पनेत्रा न कथं क्षमार्हाः ॥ २१ ॥
स्वाकारपरिहारेण यदेकारपरिग्रहं ।
वकारः कुरुते सत्यं णकारेण विपर्ययात् ॥ २२ ॥
वाणी भवति वीणापि वस्तुतस्तां दधत्यपि ।
प्रेम्णा चात्मविनिर्गासा इति नित्यं दधौ शुभा ॥ २३ ॥
शुक्ला सदा वा गुणतो भवेद्वा या स्वभावतः शुक्लजनेषु तुष्टा ।
संत्यज्य कृष्णानिति भारतीयान् विराजते सा खलु तत्र तत्र ॥ २४ ॥
प्रीतापि पीता मनुजेषु तेषु रत्नेन हेम्ना रजतेन गेहम् ।
पूर्णं तु तेषां सुखिनस्त एव कलासु विद्यासु च कर्मठास्ते ॥ २५ ॥
माघे शुक्ले च पंचम्यां वर्षे वर्षे च भारते ।
आयांति भारती देवी श्रिया मात्रा सहैव सा ॥ २६ ॥
पद्मासना हि कल्याणी दशभिश्चोपचारकैः ।
सम्पूज्या विधिभिस्तत्र दीनैर्हीनैर्वरार्थिभिः ॥ २७ ॥
नेत्रनीरैश्च पाद्यैस्तैः स्नानीयैश्च तथाविधैः ।
तीर्थोदकैश्च तैस्तैर्वा स्नपनीया तु मानसैः ॥ २८ ॥
अर्घ्यैस्त्रितापपाशाद्यैः दुर्वात्रिदलतण्डुलैः ।
हविषा मधुना दध्ना वाग्मनोभिः सुसंस्कृतैः ॥ २९ ॥
विनयैश्चन्दनैर्भक्ति-कुसुमैर्धूपदीपकैः ।
श्रद्धाऽज्ञानमयैरेव नैवेद्यैर्मिलितैश्च तैः ॥ ३० ॥
पानीयाचमनैरेव सहस्रारस्रुतामृतैः ।
गांगैर्यामुनकैस्तोयैरथ सारस्वतैरपि ॥ ३१ ॥
नैवेद्यान्नैर्जंगद्भतुर्गंध्यैर्नानाविधैरपि ।
दिव्यैस्तैस्तैरसैः स्निग्धैः नैवेद्यैर्मानसैश्च तैः ॥ ३२ ॥
विसर्गभीतितम्बूलं विसर्जनं बिना कृतैः ।
त्वयैवागता यस्मात् श्रिया वाणी स्थिरा भव ।
मातरौ प्रार्थयित्वैवं दंडवत्प्रणमेद्भुवि ॥ ३३ ॥

# पूर्वानुवृत्तम्

( नैषधं विद्वदौषधम् )

तार्किकत्वे त्वस्य "तर्केष्वप्यसमश्रमस्य, धर्षितपरास्तर्केषु यस्योक्तयः" इति स्वयमुद्घोषितवतः स्वाभाविकं स्वारस्यं काव्यस्यास्यानुशीलनशालिनां न परोक्षम् ।

अश्रुपाते विरहवेदनाविवर्णवदनाया विदर्भसुभ्रो विचित्रतयाऽऽधो वर्णितोऽस्ति ।

उदयतिस्म तदद्भुतमालिभिर्धरणिभृद्भुवि तत्र विमृश्य यत् ।
अनुमितोऽपि च बाष्पनिरीक्षणाद् व्यभिचचार न तापकरोऽनलः ॥

अस्माभिः कैश्चिदप्युश्रुतचरं कविनाऽमुनाऽनुभूतं ससाधनं पश्यन्तु वैचित्र्यवीक्षणविचक्षणाः कुलालम्—

रोमावली-दण्ड-नितम्ब-चक्रे गुणश्च लावण्यजलञ्च बाला ।
तारुण्यमूर्तेः कुचकुम्भकर्तुर्बिभर्ति शङ्के सहकारि चक्रम् ॥

एवमेव द्वितीयस्य द्वात्रिंशं चतुर्थस्य चतुर्दशं तृतीयस्य सप्तदशमपि निरुक्त-विषयस्य द्योतकम् ।

राजा स यज्वा विबुधव्रजत्रा कृत्वाध्वराज्योपमयेव राज्यम् ।
भुङ्क्तेश्रित श्रोत्रियसात्कृतश्रीः पूर्वन्त्वहो शेषमशेषमन्त्यम् ॥
राज्ञौ द्विजानामिह राजदन्ताः संबिभ्रति श्रोत्रियविभ्रमं यत् ।
उद्वेगरागादिमृजावदाता श्वत्वार एते तदवैमि मुक्ताः ॥
विश्वरूप-कलनादुपपन्नं तस्य जैमिनिमुनित्वमुदीये ।
विग्रहं मखभुजामसहिष्णु र्व्यर्थतां मदशनिः स निनाय ॥
दानपात्रमधमर्णमिहैकग्राहि कोटिगुणितं दिवि दायि ।
साधुरेति सुकृतैर्यदि कर्तुम् पारलौकिककुसीदमसीदत् ॥
केशान्धकारादथ दृश्यभालस्थलार्धचन्द्रा स्फुटमष्टमीयम् ।
एनां यदासाद्य जगज्जयाय मनोभुवा सिद्धिरसाधि साधु ॥
अरुन्धती-कामपुरन्ध्रिलक्ष्मीजम्भद्विषद्दारनवाम्बिकानाम् ।
चतुर्दशीयं तदिहोचितैव गुल्फद्वयाप्ता यदुदूर्यसिद्धिः ॥
न वर्त्तसे मन्मथनाटिका कथम् प्रकाशरोमावलिसूत्रधारिणी ।
तथाङ्गहारे रुचिमेति नायकः शिखामणिश्च द्विजराड् विदूषकः ॥

तत्र सौधसुरभूधरे तयोरोचिरासुरथ कामकेलयः ।
ये महाकविभिरप्यवीक्षिताः पांसुलाभिरपि ये न शिक्षिताः ॥
अधिगत्य जगत्यधीश्वरादथ मुक्तिं पुरुषोत्तमात्ततः ।
वचसामपि गोचरो न यः स तमानन्दमविन्दत द्विजः ॥

साम्यं प्रयच्छति न पक्षचतुष्टये तां तल्लाभशंसिनि न पञ्चमकोटिमात्रे ।
श्रद्धां दधे निषधराड् विमतौ मतानामद्वैततत्त्व इव सत्यतरेऽपि लोकः ॥

स्वश्च ब्रह्म च संसारे मुक्तौ तु ब्रह्म केवलम् ।
इति स्वोच्छित्तिमुक्त्युक्तिवैदग्धी वेदवादिनाम् ॥
उभयी प्रकृतिः कामे सज्जेदिति मुनेर्मनः ।
अपवर्गे तृतीयेति भणतः पाणिनेरपि ॥
कः शमः क्रियतां प्राज्ञाः प्रियाप्रीतौ परिश्रमः ।
भस्मीभूतस्य देहस्य पुनरावर्तनं कुतः ॥

इत्यादीनि पद्यान्यस्यानवद्यं वैदुष्यं नास्तिकास्तिकसिद्धान्तेष्वप्रतिहतया साधयन्ति ।

जगत्त्रयीपण्डितमण्डितैषा सभा न भूता च न भाविनी च ।
राज्ञां गुणज्ञापनकैतवेन संख्यावतः श्रावय वाङ्मुखानि ॥

इति श्रद्धालु-सङ्कल्पित-कल्पना-कल्पद्रुमस्य भगवतो भक्तवत्सलस्य विष्णोरादेशं सादरं स्वीकृत्य समागतायाः प्रतिभातिक्रान्तविधिवैभवानां कवीनामेकाश्रयायाः सरस्वत्याः स्वरूपनिरूपणम् शास्त्रज्ञः स्वयमेव दशमे सर्गे कविकृतम् पिरूपणीयम् । अन्तःकरणेन प्रशंसनीयं स्वयमेव तस्य वैदग्ध्यं स्फुटीभविष्यति ।

उपर्युक्ते विषये स्वयमेव कविर्निर्दिशति

तस्यागादयमष्टमः कविकुलादृष्टाध्वपान्थे महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥
एकामत्यजतो नवार्थघटनामेकाग्नविंशो महा-
काव्ये चारुणि नैषधीय चरिते सर्गो निसर्गोज्ज्वलः ॥
अन्याक्षुण्णरसप्रमेयभणितौ विंशस्तदीये महा-
काव्ये चारुणि नैषधीयचरिते सर्गो निसर्गोज्ज्वलः ॥
ताम्बूलद्वयमासनं च लभते यः कान्यकुब्जेश्वरा-
द्यः साक्षात्कुरुते समाधिषु परम् ब्रह्म प्रमोदार्णवं ॥

यत्काव्यं मधुवर्षि धर्षितपरास्तर्केषु यस्योक्तयः ।
श्रीश्रीहर्षकवेः कृतिः कृतिमुदे तस्याभ्युदीयादियम् ॥

उक्त पद्यार्थे कविर्गर्वं परिहरन् सरस्वतीजाग्रदधिष्ठानकाश्मीरदेशोद्भवानां स्वारस्यमपि प्रमाणयति :—

काश्मीरैर्महिते चतुर्दशतयीं विद्यां विदद्भिर्महा-
काव्ये तद्भुवि नैषधीयचरिते सर्गोऽगमत् षोडशः ॥

निजगुणपरमाणूनां पर्वताकारतया वर्णनं नामात्मश्लाघा, न तु वस्तुस्थितिः। अत एव दशमाध्याये गीतायां स्वविभूतिदिग्दर्शनं जगन्निवासस्य सङ्गच्छते । इत्थमेव च "रूपकस्य कवेराख्यां गोत्राद्यपि सं कीर्तयेत्" इति दृश्यकाव्ये कृतो नियमस्संघटते ।

स्वभावोऽयं कवीनां यत्तैः कृतानां कृतीनां नायकेषु तेषां स्वीया अपि गुणा निसर्गादेव संक्राम्यन्ति । तैर्विहितमन्यवर्णनमपि यथाकथञ्चित्तेषामेव वर्णनं भवति । अनुभववैशिष्ट्यमेव काव्यवैशिष्ट्यमिति स्वीकारात् । अत एव एकमेव नायकमुद्दिश्य समुपक्रान्तेषु काव्येषु मिथस्तारतम्यं लभ्यते ।

अस्य कवेर्नायकस्य वर्णनमित्थमुपलभ्यते—

अमुष्य विद्या रसनाग्रनर्तकी त्रयीव नीताङ्गगुणेन विस्तरम् ।
अगाहताष्टादशतां जिगीषया नवद्वयद्वीपपृथग्जयश्रियाम् ॥
दिगीशवृन्दांशविभूतिरीशिता दिशां स कामप्रसरावरोधिनीम् ।
बभार शास्त्राणि दृशं द्वयाधिकां निजत्रिनेत्रावतरत्वबोधिकाम् ॥

कवयो यस्याश्चरणारविन्दमकरन्दबिन्दुमन्दांशमपि प्राप्य लोके लोकोत्तरतां लब्ध्वाऽजरामरत्वयुक्ताः सन्तो महामहिमभिरपि मान्या मन्यन्ते । तस्याः सकललोकपालयित्र्याः सवित्र्याः सर्वशर्मणां सरस्वत्याः ससारमवतारं स्वयम्वरे शरदिजयोत्स्नाच्छसूक्तिः श्रीहर्षो ललितललिताभिः पदावलीभिश्चित्रयति ।

मध्येसभं सावततार बाला गन्धर्वविद्याधरकण्ठनाला ।
त्रयीमयीभूतवलीविभङ्गा साहित्यनिर्वर्तितदृक्तरङ्गा ॥
या सोमसिद्धान्तमयाननेव शून्यात्मतावादमयोदरेव ।
विज्ञानसामस्त्यमयान्तरेव साकारतासिद्धिमयाखिलेव ॥

चरमपद्यद्वयं वस्तु सुव्यक्तमुपयुञ्जानोऽस्यकाव्यस्य सप्तदशः सर्गः कवेर्बौद्धस्य ज्वलत्प्रमाणम् ।

वादे वैरिणोऽपि यस्य गुणगणान् गणयितुं दर्शितादरा भवेयुः स एव वस्तुतो गुणी गण्यते । चिन्तामणिमन्त्रमहिम्नाधिगतसमस्तवाङ्मयतत्वः कविरयं स्वपितुः पराजयनिकारनिर्यातनार्थमधिक्षिपन् राज्ञः समक्षे वादाय यदाह्वयति प्रतिवादिनम् ।

साहित्ये सुकुमारवस्तुनि दृढन्यायग्रहग्रन्थिले ।
तर्के वा मयि संविधातरि समं लीलायते भारती ॥
शय्या वाऽस्तु मृदूत्तरच्छदवती दर्भाङ्कुरैरास्तृता ।
भूमिर्वा हृदयङ्गमो यदि पतिस्तुल्या रतिर्योषिताम् ॥

तदाधिक्षिप्तो हतप्रतिभश्च प्रतिवादी—

हिंस्राः सन्ति सहस्रशोऽपि विपिने शौण्डीर्यवीर्योद्यता-
स्तस्यैकस्य पुनः स्तुवीमहि महः सिंहस्य विश्वोत्तरम् ॥
केलिः कोलकुलैर्मदो मदकलैः कोलाहलं नाहलैः ।
संहर्षो महिषैश्च यस्य मुमुचे साहङ्कृते हुङ्कृते ॥

एवं कवेरस्य कोपं विलोपयन् सत्सम्मानमभिदधाति ।

खण्डनखण्डखाद्याद्याः सन्दर्भाः, येऽधुनातिगहना मन्यन्ते, येषाञ्चाध्ययनाध्यापनादि हेतोरत एव विरलविरलं समजनि, अनेन कविना भारत्या "मतिमान्द्यं मे स्यादिति" वरमवाप्य सन्दृब्धाः, अतिविस्तृतेऽपि विजगति कवेरस्यैव विषये जनश्रुतिरियं श्रूयते "अनेन मतिमान्द्य वृतमिति" इत्यहो कविमूर्धन्यस्य धन्यता ।

## ( दोषाकरत्वम् षष्ठो विक्षेपः )

नवाविष्कारे ध्रुवमेव काठिन्यम्, नवाविष्कृते च वस्तुनि न तथातिरमणीयता यथा संस्कृते तस्मिन् प्रतीयते । नूतनस्य विषयस्य नूतनेन प्रकारेण वर्णनम् नूनमेव दुःशकम् । सति वा तस्मिन् न तथातिचारुता । अथ चैवं प्रकारेण वर्णित मतिसरलमपि वस्तु न विद्वद्भिरपि प्रकृत्यैवावगन्तुं शक्यते किमुत पुनः प्राकृतैः । परमेनं विषयं ज्ञात्वाप्यज्ञात्वेव प्रायः प्रचलितासु काव्यस्यास्य समालोचनासु दोषैकाश्रयमिदं, कठिनमिदं, मिति स्थितं लभ्यते । परन्तु ते दोषाः किम्वात्र काठिन्यं कथं वा तेषामुद्धारः कस्य कुत्र दुष्टतेत्यादि न किमपि विवेचितमस्ति । नापि कुत्रापि साहित्यग्रन्थेऽयं विषयः सपरिष्कारमायातः । एतेन भूयानेवापरिपक्वबुद्धीनां छात्राणां व्यामोहः । समालोचकानामिदं कर्तव्यं भवति यत्ते यदपि ब्रूयुस्तत्सर्वमपि सप्रमाणं सोदाहरणञ्चेति न केवलं वाक्कथनमात्रेण लेखनीगत्यैव वा समालोचनाकृत्यं कृतं जायते । द्विचतुराः

प्राकृतसंस्कृतभाषयो रस्य समालोचना अवलोकिता विद्यन्ते । यत्र विषये स्वस्यैव सन्देहः, यस्य वा विषयस्य गन्धोऽपि नास्माकं घ्राणगोचरीभूतः । तत्र दुन्दुभिनादोऽकाण्डताण्डवम् ।

अथ च याऽधुनाऽधुनिकानां समालोचकानां लोचनयो र्विप्रतिपत्तिरापतिताऽस्ति सा काव्यमखिलं निर्मायनिर्मातुर्विश्वदृश्वनयनस्य तत्र भवतः श्रीहर्षस्यापि हृदयेऽङ्कुरिता ऽभवत् यतः स स्वयं काव्यान्तश्लोकेषु प्रणिगदति !

यथायूनस्तद्वत्परमरमणीयाऽपि रमणी
कुमाराणामन्तःकरणहरणं नैव कुरुते ।
मदुक्तिश्चेदन्तर्मदयति सुधीभूय सुधियः
किमस्या नाम स्यादरसपुरुषानादरभरैः ॥

विविधास्वपि भाषासु ये नाम सङ्ख्यावन्तोऽभूवन् भविष्यन्ति सन्ति च ते सर्वेऽपि प्रतिभोत्तेजनं तासां तासां स्वेष्टदेवतानामनुग्रहेण वरत्वेन कामयन्ते पुनश्च कामपि कृतिं कुर्वते । तत्रापि च दोषाणां प्रसरः प्राकृतिकः । अत एव काव्य प्रकाशोक्तं काव्यलक्षणं दूषयतो विश्वनाथस्य " एवं काव्यं प्रविरलविषयं निर्विषयं वा स्यातु, सर्वथा निर्दोषस्यैकान्तमसम्भवात्" इत्याद्युक्तिः सङ्गच्छते ।
अथ च ते यदि सप्रयासं काठिन्याय यतेयुस्तर्हि तु वार्तैवान्या ।

अयमस्माकङ्कविः प्रतिभाकाश्यं मभ्यर्थ्य काव्यमेतदकार्षीत् । पुनरपि अस्यातिगहनत्वम् । यद्ययं पूर्वमेव काव्यमरचयिष्यत्तर्हि तु मन्ये, ईदृशाः समालोचका अत्राक्षिनिक्षेपमपि नाकरिष्यन् । "न समर्थस्य दोषः स्यादिति, सर्वे एकपदे एव विस्मरन्ति । कविः स्वयं यद् बुद्ध्या निबध्नाति तदेव सर्वे सदोषतया गृह्णन्ति किमाश्चर्यमतः परम् ।

सविनयमहं तान् प्रार्थयेऽत्रावधानदानार्थम्—
ग्रन्थग्रन्थिरिह क्वचित्क्वचिदपि न्यासि प्रयत्नान्मया
प्राज्ञम्मन्यमना हठेन पठिती मास्मिन् खलः खेलतु ॥
श्रद्धाराद्धगुरुश्लथीकृतदृढग्रन्थिः समासादय-
त्वेतत्काव्यरसोर्मिमज्जनसुखव्यासज्जनं सज्जनः ॥

यस्य भाषाया देशस्य वा साहित्य मेवानतं तस्योन्नतिः सर्वथापि दुष्करा—सांगोपांगं वेदमधीत्य यत्खलु फलं तदेव विफलमिति ब्रोपयन्तः साम्प्रतिका वैयाकरणप्रभृतयः कथङ्कारं देशोद्धारस्य सूत्रपातं विधास्यन्तीति दर्शनीयमेव । एकन्तु कलावेव प्रातःस्मरणीयस्य श्रीमद्धोजभूपते राधिपत्यावसरे भारतमातुर्यदवस्थाऽऽसीत—

विवेकभ्रष्टानां भवति विनिपातः शतमुखः ॥

आस्तांतावदप्रकृतम् । श्रीश्रीहर्षकवेर्विषये एकदुर्गा किम्वदन्ती कर्णाकर्णि समाकर्ण्यते । यस्य कविवर्गाधिष्ठ तृदेवतावतारभूतस्य श्रीमतो-मम्मटस्य स्वस्त्रियः । कृत्वा काव्य यदायं श्रीमतेमम्मटाय स्वमातुलाय समदर्शयत्तदा श्रीमता मातुलेन कथितम् ।

वत्स ! चिरात् प्राप्तोऽसि, साम्प्रतमेव मया ( साहित्य संसारेऽद्वितीयस्य ) स्वकीय ग्रन्थस्य ( दोष विवेचनात्मकः ) सप्तमोल्लासः समाप्तितोऽस्ति । तत्र विषये विविधानि काव्यानि समालोचयतो मम भूयानेव श्रमः समयश्चातियातः तव काव्यमवलोक्य दोषाणां समूहावलोकनम् मेऽद्य जातम् । इति

यद्यपि प्रकाशात्पश्चात् साहित्यदर्पणस्य निर्माणमभूत् तत्रापि नास्य विषयस्य प्रसङ्गोऽप्युपक्रान्तः । प्रत्युतालंकारप्रकरणेऽस्य दर्शनमनुष्ठीयते ।

केवलमेकत्र रसगङ्गाधरे "उपासनामेत्य पितुःस्म रज्यति" इति पद्यमा-श्राय किञ्चिद्विवेचितम् । तथापि पश्यति पित्तोपहतः शशिशुभ्रं शङ्खमपि पीतमित्याद्यभियुक्तोकिवदियं किम्वदन्ती अद्य यावत् प्रसृतैवास्ति । अस्तु ताव दत्रैव विषयेऽधुना विचारः क्रियते "किमवधि किम्वदन्तीयं सत्येति ।

विचारात्प्रागहं तांस्तान् विद्वद्वरान् नमामि येऽत्र विषये समुचितं विचार-ङ्कर्तुं पारयन्ति । येषामग्रे चायं लेखः केवलं हास्यास्पदमेव भविता । एतेन सार्ध मेव तत्काव्यमपि शिरसा सादरं नमामि यस्य विषये "उदिते नैषधे काव्ये क्व माघः क्व च भारविरिति सर्वथा चरितार्था साधूक्तिः प्रचलिताऽस्ति ।

यथामति यथावसरमवञ्च समासादिता दोषा निर्दिश्यन्ते केवलं कोविदानां मनोविनोदाय, निम्ननिर्दिष्टं माघे भगवतः श्रीकृष्णचन्द्रस्योक्तिरप्यनुसृत्यः —

भवद्गिरामवसरप्रदानाय वचांसि नः । पूर्वरङ्गः प्रसंगाय नाटकीयस्य वस्तुनः । इति

## श्रुति दुष्टता

"द्वाणा,च द्वृष्टा च वभाण भैमी" "आचष्टविस्पष्टमभाषमाणाम्" ।

"दूर्वांकुराढ्यां नलकण्ठनाले"

क्रियां प्राहूणेतनीं कृत्वा निषेधन् पाणिना सखीम् ।

कराभ्यांपृष्ठलग्नतस्या न्यमिमीलदृसौदृशावित्यादिषु पद्येषु माधुर्य-गुणस्य शृङ्गारस्य प्राधान्यान्माधुर्यगुणप्रतिकूलवर्णानामुपन्यासाच्च श्रुत्यु-द्वेजकत्वम् ।

मूर्ध्नि वर्गान्त्यगाः स्पर्शा अटवर्गा रणौ लघू ।
अवृत्ति र्मध्यवृत्तिर्वा माधुर्ये घटना स्मृता ॥

अवोचत ततस्तन्वीं निषधानामधीश्वरः । तदपाङ्गचलत्तारझलत्कार वशीकृतः । अत्रवृत्तिसत्ता श्रुतिदोषिणी ।

## च्युत संस्कृतिः

चेष्टा व्यनेशन्नखिलास्तदास्याः ।

अत्र व्यनेशन्निति पदं व्याकरणदुष्टत्वादुष्टम्, यथा वा—

हरिं परित्यज्य नलाभिलाषुका न लज्जसे किं विदुषिभ्रुवा कथम् ।
उपेक्षितेक्षोः करभाचक्रमीरतादुरं वदे त्वां करभोरु भोरिति ॥

अत्र "भोःकरभोरु" इति सम्बुद्धिपदे ह्रस्वस्य गुण इति प्रवृत्तरभावश्च्युतसंस्कृति दोषः । हरेयंदक्रामि पदैककेन खमित्यादि पद्येऽपि च "अक्रामीति पदे नोदात्तोपदेशस्य मान्तस्य नाचमेरिति वृद्धिनिषेधस्याभावोऽपि दोषः । करभोरु पदे संज्ञापूर्वको विधिरनित्य इत्याश्रित्य गुणाभावसमाधानं अक्रामीति पदे च "निवृत्तप्रेषणाद्धातोः प्राकृतेऽर्थे णिजुच्यते" इत्याश्रित्य प्रार्थयन्ति शयनोत्थितं प्रिया इति परस्मैपदवत्समाधानं यद्यपि समासाद्यत एव तथापि महाकवि प्रयोगानुरोध एवायम्—अथ च—

नलं स तत्पक्षरवोर्ध्ववीक्षितं स एव पक्षीति भणन्तमभ्यधात् ।
नयादयैनामतिमा निराशतामसून्विहातेयमतः परं परम् ॥

इत्यत्रातेरुपसर्गतया धातोः प्राक् प्रयोगार्हत्वेन व्यवहितप्रयोगोऽपि च्युत संस्कृतावेव ग्राह्यः । छन्दोवत्कवयः कुर्वन्तीष्टेर्वा छन्दसि परेऽपीति सूत्रेण समाधानम् । इमां क्रिमाचामयत इत्यादावात्मनेपदमपीत्थमेव दुष्टम् ।

## अप्रयुक्तता

स्वत्वमुत्तस्वेदमधूत्थनाम्ब्रं तत्पाणिपद्मे मदनोत्सवेषु ।
लग्नोत्थितास्त्वत्कुचपत्रलेखास्तन्निर्गतास्तं प्रविशन्तु भूयः ॥

येन नलस्य पाणिपद्मेन भवत्याः कुचयोः पत्रलेखा रचिताः तस्य तं पाणिपद्ममेव स्तनावमर्दनावसरे ता विशन्त्विति पद्मार्थे तमिति पुंलिङ्ग प्रयोगः स च वा पुंसि पद्ममित्यादि वचनेणाम्नातोऽपि (प्रयोगः) महाकविभिः पुंस्त्वेन नादृत इत्यप्रयुक्तम् ।

एवमेवः—क्षत्राणि रामः परिभूय रामात् क्षत्राद्यथाभज्यत स द्विजेन्द्रः
तथैव पद्मानभिभूय सर्वांस्त्वद्वक्त्रपद्मा त्पदिभूतिमेति ॥

इत्याद्यवध्यनुसन्धेयम् । परन्तु महाकवीनां मौलिमाणिक्यायमानस्यास्य श्रीहर्षस्य प्रयोगे यद्यप्रयुक्तत्वम्तर्हि महान् खेदव्यतिकरः । गोवर्धनेनापि 'पद्म' शब्दस्य पुंस्त्वेनाभिमतत्वात् ।

## निहतार्थता

"निजस्य तेजश्शिखिनः परश्शताः ।" "नृपः पतङ्गं समधत्त पाणिना" "स्वर्वाहिनीवारिविहारचारी:" लेखानुजीविपुरुषा गिरिशोत्तमाङ्गम्" इत्यादिषु पद्येषु शिखि शब्दात् पूर्वम् मयूररूपेऽर्थे, पतङ्ग शब्दात् शलभार्थे, वाहिनीशब्दात् सेनार्थे लेखशब्दाच्च लिखनार्थे उपस्थित एव प्रसङ्गवशाक्रमेणाग्नेर्हंसस्यनद्या देवस्य च ग्रह इति द्रागुपस्थितेरभावान्निहतार्थता । एवमेव नैमङ्कितानि शिविकाधरे इत्यत्र इत्यत्राधोभागार्थे "अधरे" इति ।

## अवाचकता

चंद्राभमाभ्रं तिलकं दधाना तदग्निजास्येन्दु कृतानुबिम्बम् ।
सखीमुखे चन्द्रसमे ससर्ज चन्द्रानवस्थामिव कापि यत्र ॥
अत्र दधानेति पदं विदधानार्थस्यावाचक मित्यवाचकता दोषः ।

## अश्लीलता

कलाकलापं किल वेधसां वमन्निति जुगुप्साव्यञ्जकम् ।

## नेयार्थता

अवधूत्य दिवोऽपि यौवतैर्न कृहाधीतवतीमिमामहमित्यत्र समैः सममेवाध्ययनम्भवतो तिन्यायाद्दु दिवोऽपि यौवतैः सह नाधीनवतीत्यनेन देवरयिताभ्योऽप्यस्य सौन्दर्यमतिशयितमिति लभ्यते परन्तदशक्तया न भवतीति नेयार्थता ।

## क्लिष्टता

ईशाणिमैश्वर्यविवर्त्तमध्ये लोकेशलोकेशयलोकमध्ये ।

तिर्यञ्च मप्यञ्च मृपात्मजिन्नरसज्ञतोपज्ञसमज्ञमज्ञमिति श्लोके । हे कृशोदरि ! ब्रह्मलोक-निवासि जनेषु पामरमपि मां "सर्वाज्ञ या" दित्यस्य प्रथमप्रवर्त्तक मवेहीत्यर्थो व्यवहित इति पदसमासगतो दोषः क्लिष्टता ।

## विरुद्धमतिकृत्ता

तव वर्त्मनि वर्त्ततां शिवमित्यत्रतव वर्त्मनि पथि शिवं कल्याणं

वर्त्तंतामेधतामिति विवक्षितेऽर्थे "तव वर्त्मे शिवं निवर्त्ततान्दूरी करोतु" इति विरुद्धमतिरिति विरुद्धमति कृद्दोषः ।

## अविमृष्टविधेयांशता

किमसुभिर्ग्लपितैर्जड़ मन्यसे मयि निमज्जतु भीमसुतामनः "तदमिनिः सकलैरपि यत्र तैर्व्यरचि सात्र तिथिः किममीकृता" अनयोः पद्ययोरेकत्र "मनश्चन्द्रे निलीयते ॥ इति' श्रुतेः सर्वसामान्यानां मनसाश्चन्द्रमसि लयविधानाद् वृत्तौ तस्य निर्देशः, अन्यत्र च तदमिति रित्यत्र पूर्वार्धानुरोधात्तस्य बहोर्मानस्यामितेर्विधेयता समासेनाविमृष्टेत्यविमृष्टविधेयांशो दोषः ।

अथच "अमीकृते' त्यत्र "तस्यास्तिथेरमा नाम कृतमिति वक्तव्ये वृत्तिगर्भतायायमदोषः ।

---

# श्री काशीपण्डितसभाया अष्टाचत्वारिंशत्तमं महाधिवेशनम्

ज्येष्ठशुक्लपञ्चम्यां बुधवासरे श्रीमारवाड़ीकालिजस्थाने श्रीमतां महामहाध्यापकानां पं० श्रीपञ्चाननतर्करत्न महोदयानां सभापतित्वे महता समारोहेण का० पं० सभाया अष्टाचत्वारिंशत्तमं महाधिवेशनं सम्पन्नमभूत् । तत्र वार्षिक-विवरण-पाठानन्तरं कतिपयेषां प्रस्तावानां सर्वसम्मत्या स्वीकृतौ सत्यां सर्वतन्त्रस्वतन्त्राणां श्रीमतां पं० पद्मनाभशास्त्रिणां भाषणमभूत् । यत्र ते काशी-पण्डितसभातः प्राप्त-सम्मान-पत्राणां विदुषां नामानि श्रावितवन्तः । तदनन्तरं श्रीमाधवरामसण्डमहोदयेभ्यः राजसम्मान प्राप्तौ धन्यवाद प्रदानानन्तरं काशी-पण्डितसभायाः पदाधिकारिनिर्वाचनमभूत्तच्चैवमधोनिर्दिष्टं विद्यते—

सभापतिः पं० पञ्चाननतर्करत्न महोदयाः ( त्यक्तमहामहोपाध्यायपदाः )
उपसभापतिः म० म० पं० मुकुन्दझावक्सीमहोदयाः । महोपाध्यायाः पं० रामयत्नओझा महोदयाश्च ।

सञ्चालकाः पं० श्री पद्मनाभशास्त्रिमहोदयाः षड्दर्शनाचार्य्याः ।

प्रधानमन्त्रिणः पं० श्रीगोपालशास्त्रिमहोदया दर्शनकेशरिणः, साहित्याचार्य न्यायतीर्थ व्याकरणशास्त्रिणः ।

उपमन्त्रिणः पं० श्रीगोपालशास्त्रिनेने महोदयाः व्याकरणाचार्य्याः । पं० श्री तारादत्तपन्तमहोदयाः साहित्याचार्य्याश्च ।

कोशाध्यक्षाः श्री पं० विद्याधरगौडमहोदयाः वेदाचार्याः।

कार्यालयाध्यक्षाः श्री पं० गौरीनाथपाठकमहोदयाः साहित्याचार्याः लक्ष्मी कुण्डे दर्शनविद्यालयनाम्ना चैको विद्यालयः श्री काशीपण्डित सभानियमावलीसमुद्दिष्टोद्देश्यानुसारेण सञ्चालयितुं काशीपण्डितसभया स्वसम्बन्धभाक्कृतः। पुस्तकालयश्चागस्तकुण्डे शारदाभवने समुद्घाटितः। कार्यद्वयञ्चेदं काशीपण्डितसभायाश्चिरकाङ्क्षितमस्मिन् वर्षे सम्पन्नमिति परमहर्षास्पदमेतत्।

कार्यालयः
लक्ष्मीकुण्डस्थ-दर्शनविद्यालयः
काशी।

निवेदकः—
**श्रीगौरीनाथपाठकः**

---

"प्रभास क्षेत्रान्तर्गत गुप्तप्रयागतीर्थे होमात्मकमहारुद्रप्रसंगे महोपाध्याय श्रीरेवाशंकरमेघजी शास्त्रिभिः देवलपुर (देलवाडा-काठियावाड़) वास्तव्यैः—जगद्गुरु शंकराचार्यश्रीराजराजेश्वराश्रमस्वामिनां श्रीशारदापीठाधीश्वराणां पादपद्मे समर्पितं प्रार्थनापत्रम्—

**श्रीशारदाम्बा विजयतेतमाम्।**

# प्रार्थनापत्रम्।

श्रीमत्परमहंसपरिव्राजकाचार्य-वर्य-पदवाक्यप्रमाणपारावारपारीण—यमनियमासनप्राणायाम- प्रत्याहार-धारणाध्यानसमाध्यष्टांगयोगानुष्ठान-निष्ठतपश्चर्याचरणचक्रवर्त्यनाद्यविच्छिन्नगुरुपरम्पराप्राप्त-षण्मतस्थापनाचार्य-सांख्यत्रयप्रतिपादक-वैदिकमार्गप्रवर्तक-निखिल-निगमागमसारहृदय-श्रीमत्सुधन्वराज-साम्राज्यप्रतिष्ठापनाचार्य - श्रीमद्राजाधिराजजगद्गुरुभूमण्डलाचार्य-चातुर्वर्ण्यशिक्षक-गोमतीतीरवास-श्रीमद्द्वारकापुरवराधीश्वरपश्चिमाम्नाय-श्रीमच्छारदापीठाधीश्वर-श्रीमन्माधवतीर्थस्वामिवर्य-करकमलसंजात-श्रीमद्राजराजेश्वराश्रमस्वामिनां चरणारविन्देषु सश्रद्धाप्रश्रयं समर्प्यत इदं प्रार्थनापत्रम्।

श्रीमच्छांकरधर्मपीठ-तरणे! योगप्रभाविन् प्रभो!
आचार्येन्द्रकृपाम्बुधे! यतिपते! ते पादपद्मेऽञ्जलिम्
सद्गन्धाक्षतपुष्पवारिसहितं दत्वा स्तुमस्त्वां गुरुम्
भो भोः सच्छ्रमयोगपट्टविलसच्छ्रीराजराजेश्वर ॥ १ ॥

पुण्ये श्रीपश्चिमाम्नाये शारदापीठमुत्तमम्।
आरुह्य धर्मरक्षार्थं सन्नद्धोऽसि यतीश्वर ॥ २ ॥
पाखण्डखंडनार्थं च सद्धर्ममंडनाय च।
आविर्भूतोऽसि यतिराट् इहामुत्र शिवङ्करः ॥ ३ ॥
ब्राह्मणान् वेदविमुखान् क्षत्रान्त्राणपराङ्मुखान्।
वैश्यान्धर्मच्युतान् दृष्ट्वा शूद्रान्म्लेच्छत्वसंद्रुतान् ॥ ४ ॥
वर्णिनो वनितासक्तान् गृहस्थानुद्भ्रमान्।
वानप्रस्थाश्रमं नष्टं दृष्ट्वा पाखंडकान् यतीन् ॥ ५ ॥
नारीः स्वधर्म-चलिता दृष्ट्वा नीचांस्तथोद्धतान्।
उच्चान्नीचाभिभूतांश्च नायकान्धर्मघातकान् ॥ ६ ॥
आविर्भूतोऽसि लोकानां सद्बोधायैव शंकरः।
शंकराचार्यपीठानां गौरवस्थापनाय च ॥ ७ ॥
अस्मत्सद्भाग्य-संयोगान्महारुद्रेष्टिरोपणे।
संप्राप्तो भगवानत्र तीर्थे गुप्त-प्रयागके ॥ ८ ॥
अस्मन्मोद-विवृद्ध्यर्थं वयं दीनाः कृतार्थिताः।
कथं शक्यं वद स्वामिन् भवद्योग्यं समर्हणम् ॥ ९ ॥
तस्मादनेन चाल्पेन प्रार्थना-पत्रकेण हि।
पूजयामः परं पूज्यं नम्रभावेन सेवकाः ॥ १० ॥
कर्मोपास्त्यात्मविज्ञानं प्रबोधयसि संततम्।
दूरीकुर्वन्दुराचारान् विचारांश्च विगर्हितान् ॥ ११ ॥
अनधीतं परं ब्रह्म ब्रह्मचर्य-प्रभावतः।
संप्राप्तं सर्व-विज्ञत्वं शारदापीठ-रोहणात् ॥ १२ ॥
स्वप्रभावात् त्रिकालज्ञः कुयतीन् पीठदूषकान्।
पराभूय त्वमेकोऽसि शारदापीठ-भास्करः ॥ १३ ॥
जयसि जयसि शास्ता पश्चिमाम्नायदेशे
जयसि जयसि गोप्ता शारदापीठ-कीर्तेः।
जयसि जयसि भूयो दण्डधृक् दण्डि-सम्राट्
जयसि जयसि योगिन् राजराजेश्वर! त्वम् । १४ ।
धर्मप्रदीप्तमाचार्यं शंकराचार्यमुत्तमम्
वन्दामहे महैश्वर्यं राजराजेश्वराश्रमम् ॥ १५ ॥

[संवत् १९९२ वैशाख शुक्ल १४ भृगुवासरे गुप्तप्रयागक्षेत्रम् ( ता १७-५-३५ )

# गुरुभक्तिः ।

[ ले० पं० शिवप्रसादशर्मा शास्त्री प्रधानवेदाध्यापकः
चूरूस्थ ऋषिकुलब्रह्मचर्याश्रमस्य ]

विविधापज्जालग्रस्ते निजनिजकर्मानुसारगतियुतेऽस्मिन् संसारे चेदस्ति कश्चित् शान्तिलाभोपायस्तर्हि गुरुरेवेति निर्विवादम् । यस्मिन् कस्मिन्नपि कर्मणि प्रवेष्टुं प्रागस्ति गुरोरपेक्षाऽतस्तस्य शुश्रूषणं सर्वभावेन विधेयम् । सर्वेषां छात्राणां कृते विद्याप्राप्तिरस्ति मुख्यमुद्देश्यम् । तत्सिद्ध्यै च गुरोरपेक्षा नितरां विद्यते । गुरुमन्तरा कालत्रितयेऽपि त्रिलोक्यां विद्यालाभोऽसम्भवः । विद्याप्राप्तौ पूज्यचरणैर्महर्षिभिस्त्रीण्येव कारणानि निबद्धानि यथा—

गुरुशुश्रूषया विद्या पुष्कलेन धनेन वा ।
अथवा विद्यया विद्या चतुर्थं नैव कारणम् ।

तत्र गुरुशुश्रूषणमन्तरा नैव साम्प्रतिकैश्छात्रैर्विद्याप्तुं शक्यते । यतो हि कारणत्रितये नास्त्याधुनिकानां छात्राणां सन्निधौ पुष्कलं वित्तं विद्या वा येन ते गुरोः सकाशाद्भक्तिमन्तरैव विद्यां प्राप्नुयुः ।

पुराऽत्र भारतवर्षेऽष्टहायनस्यैवार्भकस्य गुरोराश्रमे प्रवेशो विधीयते स्म । गुरोः समीपानयनमेवोपनयनशब्दाभिधेयं विद्यते । तच्च—

गर्भाष्टमेऽब्दे कुर्वीत ब्राह्मणस्योपनायनम् ।
गर्भादेकादशे राज्ञो गर्भाच्च द्वादशे विशः ॥

इति मनुना तत्तद्वर्णानां तत्तद्वयनेषु निश्चितं । गुरुमाहात्म्यमपि महद् दृश्यते स्म । "शिवे रुष्टे गुरुस्त्राता गुरौ रुष्टे न कश्चन" इति प्रसिद्धिरास्ते । रामायणेऽपि गोस्वामिभिस्तुलसीदासमहोदयैरुत्तरकाण्डेऽस्य पद्यस्य साफल्यं दर्शितम् । भगवद्भक्तशिरोमणिः काकभुशुण्डिः स्वपूर्वजन्मवृत्तं जगाद वैनतेयाय—" यदहं नितरां गुरुभक्तिशून्यश्चरमवर्णोत्पन्नो गुरुसन्निधौ वसन्नेकदा शिवालये त्र्यम्बकमन्त्रं जपंस्थितस्तत्रैव मे गुरुरपि समागतः परं मूढोऽहं गर्वाद् गुरुं प्रणामादिक्रियया नादृतवान् ॥

दयालुस्वभावो गुरुस्तदतिक्रमं सेहे परं दुष्टदण्डधरो देवस्तं कथं मर्षयेत् । अत एव मां शशाप यत्त्वमजगरो भव, तदा प्रणतिभिरनल्पाभिर्गुरुः शङ्करं सान्त्वयामास । कथयानया सिद्धमेतद् यद्देवेषु सर्वेषु रुष्टेष्वपि गुरौ तुष्टे नहि किमप्यशिवं भवेत् । अयि भव्याः पाठकाः ! सर्वेषां कृते गुरुभक्तिसमो नान्यो

धर्मो विद्यते । अस्याः प्रतापेन जनः सर्वान् कामान् वाप्नुयादिति शास्त्रेषु प्रसिद्धम् । प्रकरणेऽस्मिन् भवतां पुरो जाबालीपुत्रस्य सत्यकामस्य गुरोराज्ञा पालनविषये लिखामि किञ्चित्—सत्यकामो यदा गौतमस्य महर्षेराश्रमं विद्या-मध्येतुं जगाम तदा तदाज्ञापालनपरीक्षणार्थं गुरुश्चतुःशतं गवां चारयितुमा-श्रमादन्यत्र गन्तुमाज्ञापयामास । यदयं गोगणः सहस्रमितो भवेद् तदा त्वयाऽत्र पुनरागन्तव्यम् । गुरोराज्ञां लब्ध्वा सत्यकामो न हि चिन्तयति यदहमत्र विद्यामध्येतुमागतो वा गाश्चारयितुम् । स्वस्मिन् गुरुकृपामनुभूय सत्यकामःसहर्षं सोत्साहञ्च गाश्चारयितुं बव्राज निर्जनं वनम् । व्यतीतानि कियन्ति दिनानि । जाता सहस्रमिता गवां संख्या गृहीत्वा गोगणमाश्रममा गत्य च सत्यकामो गुरोराज्ञापालनस्यामृतरूपं फलमलभत । देवाः शक्रादयस्तु ब्रह्मतत्त्वमुपदिशन्तिस्म । यं लब्ध्वैव परमां शान्तिमलभत । निमग्नश्च ब्रह्मतत्त्वर-सानन्दे । गुरुरपि तुष्टस्तां ब्रह्मविद्यां विस्तरश उपदिदेश यां विज्ञाय सर्वेभ्य-स्तापेभ्यो मुक्तो भवति मानवः । गुरोराज्ञया स्वगेहं गत्वा सत्यकामःस्वकुल-परम्परानुसारेण शिष्याननेकान् पाठयामास । भावुकाः पाठकाः । आधुनिक मध्ययनाध्यापनविधिं निशाम्य वेपते हृदयम् । पाश्चात्त्या शिक्षेयम् विद्यालयेषु पाठशालासु च गुरुशिष्याणां मिथोव्यवहारस्यास्माकं धर्मस्यादर्शस्य देशस्य जाते-श्च नितरां ध्वंसकरी मता । साम्प्रतमस्यैव भयानकस्य व्यापारस्यायं परिणामो यद्दशहायनावधि विद्यालयेष्वधीत्यापि मानवजीवनस्य साफल्यं तदुद्देश्यञ्च न विदन्त्याधुनिकाश्छात्राः । कोऽस्माकं धर्मः किञ्च कर्तव्यमिति भावनापि विनष्टा केवलं विषयभोगेषु चाटुकारितायाञ्चेत्थं संलग्नाः यत्कथनेऽपि सङ्कोचमेति रसना । शुश्रूषणस्य तु कथैवास्तां वर्तमानकाले गुरून्निन्दयितुं बद्धपरिकराः संदृश्यन्ते छात्रा इति महान् प्रत्यवायः । अस्माकं धर्मग्रन्थेषु गुरुनिन्दाविषये व्यवस्थैवं विलोक्यते । स्वयं निन्दाकरणस्य तु वार्तैवान्या परश्चेत्कश्चित् स्वमहान्तं पुरुषं निन्देत् तर्हि शक्तश्चेत्तज्जिह्वोच्छेदं कुर्यादन्यथा कर्णौ विधाय स्थानान्तरं गच्छेत् ।'

गुरोः प्राप्तः परिवादो न श्रोतव्यः कथंचन ।
कर्णौ तत्र पिधातव्यौ गन्तव्यं वा ततोऽन्यतः ॥

अहो ! कविकुलदिवाकरेण कालिदासेन कीदृशः सुन्दरतरो भावो व्यक्ततां नीतो यथा—'न केवलं यो महतोऽपभाषते शृणोति तस्मादपि यः स पापभाक्' अस्तु नाम सर्वमिदम् सर्वैरपि स्वे स्वे कर्मणि सर्वथा संसक्तैर्ब्रह्मचर्यपालन-

पूर्वकं गुरुशुश्रूषापरायणैः सदाचारपरायणैश्च भूत्वा यथाविधि विद्यामधीत्य पूर्वकालवदधुनापि पुनः स्वस्ववर्णगौरवं न केवलं भारतवर्षं एवापि तु विदेशेऽपि स्थापनीयमिति मेऽन्तिमाभ्यर्थना ।

गुरुर्ब्रह्मा गुरुर्विष्णुर्गुरुर्देवो महेश्वरः ।
गुरुः साक्षात्परं ब्रह्म तस्मै श्रीगुरवे नमः ॥

---

## सांख्ययोगयोर्लेखकाः ।

( ले० कुरुक्षेत्रीय पं० छज्जूरामशास्त्री विद्यासागरः । )

सांख्ययोगौ द्वावपि समानतन्त्रौ स्तः ॥ यथोक्तमपि—"सांख्ययोगौ पृथग्बालाः प्रवदन्ति न पण्डिताः" । एवं गोतमकृतं न्यायशास्त्रं कणादकृतं वैशेषिकम् । जैमिनिकृता पूर्वमीमांसा व्यासप्रणीतोत्तरमीमांसा च । अस्तु । सांख्यशास्त्रप्रवर्तको महामुनिः कपिलः, आदिविद्वान्मन्यते । यतस्तस्य ज्ञानोपदेशेनैव सर्वत्र ज्ञानप्रसारोऽभवत् । महर्षिकपिलप्रणीतं सांख्यदर्शनं जगत्प्रसिद्धमस्ति । परन्तु केचिद्विद्वांसः षडध्यायि सांख्यदर्शनं तत्वसमासं च कपिलप्रणीतं न मन्यन्ते । तत्रैते हेतवः—शंकराचार्यो यत्र क्वचन शारीरकभाष्ये सांख्यमतमालोचयति तत्रेश्वरकृष्णकृतसांख्यकारिका एवोद्धरति नत्विमे । वाचस्पतिमिश्रोऽपि सांख्यकारिका एव व्याख्यातवान्न सूत्राणि । सर्वदर्शन संग्रहकारो माधवाचार्योऽपि कारिका एवालम्ब्य सांख्यशास्त्रमालोचितवानिति । परन्तु यावदिदमित्थमिति निर्णयो न भवेत्तावत्षडध्यायि सांख्यदर्शनं तत्वसमासं च कपिलप्रणीतमेव मन्तव्यमिति सिद्धान्तः । षडध्यायिसांख्यदर्शनस्योपरिविक्रमीयषोडशशतकमध्यवर्ति विज्ञानभिक्षुकृतं 'प्रवचनभाष्य' मतीव सुन्दरं वर्तते । ईश्वरकृष्णकृता 'सांख्यसप्तति' रतितरां हृदयङ्गमास्ति । ईश्वरकृष्णश्च विद्वान् कपिलस्य शिष्यपरम्परासु कश्चिदासीत् । विक्रमीयसप्तमशतकवर्ति गौडपादाचार्येणभगवच्छंकराचार्यस्य परमगुरुणा सर्वप्रथममियं सांख्यसप्ततिर्व्याख्याता । ततो दशमशतकसंवत्सरे वर्तमानेन मैथिलवाचस्पतिमिश्रेण सांख्यसप्तत्याः सांख्यतत्वकौमुदी टीका लिखिता । या सम्प्रति सांख्यशास्त्रीयग्रन्थेषु मूर्धाभिषिक्ता मन्यते । अस्याः प्राक् माठरवृत्तेः प्रचार आसीत् । सांख्यतत्वकौमुद्या वंशीधरी, बालरामोदासीनकृता च टीका सुप्रसिद्धा विद्वन्मान्या च । सांख्यमते पञ्चविंशतितत्वानि सन्ति तज्ज्ञा

नान्मोक्षः । यदुक्तम्—"पंचविंशतितत्त्वज्ञो यत्र कुत्राश्रमे वसन् । जटी मुण्डो शिखी वाऽपि मुच्यते नात्र संशयः ॥ योगशास्त्रप्रवर्तको महर्षिः पतञ्जलिः पुष्यमित्रकालीनाद् व्याकरणमहाभाष्यकर्तुः पतञ्जलेर्भिन्नो बहुप्राचीनश्च । योगेन चित्तस्य पदेन वाचां मलं शरीरस्य च वैद्यकेन । योऽपाकरोत्तं प्रवरं मुनीनां पतञ्जलिं प्राञ्जलिरानतोऽस्मि' ॥ इति प्रसिद्धपद्यलेखकस्तु नामैक्येन बभ्रामेति प्रतीमः । योगदर्शनस्योपरि व्यासभाष्यं जागर्ति । केचिद् ब्रह्मसूत्रकाराद् 'योगभाष्यकारं व्यासं भिन्नं मन्यन्ते कथयन्ति च सूत्रनिर्माणकाले भाष्यनिर्माणं न युज्यते । परन्तु वाचस्पत्याद्युक्तेस्तदयुक्तम् । तथाहि योगवाचस्पत्ये—"नत्वा पतञ्जलिमृषिं वेदव्यासेन भाषिते । "भामत्यां च—"ब्रह्मसूत्रकृते तस्मै वेदव्यासाय वेधसे इति ॥ यद्यपि व्यासो भगवानजरामरस्तथापि कलेः षट्सु शतेषु व्यतीतेषु सोऽदृश्यो बभूव । योगभाष्यस्य विक्रमीयषोडशशतकवर्ति-विज्ञानभिक्षुकृतं योगवार्तिकं नाम व्याख्यानं वरीवर्ति । सूत्राणां वृत्तयस्तु बहवः सन्ति परन्तासु धारानरेशभोजराजकृत भोजराजवृत्ति विज्ञानभिक्षु शिष्यभावागणेशकृता च वृत्तिरत्युपयोगिनी । अस्तु, यमनियमासनप्राणायामप्रत्याहारधारणाध्यानसमाधिभिरतिचञ्चलचित्तस्य विषयेभ्यो निरोधो योगलक्षणम् । योगाभ्यासार्थं वनादिगमनमावश्यकम् । यदुक्तं न्यायदर्शने—"अरण्यगुहापुलिनादिषु योगाभ्यासः । ४।२।४०। 'गृहं परित्यज्य योगाभ्याससम्पादनार्थमरण्यादिषु गन्तव्यं गृहे विषयासक्त्या चित्तस्थैर्यासम्भवात् । तथा च भगवद्गीता—"योगी युञ्जीत सततमात्मानं रहसि स्थितः"इति कुञ्जुरामनुत्तः । 'क्लेशकर्मविपाकाशयैरपरामृष्टः पुरुषविशेषो योगशास्त्रे ईश्वरः प्रोक्तः तस्य ध्यानेन जपेन वा योगप्राप्तिर्भवति । यदुक्तम्—"आगमेनानुमानेन ध्यानाभ्यासरसेन च । त्रिधा प्रकल्पयन्प्रज्ञां लभते योगमुत्तमम् युंजते मन उत युञ्जते धियः ततस्तु तं पश्यति निष्कलं ध्यायमानः । तदनन्तरं स योगी 'दासोऽहं सोऽहंवत्' परमात्मैव भवति । अयमेव परमो धर्मः परमपुरुषार्थश्च । यदुच्यते "अयन्तु परमो धर्मो यद्योगेनात्मदर्शनम् । 'एतावदरं खल्वमृतत्वं परमपुरुषार्थत्वञ्च । योगिपरमात्मनोरभेदप्रकारश्चायम् । "यथाग्निरग्नौ संक्षिप्तः समानत्वमनुव्रजेत् । तथात्मा साम्यमभ्येति योगिनः परमात्मना ॥ एतदेव केनचिन्महात्मना रूपकीकृतम् । "ढूंढ़ना लिखना चातुरी सब गुड़ियन को खेल सखी मिल गई पिहर से दई ताकमें मेल ॥ इति ॥

अज्ञानस्य सर्वोन्नतभूमौ तु यदा कथमपि आत्मातिरिक्तं कञ्चन शक्तिविशेषं सर्वेऽपि आस्तिकदार्शनिकप्रवराः स्वीकुर्वन्ति चेत्तदा तु तेषां बुद्धेः प्रबलमावरणमवश्यं ह्रसिमानमासादयितुमारभते। यतो हि तदानीं ते द्वैतभावरहितस्य ज्ञानस्वरूपस्य ब्रह्मणः समुपलब्धौ असमर्था अपि तस्य ब्रह्मणोऽघटनघटनापटीयस्या मायारूपायाः शक्तेस्तु अनुमानं कर्तुं समर्था भवन्ति। कर्ममीमांसादर्शनन्तु आसु सर्वास्वपि अज्ञानभूमिषु अविद्याया अधिष्ठानं स्वीकरोति। आसां सर्वासामप्यवस्थानामज्ञानप्रसूतत्वेऽपि समन्वयविचारपद्धत्या तु एतदेव वक्तव्यं भवेद्यद् एतासामवस्थानां द्रष्टारो दार्शनिका अजानन्तोऽपि तदेव ब्रह्मपदमनुसर्तुमुपक्रान्ताः सन्ति।

विद्याप्रसूतानां सप्तानां ज्ञानभूमीनां मध्ये चतुर्णामनुभवानां विषये तु प्रथमत एवाभिहितं समासेन यत् कीदृशाः तेषां चतुर्णामप्यधिकाराः शनैः शनैः क्रमेण उन्नतिमेवासादयन्ति। तेषामधिकाराणामधिकारिणश्च कथं स्वबुद्धेरावरणमपगमयन्तः स्वस्वरूपावाप्तयेऽग्रेसरा एव भवन्तीति।

प्रथमदशायां बुद्धावियदधिकमावरणं तिष्ठति यद् इदं दृश्यमयं जडजगदेव आत्मज्ञानोपलब्धौ प्रधानमालम्बनं भवति। अत एव ज्ञानस्य प्रथमावस्थां समाश्रिता दार्शनिकाः परमाणूनां नित्यत्वं स्वीकृत्य ब्रह्मणः सृष्टिनिमित्तत्वं कर्तृत्वञ्चाङ्गीकुर्वन्ति। द्वितीयाऽवस्थायां तु बुद्धेरावरणम् प्रथमापेक्षया ह्रसिमानमासादयतीति तदवस्थाश्रिता दार्शनिका विद्याऽविद्यारूपात्मिकां त्रिगुणमयीं प्रकृतिं तदीक्षणकारिणं चिन्मयं पुरुषञ्चोभावपि नित्यौ मन्यन्ते। यतश्च तेषां बुद्धिः स्थूलपरमाणुतोऽपसृत्य सूक्ष्मतरराज्ये समुपसृता भवति तृतीयस्यां दार्शनिकावस्थायां च बुद्धेरावरणं प्रायो निःशेषमेव भवतीति ब्रह्मणस्तत्प्रकृतेश्च "अहं ममेतिवत्" एकत्वभावापन्नामेव दशां ते दार्शनिका अनुभवन्ति। चतुर्थ्यां तुरीयावस्थायान्तु "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन" इति ब्रह्मपदोदयो बुद्धेरावरणनाशलब्धावस्थायामेव भवतीति किं वक्तव्यमस्य दार्शनिकशिरोमणेर्भाग्यविषये।

इत्थञ्च एतेषु सर्वेष्वप्यनुभवेषु समन्वयविचारबुद्ध्या तु द्वैतभावरहितं ब्रह्मैव लक्ष्यीभूतं विराजते। बुद्धेरावरणतारतम्यानुसारं यद्यपि कुत्रचित् स्थूलाः परमाणवः क्वचन त्रिगुणमयी प्रकृतिः कुहचन स्वस्वरूपोपलब्धौ बाधिका सत्यपि ब्रह्मणोऽघटनघटनापटीयसी मायाशक्तिरित्येवं स्वावस्थानुरूपाः पदार्थाः स्वीकृता दृश्यन्ते। तथापि सर्वथा स्वस्वरूपोपलब्धौ बाधकाः सन्तोऽपीमे पदार्थाः सर्वे रूपान्तरेण ब्रह्मण एव सत्तां स्वीकुर्वन्तीति विषयमिमं सर्वेऽपि सप्तानां ज्ञानभूमीनां द्रष्टारो महापुरुषा ऐकमत्येनैकवाक्यतया च स्वीकुर्युरिति दिक्।

इति तु प्रागेव नैकशः प्रमाणितं विद्यते यत् वेदान्तजन्याऽपरोक्षानुभूतिः न पदार्थवादिनां दार्शनिकानामनुमानम्, नापि सांख्यप्रवचनकर्तॄणां दार्शनिकानामलौकिकं प्रत्यक्षं न चापि पूर्वमीमांसकानां परोक्षानुभूतिरस्ति। किन्तु कश्चिद्भाग्यवानेवेह चरमायां ज्ञानभूमौ समुपेत्य तत्त्वज्ञानस्य परां काष्ठामधिगत्य ब्रह्मतदात्म्यमासादयन् "एकमेवाद्वितीयं" सत्यं ज्ञानमनन्तं ब्रह्म" इत्यादि श्रुतिवचसां सार्थक्यमादधत् ब्रह्मणः साक्षादपरोक्षानुभूतिं समधिगच्छति। अत्रहि अपरोक्षानुभूतौ श्रीगुरूपदेशो वेदादिशास्त्रवचनान्येवाप्तप्रमाणतया साहाय्यमाचरन्ति। गुरुवचनोपदेशविषये तु काचन शङ्कैव नोदेतुमर्हति, यतो हि गुरुब्रह्मणोरभेद एव गीयते। अन्यच्च पूर्णज्ञानी गुरुदेवो ब्रह्मभावलीनो भूत्वा साधनचतुष्टयसम्पन्नानुत्तमाधिकारिण एव ब्रह्मविद्यां समुपदिशति। वेदवचनविषये तु शङ्कां समुदेतु मर्हति यद् वेदाः प्रायः कर्मसङ्गिनामेवाधिकारवर्णनया परिपूर्णाः किमत्र कारणम् इति। इत्थञ्चैवं व्यतिकरे कथं ब्रह्मज्ञानविषये वेदानामाप्तप्रामाण्येनाङ्गीकृतिः सम्पन्ना स्यादिति। उक्तञ्च कर्ममीमांसादर्शने—

"आम्नायस्य क्रियार्थत्वादानर्थक्यमतदर्थानामिति" ॥ १।२।१ ॥

क्रियाप्रतिपादन-शून्या उपनिषदः कथञ्चाप्रामाण्यमाश्रयेयुरिति एवम्भूतानां शङ्कानां समाहित्यै समुच्यते यत् वेदस्य ब्रह्मणो निःश्वासरूपत्वात् अपौरुषेयत्वाच्च तस्मिन् भगवच्छक्तिपूर्णता ज्ञानपूर्णता च विराजते

"तस्य ब्रह्मणो निःश्वसितमेतद्यदृग्वेदो यजुर्वेदः सामवेद इतिहासः पुराणम्"इति निःश्वासस्य व्यापारः स्वभावेनैव शरीरे यथा सम्पद्यमानो विराजते, तथैव कल्पारम्भे तत्कल्पीयप्रकाशयोग्यो यावता ज्ञानराशिना सह शब्दमयो ज्ञानोद्गारः सगुणब्रह्मणो निःश्वासरूपेणाविर्भवति स एव वेद उच्यते। एवं ज्ञानमयः शब्दसमूहः प्रशान्ताद्योगयुक्तादृषीणामन्तःकरणादाविर्भवति। अतश्च वेदोऽभ्रान्तः पूर्णज्ञानमयः पूर्णशक्तियुक्तश्चाभिधीयते। तस्मिंश्च भ्रमप्रमादविप्रलिप्साऽसम्पूर्णताप्रभृतयो दोषा न दरिदृश्यन्ते। किन्तु तेषां स्थितिस्तत्र वेदेऽसम्भविनी एव। अत एव वेदो जीवेभ्योऽध्यात्मशुद्धिमधिदैव शुद्धिमधिभूत शुद्धिञ्च प्रदातुं काण्डत्रये विभक्तो विद्यते।

यद्यपि मृत्युलोकीय-स्वाभाविकस्थित्यनुसारं कर्मकाण्डस्यैव वेदे प्राधान्यं ततो न्यूनतयोपासनाकाण्डस्याऽविर्भावः। सर्वतो न्यूनो हि ज्ञानकाण्डो विद्यते तथापि वेदे काण्डत्रयस्यैव वर्णनमस्तीतिनिःसन्दिग्धमेव।

प्रथमतः कर्मभूमिरूपेऽस्मिन्मृत्युलोके कर्मकरणात् कर्मफलभोगाद्व्यतिरिक्तोऽल्पीयानेव समय आसाद्यते।

तत्रापि उपासनायाम् अल्पीयस एव भाग्यशालिनः पुरुषस्य प्रवृत्तिर्दृश्यते । नित्यानित्य वस्तुविवेकात्मके आत्मानात्मविचारप्रवृत्तिरूपे तत्त्वज्ञाने तु ततोऽप्यल्पीयसामेव मानवानां कदाचिदेव श्रद्धादेति। यदर्थमुक्तञ्च भगवता श्रीमद्भगवद्गीतायां—

मनुष्याणां सहस्रेषु कश्चिद्यतति सिद्धये ।
यततामपि सिद्धानां कश्चिन्मां वेत्ति तत्त्वतः । इति ।

अत एवेममेव नैसर्गिकं नियममाश्रित्य पूर्णज्ञानमयेऽपि वेदे ज्ञानकाण्डीयमन्त्राणां न्यूनतयोपलब्धिर्दृश्यते । अयन्तु सर्वतन्त्रसिद्धान्तसिद्धोऽर्थो विद्यते, यत् काण्डत्रयात्मको भगवान् वेदः काण्डत्रयाणामप्यधिकारिणामाप्तप्रामाण्येन गृहीतः स्वस्वाधिकारानुसारं सर्वेषामेवाधिकारिणां हिताधायको विद्यते। सर्वेऽपि श्रद्धालवोऽधिकारिणो निजाधिकारानुरूपं ततो लाभमधिगच्छन्तीत्यपि सन्देहशून्योऽर्थः । अतश्च पूर्वोक्तशङ्काया इहावसर एव नास्ति। पूर्वमीमांसादर्शने कर्मप्राधान्यपक्षप्रतिपादकः सिद्धान्तः समुपलभ्यते चेत्तस्य दर्शनस्य तु भूषणमेव तत् न तु तद्दूषणम् । यतो हि तस्य दर्शनस्य धर्माधर्मनिर्णायकत्वात् कर्ममात्रप्रतिपादकत्वाच्च कर्मणि पूर्णतया मानवानां प्रवृत्तिजनकत्वं समुचितमेति ।

इह कश्चन जिज्ञासुर्यदि कदाचिदाशङ्केत यत् क्वापि अन्यत्र दर्शने समन्वयप्रतिपादिका मीमांसा कृता नोपलभ्यते । कथमिहैव वेदान्त-शास्त्रोपक्रमे ईदृश्या मीमांसाया अवसरः समुत्पन्नः । येनेदं सूत्रं प्रणिनाय महर्षि र्बादरायण इति ? तत्रोच्यते—

यथा कश्चनैको गृहपतिः समाजपतिर्वा तदैव सर्वश्रेष्ठो भवितुमर्हति । यदा स यस्याः समष्टेरधिपतिरस्ति तत्समष्टिस्थव्यष्टिगाधिकारिणामपि जीवानामुपरि समानं स्नेहभारं संस्थापयितु मर्हः स्यात् । सर्वेषाञ्च तेषां स्वान्तर्गतानां दोषगुणानामनुवादे तेषामधिकारे समन्वयबुद्धया सामञ्जस्यं प्रतिष्ठापयितुञ्च समर्थो भवेदिति ।

तथैव—एतदुदाहरणानुरूपमेवोदाहरणेऽप्यस्मिन् समवधेयं यत् श्रुतेश्चरमभागस्यास्य वेदान्तस्य सर्वतोऽप्यभ्यर्हितस्य तदैव सर्वविदितं महत्त्वं स्थिरं सुरक्षितं स्यात् । तदैव हि वेदान्तसिद्धान्तस्य तुरीयाया ज्ञानभूमेः पराकाष्ठा प्रतिपादिता भवेद्यदा ब्रह्ममीमांसाऽपरपर्य्यायं तद्वेदान्तदर्शनम् अन्येषां दार्शनिकविचाराणा माध्यात्मिकानाञ्च सिद्धान्तानामभयदान पूर्वकं स्वस्वाधिकारभूमौ प्रतिष्ठां विदधत् सस्नेहदानं सर्वाण्येव दर्शनानि स्वात्मजपोषं पोषयेत् ।

यथाहि बहुसन्तानवतः पितुः सन्तानेषु कश्चन योग्यः, कोऽपि अयोग्यः,

कश्चन बालः, कश्चिद् युवा, अपरो ज्ञानी, अन्योऽज्ञानी, इतरः शिष्टः परोऽशिष्टः इत्येवं बहुविधा विभक्तशीलावस्थाज्ञानव्यापाराः सन्ताना भवन्ति। तत्र पिता तु सर्वेषु समानस्नेहवात्सल्यः सर्वेषामेवाधिकारं जानन्नपि समन्वयबुद्ध्यैव सर्वत्र व्यवहरति। तथैव वेदान्तसिद्धान्तप्रतिपादकमिदं ब्रह्ममीमांसादर्शनं सर्वाभ्यर्हितं स्वीयं महत्त्वं तदैव गोपायितुं प्रभवेत्, यदा तत् स्वयं द्वैतभावरहितम् "एकमेवाद्वितीय" मिति ब्रह्मपदं प्रापयद् अपि समन्वयभावभावितं सत् सर्वेभ्योऽन्येभ्यो दर्शनेभ्यः स्वाधिकारे स्थातुमवसरं प्रापयेत् इति संक्षेपः।

वेदस्य कर्मकाण्डभागपर्यालोचनया प्रतीयते यत् स भागः प्रवृत्तिनिवृत्तिभेदेन भागद्वये विभक्तो विद्यते। तत्र निवृत्तिपरो विषयोऽल्पीयान् प्रवृत्तिपर एव भूयान् विद्यते। यतो हि प्रवृत्तिमूलके संसारेऽस्मिन् प्रवृत्तिमार्गाधिकारिण एव जीवा बहव उपलभ्यन्ते। परन्तु कर्मकाण्डस्य भेदद्वयं विद्यते यच्च कर्ममीमांसादर्शन द्वाराऽपि प्रतिपाद्यते। श्रुतिरप्याह—

"द्वा सुपर्णा सयुजा सखाया समानं वृक्षं परिषस्वजाते।
तयोरन्यः पिप्पलं स्वाद्वत्त्यनश्नन्नन्योऽभिचाकशीति।"

द्वौ शकुन्तौ एकस्मिन् वृक्षे निवसतः तयोरेको मिष्टं फलं भुनक्ति। अपरस्तु स्वयमभुञ्जानः केवलं भुञ्जानमन्यं पश्यति॥ प्रतिपिण्डं जीवचैतन्यं कूटस्थचैतन्यमिति यच्चैतन्यद्वयं तिष्ठति। श्रुतिरियं तदेव लक्षयति। अविद्योपहितं चैतन्यं प्रथमं विद्यासेविनश्च द्वितीयमिति ज्ञातुं शक्यते। एतद्विज्ञानानुसारमेव सांख्यदर्शने बहुपुरुषवादोऽङ्गीक्रियते।

यतोहि कूटस्थ चैतन्यावलम्बनत एवं प्रतिपिण्डं पृथक् पृथक् पुरुषभावः प्रादुर्भवति। अनयोरेव द्वयोराश्रयेण प्रवृत्तिमयी निवृत्तिमयी च गती स्वभावसिद्धे स्वीक्रियेते। जीवे हि अनादिसिद्धाया वासनायाः सत्त्वं कूटस्थस्य च तद्राहित्यं स्वभावसिद्धं निगद्यते। फलतः कर्मकाण्डे प्रवृत्तिमार्गस्य निवृत्तिमार्गस्य च सत्ता स्वभावसिद्धा स्वीक्रियते। प्रवृत्तिनिवृत्त्योर्द्वयोरपि पृथक् पृथक् सत्त्वयो द्वैतभावरहितेन ब्रह्मणा कथं सम्बध्यते इत्युपर्युक्तविज्ञानतः स्पष्टीभवति।

इत्थं हि वेदस्योपासनाकाण्डे यो हि सगुणनिर्गुणोपासना विहिता विद्यते। तस्या अपि अधिकारभेदेनैव समन्वयः क्रियते। श्रुतिरप्यभिदधाति—

"यः सर्वज्ञः सर्ववित्।" "स ऐक्षत लोकान् नु सृज इति।"
"नित्यो नित्यानां चेतनश्चेतनानाम्
एको बहूनां यो विदधाति कामान्।"
"तमीश्वराणां परमं महेश्वरं तं दैवतानां परमञ्च दैवतम्।"
"पतिं पतीनां परमं परस्तात् विदाम देवं भुवनेश मीड्यम्।"
"स सत्यकामः सत्यसंकल्पः।"

एवम्भूता हि श्रुतयो ब्रह्मणः सगुणत्वं वेदस्योपासनाधिकारं वैदिकीं पौराणिकीं तान्त्रिकीञ्चोपासनापद्धतिं प्रतिपादयन्ति। यत्र हि उपास्योपासक-सम्बन्धस्तत्र तु द्वैतभावस्यैव सम्बन्धस्तिष्ठति। तत्र च द्वैतानुभवे-सगुणत्वसम्बन्धस्तु स्वभावसिद्धोऽर्थः। सगुणत्वदशायाञ्च सर्वशक्तिमतो ब्रह्मणस्तदीयाया अघटनघटनापटीयस्या त्रिगुणमय्या महाशक्तेर्महामायायाश्च पृथगनुभवोऽपि स्वाभाविक एव। उक्तञ्च

'द्वैतबुद्ध्या तु दासोऽहम्' इत्यादि।

कर्मकाण्डोपासनाकाण्डरहस्ययोरत्यानेव भेदो विद्यते, यत् कर्मकाण्डे ब्रह्मशक्तेः लोकातीत कर्म-शक्तिगत-शुभाशुभ-वेगो पर्य्येव प्रधानतया दृष्टिरासक्ता भवति। शक्तिमति ब्रह्मणि तु स्वल्पमेवावधानलक्ष्यं भवतीति उपासना-काण्ड-विज्ञाने तु शक्तिशक्तिमतोरभेदनिश्चये सति उपासको जीव उपास्यस्य ब्रह्मणः सान्निध्यमासादयत्येव। यावन्त उपासनापद्धतिप्रकाराः वर्तेरन्, उपनिषत्प्रतिपादिता ब्रह्मोपासना वा स्युः, श्रुतिस्मृत्यविरुद्धाः सगुणोपासना वा भवेयुरथवा पुराणतन्त्रविहिताः सगुणाः पञ्चोपासना एव स्युराहो तदीयाः कियन्तोऽपि भेदा भवेयु स्ते सर्वेऽपि इमामेव मौलिकीं सिद्धान्तभित्तिमाश्रित्य विराजन्ते। श्रुतितः पुराणतन्त्रादिस्मृतिशास्त्राणामीदृशो भेदोऽवसेयो यथा सूत्रभाष्ययो भेदो भवतीति। यतो हि पुराणानि तन्त्राणि च वेदभाष्यस्वरूपाणि वेदभित्तावेव प्रतिष्ठितानि।

पुराण-तन्त्रादि-स्मृति-शास्त्रेषु ये सगुणोपासनायाः पञ्चभेदा वर्णिता स्तेषां च ये विस्ताराः सन्ति, याश्च लीलाविग्रहोपासना विद्यन्ते, याश्च ऋषिदेवतापितृपासनाप्रभृतयो बहुविधा उपासना वर्णिता दृश्यन्ते, ताः सर्वा अपि पूर्वोक्तोपासनाविज्ञानस्यैवानुकूला निर्णीताः।

यथा हि कर्मकाण्डस्य प्रवृत्तिमार्गः केवलं मलमपाकरोति निवृत्तिमार्गस्तु अन्तःकरणे ब्रह्मज्योतिः प्रकाशयितुं तस्य सहायको भवति। तथैव उपासना-काण्डस्य निम्नश्रेणिगोपासनापद्धतिः केवलं विक्षेपमपाकर्तुं भक्तिद्वारा चान्तःकरणं पवित्रयितुं सहायिका भवति। उच्चश्रेणिगा तूपासना ब्रह्मसान्निध्यं प्रापय्य परया भक्त्या उपासक-पुरुषस्य स्वस्वरूपोपलब्धौ सहायिका जायते। निम्नश्रेणिस्था उपासकाः प्रथमं त्रिगुणमय्या ब्रह्मशक्तेस्त्रीन् गुणानेवाश्रयन्ति। तदनन्तरञ्चोच्चश्रेणिगा उपासका भूत्वा शक्तिमतो ब्रह्मणो भावत्रयाश्रयेणान्ते ज्ञानकाण्डस्याधिकारिणो भूत्वा ब्रह्मसायुज्यं प्राप्नुवन्ति।

ज्ञानकाण्डस्याधिकारो यद्यपि सप्तसु ज्ञानभूमिषु विभक्तो विद्यते तथापि स चातुर्व्यूहाकारेण कथं तत्त्व-ज्ञानिनमुपकृत्य कृतकृत्यं करोतीति पूर्वमेव प्रमाणितम्। वेदस्य शिरस्थानीयासूपनिषत्सु ये मन्त्रा ईदृशा उपलभ्यन्ते ते च इमे विज्ञेयाः तथाहि—

स वै शरीरी प्रथमः स वै पुरुष उच्यत।
आदिकर्ता स भूतानां ब्रह्माग्रे समवर्तत

द्यावाभूमी जनयन् देव एक आस्ते
विश्वस्य कर्ता भुवनस्य गोप्ता ।

एवम्भूता हि श्रुतयः पदार्थवादस्य ये द्वे ज्ञानभूमी एतस्तयो विंज्ञानं समर्थ यन्ति । सगुणोपासनायाः सर्वरहस्यमूलभीत्तिरूपाश्च सन्ति । प्रथमयोरनयो र्ज्ञानभूम्यो र्ब्रह्मसम्बन्धानुभवः समान एवास्ति । जगद्रूपं कार्य्यं दृष्ट्वा जगत्कर्तुरीश्वरस्यानुमानमपि द्वयोरनयोर्दर्शनयो विंभिन्नविधया दृढीक्रियते । अनयो र्ज्ञानभूम्योर्दार्शनिकविचारदाढ्र्यं सति कर्मोपासनयो र्ब्रह्मसम्बन्धीयं हृदयं दृढीभवति तेनैव सह जडदृश्यतो बुद्धिरुपरता भूत्वा प्रावरणं नाशयन्ती ब्रह्मभावेन भाविता भवति । ततश्च निम्नलिखितप्रकारकाः श्रुतयो विचारणीया उपस्थिता भवन्ति ।

"अत्रायं पुरुषः स्वयं ज्योति र्भवति ।"
"योऽयं विज्ञानमयः प्राणेषु हृदयान्तर्ज्योतिः पुरुषः"
"वेदाहमेतं पुरुषं महान्तमादित्यवर्णं तमसः परस्तात्"

अनुमानेन ब्रह्मपदे ज्ञाते सति शरीरमलम् मनसो विक्षेपश्च ह्रसिमानमालम्बते । तेनैव सह बुद्धेरावरणक्षयोऽपि भवति । ततश्च मूर्तिमयस्य स्थूलरूपस्य लयेन सह यदा साधके ब्रह्मणो ज्योतिर्मयं स्वरूपं प्रकटितं भवति । यदा च ब्राह्मणा गायत्रीमन्त्रमाश्रित्य ब्रह्मध्याननिमग्नतायामधिकारिणो भवन्तीत्यस्या एवोन्नतावस्थायाः प्रतिपादिका इमा श्रुतयः सन्ति ।

प्रथमद्वितीययो र्ज्ञानभूम्योः सम्बन्धभाज उपासकस्येयं दशा उन्नततरा निगद्यते । सात्त्विकोपासनाधिकारी साधकः तत्त्वज्ञानसोपानेऽग्रेसरो भवन् लभतेऽमुमधिकारम् । इत्थं हि अधोनिर्दिष्टा अपि श्रुतयो मन्तव्याः । तथाहि—

"एष हि द्रष्टा, श्रोता, रसयिता, घ्राता, मन्ता, बोद्धा, कर्ता, विज्ञानात्मा, पुरुष" इति । "एवमेवास्य परिद्रष्टुरिमाः षोडशकलाः पुरुषायणाः पुरुषं प्राप्य अस्तं गच्छन्ति ।"

"अजामेकां लोहितशुक्लकृष्णां
बह्वीः प्रजाः सृजमानां सरूपाः ।
अजो ह्येको जुषमाणोऽनुशेते
जहात्येनां भुक्तभोगामजोऽन्यः ।"
"असङ्गोऽयं पुरुषः"

एवंभूता हि श्रुतयः सांख्यप्रवचनस्योभयोरेव ज्ञानभूम्योर्मार्गदर्शिकाः सन्ति ।

अस्यां हि अवस्थायां ब्रह्म तच्छक्ति महामायारूपिणी प्रकृतिश्चेत्युभे अपि अनाद्यनन्तरूपतया तत्त्वज्ञानिनोऽलौकिकप्रत्यक्षानुसारं पश्यन्ति । इमे उभे अपि

ज्ञानभूमी एकस्यैवाधिकारस्य पोषिके स्त इति उभयोरप्यनोरनुभवः समान एव भवति ।

ब्रह्मपदस्यानुभवे यासां ज्ञानभूमीनाञ्चानुभवे यो हि प्रकारभेदो विद्यते तदनुसारेणैव सप्तस्वपि ज्ञानभूमिषु चत्वारोऽधिकारा निर्णीताः सन्ति । ते एव हि ब्रह्मस्वरूपोपलब्धौ चतुर्व्यूहरूपतयाभिधीयन्ते ।

पूर्वोक्ताधिकारलाभानन्तरम् यदा तत्त्वज्ञानिन आवरणस्य विशेषहानिः सम्पद्यते तदानीं हि तस्य प्रकृति-पुरुषयोः पृथक् सत्ताया द्वैतमयो विचारः शैथिल्यमापद्यते । तथा तदीयान्तःकरणस्य समाहितावस्थायामात्मज्ञानस्यो-श्रस्या सह शक्तिमतो ब्रह्मणः तस्य शक्तेर्महामायायाश्च 'अहंममेतिवत्' एकत्व-सत्तैवानुभूयमाना विराजते । अस्यामेव दशायां निम्नोक्ताः श्रुतयः सहायिका भवन्ति । तथा हि—

"मायां तु प्रकृतिं विद्यान्मायिनं तु महेश्वरम्"
"इन्द्रो मायाभिः पुरुरूप ईयते"
"पराऽस्य शक्ति र्विविधैव श्रूयते
स्वाभाविकी ज्ञानबलक्रिया च"
"अस्मान् मायी सृजते विश्वमेतत्" ।

इत्थम्भूतभावाः श्रुतयः तत्त्वज्ञानिनो महापुरुषस्य द्वैतभानं विलाप्य अद्वैत-ब्रह्मभावोन्मुखं तदीयमन्तःकरणं समादधति । वेदस्य काण्डत्रयानुसारं त्रयाणां मीमांसादर्शनानां प्रथमे द्वे मीमांसादर्शने स्वीयं दार्शनिकं विज्ञानं पुरुषार्थप्रकारं च पार्थक्येनैव प्रवृत्तस्तथापि तयो र्ब्रह्मसम्बन्धाऽनुभवः समान एवास्ति । अत एव ते उभे अपि पूर्वमीमांसाशब्देनैवाभिधीयेते । तयो र्द्वयोरेवानुसारेण ब्रह्मणः परोक्षानुभूति-सम्पादनार्थमिमाः श्रुतयः समर्थाः ।

एतदनन्तरं हि सप्तम्या ज्ञानभूमेरधिकार उपस्थितो भवति । यत्र शक्ति र्निजालयतो दूरी भवति, केवलं शक्तिमद् ब्रह्मैव अपरोक्षानुभूतिद्वारा निज-लक्ष्यं भवति । तदेव चोपलब्धिगोचरतामप्येति यदा, तदैव ब्रह्ममीमांसाप्रतिपादितस्य ब्रह्मज्ञानस्य यथार्थतयोदयो भवति । यच्च पूज्यपादो महर्षिः सूत्रकृत् सर्वतन्त्र-सिद्धसमन्वयेन प्रतिपादितवान् इति । श्रुतयश्च समामनन्ति—

"सदेव सोम्येदमग्र आसीत्"
"एकमेवाद्वितीयम्"
"तदेतद् ब्रह्मापूर्वमनपरमनन्तरमबाह्यम्"
"अयमात्मा ब्रह्म"
"ब्रह्मैवेदममृतं पुरस्तात्"
"इदं सर्वं यदयमात्मा"
"अशब्दमस्पर्शमरूपमव्ययम्

तथारसं नित्यमगन्धवच्च यत्
अनाद्यनन्तं महतः परं ध्रुवम्
निचाय्य तं मृत्युमुखात् प्रमुच्यते"

धर्माधर्मविचारतोऽविहितकर्मणां त्यागेन विहितकर्मणामनुष्ठानेन च मानवः स्वस्थूलं कायं निर्मलीकृत्य पवित्रं करोति। तदनन्तरञ्चोपासनाया योगसाधनस्य च साहाय्येन मनो विक्षेपविहीनं करोति। सर्वावसाने हि तत्त्वज्ञानाधिकारं लब्ध्वा उत्तरोत्तरं षण्णामपि ज्ञानभूमीनां यथाक्रममतिक्रमणं कुर्वन् साधनचतुष्टयसम्पन्नोऽन्तिमां सप्तमीं ज्ञानभूमिमधिकृत्य कृतकृत्यो ब्रह्मपदं समश्नुते।

आसु सर्वास्वपि षट्सु ज्ञानभूमिषु बुद्धिगतावरणं क्रमशो ह्रासमधिगच्छत् इह सप्तम्यां ज्ञानभूमौ तदीयाधिकारमासाद्य पूर्णत एव विलयमृच्छति। आत्मज्ञानस्यानया पूर्णतया सहैव स्वरूपोदयो जायते। अनेनात्मज्ञानोदयेन मायाप्रसूतं सर्वमपि दृश्यजातं इन्द्रजालवत् प्रतीयते। एवञ्चाद्वैतस्थितिं समधिगतो ब्रह्मात्मज्ञानी महापुरुषो ब्रह्मसद्भावेन साकं तद्रूपतामेव विन्दतीत्यत्र नास्ति कियानपि सन्देहलेशः।

अस्यामवस्थायां दृश्यप्रपञ्चस्यासत्यतासिद्धिः मायाप्रसूतः मिथ्यात्वेन। द्वैतभावरहिताभ्यः पूर्वोक्तश्रुतिभ्यः प्रतिपाद्यस्य स्वस्वरूपस्योपलब्धिसम्पादनमेव अद्वैतवादसमन्वितताया ब्रह्ममीमांसाया लक्ष्यम्। उदाहरणतो यथा—तुरीयाश्रमस्य तुरीयामवस्थामधिगतः परमहंसः सन्यासी यदि स्वीयगुरुदेवस्य परमहंससन्यासिनः परित्यक्तगृहस्थाश्रमसम्बन्धिनां पुत्रकलत्रादीनां समुपेक्षां कुर्वन् तदीयसम्बन्धञ्चाविद्याकल्पितं ज्ञात्वा मिथ्येति भावयन् केवलं स्वात्मस्वरूपस्यैव श्रीगुरुदेवरूपस्यानुसरणं कुर्यादिति तदीयव्यवहारं युक्तियुक्तं समुचितमिति लोकैर्यथानुमोद्यते तथैव आत्मज्ञानी महापुरुषो यदा अनादि सान्तं मायाप्रसूतमिमं संसारं मिथ्येति भावयन् "एकमेवाद्वितीयं ब्रह्म नेह नानास्ति किञ्चन" इति श्रुतिप्रतिपाद्यं स्वस्वरूपं सत्यमिति निश्चिन्वन् तल्लक्ष्याभिमुखः स्याच्चेदद्वैतवादासक्तौ न किमपि दुरूहत्वमापतेत्।

निष्कर्षतः कार्य्यब्रह्मात्मकस्य दृश्यप्रपञ्चस्य कारणमेकं सच्चिदानन्दरूपं कारणब्रह्मैव। दृश्यप्रपञ्चस्यास्य जगत उत्पत्तिस्थितिलये सर्वत्रैव तदेव तु कारणमुच्यते। वेदादिसर्वेभ्योऽपि शास्त्रेभ्यो द्वैतभावरहितस्यैकस्याद्वितीयस्य ब्रह्मपदस्यैव तु सिद्धिर्भवति। वेदाः शास्त्राणि वा सर्वाणि ज्ञानस्वरूपत्वात्तत एव साक्षात्परम्परया वा आविर्भवन्ति। सर्वाणि च दर्शनशास्त्राणि सर्वतन्त्रसिद्धान्तानुसारमैकमत्यं जुषमाणानि साक्षात्परम्परयावा तदेवैकं ब्रह्म समर्थयन्ति। अतश्च सर्वेषामेव शास्त्रीयविचाराणां समन्वयबुद्ध्या यदि संकलनं क्रियेत चेत्तदा तदेव नित्यमेकमद्वितीयं ब्रह्मपदमेव प्रामाण्यतुलामधिरोहतीति।

इतिश्री-ब्रह्ममीमांसापरपर्य्यायस्य वेदान्तदर्शनस्य समन्वयभाष्य
भूमिकयासह चतुःसूत्रीसमन्वयभाष्यं सम्पूर्णम्।